आनन्दगिरिकृतटीका

शाङ्करभाष्यसंवलिता

# श्रीमद्भगवद्गीता ।

श्रीधरस्वामिकृतसुबोधिनीटीकासमुद्भासिता च

—:०:—


बि, ए, उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

संस्कृता


---


कलिकातानगरे

सरस्वतीयन्त्रे

मुद्रिता ।

---

इं १८७९

# शाङ्करभाष्यस्य—उपक्रमणिका।

ओं नारायणः परोऽव्यक्तादण्डमव्यक्तसम्भवम्।
अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी॥

---

## आनन्दगिरिटीका।

दृष्टिं मयि विशिष्टार्थां कृपापीयूषवर्षिणीम्।
कुर्वन्त्येहि मत्पूज्यदूत्त्रिनिवारिणीम्॥ १॥
यद्भक्तिपङ्केरुहसंप्रसूतं निष्ठाद्वयं विश्वविभागनिष्ठम्।
साध्येतराभ्यां परिनिष्ठितान्तं तं वासुदेवं सततं नतोऽस्मि॥२॥
प्रत्यञ्चमच्युतं नत्वा गुरूनपि गरीयसः।
क्रियते शिष्यशिक्षायै गीताभाष्यविवेचनम्॥ ३॥

कर्मनिष्ठाज्ञाननिष्ठेत्युपायोपेयभूतनिष्ठाद्वयमधिकृत्य प्रवृत्तं गीताशास्त्रं व्याचिख्यासुर्भगवान् भाष्यकारो विघ्नोपप्लवोपशमनादिप्रयोजनप्रसिद्धये प्रामाणिकव्यवहारप्रमाणकमिष्टदेवतानुस्मरणं मङ्गलाचरणं सम्पादयन् अशेषेतिहासपुराणयोर्व्याचिख्यासितगीताशास्त्रेणैकवाक्यतामभिप्रेत्य पौराणिकश्लोकमेकमेवान्तर्यामिविषयमुदाहरति नारायण इति। आपो नारा इति प्रोक्ता आपो वै नरसूनवः। अयनं तस्य ताः पूर्वं तेन नारायणः स्मृत इति स्मृतिसिद्धः स्थूलदर्शी नारायणशब्दार्थः सूक्ष्मदर्शिनः पुनराचक्षते नरशब्देन चराचरात्मकं शरीरजातमुच्यते तत्र नित्यसन्निहिताः चिदाभासाजीवा नारा इति निरुच्यन्ते तेषामयनमाश्रयो नियामकोऽन्तर्यामी नारायण इति, यमधिकृत्यान्तर्यामिब्राह्मणं श्रीनारायणाख्यमन्त्रास्त्राम्नावमाधीयते तदनेन शास्त्रप्रतिपाद्यं विशिष्टं तत्त्वमादिष्टं भवति। ननु परस्यात्मनो मायासम्बन्धादन्तर्यामित्वं शास्त्रप्रतिपाद्यत्वं च वक्तव्यमन्यथा कूटस्थासङ्गाविषयाद्वितीयस्य तद्योगात्तथा च शुद्धताविद्धौ कथं यथोक्तापरदेवता शास्त्रादावनुस्मर्यते

शुद्धस्य हि तत्त्वस्यानुस्मरणमभीष्टफलवदभीष्टं तत्राह परोव्यक्तादिति अव्यक्तमव्याकृतं मायेत्यनर्थान्तरं तस्मात् परो व्यतिरिक्तः तेनासंस्पृष्टो यमपरः अक्षरात् परतः पर इति श्रुतेः गृहीतः तत्त्वतो मायासम्बन्धाभावेऽपि कल्पनया तदीयसङ्गतिमङ्गीकृत्यान्तर्यामित्वादिकमुन्नेयम् । यस्मादीश्वरस्य व्यतिरेको विवक्षितस्तस्मिन्नव्यक्ते साक्षिसिद्धेऽपि कार्य्यलिङ्गकमनुमानमुपन्यस्यति अण्डमिति । अपञ्चीकृतपञ्चमहाभूतात्मकं हैरण्यगर्भं तत्त्वमण्डमित्यभिलप्यते तदव्यक्तात् पूर्व्वोक्तादुत्पद्यते प्रसिद्धादिश्रुतिस्मृतिवादेषु हिरण्यगर्भस्य मूलकारणादुत्पत्तिस्तथा च कार्य्यलिङ्गादव्यक्ताभिव्यक्तिरित्यर्थः । हिरण्यगर्भे श्रुतिस्मृतिसमधिगतेऽपि कार्य्यलिङ्गकमनुमानमस्तीति मन्वानो विराडुत्पत्तिमुपदर्शयति अण्डस्येति । उक्तस्याण्डस्य हिरण्यगर्भाभिधानीयस्यान्तरिमे भूरादयो लोका विराड़ात्मका वर्त्तन्ते कार्य्यं हि कारणस्यान्तर्भवति तेन हिरण्यगर्भान्तर्भूता भूरादयो लोका विराड़ात्मानस्तेन सृष्टा इति तल्लिङ्गाद्धिरण्यगर्भसिद्धिरित्यर्थः । लोकानेव पञ्चीकृतपञ्चमहाभूतात्मकविराड़ात्मत्वेन व्युत्पादयति सप्तद्वीपेति । सा पृथिवी अभवदिति श्रुतौ विराजो जन्म सङ्कीर्त्तितमित्यङ्गीकारादशेषद्वीपोपेता पृथिवीत्यनेन सर्व्वलोकात्मको विराडेवोच्यते, च शब्देन विराजो हि हिरण्यगर्भे पूर्व्वोक्ताण्डात्मन्यन्तर्भावस्ततः सम्भवोऽनुकृष्यते, परमात्मा हि स्वाज्ञानद्वारा जगदशेषमुत्पाद्य स्वात्मन्येवान्तर्भाव्याखण्डैकरससच्चिदानन्दात्मना स्वे महिम्नि तिष्ठतीत्यर्थः । अत्र च नारायणशब्देनाभिधेयमुक्तं नरा एव नाराजीवास्त्वम्पदवाच्याः तेषामयनमधिष्ठानं तत्पदवाच्यं परं ब्रह्म तथा च कल्पितस्याधिष्ठानातिरिक्तस्वरूपाभावाद्वाच्यस्य कल्पितत्वेऽपि लक्ष्यस्य ब्रह्ममात्रत्वाद्ब्रह्मात्मैक्यं विषयोऽत्र सूच्यते तेनार्थाद्विषयविषयिभावः सम्बन्धोऽपि ध्वनितः परोव्यक्तादित्यनेन मायासंस्पर्शाभावोक्त्या सर्व्वानर्थनिवृत्त्या परमानन्दाविर्भावलक्षणो मोक्षोऽपि विवक्षितस्तेन च तत्कामस्याधिकारो द्योतितः परिशिष्टेन तुशब्देन वस्तुनो वास्तवमद्वितीयत्वमावेदितं तेन च वस्तुद्वारा परमविषयत्वं तज्ज्ञाननिष्ठायास्तदुपायभूतकर्म्मनिष्ठायाश्चावान्तरविषयत्वमित्यर्थादुक्तमित्यवधेयम् ।

**स भगवान् सृष्ट्वेदं जगत् तस्य च स्थितिं चिकीर्षुर्मरीच्यादीनग्रे सृष्ट्वा प्रजापतीन् प्रवृत्तिलक्षणं धर्मं ग्राहयामास वेदोक्तं, ततोऽन्यांश्च सनकसनन्दनादीनुत्पाद्य निवृत्तिधर्मं ज्ञानवैराग्यलक्षणं ग्राहयामास ।**

---

ननु नैवं साध्यसाधनभूतं निष्ठाद्वयमत्र भगवता प्रतिपाद्यते ब्रह्मणाभ्यर्थितस्य भगवतो भूमिभारापहारार्थं वसुदेवेन देवक्यामाविर्भूतस्य तादर्थ्येन मध्यमं पृथासुतं प्रथितमहिमानां प्रेरयितुं धर्मयोरिहानुद्यमानत्वादतो नास्य शास्त्रस्य निष्ठाद्वयं परापरविषयभावमनुभवितुमलमिति तन्न भगवतो धर्मसंस्थापनस्वाभाव्यप्रौव्याद्धर्म्मद्वयस्थापनार्थमेव प्रादुर्भावाभ्युपगमाद्भूभारपरिहारस्य चार्थिकत्वादर्जुनं निमित्तीकृत्याधिकारिणं स्वधर्मप्रवर्त्तनद्वारा ज्ञाननिष्ठायामवतारयितुं गीताशास्त्रस्य प्रणीतत्वादुचितमस्य निष्ठाद्वयविषयत्वमिति परिहरति स भगवानित्यादिना धर्मद्वयमर्जुनायोपदिदेशेत्यन्तेन भाष्येण । तत्र नेदं गीताशास्त्रं व्याख्यातुमुचितमाप्तप्रणीतत्वानिर्द्धारणात्तथाविधशास्त्रान्तरवदित्याशङ्क्य मङ्गलाचरणस्योद्देश्यं दर्शयन्नादौ शास्त्रप्रणेतुराप्तत्वनिर्द्धारणार्थं सर्वज्ञत्वादिप्रतिज्ञापूर्वकं सर्वजगज्जनयितृत्वमाह स भगवानिति । प्रकृतो नारायणाख्यो देवः सर्वज्ञः सर्वेश्वरः समस्तमपि प्रपञ्चमुत्पाद्य व्यवस्थितो न च तस्यानाप्तत्वमीश्वरानुगृहीतानामाप्तत्वसिद्ध्या तस्य परमाप्तत्वसिद्धेरित्यर्थः । ननु भगवता सृष्टमपि चातुर्वर्ण्यादिविशिष्टं हिरण्यगर्भादिलक्षणं जगन्न व्यवस्थितिमास्थातुं शक्यते व्यवस्थापकाभावान्न च परस्येश्वरस्य व्यवस्थापकत्वं वैषम्यादिप्रसङ्गात्तत्राह तस्य चेति । सृष्टस्य जगतो मर्य्यादाविरहितत्वे शङ्किते तदीयां व्यवस्थां कर्त्तुमिच्छन् व्यवस्थापकमालोच्य क्षत्त्रस्यापि क्षत्त्रत्वेन प्रसिद्धं धर्मं तथाविधधर्ममधिगम्य सृष्टवानित्यर्थः । सृष्टस्य धर्मस्य साध्यत्वभावतया साधयितारमन्तरेणासम्भवात्तस्यैव तदनुष्ठातृत्वानभ्युपगमात् प्राणिप्रभेदानामधर्मप्रायाणां तदयोगात् कुतस्तदीया सृष्टिरित्याशङ्क्याह मरीच्यादीनिति ।

द्विविधो हि वेदोक्तो धर्मः, प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च। तत्रैको जगतः स्थितिकारणं, प्राणिनां साक्षादभ्युदयनिःश्रेयसहेतुर्यः स धर्मः ब्राह्मणाद्यैर्वर्णिभिराश्रमिभिः श्रेयोर्थिभिरनुष्ठीयमानो दीर्घेण कालेन। अनुष्ठातॄणां

---

तेषां भगवता सृष्टानां प्रजास्थितिहेतूनां यागदानादिप्रवृत्तिसाध्यं धर्ममनुष्ठातुमधिकृतानां स्वकीयत्वेन तदुपादानमुपपन्नमित्यर्थः। चैत्यवन्दनादिभ्यो विशेषार्थं धर्मं विशिनष्टि वेदोक्तमिति। ननु नैतावता जगदशेषमपि व्यवस्थापयितुं शक्यते प्रवृत्तिमार्गस्य पूर्वोक्तधर्मं प्रतिनियतत्वेऽपि निवृत्तिमार्गस्य तेन व्यवस्थापनायोग्यत्वात्तत्राह ततोऽन्यांश्चेति। निवृत्तिरूपस्य धर्मस्य शमदमाद्यात्मनो गमकमाह ज्ञानेति। विवेकवैराग्यातिशये शमाद्यतिशयो गम्यते ततो विवेकादि तस्य गमकमित्यर्थः। धर्मे बहुविदां विवाददर्शनाज्जगतः स्थितौ कारणीभूतधर्मान्तरमपि द्रष्टव्यमस्तीत्याशङ्क्याह द्विविधो हीति। अतिप्रसङ्गाप्रसङ्गव्यावृत्त्यै, प्रकृतं धर्मं लक्षयति प्राणिनामिति। प्रवृत्तिलक्षणो धर्मोऽभ्युदयार्थिनां साक्षादभ्युदयहेतुः निःश्रेयसार्थिनां परम्परनिःश्रेयसहेतुर्निवृत्तिलक्षणस्तु धर्मः साक्षादेव निःश्रेयसहेतुरिति विभागः, ज्ञानस्यैव निःश्रेयसहेतुत्वेऽपि शमादीनां ज्ञानद्वारा मोक्षहेतुत्वं ज्ञानातिरिक्तव्यवधानाभावाच्च साक्षादित्युक्तम्। यद्येवं धर्मं लक्ष्यते तर्हि वर्णित्वमाश्रमित्वञ्चोपेक्ष्य सर्वैरेव पुरुषार्थार्थिभिर्द्वावपि धर्मौ यथायोग्यमनुष्ठेयावित्यनुष्ठातृनियमासिद्धिरित्याशङ्क्याह ब्राह्मणाद्यैरिति। अर्थित्वाविशेषेऽपि श्रुतिस्मृतिपर्यालोचनयानुष्ठानात् नियमसिद्धिरित्यर्थः। नित्यनैमित्तिकेषु यावज्जीवमनुष्ठानं काम्येषु करणांशे रागाधीना प्रवृत्तिरिति कर्त्तव्यतांशे वैधीति विभागेऽपि कदाचिदेवानुष्ठानमिति विभागमभिप्रेत्याह दीर्घेणेति। अथ यथोक्तधर्मवशादेव जगतो विवक्षितस्थितिसिद्धेर्भगवतो नारायणस्यादिकर्त्तुरनेकानर्थकलुषितशरीरपरिग्रहासम्भवादन्यस्यैव कस्यचिदनाप्तस्य वैषम्यनैर्घृण्यवतो विप्रलम्भपरिग्रह-

कामोद्भवाद्धीयमानविवेकविज्ञानहेतुकेनाधर्मेणाभिभूयमाने धर्मे प्रवर्द्धमाने चाधर्मे जगतः स्थितिं परिपालयिषुः स आदिकर्त्ता नारायणाख्यो विष्णुर्भौमस्य ब्रह्मणो ब्राह्मणत्वस्य रक्षणार्थं देवक्यां वसुदेवादंशेन कृष्णः किल सम्बभूव, ब्राह्मणत्वस्य हि रक्षणेन रक्षितः स्याद्वैदिको धर्मः तदधीनत्वाद्वर्णाश्रमभेदानाम्।

स च भगवान् ज्ञानैश्वर्य्यशक्तिबलवीर्य्यतेजोभिः सदा सम्पन्नस्त्रिगुणात्मिकां वैष्णवीं स्वां मायां मूलप्रकृतिं वशी-

---

द्वारेण गीताशास्त्रप्रणयनमिति कुतोऽस्याप्तप्रणीतत्वं तत्राह अनुष्ठातृणामिति। अथवा यथोक्तशङ्कायां दीर्घेणेत्यारभ्योत्तरं महता कालेन कृतत्रेतात्यये द्वापरावसाने साधकानां कामक्रोधादिपूर्वकादविवेकादधर्मबाहुल्याद्धर्माभिभवादधर्माभिवृद्धेश्च जगतो मर्य्यादाभेदे तदीयां मर्य्यादामात्मनिर्मितां पालयितुमिच्छन् प्रकृतो भगवानेतदर्थेन चातुर्वर्ण्यादिसंरक्षणार्थं लीलामात्रं मायाशक्तिप्रयुक्तं स्वेच्छाविग्रहं जग्राहेत्यर्थः। भौमस्य ब्रह्मणो गुप्त्यै वसुदेवादजीजनत् इति स्मृतिमनुसृत्येदं पदमनूद्य व्याचष्टे भौमस्येति। अंशेनेति स्वेच्छानिर्मितेन मायामयेन स्वरूपेणेत्यर्थः किलेत्यस्मिन्नर्थे पौराणिकी प्रसिद्धिरनूद्यते, न हि भगवतोऽतिरिक्तस्येदं जन्मेति युज्यते वस्तुविभागमविरोधादिति भावः। ननु वैदिकधर्मसंरक्षणार्थं भगवतो जन्म यदा यदा हि धर्मस्येत्यादिदर्शनात् किमिदं ब्राह्मणत्वस्य रक्षणार्थमिति तत्राह ब्राह्मणत्वस्य हीति। तथापि वर्णाश्रमभेदव्यवस्थापनं विना कथं यथोक्तधर्मरक्षणमित्याशङ्क्याह तदधीनत्वादिति। ब्राह्मणं हि पुरोधाय क्षत्रादिप्रतिष्ठां प्रतिपद्यते याजनाध्यापनयोस्तद्धर्मत्वात्तद्द्वारा च वर्णाश्रमभेदव्यवस्थापनादतो ब्राह्मण्ये रक्षिते सर्वमपि सुरक्षितं भवतीत्यर्थः।

नन्वेवमपि भगवतो नारायणस्य शरीरादिमत्त्वे सत्यस्मदादिभिरविशेषादनीश्वरत्वप्रसक्तिरित्याशङ्क्य ज्ञानादिकृतं विशेषमाह स चेति।

कृत्याजोऽव्ययो भूतानामीश्वरो नित्यशुद्धबुद्धमुक्तस्वभावोऽपि सन् स्वमायया देहवान् इव जात इव लोकानुग्रहं कुर्वन् लक्ष्यते, स्वप्रयोजनाभावेऽपि भूतानुजिघृक्षया वैदिकं हि धर्मद्वयमर्ज्जुनाय शोकमोहमहोदधौ निमग्नायोपदिदेश गुणाधिकैर्हि गृहीतोऽनुष्ठीयमानश्च धर्म्मः प्रचयं गमिष्यतीति । तं धर्म्मं भगवता यथोपदिष्टं वेदव्यासः सर्वज्ञो भगवान् गीताख्यैः सप्तभिः श्लोकशतैरुपनिबबन्ध ।

---

ज्ञानं ज्ञप्तिरर्थपरिच्छित्तिरैश्वर्य्यमीश्वरत्वं स्वातन्त्र्यं शक्तिस्तदर्थनिर्वर्त्तनसामर्थ्यं बलं सहायसम्पत्तिः वीर्य्यं पराक्रमवत्त्वं तेजस्तु प्रागल्भ्यमधृष्यत्वं एते च षड्गुणाः सर्वविषयाः सर्वदा भगवति वर्त्तन्ते तथा च तस्य शरीरादिमत्त्वेऽपि नास्मदादिसाम्यमित्यर्थः । अथैवमपि कथमीश्वरस्यानादिनिधनस्य नित्यशुद्धबुद्धमुक्तस्वभावस्य स्वभावविपरीतजन्मादि सम्भवति नहि भूतानामीशिता स्वतन्त्रः स्वात्मनोऽनर्थं स्वयमेव सम्पादयितुमर्हति न चास्य देहादिपक्षे किमपि फलमुपलभ्यते तत्राह त्रिगुणात्मिकामिति । विवक्षितदेहादिगतवैरूप्यसिद्ध्यर्थमिदं विशेषणं तस्याव्यापकत्वं वक्तुं वैष्णवीमित्युक्तम् । ईश्वरपारवश्यं तस्या दर्शयति स्वामिति । तस्याश्च प्रतिभासमात्रशरीरत्वमेव न तु वस्तुत्वमित्याह मायामिति । तस्याः नानाविधकार्य्याकारेण परिणामित्वं सूचयति मूलप्रकृतिमिति । ईश्वरस्य प्रकृत्यधीनत्वं वारयति वशीकृत्येति । नित्यत्वं कार्य्याकारविरहितत्वं शुद्धत्वमकारणत्वं बुद्धत्वमजडत्वं मुक्तत्वं अविद्याकामकर्मपारतन्त्र्यराहित्यम् । नच नित्यत्वादयः संसारावस्थायामसन्तो मोक्षावस्थायां सम्भवन्तीति युक्तमित्याह स्वभाव इति । देहपक्षे प्राधान्यं मायाया दर्शयितुं पुनः स्वमाययेत्युक्तम् । स वा अयं पुरुषो जायमानः शरीरमभिसम्पद्यमान इति श्रुतिमाश्रित्याह देहवानिति । इवकाराभ्यां देहादेरवस्तुत्वेन कल्पितत्वं द्योत्यते धर्म्मद्वयोपदेशद्वारा प्राण्यवर्गस्याभ्युदयनिःश्रेयसतत्परत्वापादनं लोकानु-

तदिदं गीताशास्त्रं समस्तवेदार्थसारसंग्रहभूतं दुर्वि-
ज्ञेयार्थं तदर्थाविष्करणयानेकैर्विवृतपदार्थवाक्यार्थन्याय-

---

यहः, यद्यपि कूटस्थः स्वतन्त्रो नित्यत्वादिलक्षणश्चायमीश्वरः स्वतो दृश्यते तथापि यथोक्तमायाशक्त्या देहादि गृहीत्वा प्राणिनामनुग्रहमादधानो न स्वभावविपर्य्ययं पर्य्येतीत्यर्थः। ननु प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तत इति न्यायादीश्वरस्याप्तकामतया कृतकृत्यस्य प्रयोजनाभावादनुग्राह्यग्राहकाद्वैतवादे व्यतिरिक्तानामसत्त्वाच्च धर्मद्वयमुपदेष्टुमुचितमिति तत्राह स्वप्रयोजनेति। कल्पितभेदभाञ्जि भूतान्युपादाय तदनुग्रहेच्छया चैत्यनन्दनादिविलक्षणं धर्मद्वयमर्ज्जुनं निमित्तीकृत्याप्तकामोऽपि भगवानुपदिष्टवानित्यर्थः। अर्ज्जुनस्योपदेशापेक्षास्तीति दर्शयितुं विशिनष्टि शोकेति। ननु भूतानुग्रहे कर्त्तव्ये किमित्यर्ज्जुनाय धर्मद्वयं भगवतोपदिश्यते तत्राह गुणाधिकैरिति। प्रचयं गमिष्यतीति मत्वा धर्मद्वयमर्ज्जुनाय उपदिदेशेति सम्बन्धः। अथ तथापि सुगतोपदिष्टधर्मवद्‌यमपि भगवदुपदिष्टो धर्मो न प्रामाणिकोपादेयतामुपगच्छेदित्याशङ्क्य वेदोक्तत्वान्नास्य तत्तुल्यत्वमित्युक्तमित्यभिप्रेत्य शिष्टपरिगृहीतत्वाच्चैवमित्याह तं धर्ममिति। अधर्मे धर्मबुद्धिर्वेदव्यासस्य जातेत्याशङ्क्याह सर्वज्ञ इति। कृष्णद्वैपायनं विद्धि व्यासं नारायणं प्रभुमिति स्मृतेः सज्जनोपकारकभगवदवतारत्वाच्च व्यासस्य नान्यथाबुद्धिरित्याह भगवानिति।

गीताशास्त्रस्याप्तप्रणीतत्वमपाकृत्य व्याख्येयत्वमुपपादितमुपसंहरति तदिदमिति। पौरुषेयस्य वचसो मूलप्रमाणाभावेनाप्रामाण्यमिति मत्वा विशिनष्टि समस्तेति। शास्त्राक्षरैरेव तदर्थप्रतिपत्तिसम्भवे किमिति व्याख्यानमित्याशङ्क्याह दुर्विज्ञेयार्थमिति। पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना आक्षेपस्य समाधानं व्याख्यानं पञ्चलक्षणमित्यादिक्रमेणास्य शास्त्रस्य पूर्व्वाचार्य्यैर्व्याख्यातत्वात् किमर्थमिदमारभ्यते गतार्थत्वात्तत्राह तदर्थेति। गीताशास्त्रार्थस्य प्रकटीकरणार्थं पदविभागस्तदर्थोक्तिः समासद्वारा वाक्यार्थनिर्देशस्तत्रापेक्षितो न्यायश्चाक्षेप-

मप्यत्यन्तविरुद्धानेकार्थत्वेन लौकिकैर्गृह्यमाणमुपलभ्याहं विवेकतोऽर्थनिर्द्धारणार्थं संक्षेपतो विवरणं करिष्यामि।

तस्यास्य गीताशास्त्रस्य संक्षेपतः प्रयोजनं परं निःश्रेयसं सहेतुकस्य संसारस्यात्यन्तोपरमलक्षणं, तच्च सर्वकर्मसंन्यासपूर्वकादात्मज्ञाननिष्ठारूपाद्धर्माद्भवति तथेममेव गी-

---

समाधानलक्षणो वृत्तिकारैर्दर्शितस्तथापि तथाविधमेव शास्त्रं शास्त्रपरिचयशून्यैः समुच्चयासमुच्चयवादिभिर्विरुद्धार्थत्वेन अनेकार्थेन च गृहीतमालक्ष्य तद्बुद्धिमनुरोद्धुमिदमारब्धव्यमित्यर्थः। येषां प्राचीने व्याख्याने बुद्धिरप्रविष्टा तेषां सम्प्रतितने एतस्मिन्नसौ प्रवेक्ष्यतीति कुतो नियमस्तत्राह विवेकत इति। पूर्वव्याख्याने तत्तदर्थनिर्द्धारणार्थोपन्यासः संकीर्णवद्भातीति न तत्र केषाञ्चिन्मनीषा समुन्मिषति प्रकृते त्वसंकीर्णतया तत्तत्पदार्थनिर्णयोपयोगिन्यायो विविच्यते तेनात्र मन्दमध्यमयोरपि बुद्धिरवतरतीत्यर्थः। किञ्चानपेक्षिताधिकग्रन्थसद्भावान्न प्राचीने व्याख्याने श्रोतॄणां प्रवृत्तिरत्र त्वपेक्षिताल्पग्रन्थे विवरणे प्रायशः सर्वेषां प्रवृत्तिः स्यादिति मत्वाह संक्षेपत इति।

ननु अनाप्तप्रणीतत्वाद्यभावेऽपि नेदं शास्त्रं व्याख्येयं विषयाद्यनुबन्धस्यानभिहितत्वेन शास्त्रत्वाभावादित्याशङ्क्य सर्वव्यापाराणां प्रयोजनार्थत्वादादौ प्रयोजनमाह तस्येति। प्रसाधितप्रामाण्यस्य व्याख्येयत्वेन मनसि सन्निहितस्य गीताशास्त्रस्य संक्षेपतः संग्रहः सम्पिण्डितत्वमेकवाक्यत्वं तेनेदं परमं फलं यन्निश्चितं श्रेयो निःश्रेयसं कैवल्यं अवान्तरफलन्तु तत्र तत्रावान्तरवाक्यभेदेन मनोनिग्रहादि विवक्ष्यते निःश्रेयसञ्च द्विविधं निरतिशयसुखाविर्भावो निःशेषानर्थोच्छित्तिश्च तत्राद्यमुदाहरति परमिति। द्वितीयं दर्शयति सहेतुकस्येति। संसारोपरमस्यात्यन्तिकत्वं प्रतियोगिनः संसारस्य पुनरुत्पत्त्ययोग्यत्वं तच्च स्वापमूर्च्छादिव्यवच्छेदार्थं विशेषणं तदेव साधयितुं सहेतुकस्येत्युक्तम्। उक्तं फलं समुच्चितादेकाकिनो वा कर्मणः स्यादिति तस्यैव शास्त्रप्रति-

तार्थधर्म्ममुद्दिश्य भगवतैवोक्तं स हि धर्म्मः सुपर्य्याप्तो ब्रह्मणः पदवेदनं इत्यनुगीतासु किञ्चान्यदपि तत्रैवोक्तं नैव धर्म्मी न चाधर्म्मी न चैव हि शुभाशुभी। यः स्यादेकासने लीनस्तूष्णीं किञ्चिदचिन्तयन्। ज्ञानं सन्न्यासलक्षणमिति च। इहापि चान्ते उक्तमर्ज्जुनाय सर्वधर्म्मान् परित्यज्य मामेकं शरणं व्रजेति। अभ्युदयार्थोऽपि यः प्रवृत्तिलक्षणो धर्म्मो वर्णाश्रमांश्चोद्दिश्य विहितः स च देवादिस्थानप्राप्तिहेतुरपि

---

पाद्यतेत्याशङ्काभिधेयमभिधित्सुस्समानः समाधत्ते तच्चेति। आत्मज्ञाननिष्ठाशेषत्वेन कर्मनिष्ठात्वोच्यते प्राधान्येन त्वात्मज्ञाननिष्ठैवात्र प्रतिपाद्यते इत्यर्थः। ननु शेषिणी निष्ठा कुतो न भवति सन्न्यासात् कर्मनिष्ठायाः शेषत्वात्तत्राह सर्वेति। सन्न्यासद्वारेणासकृदनुष्ठितश्रवणादेः शेषिणी निष्ठा सिद्धति शेषत्वञ्च कर्मणस्तत्र परस्परायत्वमित्यर्थः। ननु यज्ञदानतपःकर्म न त्याज्यं कार्य्यमेव तदिति वाक्यशेषात् समुचितमात्मज्ञानमत्र प्रतिपद्यते नेत्याह तथेति। सर्वकर्मसन्न्यासपूर्वकमात्मज्ञाननिष्ठारूपं धर्मं निःश्रेयससाधनं प्रयोजनं प्रागुक्तं परामृशति इममेवेति। वक्तृभेदादभिप्रायभेदाशङ्कां वारयति भगवतैवेति। उक्तमनुगीतास्विति सम्बन्धः, ब्रह्मणः पदं पूर्व्वोक्तं निःश्रेयसं तस्य वेदनं लाभस्तत्र विशिष्टो ज्ञाननिष्ठारूपो धर्मः समर्थो भवतीत्यर्थः। यज्ञदानादिवाक्यस्य तु तद्व्याख्यानावसरे तात्पर्य्यं वक्ष्यते। कर्मत्यागस्य भगवतोऽभिप्रेतत्वे वाक्यान्तरमनुगीतागतमेवोदाहरति तत्रैवेति। धर्म्माधर्म्मापूर्व्वासंसर्गित्वे हेतुमाह नैवेति। क्रियाद्वयसम्बन्धाभावात्तन्निर्वृत्त्या पूर्व्वाभ्याससम्बन्धे प्राप्तमर्थमाह यः स्यादिति। वागादिवाह्यकरणव्यापारविरहितत्वं तूष्णीमित्युच्यते किञ्चिदचिन्तयन्नित्यन्तःकरणव्यापाराभावोऽभिप्रेतः द्विविधकरणव्यापारविरहितः सन् प्रागुक्तो योऽधिकारी केवलमेकस्मिन्नद्वितीये ब्रह्मण्यासनमवस्थानं तत्र लीनस्तस्मिन्नेव समाप्तिभागी स्यात्तस्य संप्रज्ञातसमाधिनिष्ठस्य सर्वकर्म्मत्यागहेतुकं ज्ञानं मुक्तिहेतुर्भवतीत्यर्थः। न

सन् ईश्वरार्पणबुद्ध्यानुष्ठीयमानः सत्त्वशुद्धये भवति फलाभिसन्धिवर्ज्जितः, शुद्धसत्त्वस्य च ज्ञाननिष्ठायोग्यताप्राप्तिद्वारेण ज्ञानोत्पत्तिहेतुत्वेन च निःश्रेयसहेतुत्वमपि प्रतिपद्यते तथा चेममर्थमभिसन्धाय वक्ष्यति ब्रह्मण्याधाय कर्म्माणि यतचित्ता जितेन्द्रियाः । योगिनः कर्म्म कुर्व्वन्ति सङ्गं त्यक्त्वात्मशुद्धये इति । इमं द्विप्रकारं धर्म्मं निःश्रेयसप्रयोजनं परमार्थतत्त्वञ्च वासुदेवाख्यं परब्रह्माभिधेयभूतं विशेषतोऽभि-

---

केवलमनुगीतास्वेव यथोक्तं ज्ञानमुक्तं किन्तु प्रकृतेऽपि शास्त्रे समाप्त्यवसरे दर्शितमित्याह इहापीति । नन्वत्र निवृत्तिलक्षणधर्म्मात्मकं सकन्न्यासमात्मज्ञानमेव न प्रतिपाद्यते कुरु कर्मैव तस्मात्त्वं इत्यादौ प्रवृत्तिलक्षणस्यापि धर्मस्य वक्ष्यमाणत्वाद्धर्मयोश्च प्रकृतत्वाविशेषात्तत्राह अभ्युदयार्थोऽपीति । ननु वर्णिभिराश्रमिभिश्चानुष्ठेयत्वेनान्यत्र विहितस्यापि तस्य न युक्तं मोक्षसाधनत्वाधिकारे विधानं देवादिस्थानप्राप्तिहेतुत्वेन मोक्षं प्रति प्रतिपक्षत्वात् सत्यं तथापि फलाभिलाषमन्तरेणेश्वरार्पणधिया कृतस्य बुद्धिशुद्धिहेतुत्वात्तस्येह वचनमित्याह स च देवादीति । फलाभिसन्धिद्वारा कृतः सन्निति शेषः । प्रवृत्तिलक्षणधर्मस्योक्तरीत्या चित्तशुद्धिहेतुत्वेऽपि मोक्षहेतुत्वेन कुतो मोक्षाधिकारे निर्देशः स्यादित्याशङ्क्याह शुद्धेति प्रतिपाद्यते प्रागुक्तो धर्म इति शेषः । यदुक्तं फलाभिसन्धिवर्जितमीश्वरार्पणबुद्ध्यानुष्ठितं कर्म बुद्धिशुद्धये भवतीति तत्र वाक्यशेषमनुकूलयति तथा चेति । शास्त्रस्य प्रयोजनं ससाधनमुक्तमनूद्य विषयं दर्शयति इममिति । दर्शितेन फलेन शास्त्रस्य निष्ठाद्वयद्वारा साध्यसाधनभावः सम्बन्धो विशेषणविषयविषयित्वमिति विवक्षित्वाह विशेषत इति । एवमनुबन्धत्रयविशिष्टं शास्त्रं व्याख्यानार्हमित्युपसंहरति विशिष्टेति । सिद्धे व्याख्यानयोग्यत्वे व्याख्येयत्वे फलितमाह यत इति । एवं गीताशास्त्रस्य साध्यसाधनभूतनिष्ठाद्वयविषयस्य परापराभिधेयप्रयोजनवतो व्याख्येयत्वं प्रतिपाद्य व्याख्यातुकामः शास्त्रं तदेकदेशस्य प्रथमाध्या-

व्यञ्जयन् विशिष्टप्रयोजनसम्बन्धाभिधेयवद्गीताशास्त्रं यत-स्तदर्थविज्ञानेन समस्तपुरुषार्थसिद्धिरतस्तद्विवरणे यत्नः क्रियते मया, अत्र च धृतराष्ट्र उवाच धर्म्मक्षेत्र इत्यादि।

---

यस्य द्वितीयाध्यायैकदेशसहितस्य तात्पर्य्यमाह अत्र चेति गीताशास्त्रे प्रथमाध्याये प्रथमश्लोके कथासम्बन्धप्रदर्शनपरे स्थिते सतीति यावत्।

---

## स्वामिकृतटीका—उपक्रमणिका।

शेषाशेषमुखव्याख्याचातुर्य्यं त्वेकवक्त्रतः।
दधानमद्भुतं वन्दे परमानन्दमाधवम्॥ १॥
श्रीमाधवं प्रणम्योमाधवं विश्वेशमादरात्।
तद्भक्तियन्त्रितः कुर्वे गीताव्याख्यां सुबोधिनीम्॥ २॥
भाष्यकारमतं सम्यक् तद्व्याख्यातुर्गिरस्तथा।
यथामति समालोक्य गीताव्याख्यां समारभे॥ ३॥
गीता व्याख्यायते यस्याः पाठमात्रादयत्नतः।
सेयं सुबोधिनी टीका सदा ध्येया मनीषिभिः॥ ४॥

इह खलु सकललोकहितावतारः परमकारुणिको भगवान् देवकी-नन्दनस्तत्त्वाज्ञानविजृम्भितशोकमोहभ्रंशितविवेकतया निजधर्म्मपरि-त्यागपरधर्म्माभिसन्धिनमर्ज्जुनं धर्म्मज्ञानरहस्योपदेशप्लवेन तस्माच्छोक-मोहसागरादुद्दधार। तमेव भगवदुपदिष्टमर्थं कृष्णद्वैपायनः सप्तभिः श्लोकशतैरुपनिबबन्ध। तत्र च प्रायशः श्रीकृष्णमुखाद्विनिःसृतानेव श्लोकानलिखत् कांश्चित् तत्सङ्गतये स्वयञ्च व्यरचयत्, यथोक्तं गीता-माहात्म्ये गीता सुगीता कर्त्तव्या किमन्यैः शास्त्रविस्तरैः। या स्वयं पद्मनाभस्य मुखपद्माद्विनिःसृतेत्यादि। अत्र तावद्धर्म्मक्षेत्रे इत्यादिना विषीदन्निदमब्रवीदित्यन्तेन ग्रन्थेन श्रीकृष्णार्ज्जुनसंवादप्रस्तावाय कथा निरूप्यते।

# श्रीमद्भगवद्गीता।

## प्रथमोऽध्यायः।

धृतराष्ट्र उवाच।

धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः।
मामकाः पाण्डवाश्चैव किमकुर्वत सञ्जय ॥१॥

### आनन्दगिरिकृतटीका।

तत्रैवमक्षरयोजना धृतराष्ट्र उवाचेति। धृतराष्ट्रो हि प्रज्ञाचक्षुर्वीद्य चक्षुरभावाद्बाह्यमर्थं प्रत्यक्षयितुमनीशः सदभ्यासवर्त्तिनं सञ्जयमात्मनो हितोपदेष्टारं पृच्छति धर्मक्षेत्र इति। धर्मस्य तद्बुद्धेश्च क्षेत्रमभिवृद्धिकारणं यदुच्यते कुरुक्षेत्रमिति तत्र समवेताः सङ्गताः युयुत्सवो योद्धुकामास्ते च केचिन्मदीयाः दुर्य्योधनप्रभृतयः पाण्डवाश्चापरे युधिष्ठिरादयस्ते च सर्वे युद्धभूमौ सङ्गताः भूत्वा किं अकुर्वत कृतवन्तः ॥ १ ॥

### स्वामिकृतटीका।

धृतराष्ट्र उवाच धर्मक्षेत्रइत्यादि। भोः सञ्जय! धर्मभूमौ कुरुक्षेत्रे धर्मक्षेत्र इति कुरुक्षेत्रविशेषणं एणामादिपुरुषः कश्चित् कुरुनामा बभूव तस्य कुरोर्धर्मस्थाने मामकाः मत्पुत्राः पाण्डुपुत्राश्च युयुत्सवो योद्धुमिच्छन्तः समवेता मिलिताः सन्तः किमकुर्वत किं कृतवन्तः ॥ १ ॥

## सञ्जय उवाच ।

**दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्य्योधनस्तदा ।**
**आचार्य्यमुपसङ्गम्य राजा वचनमब्रवीत् ॥ २ ॥**

किमस्मदीयं प्रबलं बलं प्रतिलभ्यं धीरपुरुषैर्भीष्मादिभिरधिष्ठितं परेषां भयमाविरभूत् यद्वा पक्षद्वयहिंसानिमित्ताधर्मभयमासीद् येन एते युद्धादुपरंस्यन्ति, एवं पुत्रपरवशस्य पुत्रस्नेहाभिनिविष्टस्य धृतराष्ट्रस्य प्रश्ने सञ्जयस्य प्रतिवचनं दृष्ट्वेत्यादि । पाण्डवानां भयप्रसङ्गो नास्तीत्येतत्तु शब्देन द्योत्यते प्रत्युत दुर्योधनस्यैव राज्ञो भयं प्रभूतं प्रादुर्बभूव पाण्डवानां पाण्डुसुतानां युधिष्ठिरादीनामनीकं सैन्यं धृष्टद्युम्नादिभिरतिधृष्टैर्व्यूहाधिष्ठितं दृष्ट्वा प्रत्यक्षेण प्रतीत्य त्रस्तहृदयो दुर्योधनो राजा तदा तस्यां संग्रामोद्योगावस्थायामाचार्य्यं द्रोणनामानमात्मनः शिक्षितारं रक्षितारञ्च श्लाघयन्नुपसङ्गम्य तदीयं समीपं विनयेन प्राप्य भयोद्विग्नहृदयत्वेऽपि तेजस्वित्वादेव वचनमर्थसहितं वाक्यमुक्तवानित्यर्थः ॥ २ ॥

स्वा० टी० । सञ्जय उवाच दृष्ट्वेत्यादि । पाण्डवानामनीकं सैन्यं व्यूढं व्यूहरचनयाधिष्ठितं दृष्ट्वा द्रोणाचार्य्यसमीपं गत्वा राजा दुर्योधनो वक्ष्यमाणं वचनमुवाच ॥ २ ॥

**पश्यैतां पाण्डुपुत्राणामाचार्य्य ! महतीं चमूम् ।**
**व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥ ३ ॥**

तदेव वचनमुदाहरति पश्येति । एतामस्मदभ्यासे महापुरुषानपि भवत्प्रमुखाननपरिगणय्य भवद्भिरशून्यामवस्थितां चमूमिमां सेनां पाण्डुपुत्रैर्युधिष्ठिरादिभिरानीतां महतीमनेकाक्षौहिणीसहितामक्षोभ्यां पश्यत्वाचार्य्यं दुर्योधनो नियुङ्क्ते, नियोगद्वारा च तस्मिन् परेषामवज्ञां विज्ञापयन् क्रोधातिरेकमुत्पादयितुमुत्सहते । परकीयसेनाया वैशिष्ट्याभिधानद्वारा परापरपक्षेऽपि त्वदीयमेव बलमिति सूचयन्नाचार्य्यस्य तन्निरसनं सुकरमिति मन्वानः समाह व्यूढामिति । राज्ञो द्रुपदस्य

पुत्रस्तव शिष्यो धृष्टद्युम्नो लोके ख्यातिमुपगतः स्वयञ्च शास्त्रास्त्रविद्यासम्पन्नो महामहिमः तेन व्यूहमापाद्याधिष्ठितामिमाञ्चमूं किमिति न प्रतिपद्यसे किमिति वा न पश्यसीत्यर्थः॥ ३॥

स्वा॰ टी॰। तदेव वचनमाह पश्यैतामित्यादिनवभिः श्लोकैः, पश्येत्यादि। हे आचार्य्य! पाण्डवानां महतीं विततां चमूं सेनां पश्य, तव शिष्येण द्रुपदपुत्रेण धृष्टद्युम्नेन व्यूढां व्यूहरचनयाधिष्ठिताम्॥ ३॥

# अत्र शूरा महेष्वासा भीमार्ज्जुनसमा युधि।
# युयुधानो विराटश्च द्रुपदश्च महारथः॥ ४॥

अन्येऽपि प्रतिपक्षे पराक्रमभाजो बहवः सन्तीत्यनुमेयमपीयत्त्वं परपक्षस्य विवक्षयन्नाह अत्रेति। तस्यां हि प्रतिपक्षभूतायां सेनायां शूराः स्वयमभीरवः शस्त्रास्त्रकुशलाः भीमार्ज्जुनाभ्यां सर्वसम्प्रतिपन्नवीर्य्याभ्यां तुल्याः युद्धभूमावुपलभ्यन्ते। तेषां युद्धशौण्डीर्य्यं विशदीकर्त्तुं विशिनष्टि महेष्वासा इति। इषवस्यन्तेऽस्मिन्निति व्युत्पत्त्या धनुरुच्यते तच्च महदन्यैरप्रधृष्यं तद्येषां ते राजानस्तथा विवक्ष्यन्ते। तानेव परसेनामध्यमध्यासीनान् परपक्षानुरागिणो राज्ञो विज्ञापयति युयुधान इत्यादिना सौभद्रो द्रौपदेयाश्चेत्यन्तेन॥ ४॥

स्वा॰ टी॰। अत्रेत्यादि। अत्रास्यां चम्वां इषवो बाणा अस्यन्ते क्षिप्यन्ते एभिरिति इष्वासा धनूंषि महान्त इष्वासा येषां ते महेष्वासाः भीमार्ज्जुनौ तावत्प्रसिद्धौ योद्धारौ ताभ्यां समाः शूराः सन्ति। तानेव नामभिर्निर्द्दिशति युयुधान इति। युयुधानः सात्यकिः॥ ४॥

# धृष्टकेतुश्चेकितानः काशीराजश्च वीर्य्यवान्।
# पुरुजित् कुन्तिभोजश्च शैव्यश्च नरपुङ्गवः॥ ५॥

किञ्च धृष्टकेतुरिति। स्पष्टम्॥ ५॥

स्वा॰ टी॰। किञ्च धृष्टकेतुरिति। चेकितानो नाम एको राजा, नरपुङ्गवः नरश्रेष्ठः शैव्यः॥ ५॥

**युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्य्यवान् ।**
**सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ॥ ६ ॥**

तेषां सर्वेषामपि महाबलपराक्रमभाक्त्वादनुपेक्ष्यत्वं पुनर्विवक्षुरिव सर्व एवेति ॥ ६ ॥

स्वा॰टी॰ । युधामन्युरिति । विक्रान्तो युधामन्युर्नामैकः, सौभद्रोऽभिमन्युः द्रौपदेयाः द्रौपद्यां पञ्चभ्यो युधिष्ठिरादिभ्यो जाताः पुत्राः प्रतिविन्ध्यादयः पञ्च । महारथादीनां लक्षणं, एको दश सहस्राणि योधयेद्यस्तु धन्विनाम् । शस्त्रशास्त्रप्रवीणश्च महारथ इति स्मृतः । अमितान् योधयेद्यस्तु संप्रोक्तोऽतिरथस्तु सः । रथी चैकेन यो योद्धा तन्न्यूनोऽर्द्धरथस्तु सः ॥ ६ ॥

**अस्माकन्तु विशिष्टा ये तान्निबोध द्विजोत्तम ! ।**
**नायका मम सैन्यस्य संज्ञार्थं तान् ब्रवीमि ते ॥७॥**

यद्येवं परकीयं बलमतिप्रभूतं प्रतीत्यातिभीतवदभिदधासि हन्त तर्ह्येव परैरिपत्रतामलं विग्रहायन्हेणेत्याचार्य्याभिप्रायमाशङ्क्य ब्रवीति अस्माकमिति । तुशब्देनान्तरुत्पन्नमपि स्वकीयं भयं तिरोदधानो धृष्टतामात्मनो द्योतयति ये स्वस्वमतृपक्षे व्यवस्थिताः सर्वेभ्यः समुत्कर्षजुषस्तान्मयोच्यमानान्निबोध निश्चयेन मद्वचनादवधारयेत्यर्थः । यद्यपि त्वमेव सैर्वार्णकेषु सैविद्यद्वेषु प्रधानत्वात् प्रतिपत्तुं प्रभवसि तथापि मदीयसैन्यस्य ये मुख्यास्तानहं ते तुभ्यं सज्ञार्थमसंख्येषु तेषु मध्ये कतिचिन्नामभिर्गृहीत्वा परिशिष्टानुपलक्षयितुं विज्ञापनं करोमि नत्वज्ञातं किञ्चित्तव ज्ञापयामीति मत्वाह द्विजोत्तमेति ॥ ७ ॥

स्वा॰ टी॰ । अस्माकमिति । निबोध बुद्ध्यस्व, नायका नेतारः संज्ञार्थं सम्यक् ज्ञानार्थमित्यर्थः ॥ ७ ॥

**भवान् भीष्मश्च कर्णश्च कृपश्च समितिञ्जयः ।**
**अश्वत्थामा विकर्णश्च सौमदत्तिर्जयद्रथः ॥ ८ ॥**

तानेव स्वसैन्यनिविष्टान् पुरुषधौरेयानाचार्यमयपरिहारार्थं परि-गणयति भवानित्यादिना ॥ ८ ॥

स्वा॰ टी॰। तानेवाह भवानिति द्वाभ्याम् । भवान् द्रोणः समितिं संग्रामं जयतीति तथा, सौमदत्तिः सोमदत्तस्य पुत्रो भूरिश्रवाः ॥ ८ ॥

# अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः ।
# नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥ ९ ॥

द्रोणादिपरिगणनस्य परिशिष्टपरिसंख्यार्थत्वं व्यावर्त्तयति अन्ये चेति । सर्वेऽपि भवन्तमारभ्य मदीयपृतनायां प्रविष्टाः स्वजीवितादपि मह्यं स्पृहयन्तीत्याह मदर्थ इति । यत्तु तेषां शूरत्वमुक्तं तदिदानीं विशदयति नानेति । नानाविधान्यनेकप्रकाराणि शस्त्राण्यायुधानि प्रहरणानि प्रहरणसाधनानि येषां ते तथा । बहुविधायुधसम्पन्ना अपि तत्प्रयोगे नैपुण्याभावे तद्वैफल्यमिति चेन्नेत्याह सर्व इति ॥ ९ ॥

स्वा॰ टी॰। मदर्थे मत्प्रयोजनार्थं जीवितं त्यक्तुमध्यवसिता इत्यर्थः, नाना अनेकानि शस्त्राणि प्रहरणसाधनानि येषां ते युद्धे विशारदा निपुणाः ॥ ९ ॥

# अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।
# पर्याप्तन्त्विदमेतेषां बलं भीमाभिरक्षितम् ॥१०॥

राजा पुनरपि स्वकीयभयाभावे हेत्वन्तरमाचार्यं प्रत्यावेदयति अपर्याप्तमिति । अस्माकं खल्विदमेकादशसंख्याकाक्षौहिणीपरिगणित-मपरिमितं बलं भीष्मेण च प्रथितमहामहिम्ना सूक्ष्मबुद्धिना सर्वतो रक्षितं पर्याप्तं परेषां परिभवे समर्थं, एतेषां पुनस्तदल्पं सप्तसंख्याका-क्षौहिणीपरिमितं बलं भीमेन च चपलबुद्धिना कौशलताविकलेन परिपालितमपर्याप्तमस्मानभिभवितुमसमर्थमित्यर्थः, अथवा तदिदमस्माकं बलं भीष्माभिरक्षितमपर्याप्तमपरिमितमक्षोभ्यमक्षोभ्यमेतेषां पाण्डवानां बलं भीमेनाभिरक्षितं पर्याप्तं परिमितं सोढुं शक्यमित्यर्थः, अथवा तत् पाण्डवानां बलमपर्याप्तं नालमस्माकमस्मभ्यं भीष्माभिरक्षितं

भीष्मोऽभिरक्षितोऽस्मै परबलनिहन्त्यर्थमिति तदेव तथोच्यते, इदं पुन-रस्मदीयं बलमेतेषां पाण्डवानां पर्य्याप्तं परिभवे समर्थं भीमाभिरक्षितं भीमो दुर्बलहृदयो यस्मादस्मै परबलनिहन्त्यर्थमभिरक्षितः तस्मादस्माकं न किञ्चिदपि भयकारणमस्तीत्यर्थः ॥ १० ॥

स्वा० टी० । ततः किमत आह अपर्य्याप्तमित्यादि । तत्तथाभूतैर्वी-रैर्युक्तमपि भीष्मेणाभिरक्षितमपि अस्माकं बलं सैन्यं अपर्य्याप्तं तैः सह योद्धुमसमर्थं भाति, इदन्त्वेतेषां पाण्डवानां बलं भीमाभिरक्षितं सैन्यं पर्य्याप्तं समर्थं भाति ॥ १० ॥

**अयनेषु च सर्वेषु यथाभागमवस्थिताः ।**
**भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ॥ ११ ॥**

स्वकीयबलस्य भीष्माधिष्ठितत्वेन बलिष्ठत्वमुक्त्वा भीष्मगोपत्वेन तदनु-गुणत्वं द्रोणादीनां प्रार्थयते अयनेष्विति । कर्त्तव्यविशेषद्योती च शब्दः, समरसमारम्भसमये योद्धानां यथाप्रधानं युद्धभूमौ पूर्व्वापरादि-दिग्विभागेनावस्थितिस्थानानि नियम्यन्ते तान्ययनान्युच्यन्ते सेना-पतिश्च सर्वसैन्यमधिष्ठाय मध्ये तिष्ठति तेषु सर्वेषु प्रक्लृप्तं प्रविभाग-मपरित्यज्याय भवानश्वत्थामा कर्णश्चेत्येवमादयो भवन्तः सर्वेऽवस्थिताः सन्तो भीष्ममेव सेनापतिं सर्वतो रक्षन्तु तस्य हि रक्षणे सर्वमस्मदीयं बलं रक्षितं स्यात् परबलनिहन्त्यर्थत्वेन तस्यास्माभीरक्षितत्वादित्यर्थः ॥ ११ ॥

स्वा० टी० । तस्माद्भवद्भिरेवं वर्त्तितव्यमित्याह अयनेष्विति । अय-नेषु व्यूहप्रवेशमार्गेषु यथाभागं विभक्तां स्वां स्वां रणभूमिं अपरित्य-ज्यावस्थिताः सन्तो भीष्ममेवाभिरक्षन्तु तथान्यैर्युद्ध्यमानः पृष्ठतः कैश्चिन्न हन्येत तथा रक्षन्तु, भीष्मबलेनास्माकं जीवनमिति भावः ॥ ११ ॥

**तस्य संजनयन् हर्षं कुरुवृद्धः पितामहः ।**
**सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ॥१२॥**

तमेवमाचार्य्यं प्रति संवादं कुर्वन्तं भयाविष्टं राजानं दृष्ट्वा तद-भ्यासवर्त्ती पितामहस्तद्भयनुरोधार्थं इत्थं कृतवानित्याह तस्येति ।

राज्ञो दुर्य्योधनस्य हर्षं बुद्धिगतत्रासविशेषं परपरिभवद्वारा स्वकीय-
विजयद्वारकं सम्यगुत्पादयन् भयं तदीयमपनिनीषुरुच्चैः सिंहनादं
कृत्वा शङ्खमापूरितवान् किमिति दुर्य्योधनस्य हर्षमुत्पादयितुं पिता-
महो यतते कुरुवृद्धत्वात्तस्य कुरुराजत्वात् पितामहत्वाच्चास्य दुर्य्योधन-
भयापनयनार्थी प्रवृत्तिरुचिता तदुपजीवितया तद्वशत्वाच्च तस्य सिंह-
नादे शङ्खशब्दे च परेषां हृदयव्यथां सम्भाव्यते दूरादेवारिनिवहं प्रति-
भयजननलक्षणप्रतापत्वादित्यर्थः ॥ १२ ॥

स्वा॰ टी॰। तदेवं बहुमानयुक्तं राजवाक्यं श्रुत्वा भीष्मः किं कृत-
वान् तदाह तस्येत्यादि । तस्य राज्ञो हर्षं कुर्वन् पितामहो भीष्म उच्चै-
र्महान्तं सिंहनादं कृत्वा शङ्खं दध्मौ वादितवान् ॥ १२ ॥

## ततः शङ्खाश्च भेर्य्यश्च पणवानकगोमुखाः ।
## सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥१३॥

राजाभिप्रायं प्रतीत्य भीष्मप्रवृत्त्यनन्तरं तत्पक्षैस्तैस्तै राजभिः शङ्खा-
दयो वाद्यविशेषा झटिति शब्दवन्तः सम्पादिताः स च शङ्खादिप्रयुक्तश-
ब्दस्तुमुलो बहुलं भयं परेषां परिद्योतयन्नासीदित्याह तत इति ॥१३॥

स्वा॰ टी॰। तदेवं सेनापतेर्भीष्मस्य युद्धोत्सवमालोक्य सर्वतो युद्धोत्-
सवः प्रवृत्त इत्याह तत इत्यादिना । पणवा मर्द्दला आनका गोमुखाश्च
वाद्यविशेषाः सहसा तत्क्षणादेवाभ्यहन्यन्त वादिताः, स शब्दः शङ्खा-
दिशब्दस्तुमुलो महानभूत् ॥ १३ ॥

## ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ।
## माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥१४॥

एवं दुर्य्योधनपक्षे प्रवृत्तिमालक्ष्य परिसरवर्त्तिनौ केशवार्ज्जुनौ श्वेतै-
र्हयैरतिबलपराक्रमैर्युक्ते महत्यपृष्ठ्ये रथे व्यवस्थितावप्राकृतौ शङ्खौ
पूरितवन्तावित्याह ततः श्वेतैर्हयैरिति ॥ १४ ॥

स्वा॰ टी॰। ततः पाण्डवसैन्ये प्रवृत्तं युद्धोत्सवमाह तत इत्यादि

पञ्चभिः । स्यन्दने रथे स्थितौ सन्तौ कृष्णार्जुनौ शङ्खौ प्रकर्षेण दध्मतुः वादयामासतुः ॥ १४ ॥

**पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः ।**
**पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥१५॥**

तयोः शङ्खयोर्दिव्यत्वमेवापादयन्ति पाञ्चजन्यमिति । कृष्णार्जुनयोर्युद्धाभिमुख्यं दृष्ट्वा संहृष्टः सारथ्येन समररसिको भीमसेनोऽपि युद्धाभिमुखोऽभूदित्याह पौण्ड्रमिति ॥ १५ ॥

स्वा॰ टी॰ । तदेव विभागेन दर्शयन्नाह पाञ्चजन्यमिति । पाञ्चजन्यादीनि नामानि श्रीकृष्णादिशङ्खानां, भीमं घोरं कर्म यस्य सः ॥१५॥

**अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।**
**नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥ १६ ॥**

एतेषां देवीं प्रवृत्तिं प्रतीक्ष्य परिपालनावकाशमासाद्य राज्ञो युधिष्ठिरस्यापि प्रवृत्तिं दर्शयति अनन्तेति । ज्यायसां भ्रातृणामनुसरणमावश्यकमिति मत्वा तयार्वीयसोर्भ्रात्रोरपि प्रवृत्तिमाह नकुल इति ॥ १६ ॥

स्वा॰ टी॰। अनन्तेति ; नकुलः सुघोषं नाम शङ्खं दध्मौ, सहदेवो मणिपुष्पकं नाम ॥ १६ ॥

**काश्यश्च परमेष्वासः शिखण्डी च महारथः ।**
**धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥१७॥**

अन्येषामपि तत्पक्षीयाणां राज्ञामैकमत्यं विज्ञापयन् धृतराष्ट्रस्य दुराशां सञ्जयो व्युदस्यति काश्यश्चेत्यादिना ॥ १७ ॥

स्वा॰ टी॰ । काश्यश्चेति । काश्यः काशीराजः, कथम्भूतः परमः श्रेष्ठः इष्वासो धनुर्यस्य सः ॥ १७ ॥

**द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते ॥**
**सौभद्रश्च महाबाहुः शङ्खान् दध्मुः पृथक् पृथक्॥१८**

द्रुपद इति । परमेष्वासादिविशेषणचतुष्टयं प्रत्येकं सम्बध्यते ॥ १८ ॥

स्वा० टी० । द्रुपद इति । हे पृथिवीपते ! धृतराष्ट्र ! ॥ १८ ॥

**स घोषो धार्त्तराष्ट्राणां हृदयानि व्यदारयत् ।**
**नभश्च पृथिवीञ्चैव तुमुलोऽभ्यनुनादयन् ॥१९॥**

तैस्तै राजभिः शङ्खानापूरयद्भिरापादितो महान् घोषस्तुमुलोऽतिभैरवो नभश्चान्तरीक्षं पृथिवीञ्च भुवनं लोकत्रयं सर्वमेव विशेषेणानुक्रमेण नादयन् नादयुक्तं कुर्वन् धार्त्तराष्ट्राणां दुर्य्योधनादीनां हृदयान्यन्तःकरणानि व्यदारयत् विदारितवान् युज्यते हि तत्प्रेरितशङ्खघोषश्रवणात् त्रैलोक्याक्रोशे तत्तुपष्टम्भवतां तेषां हृदयेषु दीर्य्यमानत्वं तदाह स घोष इति ॥ १९ ॥

स्वा०टी०। स च शङ्खानां नादस्त्वदीयानां महाभयं जनयामासेत्याह स घोष इत्यादि । धार्त्तराष्ट्राणां त्वदीयानां हृदयानि विदारितवान्, किं कुर्वन् नभश्च पृथिवीञ्चाभ्यनुनादयन् प्रतिध्वनिभिरापूरयन् ॥ १९ ॥

**अथ व्यवस्थितान् दृष्ट्वा धार्त्तराष्ट्रान् कपिध्वजः ।**
**प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पाण्डवः ।**
**हृषीकेशं तदा वाक्यमिदमाह महीपते ! ॥२०॥**

दुर्य्योधनादीनां धार्त्तराष्ट्राणामेवं भयप्राप्तिं प्रदर्श्य पार्थादीनां पाण्डवानां तद्वैपरीत्यमिदानीमुदाहरति अथेत्यादिना । भीतिप्रत्युपस्थितेरनन्तरं पलायने प्राप्तेऽपि धैर्य्यमुत्पाद्य व्यवस्थितानप्रचलितानेव परान् प्रत्यक्षेणोपलभ्य हनुमन्तं वानरवरं ध्वजलक्षणत्वेनादायावस्थितोऽर्जुनो भगवन्तमाह इति सम्बन्धः । किमाहेत्यपेक्षायामिदं वक्ष्यमाणं हेतुमद्वचनमित्याह वाक्यमिति । कस्यामवस्थायामिदमुक्तवानिति तत्राह प्रवृत्त इति । शस्त्राणामिषुप्रासप्रभृतीनां सम्पातः समुदायस्तस्मिन् प्रवृत्ते प्रयोगाभिमुखे सतीति यावत् । किं कृत्वा भगवन्तं प्रत्युक्त-

वानिति तदाह धनुरिति महीपतिमन्देन राजा धृतराष्ट्रः सञ्जयेन सम्बोध्यते ॥ २० ॥

स्वा॰ टी॰ । एतस्मिन् समये श्रीकृष्णमर्जुनो विज्ञापयामासेत्याह अथेत्यादि चतुर्भिः श्लोकैः, अथेति । अथानन्तरं महाशब्दानन्तरं व्यवस्थितान् युद्धोद्युक्तानवस्थितान् कपिध्वजोऽर्जुनः ॥ २० ॥

## अर्जुन उवाच ।

**सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ! ॥२१॥**

तदेव गाण्डीवधन्विनो वाक्यमनुक्रामति सेनयोरिति । उभयोरपि सेनयोः सन्निहितयोर्मध्ये मदीयं रथं स्थापयेत्यर्जुनेन स रथ्ये सर्वेश्वरो नियुज्यते, किं हि भक्तानामशक्यं यद्भगवानपि तन्नियोगं अनुतिष्ठति युक्तं हि भगवतो भक्तपारवश्यं, अच्युतेति सम्बोधनतया भगवतः स्वरूपं न कदाचिदपि प्रच्युतिं प्राप्नोतीत्युच्यते ॥ २१ ॥

स्वा॰ टी॰ । तदेव वाक्यमाह सेनयोरित्यादि ॥ २१ ॥

**यावदेतान् निरीक्षेऽहं योद्धकामानवस्थितान् ।**
**कैर्मया सह योद्धव्यमस्मिन् रणसमुद्यमे ॥ २२ ॥**

मध्ये रथं स्थापयेत्युक्तं तदेव रथस्थापनस्थानं निर्धारयति यावदिति । एतान् प्रतिपक्षत्वेन प्रतिष्ठितान् भीष्मद्रोणादीनस्माभिः सार्द्धं योद्धुमपेक्षमाणतो यावद्गत्वा निरीक्षितुमहं क्षमः स्यां तावति प्रदेशे रथस्य स्थापनं कर्त्तव्यमित्यर्थः । किञ्च प्रवृत्ते युद्धप्रारम्भे बहवो राजानोऽस्मिन् युद्धभूमावुपतिष्ठन्ते तेषां मध्ये कैः सह मया योद्धव्यः न हि कश्चिदपि मम प्रतिपक्षतिर्नास्ति इत्याह कैर्मयेति ॥ २२ ॥

स्वा॰ टी॰ । ननु त्वं योद्धा न तु युद्धप्रेक्षकस्तत्राह कैर्मयेत्यादि । कैः सह मया योद्धव्यम ॥ २२ ॥

**योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ।**
**धार्त्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥२३॥**

प्रतियोगिनामभावे कथं तव युद्धौत्सुक्यं फलवद्भवेदिति तत्राह योत्स्यमानानिति । ये केचिदेते राजानो नानादेशेभ्योऽत्र कुरुक्षेत्रे समवेतास्तानहं योत्स्यमानान् परिगृहीतप्रहरणोपायानतितरां संप्राप्तयुद्धौत्सुक्यानुपलभे, तेन प्रतियोगिनां बाहुल्यमित्यर्थः । तेषामस्माभिः सह पूर्ववैराभावे कथं प्रतियोगित्वं प्रकल्प्यते तत्राह धार्त्तराष्ट्रस्येति । धृतराष्ट्रपुत्रस्य दुर्य्योधनस्य दुर्बुद्धेः स्वरक्षणोपायमप्रतिपाद्यमानस्य युद्धाय संरम्भं कुर्वतो युद्धे युद्धभूमौ स्थित्वा प्रियं कर्त्तुमिच्छवो राजानः समागताः दृश्यन्ते, तेन तेषामौपाधिकमस्मत्प्रतियोगित्वमुपपन्नमित्यर्थः ॥ २३ ॥

स्वा० टी० । योत्स्यमानानिति । धार्त्तराष्ट्रस्य दुर्य्योधनस्य प्रियं कर्त्तुमिच्छन्तो य इह समागतास्तानहं द्रक्ष्यामि यावत् तावदुभयोः सेनयोर्मध्ये मे रथं स्थापयेत्यन्वयः ॥ २३ ॥

## सञ्जय उवाच ।

**एवमुक्तो हृषीकेशो गुडाकेशेन भारत ! ।**
**सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥२४॥**

एवमर्जुनेन प्रेरितो भगवानहिंसारूपं धर्ममाश्रित्य प्रायशो युद्धात् तं निवर्त्तयिष्यतीति धृतराष्ट्रस्य मनीषां दुदूषयिषुः सञ्जयो राजानं प्रत्युक्तवानित्याह सञ्जय इति । भगवतो हि भूभारापहारार्थं प्रवृत्तस्यार्जुनाभिप्रायप्रतिपत्तिद्वारेण स्वाभिसन्धिं प्रतिलभमानस्य परोक्तिमनुसृत्य स्वाभिप्रायानुकूलमनुष्ठानमादर्शयति एवमिति ॥ २४ ॥

स्वा० टी० । ततः किं वृत्तम् इत्यपेक्षायां सञ्जय उवाच एवमुक्त इत्यादि । गुडाका निद्रा तस्या ईशेन जितनिद्रेणार्जुनेन एवमुक्तः सन्, हे भारत ! हे धृतराष्ट्र ! ॥ २४ ॥

**भीष्मद्रोणप्रमुखतः सर्वेषाञ्च महीक्षिताम् ।**
**उवाच पार्थ ! पश्यैतान् समवेतान् कुरूनिति॥२५॥**

भीष्मद्रोणादीनामन्येषाञ्च राज्ञामन्तिके रथं स्थापयित्वा भगवान् किं कृतवानिति तदाह उवाचेति । एतानभ्यादि वर्त्तमानान् कुरून् कुरुवंशप्रसूतान् भवद्भिः सार्द्धं युद्धार्थं संगतान् पश्य दृष्ट्वा च यैः सहात्र युयुत्सा तवोपावर्त्तते तैः सार्कं युद्धं कुरु नो खल्वेतेषां शस्त्रास्त्रविद्यावतां महीक्षितामुपेक्षोपपद्यते, सारथ्ये तु न मनःखेदनीयमित्यर्थः ॥२५॥

स्वा० टी० । भीष्मेति । महीक्षितां राज्ञाञ्च प्रमुखतः सम्मुखे रथं स्थापयित्वा हे पार्थ । एतान् कुरून् पश्येति श्रीभगवानुवाच ॥ २५ ॥

**तत्रापश्यत् स्थितान् पार्थः पितृनथ पितामहान् ।**
**आचार्यान्मातुलान्भ्रातृन्पुत्रान्पौत्रान्सखींस्तथा ।**
**श्वशुरान् सुहृदश्चैव सेनयोरुभयोरपि ॥ २६ ॥**

एवं स्थिते महानधर्म्मो हिंसेति विपरीतबुद्ध्या युद्धादुपरिरंसा पार्थस्य समभूदिति कथयति तत्रेत्यादिना । सम्प्रत्या भगवदनुष्ठाने समरसमारम्भाय समुद्यते सतीत्येतदुच्यते सेनयोरुभयोरपि स्थितान् पार्थोऽपश्यदिति सम्बन्धः । चशब्दस्तथाशब्दपर्य्यायः श्वशुराः भार्य्याणां जनयितारः सुहृदो मित्राणि कृतवर्म्मप्रभृतयः ॥ २६ ॥

स्वा० टी० । ततः किं वृत्तमित्याह तत्रेत्यादि । पितृन् पितृव्यान् इत्यर्थः, पुत्रान् पौत्रानिति दुर्य्योधनादीनां ये पुत्राः पौत्राश्च तान् इत्यर्थः सखीन् मित्राणि सुहृदः कृतोपकारांश्चापश्यत् ॥ २६ ॥

**तान् समीक्ष्य स कौन्तेयः सर्वान् बन्धूनवस्थितान् ।**
**कृपया परयाविष्टो विषीदन्निदमब्रवीत् ॥२७॥**

सेनाद्वये व्यवस्थितान् यथोक्तान् पितृपितामहादीनालोक्य परमकृपापरवशः सन्नर्जुनो भगवन्तमुक्तवानित्याह तानिति । विषीदन् यथोक्तानां पित्रादीनां हिंसारम्भनिबन्धनं विषादमुपतापं कुर्व्वन्नित्यर्थः ॥ २७ ॥

स्वा० टी० । ततः किं कृतवान् इत्याह तानिति । सेनयोरुभयोरेवं

समीक्ष्य कृपया महत्या गृहीतो विषण्णः सन् इदमर्जुनोऽब्रवीत् इत्युत्तरश्लोकवाक्यार्थः अाविष्टो व्याप्त ॥ २७ ॥

## अर्ज्जुन उवाच।

**दृष्ट्वेमान् स्वजनान् कृष्ण! युयुत्सून् समवस्थितान्।**
**सीदन्ति मम गात्राणि मुखञ्च परिशुष्यति ॥२८॥**

तदेवेदं शङ्काचक्रं वचनमुदाहरति दृष्ट्वेति। आत्मीयं बन्धुवर्गं युद्धेच्छया युद्धभूमावुपस्थितमुपलभ्य शोकप्रवृत्तिं दर्शयति सीदन्तीति। देवांशस्यैवार्जुनस्यानात्मविदः स्वपरदेहेष्वात्मानात्मीयाभिमानवतस्तत्प्रियस्य युद्धारम्भे तन्मृत्युप्रसङ्गदर्शिनः शोको महानासीदित्यर्थः॥ २८ ॥

स्वा०टी०। किमब्रवीदित्यपेक्षायामाह दृष्ट्वेमानित्यादि, यावदध्यायसमाप्ति। हे कृष्ण! योद्धुमिच्छतः पुरतः सम्यगवस्थितान् स्वजनान बन्धुजनान् दृष्ट्वा मदीयानि गात्राणि करचरणादीनि सीदन्ति विशीर्य्यन्ते २८॥

**वेपथुश्च शरीरे मे रोमहर्षश्च जायते।**
**गाण्डीवं स्रंसते हस्तात् त्वक् चैव परिदह्यते॥२९॥**

अङ्गेषु व्यथा मुखे परिशोषश्चेत्युभयं शोकलिङ्गमुक्तं सम्प्रति वेपथुप्रभृतीनि भीतिलिङ्गान्युपन्यस्यति वेपथुश्चेति। रोमहर्षो रोम्णां गात्रेषु पुलकितत्वम् ॥ २९ ॥

स्वा० टी०। किञ्च वेपथुश्चेत्यादि। वेपथुः कम्पः, रोमहर्षो रोमाञ्चः स्रंसते निपतति, परिदह्यते सर्वतः सन्तप्यते ॥ २९ ॥

**न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः।**
**निमित्तानि च पश्यामि विपरीतानि केशव! ॥३०॥**

किञ्चास्थैर्य्यमपि सम्वृत्तमित्याह नचेति। मोहोऽपि महान् भवतीत्याह भ्रमतीवेति। विपरीतनिमित्तप्रतीतेरपि मोहो भवतीत्याह निमित्तानीति। तानि विपरीतानि निमित्तानि यानि वामनेत्रस्फुरणादीनि ॥ ३० ॥

स्वा॰ टी॰ । अपि च न च शक्नोमीत्यादि । विपरीतानि निमित्तानि अनिष्टसूचकानि शकुनादीनि पश्यामि ॥ ३० ॥

**न च श्रेयो नु पश्यामि हत्वा स्वजनमाहवे ।**
**न काङ्क्षे विजयं कृष्ण ! न च राज्यं सुखानि च ॥३१॥**

युद्धे स्वजनहिंसया फलानुपलम्भादपि तस्मादुपरिरंसा जायत इत्याह न चेति । प्राप्तानां युयुत्सूनां हिंसया विजयो राज्यं सुखानि च लब्धुं शक्यानीति कुतो युद्धादुपरतिरित्याशङ्क्याह न काङ्क्ष इति ॥३१॥

स्वा॰ टी॰ । किञ्च न चेत्यादि । आहवे युद्धे स्वजनं हत्वा श्रेयः फलं न पश्यामि । विजयादिकं फलं किं न पश्यसीति चेत् तत्राह न काङ्क्ष इति ॥ ३१ ॥

**किं नो राज्येन गोविन्द ! किं भोगैर्जीवितेन वा ।**
**येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च ॥३२॥**

किमिति राज्यादिकं सर्वाकाङ्क्षितत्वात् न काङ्क्षसे तेन हि पुत्त्रभ्रात्रादीनां स्वास्थ्यसमाधानं शक्यमित्याशङ्क्याह किमिति । राज्यादीनामाक्षेपे हेतुमाह येषामिति ॥ ३२ ॥

स्वा॰ टी॰ । एतदेव प्रपञ्चयति किं नो राज्येन इत्यादिसार्द्धद्वयेन ॥ ३२ ॥

**त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ।**
**आचार्य्याः पितरः पुत्त्रास्तथैव च पितामहाः ॥३३॥**

तानेव विशिनष्टि आचार्य्या इति ॥ ३३ ॥

स्वा॰ टी॰ । त इमे इति । यदर्थमस्माकं राज्यादिकमपेक्षितं ते एते प्राणधनादित्यागमङ्गीकृत्य युद्धार्थमवस्थिताः अतः किमस्माकं राज्यादिभिः कृत्यमित्यर्थः ॥ ३३ ॥

**मातुलाः श्वशुराः पौत्राः श्यालाः सम्बन्धिनस्तथा ।**
**एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ! ॥३४॥**

मातुला इति । श्याला भार्य्याणां भ्रातरो धृष्टद्युम्नप्रभृतयः । अथैष्वपि स्वराज्यपरिपन्थित्वादाततायिषु कृपाबुद्धा स्वधर्म्मात् युद्धात् पूर्व्वोक्तमोहादिवशात् प्रच्युतिं प्रदर्शयति एतानिति । जिघांसन्तं जिघांसीयादिति न्यायादेतेषां हिंसा न दोषायेत्याशङ्क्याह घ्नतोऽपीति ॥३४॥

स्वा० टी० । ननु यदि कृपया त्वमेतान्न हंसि तर्हि त्वामेते राज्यलोभेन हनिष्यन्त्येव अतस्त्वमेवैतान् हत्वा राज्यं भुङ्क्ष्वेति तत्राह एतानित्यादिश्लोकद्वयेन । घ्नतोऽपि अस्मान् मारयतोऽपि एतान ॥ ३४ ॥

**अपि त्रैलोक्यराज्यस्य हेतोः किन्नु महीकृते ।**
**निहत्य धार्त्तराष्ट्रान्नः का प्रीतिः स्यात् जनार्दन !॥३५**

पृथिवीप्राप्त्यर्थं हि हननमेतेषामिष्यते न च तत्प्राप्तिः समीहितेति कैमुतिकन्यायेन दर्शयति अपीति । न हि महदपि त्रैलोक्यसम्बन्धं राज्यं लब्धुं स्वजनहिंसायै मनो मदीयं स्पृहयति पृथिवीप्राप्त्यर्थं पुनर्बन्धुवधं न श्रद्दधामीति किं वक्तव्यमित्यर्थः । दुर्य्योधनादीनां शत्रूणां निपाते प्रीतिप्राप्तिसम्भवाद्युद्धं कर्त्तव्यमित्याशङ्क्याह निहत्येति ॥ ३५ ॥

स्वा० टी० । अपीति । त्रैलोक्यराज्यस्यापि हेतोः तत्प्राप्त्यर्थमपि हन्तुं नेच्छामि किं पुनर्महीमात्रप्राप्तये इत्यर्थः ॥ ३५ ॥

**पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः ।**
**तस्मान्नार्हा वयं हन्तुं धार्त्तराष्ट्रान् सबान्धवान् ।**
**स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ! ३६**

यदि पुनरमी दुर्य्योधनादयो न निम्नन्तो रन् भवन्तस्तर्हि तैर्निगृहीता दुःखिताः स्युरित्याशङ्क्याह पापमेवेति । यदि इमे दुर्य्योधना-

द्यो निर्दोषानेवास्मान् युद्धभूमौ हन्युस्तदैतानग्निदो गरदश्चेत्यादिलक्षणोपेतानाततायिनो निर्दोषस्वजनहिंसाप्रयुक्तं पापं पूर्वमेव पापिनः समाश्रयेदित्यर्थः। अथवा यद्यप्येते भवन्त्याततायिनस्तथाप्येतानतिघोरान् दुर्योधनादीन् हिंसित्वा तत्कृत पापमस्मानेवाश्रयेदतो नास्माभिरेते हन्तव्या इत्यर्थः। अथवा गुरुभ्रातृसुहृत्प्रभृतीनेतान् हत्वा वयमाततायिनः स्यामः ततश्चैतान् हत्वा तत्कृतं पापमाततायिनोऽस्मानेव समाश्रयेदिति युद्धादुपरमणमस्माकं श्रेयस्करमित्यर्थः। फलाभावादनर्थसम्भवाच्च परहिंसा न कर्त्तव्या इत्युपसंहरति तस्मादिति। किञ्च राज्यसुखमुद्दिश्य युद्धमुपक्रम्य तेन च स्वजनपरिक्षये सुखमुपपद्यते तेन न कर्त्तव्यं युद्धमित्याह स्वजनं हीति ॥ ३६ ॥

स्वा० टी०। ननु च अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः। क्षेत्रदारापहारी च षडेते आततायिनः। इति स्मरणादग्निदाहादिभिः षड्भिर्हेतुभिरेते तावदाततायिनः, आततायिनाञ्च बधो युक्त एव, आततायिनमायान्तं हन्यादेवाविचारयन्। नाततायिबधे दोषो हन्तुर्भवति कश्चनेति वचनात् तत्राह पापमेवेत्यादिसार्द्धेन। आततायिनमायान्तमित्यादिकमर्थशास्त्रं तच्च धर्मशास्त्रात्तु दुर्बलं यथोक्तं याज्ञवल्क्येन स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यवहारतः। अर्थशास्त्रात्तु बलवद्धर्म्मशास्त्रमिति स्मृतिः इति तस्मादाततायिनामप्येतेषामाचार्य्यादीनां बधेऽस्माकं पापमेव भवेत् अन्याय्यत्वात् अधर्म्मत्वाच्चैतद्बधस्य, अमुत्र चेह वा न सुखं स्यात इत्याह स्वजनं हीति ॥ ३६ ॥

**यद्यप्येते न पश्यन्ति लोभोपहतचेतसः।**
**कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥३७॥**

कथं तर्हि परेषां कुलक्षये स्वजनहिंसायाञ्च प्रवृत्तिस्तत्राह यद्यपीति। लोभोपहतबुद्धित्वात्तेषां कुलक्षयादिप्रयुक्तदोषप्रतीत्यभावात् प्रवृत्तिविस्रम्भः सम्भवतीत्यर्थः ॥ ३७ ॥

स्वा० टी०। ननु चैतेषामपि बन्धुबधदोषे समाने यथैवैते बन्धुबधमङ्गीकृत्यापि युद्धे प्रवर्त्तन्ते तथैव भवानपि प्रवर्त्ततां किमनेन वि-

मादेनेत्याह यद्यपीति द्वाभ्याम् । राज्यलोभेनोपहतं भ्रष्टविवेकं चेतो येषां ते एते दुर्य्योधनादयो यद्यपि दोषं न पश्यन्ति ॥ ३७ ॥

**कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्त्तितुम् ।**
**कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्द्दन ! ॥ ३८ ॥**

परेषामिवास्माकमपि प्रवृत्तिरुचिता स्यादिति चेन्नेत्याह कथमिति । कुलक्षयेति कुलक्षये मित्रद्रोहे च दोषं प्रपश्यद्भिरस्माभिस्तद्दोषशङ्कितं पापं कथं न ज्ञातव्यं तदज्ञाने तत्परिहारासम्भवादतोऽस्मात् पापान्निवृत्त्यर्थं तज्ज्ञानमपेक्षितमिति पापपरिहारार्थिनामस्माकं न युक्ता युद्धे प्रवृत्तिरित्यर्थः ॥ ३८ ॥

स्वा॰ टी॰ । कथमिति । तथाप्यस्माभिर्दोषं प्रपश्यद्भिरस्मात् पापात् निवर्त्तितुं कथं न ज्ञेयं निवृत्तावेव बुद्धिः कर्त्तव्येत्यर्थः ॥ ३८ ॥

**कुलक्षये प्रणश्यन्ति कुलधर्म्माः सनातनाः ।**
**धर्म्मे नष्टे कुलं कृत्स्नमधर्म्मोऽभिभवत्युत ॥ ३९ ॥**

कोऽसौ कुलक्षये दोषो यद्दर्शनाद् युष्माकं युद्धादुपरतिरपेक्ष्यते तत्राह कुलेति । कुलस्य हि क्षये कुलसम्बन्धिनश्चिरन्तना धर्म्मास्तत्तदग्निहोत्रादिक्रियासाध्या नाशमुपयान्ति कर्त्तुरभावादित्यर्थः । धर्मनाशेऽपि किं स्यादिति चेत् तत्राह धर्म इति । कुलप्रयुक्ते धर्म्मे कुलनाशादेव नष्टे कुलक्षयकरस्य कुलपरिशिष्टमखिलमपि तदीयोऽधर्म्मोऽभिभवत्यधर्मभूयिष्ठं तस्य कुलं भवतीत्यर्थः ॥ ३९ ॥

स्वा॰ टी॰ । तदेव दोषं दर्शयति कुलक्षय इत्यादि । सनातनाः परम्पराप्राप्ताः उत अपि अवशिष्टं कृत्स्नमपि कुलं अधर्म्मोऽभिभवति प्राप्नोतीत्यर्थः ॥ ३९ ॥

**अधर्म्माभिभवात् कृष्ण ! प्रदुष्यन्ति कुलस्त्रियः ।**
**स्त्रीषु दुष्टासु वार्ष्णेय ! जायते वर्णसङ्करः ॥ ४० ॥**

कुलक्षयकृतेऽवशिष्टकुलस्याधर्मप्रचयत्वे को दोषः स्यादिति तत्राह

अधर्मेति । पापप्रचुरे कुले प्रसूतानां स्त्रीणां प्रदुष्टत्वे किं प्रदुष्यति तत्राह स्त्रीष्विति ॥ ४० ॥

स्वा० टी० । ततश्च अधर्माभिभवादित्यादि ॥ ४० ॥

**सङ्करो नरकायैव कुलघ्नानां कुलस्य च ।**
**पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥ ४१ ॥**

वर्णसङ्करस्य दोषपर्यवसायितामादर्शयति सङ्कर इति । कुलक्षयकराणां दोषान्तरं सूचयति पतन्तीति । कुलक्षयकृता पितरो निरयगामिनः सम्भवन्त्येव हेतुमाह लुप्तेति । पुत्रादीनां कर्त्तॄणामभावात् लुप्ता पिण्डस्योदकस्य च क्रिया येषां ते तथा ततश्च प्रेतत्वपरावृत्तिकारणाभावान्नरकपतनमेवावश्यकमापतेदित्यर्थः ॥ ४१ ॥

स्वा० टी० । एवं सति सङ्कर इत्यादि । एषां कुलघ्नानां पितरः पतन्ति हि यस्मात् लुप्ताः पिण्डोदकक्रिया येषां ते तथा ॥ ४१ ॥

**दोषैरेतैः कुलघ्नानां वर्णसङ्करकारकैः ।**
**उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ४२**

कुलक्षयकर्तॄणामेतैरुक्तैर्दोषैर्वर्णसङ्करहेतुभिर्जातिप्रयुक्ता वंशप्रयुक्ताश्च धर्मा भृशं समुत्साद्यन्ते तेन कुलक्षयकारणाद् युद्धादुपरतिरेव श्रेयसीत्याह दोषैरिति ॥ ४२ ॥

स्वा० टी० । उक्तदोषमुपसंहरति दोषैरित्यादिद्वाभ्याम् । उत्साद्यन्ते लुप्यन्ते जातिधर्मा वर्णधर्माः कुलधर्माश्चेति चकारादाश्रमधर्मादयोऽपि गृह्यन्ते ॥ ४२ ॥

**उत्सन्नकुलधर्माणां मनुष्याणां जनार्द्दन ! ।**
**नरके नियतं वासो भवतीत्यनुशुश्रुम ॥ ४३ ॥**

किञ्च जातिधर्मेषु कुलधर्मेषु च उत्सन्नेषु तत्तत्कर्मवर्जितानां मनुष्याणामनभिक्षतानां नरकपतनध्रौव्यादनर्थकरमिदमेव हेयमित्याह उत्स-

श्चेति । यथोक्तानां मनुष्याणां नरकपातस्यावश्यकत्वे प्रमाणमाह इत्यनुशुश्रुमेति ॥ ४३ ॥

स्वा॰ टी॰ । उत्सन्नेति । उत्सन्नाः कुलधर्म्माः येषामिति उत्सन्न-जातिधर्म्मादीनामप्युपलक्षणं अनुशुश्रुम श्रुतवन्तो वयं प्रायश्चित्तमकुर्वाणाः पापेष्वभिरता नराः । अपश्चात्तापिनः पापा निरयान् यान्ति दारुणा-नित्यादिवचनेभ्यः ॥ ४३ ॥

**अहो वत महत्पापं कर्त्तुं व्यवसिता वयम् ।**
**यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥ ४४ ॥**

राज्यप्राप्तिप्रयुक्तसुखोपभोगलुब्धतया स्वजनहिंसायां प्रवृत्तिरस्माकं गुणदोषविभागविज्ञानवतामतिकष्टेति परिभ्रष्टहृदयः सन्नाह अहो वतेति ॥ ४४ ॥

स्वा॰ टी॰ । बन्धुवधाध्यवसायेन सन्तप्यमान आह अहो वते-त्यादि । स्वजनं हन्तुमुद्यता इति यत् एतन्महत् पापं कर्त्तुमध्यवसायं कृतवन्तो वयं अहो वत महत् कष्टमित्यर्थः ॥ ४४ ॥

**यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।**
**धार्त्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ४५॥**

यद्येवं युद्धे विमुखः सन् परपरिभवप्रतीकाररहितो वर्त्तेथास्तर्हि त्वां शस्त्रपरिग्रहरहितं शत्रुं शस्त्रपाणयो धार्त्तराष्ट्रा निग्रह्णीयुरित्या-शङ्क्याह यदीति । प्राणत्राणादपि प्रकृष्टो धर्मः प्राणभृतामहिंसेति भावः ॥ ४५ ॥

स्वा॰ टी । एवं सन्तप्तः सन् मृत्युमेवाशंसमान आह यदि मामित्यादि । अकृतप्रतीकारं दृष्ट्वा तुष्णीमुपविष्टं मां यदि हनिष्यन्ति तर्हि तद्धननं मम क्षेमतरं अत्यन्तहितं भवेत् पापानिष्पत्तेः ॥ ४५ ॥

**सञ्जय उवाच ।**

**एवमुक्त्वार्ज्जुनः संख्ये रथोपस्थ उपाविशत् ।**

विसृज्य सशरं चापं शोकसंविग्नमानसः ॥४६॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे सैन्यदर्शनो नाम प्रथमोऽध्यायः ।

यथोक्तमर्जुनस्य वृत्तान्तं सञ्जयो धृतराष्ट्रं राजानं प्रति प्रवेदितवान् तमेव प्रवेदनप्रकारं दर्शयति एवमिति । प्रदर्शितेन प्रकारेण भगवन्तं प्रति विज्ञापनं कृत्वा शोकमोहाभ्यां परिभूतमानसः सोऽर्जुनः संख्ये युद्धमध्ये शरेण सहितं गाण्डीवं त्यक्त्वा न योत्स्येऽहमिति ब्रुवन्मध्ये रथस्य सव्यासमेव श्रेयस्करं मत्वोपविष्टवानित्यर्थः ॥ ४६ ॥

इति प्रथमोऽध्यायः ।

स्वा० टी० । ततः किं वृत्तमित्यपेक्षायां सञ्जय उवाच एवमुक्त्वेत्यादि । संख्ये संग्रामे रथोपस्थे रथस्योपरि उपाविशत् उपविवेश शोकेन संविग्नं प्रकम्पितं मानसं चित्तं यस्य स तथा ॥ ४६ ॥

इति प्रथमोऽध्यायः ।

---

## द्वितीयोऽध्यायः ।

---

सञ्जय उवाच ।

तन्तथा कृपयाविष्टमश्रुपूर्णाकुलेक्षणम् ।
विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥ १ ॥

अहिंसा परमो धर्मो भिक्षाशनञ्चेत्येवं लक्षणया बुद्ध्या युद्धवैमुख्यमर्जुनस्य श्रुत्वा स्वपुत्राणां राज्यैश्वर्य्यमप्रचलितमवधार्य्य स्वस्थहृदयं धृतराष्ट्रं दृष्ट्वा तस्य दुराशामपनेष्यामीति मनीषया सञ्जयस्तं प्रत्युक्तवानित्याह सञ्जय इति। परमेश्वरेण स्मार्य्यमाणोऽपि कृपयालब्धे सहसा नार्जुनः सस्मार विपर्य्ययप्रयुक्तस्य शोकस्य दृढतरमोहहेतुत्वात्तथापि तं भगवान्नोपेक्षितवानित्याह तं तथेति। तं प्रकृतं पार्थं तथा स्वजनमरणप्रसङ्गदर्शनेन कृपया करुणयाविष्टमधिष्ठितमश्रुभिः पूर्णे समाकुले चेक्षणे यस्य तं अश्रुव्याप्ततरलाक्षं विषीदन्तं शोचन्तमिदं वक्ष्यमाणं वाक्यं सोपपत्तिकं वचनं मधुनामानमसुरं सूदितवानिति मधुसूदनो भगवानुक्तवान्न तु यथोक्तमर्जुनमुपेक्षितवानित्यर्थः॥ १ ॥

स्वा॰ टी॰। द्वितीये शोकसन्तप्तमर्जुनं ब्रह्मविद्यया।
प्रतिबोध्य हरिश्चक्रे स्थितप्रज्ञस्य लक्षणम्॥

ततः किं वृत्तमित्यपेक्षायां सञ्जय उवाच तं तथेति। अश्रुभिः पूर्णे आकुले ईक्षणे यस्य तं तथा उक्तप्रकारेण विषीदन्तमर्जुनं प्रति मधुसूदन इदं वाक्यमुवाच॥ १ ॥

## श्रीभगवानुवाच।

**कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम्।**
**अनार्यजुष्टमस्वर्ग्यमकीर्त्तिकरमर्जुन!॥ २ ॥**

किन्तद्वाक्यमित्यपेक्षायामाह श्रीभगवानिति। कुतो हेतोस्त्वा त्वां सर्वक्षत्रियप्रवरं कश्मलं मलिनं शिष्टगर्हितं युद्धात् पराङ्मुखत्वं विषमे सभयस्थाने समुपस्थितं प्राप्तमनार्य्यैः शास्त्रार्थमविद्भिः जुष्टं सेवितमस्वर्ग्यं स्वर्गानर्हं प्रत्यवायकारणमिह चाकीर्त्तिकरमयशस्करमर्जुननाम्ना प्रख्यातस्य तव नैतत् युक्तमित्यर्थः॥ २ ॥

स्वा॰ टी॰। तदेव वाक्यमाह कुत इति। कुतो हेतोस्त्वा त्वां विषमे सङ्कटे इदं कश्मलमुपस्थितमयं मोहः प्राप्तो यत आर्य्यैरसेवितमस्वर्ग्यमधर्म्यमयशस्करञ्च॥ २ ॥

मा क्लैव्यं गच्छ कौन्तेय! नैतत् त्वय्युपपद्यते।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप! ॥ ३ ॥

पुनरपि भगवानर्जुनं प्रत्याह क्लैव्यमिति। क्लैव्यं क्लीवभावमधैर्य्यं मा स्म गमः मा गाः हे पार्थ! पृथातनय! न हि त्वयि महेश्वरेणापि कृताहवे प्रख्यातपौरुषे महामहिमन्येतदुपपद्यते क्षुद्रं शुद्रत्वकारणं हृदयदौर्बल्यं मनसो दुर्बलत्वमधैर्य्यं त्यक्त्वोत्तिष्ठ युद्धायोपक्रमं कुरु हे परन्तप! परं शत्रुं तापयतीति तथा सम्बोध्यते ॥ ३ ॥

स्वा॰ टी॰। मा क्लैव्यमिति। तस्मात् हे पार्थ! क्लैव्यं कातर्य्यं मा गच्छ न प्राप्नुहि, यतस्त्वय्येतन्नोपपद्यते योग्यं न भवति, क्षुद्रं तुच्छं हृदयदौर्बल्यं कातर्य्यं त्यक्त्वा युद्धायोत्तिष्ठ, हे परन्तप! शत्रुतापिन्! ॥ ३ ॥

अर्जुन उवाच।

कथं भीष्ममहं संख्ये द्रोणञ्च मधुसूदन!।
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन! ॥४॥

एवं भगवता प्रतिबोध्यमानोऽपि शोकाभिभूतचेतस्त्वादप्रतिबुध्यमानः सन्नर्जुनः स्वाभिप्रायमेव प्रकृत भगवन्तं प्रत्युक्तवान् कथमित्यादिना। भीष्मं पितामहं द्रोणञ्चाचार्य्यं सङ्ख्ये रणे हे मधुसूदन! इषुभिः यत्र वाचापि योत्स्यामीति वक्तुमनुचितं तत्र कथं बाणैर्योत्स्य इति भावः, सायकैस्तौ कथं प्रतियोत्स्यामि प्रतियोत्स्ये, तौ हि पूजार्हौ कुसुमादिभिरर्च्चनयोग्यौ, हे अरिसूदन! सर्व्वानेवारीन् यत्नेन सूदितवानिति भगवानेवं सम्बोध्यते ॥ ४ ॥

स्वा॰ टी॰। नाहं कातरत्वेन युद्धादुपरतोऽस्मि किन्तु युद्धस्यान्याय्यत्वादधर्म्मत्वाच्चेत्याह अर्जुन उवाच कथमिति। भीष्मद्रोणौ पूजार्हौ पूजायामर्हौ योग्यौ तौ प्रति कथमहं योत्स्यामि तत्रापीषुभिर्यत्र वाचापि योत्स्यामीति वक्तुमनुचितं तत्र बाणैः कथं योत्स्यामीत्यर्थः हे अरिसूदन! शत्रुविमर्द्दन! ॥ ४ ॥

गुरूनहत्वा हि महानुभावान्
श्रेयो भोक्तुं भैक्ष्यमपीह लोके ।
हत्वार्थकामांस्तु गुरूनिहैव
भुञ्जीय भोगान् रुधिरप्रदिग्धान् ॥ ५ ॥

राज्ञां धर्मेऽपि युद्धे गुर्व्वादिवधे दृष्टमात्रफलत्वं गृहीत्वा पापमारोप्य ब्रूते गुरूनिति । गुरून् भीष्मद्रोणादीन् भ्रात्रादींश्चात्र प्राप्तान् अहिंसित्वा महानुभावान् महामाहात्म्यान् श्रुताध्ययनसम्पन्नान् श्रेयः प्रशस्यतरं युक्तं भोक्तुमभ्यवहर्त्तुं भैक्ष्यं भिक्षाणां समूहः भिक्षाशनं नृपादीनां निषिद्धमपि इह लोके व्यवहारभूमौ न हि गुर्वादिहिंसया राज्यभोगोऽपेक्ष्यते किन्तु हत्वा गुर्वादीनर्थकामानेव भुञ्जीय न मोक्षमनुभवेयमिहैव भोगो न स्वर्गे । अर्थकामानेव विशिनष्टि भोगानिति । भुज्यत इति भोगास्तान् रुधिरप्रदिग्धान् लोहितलिप्तानिवात्यन्तगर्हितानतो भोगान् गुरुवधादिसाध्यान् परित्यज्य भिक्षाशनमेव युक्तमित्यर्थः ॥ ५ ॥

स्वा॰ टी॰ । तर्हि तानहत्वा तव देहयात्रापि न स्यादिति चेत्तत्राह गुरूनिति । गुरून् द्रोणाचार्य्यादीनहत्वा परलोकविरुद्धगुरुवधमकृत्वेह लोके भिक्षान्नमपि भोक्तुं श्रेय उचितम् । विपक्षे तु न केवलं परत्र दुःखं किन्त्विहैव च नरदुःखमनुभवेयमित्याह हत्वेति । गुरून् हत्वेहैव रुधिरेण प्रदिग्धान् प्रकर्षेण लिप्तानर्थकामात्मकान् भोगानहं भुञ्जीयाश्नीयाम् । यद्वा अर्थकामानिति गुरूणां विशेषणम्, अर्थतृष्णाकुलत्वादेते तावद्युद्धान्न निवर्त्तेरं तस्मादेतद्वधः प्रसज्यतैवेत्यर्थः, तथा च युधिष्ठिरं प्रति भीष्मेणोक्तम्, अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित् । इति सत्यं महाराज बद्धोऽस्म्यर्थेन कौरवैरिति ॥ ५ ॥

न चैतद्विद्मः कतरन्नो गरीयो
यद्वा जयेम यदि वा नो जयेयुः ।

**यानेव हत्वा न जिजीविषाम-**
**स्तेऽवस्थिताः प्रमुखे धार्त्तराष्ट्राः ॥ ६ ॥**

क्षत्रियाणां स्वधर्मत्वात् युद्धमेव श्रेयस्करमित्याशङ्क्याह न चैतदिति । एतदपि न जानीमो भैक्ष्ययुद्धयोः कतरं नोऽस्माकं गरीयः श्रेष्ठं किं भैक्ष्यं हिंसाशून्यत्वादुत युद्धं स्वधर्मत्वादिति सन्दिग्धा च जयस्थितिः किं साम्यमेवोभयेषां यद्वा वयं जयेमातिशयेमहि यदि वा नोऽस्मान् धार्त्तराष्ट्रा दुर्योधनादयो जयेयुः जातोऽपि जयो न फलवान् यतो यान् बन्धून् हत्वा न जिजीविषामो जीवितुं नेच्छामस्ते एवावस्थिताः, प्रमुखे संमुखे धार्त्तराष्ट्रा धृतराष्ट्रस्यापत्यानि तस्माद्भैक्ष्यात् युद्धस्य श्रेष्ठत्वं न सिद्धमित्यर्थः ॥ ६ ॥

स्वा॰ टी॰ । किञ्च यद्यप्यधर्ममङ्गीकरिष्यामस्तथापि किमस्माकं जयः पराजयो वा गरीयान् भवेदिति न ज्ञायत इत्याह न चैतदिति । द्वयोर्मध्ये नोऽस्माकं कतरत् किन्नाम गरीयोऽधिकतरं भविष्यतीति न विद्मः । तदेव द्वयं दर्शयति यद्वेति । यद्वा एतान् वयं जयेम जेष्यामः यदि वा नोऽस्मानेते जयेयुर्जेष्यन्तीति । किञ्चास्माकं जयोऽपि फलतः पराजय एवेत्याह यानिति । यानेव हत्वा जीवितुं नेच्छामस्त एवैते संमुखेऽवस्थिताः ॥ ६ ॥

**कार्पण्यदोषोपहतस्वभावः**
**पृच्छामि त्वां धर्म्मसंमूढचेताः ।**
**यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे**
**शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥७॥**

समधिगतसंसारदोषजातस्यातितरां निर्विण्णस्य मुमुक्षो रुपसन्नस्यात्मोपदेशसंग्रहणेऽधिकारं सूचयति कार्पण्येति । योऽल्पां स्वल्पामपि स्वक्षतिं न क्षमते स कृपणस्तद्विपर्ययादखिलोऽनात्मविदप्राप्तपरमपुरुषार्थतया कृपणो भवति यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात् प्रैति स कृपण

इति श्रुतेः तस्य भावः कार्पण्यं दैन्यं तेन दोषेणापहृतो दूषितः स्वभावश्चित्तमस्येति विग्रहः, सोऽहं पृच्छाम्यनुयुञ्जे त्वा त्वां धर्मसंमूढ़चेताः धर्मो धारयतीति परं ब्रह्म तस्मिन् संमूढमविवेकतां गतं चेतो यस्य ममेति तथाह सुब्रः किं पृच्छसि, यन्निश्चितमैकान्तिकमनापेक्षिकं श्रेयः स्यान्न रोगनिवृत्तिवदनैकान्तिकमनात्यन्तिकं स्वर्गवदापेक्षिकं वा तन्निःश्रेयसं मे मह्यं प्रब्रूहि नापुत्रायाशिष्यायेति निषेधात् न प्रवक्तव्यमिति मा मंस्थाः यतः शिष्यस्तेऽहं भवामि शाध्यनुशाधि मां निःश्रेयसं त्वामहं प्रपन्नोऽस्मि ॥ ७ ॥

स्वा॰ टी॰ । कार्पण्येत्यादि । तस्मादेतान् हत्वा कथं जीविष्याम इति कार्पण्यं, दोषः कुलक्षयकृतः, ताभ्यामुपहृतोऽभिभूतः स्वभावः शौर्यलक्षणो यस्य सोऽहं त्वां पृच्छामि, तथा धर्मे संमूढं चेतो यस्य सः, युद्धं त्यक्त्वा भिक्षाटनमपि क्षत्रियस्य धर्मोऽधर्मो वेति सन्दिग्धचित्तः सन्नित्यर्थः, अतो मे यन्निश्चितं श्रेयः स्यात्तद्ब्रूहि, किञ्च तेऽहं शिष्यः शासनार्होऽतस्त्वां प्रपन्नं शरणं गतं मां शाधि शिक्षय ॥ ७ ॥

**न हि प्रपश्यामि ममापनुद्याद्**
**यच्छोकमुच्छोषणमिन्द्रियाणाम् ।**
**अवाप्य भूमावसपत्नमृद्धं**
**राज्यं सुराणामपि चाधिपत्यम् ॥८॥**

कुतो निःश्रेयसमेवेच्छसि तत्राह न हीति । यस्मान्न प्रपश्यामि किं न प्रपश्यसि ममापनुद्यादपनयेद् यच्छोकमुच्छोषणं प्रतपनमिन्द्रियाणां तन्न पश्यामि । ननु शत्रूंश्चिहत्य राज्ये प्राप्ते शोकनिवृत्तिस्ते भविष्यति नेत्याह अवाप्येति । अविद्यमानः सपत्नः शत्रुर्यस्य तदृद्धं स्फीतं राज्यं राज्ञः कर्म्म प्रजारक्षणप्रशासनादि तदिदमस्यां भूमाववाप्यापि शोकापनयकारणं न पश्यामीत्यर्थः । तर्हि देवेन्द्रत्वादिप्राप्तौ शोकापनयस्ते भविष्यति नेत्याह सुराणामपीति । तेषामाधिपत्यं स्वाधिपतित्वं स्वाम्यमिन्द्रत्वं ब्रह्मत्वं वा तदवाप्यापि मम शोको नापगच्छेदित्यर्थः ॥८॥

स्वा० टी० । त्वमेव विचार्य्य यद्युक्तं तत् कुर्विति चेत्तत्राह नहि प्रपश्यामीति । इन्द्रियाणामुच्छोषणमतिशोषकरं मदीयं शोकं यत् कर्म अपनुद्यादपनयेत्तदहं न पश्यामीति यद्यपि भूमौ निष्कण्टकं समृद्धं राज्यं प्राप्स्यामि तथा सुरेन्द्रत्वमपि यदि प्राप्स्यामि एवमभीष्टं तत्तत्सर्वमवाप्यापि शोकापनोदनोपायं न प्रपश्यामीत्यन्वयः ॥८॥

## सञ्जय उवाच ।

**एवमुक्त्वा हृषीकेशं गुडाकेशः परन्तपः ।**
**न योत्स्यइति गोविन्दमुक्त्वा तूष्णीं बभूवह ॥६॥**

एवमर्जुनेन स्वाभिप्रायं भगवन्तं प्रति प्रकाशितं सञ्जयो राजानमावेदितवानित्याह सञ्जय इति । एवं प्रागुक्तप्रकारेण भगवन्तं प्रत्युक्त्वा परन्तपोऽर्जुनो न योत्स्ये न संप्रहरिष्ये अतएवास्य शोकप्रसक्तादिति गोविन्दमुक्त्वा तूष्णीमभूवन् बभूव किलेत्यर्थः ॥ ६ ॥

स्वा०टी०। एवमुक्त्वार्जुनः किं कृतवानित्यपेक्षायां सञ्जय उवाच एवमिति॥६॥

**तमुवाच हृषीकेशः प्रहसन्निव भारत ! ।**
**सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥ १० ॥**

तमर्जुनं सेनयोर्वाहिन्योरुभयोर्मध्ये विषीदन्तं विषादं कुर्वन्तमतिदुःखितं शोकमोहाभ्यां अभिभूतं स्वधर्मात् प्रच्युतप्रायं प्रतीत्य प्रहसन्निवोपहासं कुर्वन्निव तदाश्वासार्थं हे भारत ! भरतान्वय ! इत्येवं संबोध्य भगवानिदं प्रश्नोत्तरं निःश्रेयसाधिगमसाधनं वचनमुक्तवानित्याह तमुवाचेति ॥ १० ॥

तदेव वचनमुदाहरति श्रीभगवानिति ।

स्वा० टी० । ततः किं वृत्तमित्यत आह तमुवाचेति । प्रहसन्निवेति प्रसन्नमुखः सन्नित्यर्थः ॥ १० ॥

देहात्मनोरविवेकात् अस्यैवं शोको भवतीति तद्विवेक प्रदर्शनार्थं

श्रीभगवानुवाच ।

## श्रीभगवानुवाच।

**अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे।**
**गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥११॥**

## शाङ्करभाष्यम्।

दृष्ट्वा तु पाण्डवानीकमित्यारभ्य न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव हेत्येतदन्तः प्राणिनां शोकमोहादिसंसारदुःखबीजभूतदोषोद्भवकारणहेतुप्रदर्शनार्थत्वेन व्याख्येयो ग्रन्थस्तथा ह्यर्जुनेन राज्यगुरुपुत्रमित्रसुहृत्स्वजनसम्बन्धिबान्धवेष्वहमेषां ममैत इत्येवं भ्रान्तिप्रत्ययनिमित्तस्नेहविच्छेदादिनिमित्तावात्मनः शोकमोहौ प्रदर्शितौ कथं भीष्ममहं संख्ये इत्यादिना। शोकमोहाभ्यां ह्यभिभूतविवेकविज्ञानः स्वत एव क्षात्रधर्मे युद्धे प्रवृत्तोऽपि तस्माद्युद्धादुपरराम परधर्मञ्च भिक्षाजीवनादिकं कर्त्तुं प्रववृते तथा च सर्वप्राणिनां शोकमोहादिदोषाविष्टचेतसां स्वभावत एव स्वधर्मपरित्यागः प्रतिषिद्धसेवा च स्यात्। स्वधर्मे

---

व्या०। अतीतसन्दर्भस्येत्थमक्षरोत्थमर्थं विवक्षित्वा तस्मिन्नेव वाक्यविभागमवगमयति दृष्ट्वा त्विति। धर्मक्षेत्रे कुरुक्षेत्रे इत्यादिराद्यश्लोकस्तावदेकं वाक्यं शास्त्रस्य कथासम्बन्धपरत्वेन पर्य्यवसानात्, दृष्ट्वेत्यारभ्य यावत् तूष्णीं बभूव हेति तावच्चैकं वाक्यं, इत आरभ्य इदं वच इत्येतदन्तो ग्रन्थो भवत्यपरं वाक्यमिति विभागः। नन्वाद्यश्लोकस्य युक्तमेकवाक्यत्वं प्रकृतशास्त्रस्य महाभारतेऽवतारावद्योतितत्वादन्तिमस्यापि सम्भवत्येकवाक्यत्वमनुनाम्नासार्थतया प्रवृत्तत्वात्तन्मध्यमस्य तु कथमेकवाक्यत्वमित्याशङ्क्यार्थैकत्वादित्याह प्राणिनामिति। शोको मानससन्तापो मोहो

प्रवृत्तानामपि तेषां वाङ्मनःकायादीनां प्रवृत्तिः फलाभिसन्धिपूर्व्विकैव साहङ्कारा च भवति। तत्रैवं सति धर्म्माधर्म्मोपचयादिष्टानिष्टजन्मसुखदुःखादिप्राप्तिलक्षणः संसारोऽनुपरतो भवतीति अतः संसारवीजभूतौ शोकमोहौ तयोश्च सर्व्वकर्म्मसन्न्यासपूर्व्वकादात्मज्ञानात् नान्यतो निवृत्तिरिति

---

विवेकाभावः आदिशब्दस्तदवान्तरभेदार्थः, स एव संसारस्य दुःखात्मनो वीजभूतो दोषस्तस्योद्भवे कारणमहङ्कारो ममकारस्तद्धेतुरविद्या च तत्प्रदर्शनार्थत्वेनेति योजना। संजयद्वीमर्षं विवृणोति तथाद्दौति। राज्यं राज्ञः कर्म्म परिपालनादि पूजार्हा गुरवो द्रोणादयः पुत्राः स्नेनोत्पादिताः सौभद्रादयः सम्बन्धान्तरमन्तरेण स्नेहगोचरा गुरुपुत्रप्रभृतयो मित्रशब्देनोच्यन्ते उपकारनिरपेक्षतया स्वयमुपकारिणो हृदयानुरागभाजो भगवत्प्रमुखाः सुहृदः स्वजना ज्ञातयो दुर्योधनादयः सम्बन्धिनः श्वशुरश्यालप्रभृतयो द्रुपदधृष्टद्युम्नादयः परम्परया पितृपितामहादिष्वनुरागभाजो राजानो बान्धवास्तेषु यथोक्तं प्रत्ययं निमित्तीकृत्य यः स्नेहो यश्च तैः सह विच्छेदो यच्चैतेषामुपघाते पातकं या च लोकगर्ह्या सर्व्वं तन्निमित्तं ययोरात्मनः शोकमोहयोस्तावेतौ संसारवीजभूतौ कथमित्यादिना दर्शिताविन्यर्थः। कथं पुनरनयोः संसारवीजयोरर्जुने सम्भावना उपपद्यते न हि प्रथितमहामहिम्नो विवेकविज्ञानवतः स्वधर्म्मे प्रवृत्तस्य तस्य शोकमोहाद्यनर्थहेतुसम्भावितावित्याशङ्क्य विवेकतिरस्कारेण तयोर्विहिताकरणप्रतिषिद्धाचरणकारणत्वादनर्थाधायकयोरस्ति तस्मिन् सम्भावनेत्याह शोकमोहाभ्यामिति। भिक्षया जीवनं प्राणधारणमादिशब्दाद्शेषकर्म्मसन्न्यासलक्षणं पारिव्राज्यमात्माभिध्यानमित्यादि गृह्यते किञ्चार्जुने दृश्यमानौ शोकमोहौ संसारवीजं शोकमोहत्वाद्दस्मदादिनिष्ठशोकमोहवदित्युपलब्धौ शोकमोहौ प्रत्येकं पक्षीकृत्यानुमातव्यमित्याह तथा चेति। शोकमोहादीत्यादिशब्देन मिथ्याभिमानस्नेहगर्हादयो गृह्यन्ते स्वभावतश्चित्तदोषसामर्थ्यादित्यर्थः। स्वधर्म्मादीनामपि

तदुपदिदिक्षुः सर्वलोकानुग्रहार्थं अर्जुनं निमित्तीकृत्याह भगवान् वासुदेवः अशोच्यानित्यादि।

तत्र केचिदाहुः, सर्वकर्मसन्न्यासपूर्वकादात्मज्ञाननिष्ठामात्रादेव केवलात् कैवल्यं न प्राप्यत एव किं तर्हि अग्निहोत्रादिश्रौतस्मार्त्तसहितात् ज्ञानात् कैवल्यप्राप्तिरिति

---

स्वधर्मे प्रवृत्तानां विहिताकरणत्वाद्यभावाच्च शोकादेः संसारबीजतेति दृष्टान्तस्य साध्यविकलतेति चेत्तत्राह स्वधर्म इति। कामादीनामित्यादिशब्दाद्विशिष्टानीन्द्रियाणग्राह्यादीयन्ते फलाभिसन्धिस्तद्विषयेऽभिलाषः कर्तृत्व भोक्तृत्वाभिमानोऽहङ्कारः। प्रागुक्तप्रकारेण वागादिव्यापारे सति किं सिध्यति तत्राह तत्रेति। शुभकर्मानुष्ठानेन धर्मोपचयादिष्टं देवादिजन्म ततः सुखप्राप्तिः अशुभकर्मानुष्ठानेनाधर्मोपचयादनिष्टं तिर्यगादिजन्म ततो दुःखप्राप्तिः व्यामिश्रकर्मानुष्ठानादुभाभ्यां धर्माधर्माभ्यां मनुष्यजन्म ततः सुखदुःखे भवतः एवमात्मकः संसारः सन्ततो वर्त्तत इत्यर्थः। अर्जुनस्यान्येषाञ्च शोकमोहयोः संसारबीजत्वमुपपादितमुपसंहरति इत्यत इति। तदेवं प्रथमाध्यायस्य द्वितीयाध्यायैकदेशसहितस्यात्मज्ञानोत्थनिवर्त्तनीयशोकमोहाख्यसंसारबीजप्रदर्शनपरत्वं दर्शयित्वा वक्ष्यमाणसन्दर्भस्य सहेतुसंसारनिवर्त्तकसम्यक्ज्ञानोपदेशे तात्पर्य्यं दर्शयति तयोश्चेति। तदु यथोक्तं ज्ञानमुपदिदिक्षुरुपदेष्टुमिच्छन् भगवानाहेति सम्बन्धः। सर्वलोकानुग्रहार्थं यथोक्तं ज्ञानं भगवानुपदिदिक्षतीत्ययुक्तं अर्जुनं प्रत्येवोपदेशादित्याशङ्क्याह अर्जुनमिति। न हि तस्यामवस्थामर्जुनस्य भगवता यथोक्तं ज्ञानमुपदेष्टुमिष्टं किन्तु स्वधर्मानुष्ठानाद्बुद्धिशुद्ध्युत्तरकालमित्यभिप्रेत्योक्तं निमित्तीकृत्येति।

सर्वकर्मसन्न्यासपूर्वकादात्मज्ञानादेव केवलात् कैवल्यप्राप्तिरिति गीताशास्त्रार्थः स्वाभिप्रेतो व्याख्यातः सम्प्रति वृत्तिकृतामभिप्रेतं विरचितमनुवदति तत्रेति। निर्द्धारितः शास्त्रार्थः सति सप्तम्या पुरामृश्यते। तेषामुक्तिमेव विशदयन्वादी वेदान्तिकमभ्युपगमं कृत्वा-

सर्व्वासु गीतासु निश्चितोऽर्थ इति। ज्ञापकञ्चाहुरस्यार्थस्य अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि, कर्म्मण्येवाधिकारस्ते, कुरु कर्म्मैव तस्मात्त्वमित्यादि। हिंसादियुक्तत्वाद्वैदिकं कर्म्म अधर्म्मायेतीयमप्याशङ्का न कार्य्या, कथं यत्नं कर्म्म युद्धलक्षणं गुरुभ्रातृपुत्रादिहिंसादिलक्षणमत्यन्तक्रूरतरमपि स्वधर्म्म इति कृत्वा नाधर्म्माय, तदकरणे च ततः स्वधर्म्मं कीर्त्तिं च हित्वा पापमवाप्स्यसीति ब्रुवता यावज्जीवादिश्रुतिचोदितानां स्वकर्म्मणां पश्वादिहिंसालक्षणानाञ्च कर्म्मणां प्रागेव नाधर्म्मत्वमिति सुनिश्चितमुक्तं भवतीति।

---

दिशति सर्व्वकर्म्मेति। वैदिकेन कर्म्मणा समुच्चयं व्युदसितुं मात्रपदं स्मार्त्तेन कर्म्मणा समुच्चयं निरसितुमवधारणम्। अभ्याससम्बन्धं धुनीते केवलादिति। नैवेत्यवकारः सम्बध्यते। केन तर्हि प्रकारेण ज्ञानं कैवल्यप्राप्तिकारणमित्याशङ्क्याह किं तर्हीति। किं तत्र प्रमापकमित्याशङ्क्य इदमेव शास्त्रमित्याह इति सर्व्वास्विति। यथा प्रयाजानुयाजाद्युपकृतमेव दर्शपूर्णमासादि स्वर्गसाधनं तथा श्रौतस्मार्त्तकर्म्मोपकृतमेव ब्रह्मज्ञानं कैवल्यं साधयति विमतं सेतिकर्त्तव्यताकमेव स्वफलसाधकं कारणत्वाद्दर्शपूर्णमासादिवत् तदेवं ज्ञानकर्म्मसमुच्चयपरं शास्त्रमित्यर्थः, इति पदमाङ्करित्यनेन पूर्व्वेण सम्बध्यते। पौर्व्वापर्य्यपर्य्यालोचनायां शास्त्रस्य समुच्चयपरत्वं न निर्द्धारितमित्याशङ्क्याह ज्ञापकञ्चेति। न केवलं ज्ञानं मुक्तिहेतुरपि तु समुच्चितमित्यस्यार्थस्य स्वधर्म्मानुष्ठाने पापप्राप्तिवचनसामर्थ्यलक्षणं लिङ्गं गमकमित्यर्थः। शास्त्रस्य समुच्चयपरत्वे लिङ्गवद्वाक्यमपि प्रमाणमित्याह कर्म्मण्येवेति। तत्रैव वाक्यान्तरमुदाहरति कुरु कर्म्मेति। ननु न हिंस्यात् सर्व्वा भूतानि इत्यादिना प्रतिषिद्धत्वेन हिंसादेरनर्थ-

तदसत्, ज्ञानकर्म्मनिष्ठयोर्व्विभागवचनात् बुद्धिद्वयाश्रययोरशोच्यानित्यादिना ग्रन्थेन भगवता यावत् स्वधर्म्ममपि चावेक्ष्येत्येतदन्तेन ग्रन्थेन यत् परमार्थात्मतत्त्वनिरूपणं कृतं तत् साङ्ख्यं तद्विषया बुद्धिरात्मनो जन्मादिषड्विक्रियाभावादकर्त्तात्मेति प्रकरणार्थनिरूपणात् या जायते सा सांख्यबुद्धिः सा येषां ज्ञानिनामुचिता भवति ते सांख्याः एतस्या बुद्धेर्जन्मनः प्रागात्मनो देहादिव्यतिरिक्तस्य कर्तृत्वभोक्तृत्वाद्यपेक्षो धर्म्माधर्म्मविवेकपूर्व्वको मोक्षसाध-

---

हेतुत्वावगमात्तदुपेत वैदिकं कर्माधर्मायेति नानुष्ठातुं शक्यते तथा च तस्य सापेक्षज्ञानेन समुच्चयो न सिध्यतीति सांख्यमताशङ्कां परिहरति हिंसादीति। आदिशब्दादुच्छिष्टभक्षणं गृह्यते। यथोक्ताशङ्का न कर्त्तव्येतत्राकांक्षापूर्वकं हेतुमाह कथमित्यादिना। स्वशब्देन क्षत्रियो विवक्ष्यते। युद्धाकरणे क्षत्रियस्य प्रत्यवायश्रवणात्तस्य तं प्रति नित्यत्वेनावश्यकर्त्तव्यत्वप्रतीतेर्गुर्व्वादिहिंसायुक्तमतिक्रूरमपि कर्म नाधर्मायेति हेत्वन्तरमाह तदकरणे चेति। आचार्य्यादिहिंसायुक्तमतिक्रूरमपि युद्धं नाधर्मायेति ब्रुवता भगवता श्रौतानां हिंसादियुक्तानामपि कर्मणां दूरतो नाधर्म्मत्वमिति स्पष्टमुपदिष्टं भवति सामान्यशास्त्रस्य व्यर्थहिंसानिषेधार्थत्वात् क्रतुविषये चोदितहिंसायास्तदविषयत्वात् कुतो वैदिककर्म्मानुष्ठानानुपपत्तिरित्यर्थः, ज्ञानकर्मसमुच्चयात् कैवल्यसिद्धिरित्युपसंहर्त्तुमितिशब्दः।

यत्तावदुब्रह्मज्ञानं सेतिकर्त्तव्यताकं स्वफलसाधकं करणत्वादिति अनुमानं तद्दूषयति तदसदिति। न हि शुक्तिकादिज्ञानमज्ञाननिवृत्तौ स्वफले सहकारि किञ्चिदपेक्षते तथा च व्यभिचारादसाधकं करणत्वमित्यर्थः। यत्तु गीताशास्त्रे समुच्चयस्यैव प्रतिपाद्यतेति प्रतिज्ञातं तदपि विभागवचनविरुद्धमित्याह ज्ञानेति। सांख्यबुद्धिर्योगबुद्धिश्चेति बुद्धिद्वयम्। तत्र सांख्यबुद्ध्याश्रयां ज्ञाननिष्ठां व्याख्यातुं सांख्यशब्दार्थमाह

नानुष्ठाननिरूपणलक्षणो योगः, तद्विषया बुद्धिर्योगबुद्धिः सा येषां कर्म्मिणामुचिता भवति ते योगिनः, तथा च भगवता विभक्ते द्वे बुद्धी निर्द्दिष्टे एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु इति । तयोश्च सांख्यबुद्ध्याश्रयां ज्ञानयोगेन निष्ठां सांख्यानां विभक्तां वक्ष्यति पुरा वेदात्मना मया प्रोक्तेति, तथा च योगबुद्ध्याश्रयां कर्म्मयोगेन निष्ठां विभक्ताञ्च वक्ष्यति कर्म्मयोगेन योगिनामित्येवं सांख्यबुद्धिं योगबुद्धिञ्चाश्रित्य द्वे निष्ठे विभक्ते भगवतैवोक्ते ज्ञानकर्म्मणोः कर्त्तृत्वाकर्त्तृत्वैकत्वानेकत्वबुद्ध्याश्रययोरेकपुरुषाश्रयत्वासम्भवं पश्यता । यथैतद्विभागवचनं तथैव दर्शितं शातपथीये ब्राह्मणे, एतमेव प्रव्राजिनो लोकमिच्छन्तो ब्राह्मणाः प्रव्रजन्तीति सर्व्वकर्म्मसन्न्यासं विधाय तच्छेषेण किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति । तत्रैव च प्राग्दारपरिग्रहात् पुरुषश्चात्मा प्राकृतो धर्म्मजिज्ञासोत्तरकालं लोकत्रयसाधनं पुत्रं द्विप्रकारञ्च वित्तं मानुषं दैवञ्च, तत्र मानुषं वित्तं कर्म्मरूपं पितृलोकप्राप्तिसाधनं विद्याञ्च दैवं वित्तं

---

अशोच्यानित्यादिना इति । अशोच्यानित्यादिना स्वधर्म्ममपि चावेक्ष्येत्येतदन्तं वाक्यं यावद्भविष्यति तावता ग्रन्थेन यत् परमार्थभूतमात्मतत्त्वं भगवता निरूपितं तद्‌ यथा सम्यक् व्याख्यायते प्रकाश्यते सा वैदिकी सम्यक्‌बुद्धिः संख्या तया प्रकाश्यत्वेन सम्बन्धिप्रकृतं तत्त्वं सांख्यमित्यर्थः । सांख्यशब्दार्थमुक्त्वा तत्प्रकाशिकां बुद्धिं तद्वतश्च सांख्यान् व्याकरोति तद्विषयेति । तद्विषया बुद्धिः सांख्ये बुद्धिरिति सम्बन्धः । तानेव प्रकटयति आत्मन इति । न जायते म्रियते वेत्यादिप्रकरणार्थनिरूपणद्वारेणात्मनः षड्भावविक्रियाभावात् कूटस्थोऽसाविति या

देवलोकप्राप्तिसाधनं सोऽकामयतेति अविद्याकामवत एव सर्व्वाणि कर्म्माणि श्रौतादीनि दर्शितानि, तेभ्यो व्युत्थाय प्रव्रजन्तीति व्युत्थानमात्मानमेव लोकमिच्छतोऽकामस्य विहितम्। तदेतद्विभागवचनमनुपपन्नं स्यात् यदि श्रौत-कर्म्मज्ञानयोः समुच्चयोऽभिप्रेतः स्याद्भगवतः।

---

बुद्धिरुत्पद्यते सा सांख्यबुद्धिः तत्पराः सन्न्यासिनः सांख्या इत्यर्थः। सम्प्रति योगबुद्ध्याश्रयां कर्मनिष्ठां व्याख्यातुकामो योगशब्दार्थमाह एतस्या इति। यथोक्तबुद्ध्युत्पत्तौ विरोधादेवानुष्ठानायोगात्तस्यास्तन्निष-त्तिकत्वात् पूर्वमेव तदुत्पत्तेरात्मनश्च देहादिव्यतिरिक्तत्वादापेक्षया धर्म्मा-धर्म्मं निष्कृष्य तेनेश्वराराधनरूपेण कर्मणा पुरुषो मोक्षाय युज्यते योग्यः सम्पद्यते तेन मोक्षसिद्धये परम्परया साधनीभूतमागुक्तधर्म्मानु-ष्ठानात्मको योग इत्यर्थः। अथ योगबुद्धिं विभजन् योगिनो विभजते तद्विषयेति। उक्ते बुद्धिद्वये भगवतोऽभिमतिं दर्शयति तथा चेति। सांख्यबुद्ध्याश्रया ज्ञाननिष्ठेत्येतदपि भगवतोऽभिमतमित्याह तयोश्चेति। ज्ञानमेव योगो ज्ञानयोगस्तेन हि ब्रह्मणा युज्यते तादात्म्यमापद्यते तेन सन्न्यासिनां निष्ठा निश्चयेन स्थितिस्तात्पर्य्येण परिसमाप्तिस्तां कर्म-निष्ठातो व्यतिरिक्तां निष्ठयोर्मध्ये निष्कृष्य भगवान् वक्ष्यतीति योजना। लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयानघ। ज्ञानयोगेन सांख्याना-मित्येतद्वाक्यस्थोक्तार्थविषयमर्थतोऽनुदति पुरेति। योगबुद्ध्याश्रया कर्म-निष्ठेत्यत्रापि भगवदनुमतिमादर्शयति तथा चेति। कर्मैव योगः कर्म—योगस्तेन हि बुद्धिशुद्धिद्वारा मोक्षहेतुज्ञानाय पुमान् युज्यते तेन निष्ठां कर्मिणां ज्ञाननिष्ठातो विलक्षणां कर्मयोगेनेत्यादिना वक्ष्यति भगवानिति योजना। निष्ठाद्वयं बुद्धिद्वयाश्रयं भगवता विभज्योक्तमुप-संहरति एवमिति। कया पुनरनुपपत्त्या भगवता निष्ठाद्वयं विभ-ज्योक्तमित्याशङ्क्याह ज्ञानकर्मणोरिति। कर्म हि कर्तृत्वाद्यनेकत्व-बुद्ध्याश्रयं, ज्ञानं पुनरकर्तृत्वैकत्वबुद्ध्याश्रयं तदुभयमित्थं विरुद्धसाधन-

न च अर्जुनस्य प्रश्न उपपन्नो भवति ज्यायसी चेत् कर्म-

---

साध्यत्वानेकावस्थस्यैव पुरुषस्य सम्भवत्यतो युक्तमेव तयोर्विभागवचनमित्यर्थः । भगवदुक्तविभागवचनस्य मूलत्वेन श्रुतिमुदाहरति यथेति । तत्र ज्ञाननिष्ठाविषयं वाक्यं पठति एतमेवेति । प्रकृतमात्मानं नित्यविज्ञप्तिस्वभावं वेदितुमिच्छन्तः त्रिविधेऽपि कर्मफले वैतृष्ण्यं प्राप्ताः सर्वाणि कर्माणि परित्यज्य ज्ञाननिष्ठाः भवन्तीति पञ्चमलकारस्वीकारेण सन्न्यासविधिं विवक्षित्वा तस्यैव विधेः शेषार्थवादेन किं प्रजयेत्यादिना मोक्षफलं ज्ञानमुक्तमित्यर्थः । ननु फलाभावात् प्रजाक्षेपो नोपपद्यते पुत्रेणैतल्लोकजयस्य वाक्यान्तरसिद्धत्वादित्याशङ्क्य विदुषां प्रजासाध्यमनुष्यलोकस्यात्मव्यतिरेकेणाभावादात्मनश्चासाध्यत्वादाक्षेपो युक्तिमानिति विवक्षित्वाह येषामिति । इति ज्ञानं दर्शितमिति शेषः । तस्मिन्नेव ब्राह्मणे कर्मनिष्ठावाक्यं दर्शयति तत्रैवेति । प्राकृतत्वमतत्त्वदर्शित्वेनाज्ञत्वं स च ब्रह्मचारी सन् गुरुसमीपे यथाविधि वेदमधीत्यार्थज्ञानार्थं धर्मजिज्ञासां कृत्वा तदुत्तरकालं लोकत्रयप्राप्तिसाधनं पुत्रादित्रयं सोऽकामयत जाया मे स्यादित्यादिना कामितवानिति श्रुतमित्यर्थः । वित्तं विभजते द्विप्रकारमिति । तदेव प्रकारद्वैरूप्यमाह मानुष्यमिति । मानुष्यं वित्तं व्याचष्टे कर्मरूपमिति । तस्य फलपर्यवसायित्वमाह पितृलोकेति । दैवं वित्तं विभजते विद्याख्येति । तस्यापि फलनिष्ठत्वमाह देवेति । कर्मनिष्ठाविषयत्वेनोदाहृतश्रुतेस्तात्पर्यमाह अविदोति । अज्ञस्य कामनाविशिष्टस्यैव कर्माणि सोऽकामयतेत्यादिना दर्शितानीत्यर्थः । ज्ञाननिष्ठाविषयत्वेन दर्शितश्रुतेरपि तात्पर्यं दर्शयति तेभ्य इति । कर्मसु विरक्तस्यैव सन्न्यासपूर्विका ज्ञाननिष्ठा प्रागुदाहृतश्रुत्या दर्शितेत्यर्थः । अवस्थाभेदेन ज्ञानकर्मणोर्भिन्नाधिकारत्वस्य श्रुतत्वात् तन्मूलेन भगवतो विभागवचनेन शास्त्रस्य समुच्चयपरत्वप्रतिज्ञातमपबाधितमिति बाधितं किन्तु समुच्चयो ज्ञानस्य श्रौतेन स्मार्तेन वा कर्मणा विवक्ष्यते यदि प्रथमं तत्राह तदेतदिति ।

समुच्चयेऽभिप्रेते प्रश्नानुपपत्तिं दोषान्तरमाह न चेति । तामेवा-

णस्ते इत्यादिः, एकपुरुषानुष्ठेयत्वासम्भवं बुद्धिकर्म्मणोर्भगवता पूर्वमनुक्तं कथमर्जुनोऽश्रुतं बुद्धेश्च कर्म्मणो ज्यायस्त्वं भगवत्यध्यारोपयेत् मृषैव ज्यायसी चेत् कर्म्मणस्ते मता बुद्धिरिति किञ्च यदि बुद्धिकर्म्मणोः सर्व्वेषां समुच्चयः उक्तः स्यात् अर्जुनस्यापि स उक्त एवेति यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितमिति कथमुभयोरुपदेशे सत्यन्यतरविषय एव प्रश्नः स्यात् न हि पित्तप्रशमनार्थिनो वैद्येन मधुरं शीतलञ्च भोक्तव्यमित्युपदिष्टे तयोरन्यतरं पित्तप्रशमनकारणं ब्रूहीति प्रश्नः सम्भवति। अथार्जुनस्य भगवदुक्तवचनार्थविवेकानवधारणनिमित्तःप्रश्नः कल्प्येत, तथापि भगवता प्रश्नानुरूपं प्रतिवचनं देयं, मया बुद्धिकर्म्मणोः समुच्चय उक्तः किमर्थमित्थं त्वं भ्रान्तोऽसीति, न तु पुनः प्रतिवचनमननुरूपं, पृष्टादन्यदेव द्वे निष्ठे मया पुरा प्रोक्ते इति वक्तुं युक्तम्। नापि

---

नुपपत्तिं प्रकटयति एकपुरुषेति। यदि समुच्चयः शास्त्रार्थो भगवता विवक्षितस्तदा ज्ञानकर्मणोरेकेन पुरुषेणानुष्ठेयत्वमेव तेनोक्तमर्जुनेन च श्रुतं तत् कथं तदसम्भवमनुक्तमश्रुतञ्च मिथ्यैव श्रोता भगवत्यारोपयेच्च च तदारोपादृते किमिति मां कर्मण्येवातिक्रूरे युद्धलक्षणे नियोजयसि इति प्रश्नोऽवकल्प्यते तथा च प्रश्नालोचनया प्रष्टृप्रतिवक्त्रोः शास्त्रार्थतया समुच्चयोऽभिप्रेतो न भवतीति प्रतिभातीत्यर्थः। किञ्च समुच्चयपक्षे कर्म्मापेक्षया बुद्धेर्ज्यायस्त्वं भगवता पूर्वमनुक्तमर्जुनेन चाश्रुतं कथमसौ तस्मिन्नारोपयितुमर्हति ततश्चानुवादवचनं श्रोतुरनुचितमित्याह बुद्धेश्चेति। इतश्च समुच्चयः शास्त्रार्थो न सम्भवत्यन्यथा पञ्चमादावर्जुनस्य प्रश्नानुपपत्तेरित्याह किञ्चेति। ननु सर्व्वान् प्रत्युक्तोऽपि समुच्चयेनार्जुनं प्रत्युक्तोऽसाविति तदीयप्रश्नोपपत्तिरित्याशङ्क्याह यदीति एतयोः कर्मतत्त्यागयोरिति यावत्। ननु कर्मापेक्षया कर्म-

स्मार्त्तेनैव कर्म्मणा बुद्धेः समुच्चयेऽभिप्रेते विभागवचनादि सर्व्वमुपपन्नं, किञ्च क्षत्रियस्य युद्धं स्मार्त्तं कर्म्म स्वधर्म्म इति जानतस्तत् किं कर्म्मणि घोरे मां नियोजयसीत्युपालम्भोऽनुपपन्नस्तस्मात् गीताशास्त्रे ईषन्मात्रेणापि श्रौतेन स्मार्त्तेन वा कर्म्मणात्मज्ञानस्य समुच्चयो न केनचिद्दर्शयितुं शक्यः।

यस्य त्वज्ञानाद्रागादिदोषतो वा कर्म्मणि प्रवृत्तस्य यज्ञेन दानेन तपसा वा विशुद्धसत्त्वस्य ज्ञानमुत्पन्नं पर-

---

त्यागपूर्वकस्य ज्ञानस्य प्राधान्यात्तस्य श्रेयस्त्वात्तद्विषयप्रश्नोपपत्तिरिति चेन्नेत्याह नहीति। तथैव समुच्चये पुरुषार्थसाधने भगवता दर्शिते सत्यन्यतरगोचरो न प्रश्नो भवतीति शेषः। समुच्चये भगवतोक्तेऽपि तदज्ञानादर्ज्जुनस्य प्रश्नोपपत्तिरिति शङ्कते अथेति। अज्ञाननिमित्तं प्रश्नमङ्गीकृत्यापि प्रत्याचष्टे तथापीति। भगवतो भ्रान्त्यभावेन पूर्व्वापरानुसन्धानसम्भवादित्यर्थः। प्रश्नानुरूपत्वमेव प्रतिवचनस्य प्रकटयति कथेति। व्यावर्त्त्यं भ्रमादर्शयति नत्विति। प्रतिवचनस्य प्रश्नाननुरूपत्वमेव स्पष्टयति दृष्टादिति। श्रौतेन कर्मणा समुच्चयो ज्ञानस्येति पक्षं प्रतिक्षिप्य पक्षान्तरं प्रतिक्षिपति नापीति। स्मृतिस्थयोर्ज्ञानकर्मणोर्विभागवचनमादिशब्दगृहीतं बुद्धेर्ज्यायस्त्वं पञ्चमादौ प्रश्नो भगवत्प्रतिवचनं सर्व्वमिदं श्रौतेनेव स्मार्त्तेनापि कर्मणा बुद्धेः समुच्चये विरुद्धं स्यादित्यर्थः। द्वितीयपक्षासम्भवे हेत्वन्तरमाह किञ्चेति। समुच्चयपक्षे प्रश्नप्रतिवचनयोरसम्भवाच्चेदं गीताशास्त्रं तत्परमितुपसंहरति तस्मादिति। विशुद्धब्रह्मात्मज्ञानं स्वफलसिद्धौ न सहकारिसापेक्षमज्ञाननिवृत्तिफलत्वाद्ब्रह्माजितत्त्वज्ञानवत् अथवा बन्धः सहायानपेक्षेण ज्ञानेन निवर्त्त्यते अज्ञानात्मकत्वात् रज्जुसर्पादिवदिति भावः।

ननु कुर्य्याद्विद्वांस्तथा सक्तश्चिकीर्षुर्लोकसङ्ग्रहमिति वक्ष्यमाणत्वात् कथं गीताशास्त्रे समुच्चयो नास्ति तत्राह यस्येति। चोदनालक्षणानुसारेण विहितोऽनुष्ठेयस्य कर्मणो धर्मत्वाद्रागादिपारवश्यस्य तथात्वाभावा-

मार्थतत्त्वविषयमेकमेवेदं सर्वं ब्रह्माकर्तृ चेति तस्य कर्म्मणि कर्म्मप्रयोजने च निवृत्तेऽपि लोकसंग्रहार्थं यत्नपूर्वं यथा-प्रवृत्तिस्तथैव कर्म्मणि प्रवृत्तस्य यत् प्रवृत्तिरूपं दृश्यते न तत् कर्म्म येन बुद्धेः समुच्चयः स्यात् यथा भगवतो वासुदेवस्य क्षत्रधर्म्मचेष्टितं न ज्ञानेन समुच्चीयते पुरुषार्थसिद्धये तद्वत्तत्फलाभिसन्ध्यहङ्काराभावस्य तुल्यत्वात् विदुषः, तत्त्व-विन्नाहं करोमीति मन्यते न च तत्फलमभिसन्धत्ते, यथा च स्वर्गादिकामार्थिनोऽग्निहोत्रादिकर्म्मलक्षणधर्मानुष्ठाना-याहिताग्नेः काम्य एवाग्निहोत्रादौ प्रवृत्तस्य सामिकृते विनष्टेऽपि कामे तदेवाग्निहोत्राद्यनुतिष्ठतोऽपि न तत् काम्यमग्निहोत्रादि भवति, तथा च दर्शयति भगवान् कुर्वन्नपि न करोति न लिप्यते इति। अत्र· यच्च पूर्वैः पूर्वतरं कृतं कर्म्मणैव हि संसिद्धिमास्थिता जनकादय इति तत्तु प्रविभज्य विज्ञेयं, तत् कथं, यदि तावत्

---

तत्त्वविदश्च वर्णाश्रमाभिमानशून्यस्याधिकारप्रतिपत्त्यभावाद्रागादिप्रवृत्तीनामविद्याशेषतो जायमानानां कर्माभासत्वात् कुर्य्याद्विद्वानित्यादि वाक्यं न समुच्चयप्रापकमिति भावः, वाशब्दश्चार्थे द्वितीयस्तु विविदिषावाक्यस्य-साधनान्तसंग्रहार्थः । सांसारिकं ज्ञानं व्यावर्त्तयति परमार्थेति । अद्वैतमभिनयति एकमिति । प्रवृत्तिरूपमिति रूपग्रहणमाभासत्वप्रदर्शनार्थं कर्माभाससमुच्चयस्तु यादृच्छिकत्वान्न मोक्षं फलयतीति शेषः । किञ्च ज्ञानिनो रागादिप्रवृत्तिर्न ज्ञानेन तत्फलेन समुच्चीयते फलाभि-सन्धिविकलप्रवृत्तित्वादहङ्कारविधुरप्रवृत्तित्वाद्वा भगवत्प्रवृत्तिवदित्याह यथेति । हेतुद्वयस्यासिद्धिमाशङ्क्य परिहरति तत्त्वविदिति । कूटस्थं ब्रह्मैवाहमिति मन्वानो विद्वान् प्रवृत्तिं तत्फलं वा नैव स्वगतत्वेन पश्यति रूपादिवद्दृश्यदृग्धर्मत्वायोगात् किन्तु कार्य्यकारणसंघातस्यैव

पूर्वं जनकादयः तत्त्वविदोऽपि प्रवृत्तकर्माणः स्युस्ते लोकसंग्रहार्थं गुणागुणेषु वर्त्तन्त इति ज्ञानेनैव संसिद्धिमास्थिताः । कर्म्मसन्न्यासे प्राप्तेऽपि कर्म्मणा सहैव संसिद्धिमास्थिता न कर्म्मसन्न्यासं कृतवन्त इत्यर्थोऽर्थः । अथ न ते तत्त्वविद् ईश्वरसमर्पितेन कर्म्मणा साधनभूतेन संसिद्धिं सत्त्वशुद्धिं ज्ञानोत्पत्तिलक्षणां वा संसिद्धिमास्थिता जनकादय इति व्याख्येयम् । एतमेवार्थं वक्ष्यति भगवान् सत्त्वशुद्धये कर्म्म कुर्वन्तीति, स्वकर्म्मणा तमभ्यर्च्य सिद्धिं विन्दति

---

प्रवृत्त्यादि प्रतिपद्यते ततस्तत्त्वविदो व्याख्यानभिक्षाटनादौ च्यहङ्कारस्य स्वर्गादिफलाभिसन्धेश्चाभासत्वान्नासिद्धं हेतुद्वयमित्यर्थः । ननु ज्ञानोदयात् प्रागवस्थायामिवोत्तरकालेऽपि प्रतिनियतप्रवृत्त्यादिदर्शनाच्च तत्त्वदर्शिनिष्ठप्रवृत्त्यादेराभासत्वमिति तत्राह यथा चेति । स्वर्गादिरेव काम्यमानत्वात् कामस्तदर्थिनः स्वर्गादिकामस्याग्निहोत्रादेरपेक्षितस्वर्गादिसाधनस्यानुष्ठानार्थमग्निमाधाय व्यवस्थितस्य तस्मिन्नेव काम्ये कर्म्मणि प्रवृत्तस्यार्द्धकृते केनापि हेतुना कामे विनष्टे तदेवाग्निहोत्रादिर्निवर्त्तयतो न तत्काम्यं भवति नित्यकाम्यविभागस्य स्वाभाविकत्वाभावात् कामोपबन्धानुपबन्धकृतत्वात् तथा विदुषोऽपि विध्यधिकाराभावाद्रागादिप्रवृत्तीनां कर्म्माभासतेत्यर्थः । विद्वत्प्रवृत्तीनां कर्म्माभासत्वमित्यत्र भगवदनुमतिमुपन्यस्यति तथा चेति । ननु विद्वद्व्यापारेऽपि कर्म्मवद्प्रयोगदर्शनात् तद्व्यापारस्य कर्म्माभासत्वानुपपत्तेः समुच्चयसिद्धिरिति तत्राह यच्चेति । ज्ञानकर्म्मणोः समुच्चित्यैव संसिद्धिहेतुत्वे प्रतिपन्ने कुतो विभज्यार्थज्ञानमिति पृच्छति तत् कथमिति । तत्र किं जनकादयोऽपि तत्त्वविदः प्रवृत्तकर्म्माणः स्युराहो स्विदतत्त्वविद इति विकल्प्य प्रथमं प्रत्याह यदीति । तत्त्वविन्त्वे कथं प्रवृत्तकर्म्मत्वं कर्म्मणामकिञ्चित्करत्वादित्याशङ्क्याह ते लोकेति । तेषामुक्तप्रयोजनार्थमपि न प्रवृत्तिर्युक्ता सर्वात्मा-

मामेव इत्युक्त्वा सिद्धिप्राप्तस्य च पुनर्ज्ञाननिष्ठां वक्ष्यति सिद्धिं प्राप्तो यथा ब्रह्मेत्यादिना, तस्माद्गीतासु केवलादेव तत्त्वज्ञानान्मोक्षप्राप्तिः न कर्मसमुच्चितादिति निश्चितोऽर्थः, यथा चायमर्थस्तथा प्रकरणशो विभज्य तत्र तत्र दर्शयिष्यामः।

तत्रैवं धर्मसंमूढचेतसो मिथ्याज्ञानवतो महति शोकसागरे निमग्नस्यार्ज्जुनस्यान्यत्रात्मज्ञानादुद्धरणमपश्यन् भगवान् वासुदेवस्तं ततः कृपयार्ज्जुनमुद्दिधारयिषुरात्मज्ञानायावतारयन्नाह।

---

स्युदासीनत्वादित्याशङ्क्याह गुणा इति। इन्द्रियाणां विषयेषु प्रवृत्तिद्वारा तत्त्वविदां प्रवृत्तकर्मत्वेऽपि ज्ञानेनैव तेषां मुक्तिरित्याह ज्ञानेनेति। उक्तमेवार्थं संक्षिप्य दर्शयति कर्मेति। कर्मणेत्यादौ बाधितानुवृत्त्याभासो गृह्यते। द्वितीयमनुवदति अथेति। तत्र वाक्यार्थं कथयति ईश्वरेति। विभज्य विधेयत्वं वाक्यार्थस्योक्तमुपसंहरति इति व्याख्येयमिति। कर्मणां चित्तशुद्धिद्वारा ज्ञानहेतुत्वमित्युक्तेऽर्थे वाक्यशेषं प्रमाणयति एतमेवेति। योगिनः कर्म कुर्वन्तीत्यादिवाक्यमर्थतोऽनुवदति सर्वेति। स्वकर्मणा इत्यादौ साक्षादेव मोक्षहेतुत्वं कर्मणां वक्ष्यतीत्याशङ्क्याह स्वकर्मणेति। स्वकर्मानुष्ठानादीश्वरप्रसादद्वारा ज्ञाननिष्ठायोग्यता लभ्यते ततो ज्ञाननिष्ठया मुक्तिस्तेन न साक्षात् कर्मणां मुक्तिहेतुतेत्यपि स्फुटी भविष्यतीत्यर्थः। तत्त्वज्ञानोत्तरकालं कर्मासम्भवे फलितमुपसंहरति तस्मादिति। ननु यद्यपि गीताशास्त्रं तत्त्वज्ञानप्रधानमेकं वाक्यं तथापि तन्मध्ये श्रूयमाणं कर्म तदङ्गमङ्गीकर्त्तव्यं प्रकरणप्रामाण्यादिति समुच्चयसिद्धिस्तत्राह यथा चेति। अर्थशब्देनात्मज्ञानमेव केवलं कैवल्यहेतुरिति गृह्यते।

इत्तिकृतामभिप्रायं प्रत्याख्याय स्वाभिप्रेतः शास्त्रार्थः समर्थितः सम्प्रत्यशोच्यानित्यस्मात् प्राक्तनग्रन्थसन्दर्भस्य प्रागुक्तं तात्पर्य्यार्थमनूद्याशोच्यानित्यादेः स्वधर्ममपि चावेक्ष्येत्येतदन्तस्य समुदायस्य तात्पर्य्यमाह

अशोच्यानित्यादि। न शोच्या अशोच्या भीष्मद्रोणादयः सद्वृत्तत्वात् परमार्थरूपेण च नित्यत्वात्, तानशोच्यानन्वशोचोऽनुशोचितवानसि ते म्रियन्ते मन्निमित्तमहं तैर्विनाभूतः किं करिष्यामि राज्यसुखादिनेति, त्वं प्रज्ञावतां बुद्धिमतां वादांश्च वचनानि च भाषसे तदेतन्मौढ्यं

---

तवेति। अत्र हि शास्त्रे त्रीणि काण्डान्यष्टादशसंख्याकानामध्यायानां षट्कत्रितयमुपादाय त्रैविध्यात्, तत्र पूर्वषट्कात्मकं पूर्वकाण्डं त्वम्पदार्थं विषयीकरोति, मध्यमषट्करूपं मध्यमकाण्डं तत्पदार्थं गोचरयति, अन्तिमषट्कलक्षणमन्तिमं काण्डं पदार्थयोरैक्यं वाक्यार्थमधिकरोति तज्ज्ञानसाधनानि तत्र तत्र प्रसङ्गादुपन्यस्यन्ते तज्ज्ञानस्य तदधीनत्वात्, तत्त्वज्ञानमेव केवलं कैवल्यसाधनमिति च सर्वत्र विगीतं, एवं पूर्वोक्तरीत्या गीताशास्त्रार्थे परिनिश्चिते सतीति यावत्, धर्मे संमूढं कर्त्तव्याकर्त्तव्यविवेकविकलं चेतो यस्य तस्य मिथ्याज्ञानवतोऽहङ्कारममकारवतः शोकाख्यसागरे दुरुत्तरे प्रविश्य क्लिश्यतो ब्रह्मात्मैक्यलक्षणवाक्यार्थज्ञानमात्मज्ञानं तदतिरेकेणोद्धरणासिद्धेः तमतिभक्तमतिस्निग्धं शोकादुद्धर्त्तुमिच्छन् भगवान् यथोक्तज्ञानार्थं तं अर्जुनमवतारयन् पदार्थपरिशोधने प्रवर्त्तयन्नादौ त्वम्पदार्थं शोधयितुमशोच्यानित्यादिवाक्यमाहेति योजना।

यस्याज्ञानं तस्य भ्रमो यस्य भ्रमस्तस्य पदार्थपरिशोधनपूर्वकं सम्यक् ज्ञानं वाक्यादुदेतीति ज्ञानाधिकारिणमभिप्रेत्याह अशोच्यानित्यादीति। यत्तु कैश्चिदात्मा वा अरे द्रष्टव्य इत्याद्यात्मयाथात्म्यदर्शनविधिवाक्यार्थमनेन श्लोकेन व्याचष्टे स्वयं हरिरित्युक्तं तदयुक्तं कृतियोग्यतैकार्थसमवेत-श्रेयःसाधनतायाः पराभिमतनियोगस्य वा विध्यर्थस्यात्राप्रतीयमानस्य कल्पनाहेत्वभावात्, न च दर्शने पुरुषतन्त्रत्वरहिते विधेययागादिविलक्षणे विधिरुपपद्यते कृत्यान्तर्भूतस्याहार्यत्वात् तव्यो न विधिमधिकरोतीत्यभिप्रेत्य व्याचष्टे न शोच्या इति। कथं तेषामशोच्यत्वमित्युक्ते भीष्मादि-

पाण्डित्यविरुद्धमात्मनि दर्शयस्युन्मत्त इवेत्यभिप्रायः यस्माद्गतासून् गतप्राणान् मृतान् अगतासूनगतप्राणान् जीवतश्च न अनुशोचन्ति पण्डिताः आत्मज्ञाः, पण्डा आत्मविषया बुद्धिर्येषां ये हि पण्डिताः पाण्डित्यं निर्विद्येति श्रुतेः, परमार्थतस्तु नित्यानशोच्याननुशोचस्यतो मूढोऽसीत्यभिप्रायः ॥ ११ ॥

---

अनन्दवाच्यानां शोच्यत्वं तत्पदलक्ष्याणां वेति विकल्पाद्यं दूषयति अहन्तत्वादिति। ये भीष्मादिशब्दैरुच्यन्ते ते श्रुतिस्मृत्युदीरिताविगीताचारवत्त्वाच्च शोच्यतामश्नुवीरन्नित्यर्थः। द्वितीयं प्रत्याह परमार्थेति। अरजते रजतबुद्धिवदशोच्येषु शोचबुद्ध्या भ्रान्तोऽसीत्याह तानिति। अनुशोचनप्रकारमभिनयन् भ्रान्तिमेव प्रकटयति ते म्रियन्त इति। पुत्रभार्य्यादिप्रयुक्तं सुखमादिशब्देन गृह्यते, इत्यनुशोचितवानसीति सम्बन्धः। विरुद्धार्थाभिधायित्वेनापि भ्रान्तत्वमर्जुनस्य साधयति त्वं प्रज्ञावतामिति। उत्सन्नकुलधर्माणामित्यादीनि वचनानि। किमेतावता फलितमिति तदाह तदेतदिति। तन्मौढ्यमशोच्येषु शोच्यदृष्टित्वमेतत् पाण्डित्यं बुद्धिमतां वचनभाषित्वमिति यावत्। अर्जुनस्य पूर्व्वोक्तभ्रान्तिभाक्त्वे निमित्तमात्माज्ञानमित्याह यस्मादिति। ननु स्वल्पबुद्धिभाक्त्वमेव पाण्डित्यं न त्वात्मज्ञत्वं हेत्वभावादित्याशङ्क्याह ते हीति। पाण्डित्यं पण्डितभावमात्मज्ञानं निर्विद्य निश्चयेन लब्ध्वा बाल्येन तिष्ठासेदिति बृहदारण्यकश्रुतिमुक्तार्थामुदाहरति पाण्डित्यमिति। यथोक्तं पाण्डित्यराहित्यं कथं ममावगतमित्याशङ्क्य कार्य्यदर्शनादित्याह परमार्थतस्त्विति। यस्मादित्यस्यापेक्षितं दर्शयति अत इति ॥ ११ ॥

स्वा० टी०। अशोच्यानित्यादि। शोकस्याविषयीभूतानेव बन्धून्त्वमशोचोऽनुशोचितवानसि दृष्ट्वेमान् स्वजनान् कृष्णेत्यादिना, तत्

कुतस्त्वा कश्मलमिदं विषमे समुपस्थितमित्यादिना मया बोधितोऽपि पुनश्च प्रज्ञावतां पण्डितानां वादान् शब्दान् कथं भीष्ममहं संख्ये इत्यादीन् केवलं भाषसे न तु पण्डितोऽसि यतः पण्डिता गतासून् गतप्राणान् बन्धूनगतासूंश्च जीवतोऽपि बन्धुहीना एते कथं जीविष्यन्तीति नानुशोचन्ति पण्डिताः विवेकिनः ॥ ११ ॥

**न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।**
**न चैव न भविष्यामः सर्वे वयमतः परम् ॥१२॥**

कुतस्ते अशोच्याः यतो नित्याः कथं न तु एव जातु कदाचिदहं नासं किन्त्वासमेव अतीतेषु देहोत्पत्तिविनाशेषु घटादिषु वियदिव नित्यमेवाहमासमित्यभिप्रायः, तथा न त्वं नासीः किन्त्वासीरेव, तथा नेमे जनाधिपाः नासन् किं त्वासन्नेव, तथा न चैव न भविष्यामः किन्तु भविष्याम एव सर्वे वयमतोऽस्माद्देहविनाशादुत्तरकालेऽपि त्रिष्वपि कालेषु नित्या आत्मस्वरूपेणेत्यर्थः देहभेदानुवृत्त्या बहुवचनं नात्मभेदाभिप्रायेण ॥१२॥

नित्यत्वमशोच्यत्वे कारणमिति सूचितं विवेचयितुं प्रश्नपूर्वकं प्रतिजानीते कुत इत्यादिना । नित्यत्वमसिद्धं प्रमाणाभावादिति चोदयति कथमिति । आत्मा न जायते प्रागभावशून्यत्वाद्वरविषाणवदिति परिहरति न त्वेवेति । किञ्चात्मा नित्यो भावत्वे सत्यजातत्वाद्व्यतिरेके घटवदित्यनुमानान्तरमाह न चैवेति । यत्तु कैश्चिदात्मयाथात्म्यं जिज्ञासितं भगवानुपदिशति नत्वित्यादिना श्लोकचतुष्टयेनेत्यादिष्टं तदसद्विशेषवचने हेत्वभावात् सर्वत्रैवात्मयाथात्म्यप्रतिपादनाविशेषादित्याशयेन पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजनेति त्रितयमपि व्याख्यानाङ्गं प्रतिपादयति नत्वित्यादिना । नन्वात्मनो देहोत्पत्तिविनाशयोरुत्पत्तिविनाशप्रसिद्धेरुक्तमनुमानद्वयं प्रसिद्धिविरुद्धतया काला-

त्वयापदिष्टमिष्टमिति नेत्याह ऋतीतेष्विति । चराचरव्यपाश्रयस्तु स्यादिति न्यायेनात्मनोजन्मविनाशप्रसिद्धेरौपाधिकजन्मविनाशविषयत्वान्निरुपाधिकस्य तस्य जन्मादिराहित्यमिति भावः । यद्यपि तवेश्वरस्य जन्मराहित्यं तथापि कथं ममेत्याशङ्काह तथेति । तथापि भीष्मादीनां कथं जन्माभावस्तत्राह तथा नेम इति । द्वितीयमनुमानं प्रपञ्चयन्नुत्तरार्द्धं व्याचष्टे तथेत्यादिना । ननु देहोत्पत्तिविनाशयोरात्मनो जन्मनाशाभावेऽपि महाखर्गमहाप्रलययोस्तस्याग्निविस्फुलिङ्गदृष्टान्तश्रुत्या जन्मविनाशाविष्टव्याविति आशङ्का नात्माश्रुतेरिति न्यायेन परिहरति निष्यपीति । यावद्विकारन्तु विभागो लोकवदिति न्यायेन भिन्नत्वाद्विकारित्वमात्मनामनुमीयते भिन्नत्वञ्च बहुवचनप्रयोगप्रमितमित्याशङ्काह देहेति ॥ १२ ॥

स्वा॰ टी॰ । अशोच्यत्वे हेतुमाह न त्वेवाहमिति । यथाहं परमेश्वरो जातु कदाचिल्लीलाविग्रहस्याविर्भावतिरोभावतो नासमिति तु नैवापि त्वासमेवानादित्वात्, न च त्वं नासीनाभूरपि त्वासीरेव, इमे च जनाधिपा नृपा नासन्निति तु नापि त्वासन्नेव मदंशत्वात्, तथातः परमित उपरि न भविष्यामो न स्यास्याम इति च नैवापि तु स्यास्याम एवेति जन्ममरणशून्यत्वादशोच्या इत्यर्थः ॥ १२ ॥

**देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा।**
**तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥१३॥**

तत्र कथमिव नित्य आत्मेति दृष्टान्तमाह देहिनः देहोऽस्यास्तीति देही तस्य देहिनो देहवतः आत्मनः अस्मिन् वर्त्तमाने देहे यथा येन प्रकारेण कौमारं कुमारभावो बाल्यावस्था यौवनं यूनो भावोमध्यमावस्था जरा वयोहानिर्जीर्णावस्था इत्येताः तिस्रोऽवस्था अन्योन्यविलक्षणास्तासां प्रथमावस्था नाशेन नाशो द्वितीयावस्थोपजनेनोपजननमात्मनः किं तर्ह्यविक्रियस्यैव द्वितीयादृती-

स्थावस्थाप्राप्तिरात्मनो दृष्टा यथा तद्वदेव देहादन्यो देहो देहान्तरं तस्य प्राप्तिर्देहान्तरप्राप्तिरविक्रियस्यैवात्मन इत्यर्थः, धीरो धीमांस्तत्रैवं सति न मुह्यति न मोहमापद्यते ॥ १३ ॥

ननु पूर्वं देहं विहायापूर्वं देहमुपादायास्य विक्रियावत्त्वेनोत्पत्तिविनाशवत्त्वविभ्रमः समुद्भवेदिति शङ्कते तत्रेति। कथोच्यत्वप्रतिज्ञायां नित्यत्वे हेतुकृते सतीति यावत्। अवस्थाभेदे सत्यपि वस्तुतो विक्रियाभावादात्मनो नित्यत्वमुपपन्नमित्युत्तरश्लोकेन दृष्टान्तावष्टम्भेन प्रतिपादयतीत्याह दृष्टान्तमिति। न केवलमागमादेवात्मनो नित्यत्वं किन्त्ववस्थान्तरवज्जन्मान्तरे पूर्वसंस्कारानुवृत्तेश्चेत्याह देहिन इति। देहवत्त्वं तस्मिन्नहं ममाभिमानभाक्त्वं, तासामिति निर्द्धारणे षष्ठी, आत्मनः श्रुतिस्मृत्युपपत्तिभिर्नित्यत्वज्ञानं. धीमानित्यत्र धीर्विवक्ष्यते, एवं सतीति तत्त्वतो विक्रियाभावान्नित्यत्वे समधिगते सतीत्यर्थः ॥ १३ ॥

स्वा॰ टी॰। नन्वीश्वरस्य तव जन्ममरणशून्यत्वं सत्यमेव जीवानान्तु जन्ममरणे प्रसिद्धे तत्राह देहिन इति। देहिनो देहाभिमानिनो जीवस्य यथास्मिन् स्थूलदेहे कौमाराद्यवस्थास्तद्देहनिबन्धना एव न स्वतः पूर्वावस्थानाशेऽवस्थान्तरोत्पत्तावपि स एवाहमिति प्रत्यभिज्ञानात्तथैवैतद्देहनाशे देहान्तरप्राप्तिरपि लिङ्गदेहनिबन्धनैव न तु तावतात्मनो नाशो जातमात्रस्य पूर्वसंस्कारेण स्तन्यपानादौ प्रवृत्तिदर्शनात्, अतो धीरो धीमांस्तत्र तयोर्देहनाशोत्पत्त्योर्न मुह्यति आत्मैव मृतो जातश्चेति न मन्यत इति ॥ १३ ॥

**मात्रास्पर्शास्तु कौन्तेय! शीतोष्णसुखदुःखदाः।**
**आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत! ॥१४॥**

यद्यप्यात्मविनाशनिमित्तो मोहो न सम्भवति नित्य आत्मेति विजानतस्तथापि शीतोष्णसुखदुःखप्राप्तिनिमित्तो मोहो लौकिको दृश्यते सुखवियोगनिमित्तो मोहो दुःखसं-

योगादिनिमित्तश्च शोक इत्येतदर्ज्जुनस्य वचनमाशङ्क्याह मात्रास्पर्शा इति । मात्रा आभिर्मीयन्ते शब्दादय इति श्रोत्रादीनीन्द्रियाणि, मात्राणां स्पर्शाः शब्दादिभिः संयोगास्ते शीतोष्णसुखदुःखदाः शीतमुष्णं सुखं दुःखञ्च प्रयच्छन्तीति । अथवा स्पृश्यन्ते इति स्पर्शा विषयाः शब्दादयः मात्राश्च स्पर्शाश्च शीतोष्णसुखदुःखदाः शीतं कदाचित् सुखं कदाचिद्दुःखं तथोष्णमप्यनियतस्वरूपं सुखदुःखे पुनर्नियतरूपे यतो न व्यभिचरतोऽतस्ताभ्यां पृथक् शीतोष्णयोर्ग्रहणं, यस्मात्ते मात्रास्पर्शादयः आगमापायिनः आगमापायशीलाः तस्मादनित्या उत्पत्तिविनाशरूपत्वात्, अतस्तान् शीतोष्णादींस्तितिक्षस्व प्रसहस्व तेषु हर्षविषादं माकार्षीरित्यर्थः ॥ १४ ॥

---

आत्मनः सुख्यादिप्रशिते नित्यत्वे तदुत्पत्तिविनाशप्रयुक्तशोकमोहाभावेऽपि प्रकारान्तरेण शोकमोहौ स्यातामित्याशङ्कामनूद्योत्तरत्वेन श्लोकमवतारयति यदित्यादिना । शीतोष्णयोस्ताभ्यां सुखदुःखयोश्च प्राप्तिं निमित्तीकृत्य यो मोहादिर्दृश्यते तस्यान्वयव्यतिरेकाभ्यां दृश्यमानत्वमाश्रित्य लौकिकविशेषणमशोच्यानित्यत्र यो विद्याधिकारी सूचितस्तस्य तितिक्षुः समाहितो भूत्वेति श्रुतेः तितिक्षुत्वं विशेषणमिहोपदिश्यते । व्याख्येयं पदमुपादाय करणव्युत्पत्त्या तस्येन्द्रियविषयत्वं दर्शयति मात्रा इत्यादिना । षष्ठीसमासं दर्शयन् भावव्युत्पत्त्यास्पर्शशब्दार्थमाह मात्राणामिति । तेषामर्थक्रियामादर्शयति ते शीतेति । सम्प्रति शब्दद्वयस्य कर्मव्युत्पत्त्या शब्दादिविषयपरत्वमुपेत्य समासान्तरं दर्शयन् विषयाणां कार्यं कथयति अथ वेति । ननु शीतोष्णप्रवृत्तेः सुखदुःखप्रदत्वस्य सिद्धत्वात् किमिति शीतोष्णयोः सुखदुःखाभ्यां पृथक् ग्रहणमिति तत्राह शीतमिति । विषयेभ्यस्तु पृथक्कथनं तदन्तर्भूतयोरेव तयोः

सुखदुःखहेत्वोरानुकूल्यप्रतिकूल्ययोरुपलक्षणार्थं अध्यात्मं हि शीतमुष्णं वानुकूल्यं प्रातिकूल्यं वा सम्पाद्य बाह्याविषयाः सुखादि जनयन्ति । ननु विषयेन्द्रियसंयोगस्यात्मनि सदा सत्त्वात्तत्प्रयुक्तशीतादेरपि तथात्वात्तन्निमित्तौ हर्षविषादौ तस्मिन्नापन्ना वित्याशङ्क्योत्तरार्द्धं व्याचष्टे यस्मादित्यादिना । अत्र च कौन्तेय भारतेति सम्बोधनाभ्यामुभयकुलशुद्धस्यैव विद्याधिकारित्वमिति एतदेव द्योत्यते ॥ १४ ॥

स्वा॰ टी॰ । ननु तानहं न शोचामि किन्तु तद्वियोगादिदुःखभाजं मामेवेति चेत्तत्राह मात्रास्पर्शा इति । मीयन्ते ज्ञायन्ते विषया आभिरिति मात्रा इन्द्रियवृत्तयस्तासां स्पर्शाविषयैः सह सम्बन्धास्ते शीतोष्णादिप्रदा भवन्ति ते स्वागमापायवत्त्वादनित्या अस्थिरा अतस्तांस्तितिक्षस्व सहस्व यथा जलातपादिसंसर्गास्तत्तत्कालवशाः स्वभावतः शीतोष्णादि प्रयच्छन्ति एवमिष्टसंयोगवियोगा अपि सुखदुःखादि प्रयच्छन्ति तेषाञ्चास्थिरत्वात् सहनं तव धीरस्योचितं न तु तन्निमित्तहर्षविषादपारवश्यमित्यर्थः ॥ १४ ॥

**यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ! ।**
**समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥१५॥**

शीतोष्णादीन् सहतः किं स्यादिति शृणु यं हीति । यं हि पुरुषं समे दुःखसुखे यस्य तं समदुःखसुखं सुखदुःखप्राप्तौ हर्षविषादरहितं धीरं धीमन्तं न व्यथयन्ति न चालयन्ति नित्यात्मदर्शनादेते यथोक्ताः शीतोष्णादयः, सनित्यानित्यस्वरूपदर्शननिष्ठो द्वन्द्वसहिष्णुरमृतत्वाय अमृतभावाय मोक्षायेत्यर्थः, कल्पते समर्थो भवति ॥ १५ ॥

अधिकारिविशेषणं तितिक्षुत्वं नोपयुक्तं केवलस्य तस्य पुमर्थाहेतुत्वादिति शङ्कते शीतेति । विवेकवैराग्यादिसहितं तन्मोक्षहेतुज्ञानद्वारा

तदर्थमिति परिहरति घृत्विति । तितिक्षमाणस्य विवक्षितं लाभमुप-लक्षयति यं हीति । हर्षविषादरहितमित्यत्र शमादिसाधनसम्पन्नत्व-मुच्यते धीमन्तमिति । नित्यानित्यविवेकभागित्वमेतच्चोभयं वैराग्यादे-रुपलक्षणम् । नित्यात्मदर्शनं त्वमर्थज्ञानं साधनचतुष्टयवन्तमधिकारिण-मनूद्य त्वं पदार्थज्ञानवतस्तस्य मोक्षौपयिकवाक्यार्थज्ञानयोग्यतामाह सनित्येति ॥ १५ ॥

स्वा० टी० । तत्प्रतीकारप्रयत्नादपि तत्सहनमेवोचितं महाफल-त्वादित्याह यं हीति । एते मात्रास्पर्शा यं पुरुषं न व्यथयन्ति नाभि-भवन्ति, समे दुःखसुखे यस्य तं सतैरविक्षिप्यमाणो धर्मज्ञानद्वारामृतत्वाय मोक्षाय कल्पते योग्यो भवति ॥ १५ ॥

**नासतो विद्यते भावो नाभावोविद्यते सतः ।**
**उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥१६॥**

इतश्च शोकमोहावकृत्वा शीतोष्णादिसहनं युक्तं यस्मात् नासत इति । नासतोऽविद्यमानस्य शीतोष्णादेः सकारणस्य न विद्यते नास्ति भावो भवनमस्तिता, न हि शीतोष्णादिसकारणं प्रमाणैर्निरूप्यमाणं वस्तु सम्भवति विकारो हि सः विकारश्च व्यभिचरति यथा घटादिसंस्थानं चक्षुषा निरूप्यमाणं मृद्व्यतिरेकेणानुपलब्धेरसत्तथा सर्वो विकारः कारणव्यतिरेकेणानुपलब्धेरसज्जन्मप्रध्वंसाभ्यां प्रागूर्द्ध्वञ्चानुपलब्धेः कार्य्यस्य घटादेर्मृदादिकार-णस्य तत्कारणस्य च तत्कारणव्यतिरेकेणानुपलब्धेरसत्त्वं तदसत्त्वे सर्वाभावप्रसङ्ग इति चेन्न सर्वत्र बुद्धिद्वयोप-लब्धेः सद्बुद्धिरसद्बुद्धिरिति यद्विषया बुद्धिर्न व्यभिचरति तत्सत् यद्विषया व्यभिचरति तदसत् इति सद-सद्विभागे बुद्धितन्त्रे स्थिते सर्वत्र द्वे बुद्धि सर्वैरुपलभ्येते

समानाधिकरण्येन नीलोत्पलवत् सन् घटः सन् पटः सन् हस्तीत्येवं सर्वत्र तयोर्बुद्ध्योर्घटादिबुद्धिर्व्यभिचरति तथा च दर्शितं न तु सुबद्धिः तस्मात् घटादिबुद्धिविषयोऽसन् व्यभिचारात् न तु सद्बुद्धिविषयोऽव्यभिचारात्, घटे विनष्टे घटबुद्धौ व्यभिचरन्त्यां सद्बुद्धिरपि व्यभिचरतीति चेत् न पटादावपि सद्बुद्धिदर्शनात् विशेषणविषयैव सा सद्बुद्धिरतोऽपि न विनश्यति, अथ सद्बुद्धिवत् घटबुद्धिरपि घटान्तरे दृश्यते इति चेन्न पटादावदर्शनात्, सद्बुद्धिरपि नष्टे घटे न दृश्यत इति चेत् न विशेष्याभावात् सद्बुद्धिः विशेषणविषया सती विशेष्याभावे विशेषणानुपपत्तौ किं विषया स्यान्न तु पुनः सद्बुद्धिविषयाभावात् एकाधिकरणत्वं घटादिविशेष्याभावेन युक्तं इति चेत् न सदिदमुदकमिति मरीच्यादावन्यतराभावेऽपि सामानाधिकरण्य दर्शनात् तस्माद्दे-

---

आ०। अधिकारिविशेषणे तितिक्षुत्वे हेत्वन्तरपरत्वेनोत्तरश्लोकमवतारयति इतश्चेति। इतः शब्दार्थमेव स्फुटयति यस्मादिति। यतः शीतादेः क्लेशादिहेतोरनात्मनो नास्ति वस्तुत्वं वस्तुनश्चात्मनो निर्विकारत्वेनैकरूपत्वं अतो मुमुक्षोर्विशेषणं तितिक्षुत्वं युक्तमित्याह नेत्यादिना। कार्य्यस्यासत्त्वेऽपि कारणस्य सत्त्वेनात्यन्तासत्त्वासिद्धिरित्याशङ्क्य विशिनष्टि सकारणस्येति। नासत इत्युपादाय पुनर्नकारानुकर्षणमन्वयार्थम्। असतः शून्यस्यास्तित्वप्रसङ्गाभावात् अप्रसक्तप्रतिषेधप्रसक्तिरित्याशङ्क्याह न हीति। विमतमतात्त्विकमप्रामाणिकत्वात् रज्जुसर्पवत्, न हि धर्मिग्राहकस्य प्रत्यक्षादेस्तत्त्वावेदकं प्रामाण्यं कल्प्यते विषयस्य दुर्निरूपत्वादतोऽनिर्वाच्यं द्वैतमित्यर्थः। कथं पुनरध्यक्षादिविषयस्य शीतोष्णादिद्वैतस्य दुर्निरूपत्वेनानिर्वाच्यत्वं तत्राह विकारो हीति।

**हादेर्द्वन्द्वस्य च सकारणस्यासतो न विद्यते भाव इति, तथा सतश्च आत्मनः अभावोऽविद्यमानता न विद्यते सर्वत्राव्यभिचारादित्यवोचाम:, एवमात्मानात्मनो: सदसतोरुभयोरपि दृष्ट: उपलब्धोऽन्तो निर्णय: सत् सदेवासद्-**

---

ततश्च विमतं मिथ्या आगमापायित्वात् सम्प्रतिपन्नवदिति फलितमाह विकारस्येति । वाचारम्भणश्रुतेः द्वैतमिथ्यात्वे अनुग्राहकत्वं दर्शयितुं चकारः । किञ्च कार्य्यं कारणाद्भिन्नमभिन्नं वेति विकल्पाद्यं दूषयति यथेति । निरूप्यमाणमन्तर्वहिश्चेति शेषः विमतं कारणान्न तत्त्वतोभिद्यते कार्य्यत्वाद्घटवदित्यर्थः । इतोऽपि कारणाद्भेदेन नास्ति कार्य्यं आदावन्ते च यन्नास्ति वर्त्तमानेऽपि तत्तथेति न्यायादित्याह जन्मेति । यदि कार्य्यं कारणादभिन्नं तदा तस्य भेदेनासत्त्वे पूर्वस्मादविशेषः तादात्म्येनावस्थानन्तु न युक्तं तस्यापि कारणव्यतिरेकेणाभावात् । कार्य्यकारणविभागविधुरे वस्तुनि कार्य्यकारणपरम्पराया विभ्रमत्वादित्यभिप्रेत्याह मृदादीति । कार्य्यकारणविभागविहीनं वस्त्वेव नास्तीति मन्वानश्चोदयति तदसत्त्व इति । अनुवृत्तव्यावृत्तबुद्धिद्वयदर्शनादनुवृत्ते च व्यावृत्तानां कल्पितत्वादकल्पितं सर्वभेदकल्पनाधिष्ठानमकार्य्यकारणं वस्तु सिध्यतीति परिहरति न सर्वत्रेति । सम्प्रति सतो वस्तुत्वे प्रमाणमनुमानमुपन्यस्यति यद्विषयेति । यद्व्यावृत्तेष्वनुवृत्तं तत्तमर्थं सत् यथा सर्पधारादिष्वनुगतो रज्ज्वादेरिदमंशः, विमतं सत्यमव्यभिचारित्वात् सम्प्रतिपन्नवदित्यर्थः । व्यावृत्तस्य कल्पितत्वे प्रमाणमाह यद्विषयेत्यादिना । यद्व्यावृत्तं तन्मिथ्या यथा सर्पधारादि, विमतं मिथ्या व्यभिचारित्वात् सम्प्रतिपन्नवदित्यर्थः, इत्यनुमानद्वयमनुसृत्य सतोऽकल्पितत्वं असतश्च कल्पितत्वं स्थितमिति शेषः । ननु नेदमनुमानद्वयमुपपद्यते घटस्तद्वैतत्यत्रादिनो विभागाभावादनुमानादिव्यवहारानुपपत्तेरित्याह घटइति । उक्ते विभागे बुद्धिद्वयाधीने स्थिते सत्यनुमानादिव्यवहारो निर्वहति प्रातिभासिकविभागेन वियोगात् परमार्थस्यैव तद्धेतुत्वे केव-

सद्वैवेति तु अनयोर्यथोक्तयोस्तत्त्वदर्शिभिः, तदिति सर्व-
नाम सर्वञ्च ब्रह्म तस्य नाम तदिति तद्भावस्तत्त्वं
ब्रह्मणो याथात्म्यं तद्द्रष्टुं शीलं येषां ते तत्त्वदर्शिन-
स्तैस्तत्त्वदर्शिभिस्तत्त्वमपि तत्त्वदर्शिनां दृष्टिमाश्रित्य शोकं

---

व्यतिरेकाभावादित्यर्थः। कुतः सदसद्विभागस्य बुद्धिद्वयाधीनत्वं बुद्धिविभागस्यापि तन्नामात्तत्राह सर्वत्रेति। व्यवहारभूमिः सप्तम्यर्थः। बुद्धिविभागस्यापि कल्पितत्वेन बाध्यविभागसंतमासहेतुरिति भावः। बुद्धिद्वयमनुरुध्य सदसद्विभागे सतः सामान्यरूपतया विशेषाकाङ्क्षायां सामान्यविशेषौ द्वे वस्तुनी वस्तुभूते स्यातामिति चेत्तत्राह समानाधिकरणे इति। पदयोः सामानाधिकरण्यं बुद्ध्योरुपचर्यते, सोऽयमिति सामानाधिकरण्यवदुक्तः सन् इत्यादि सामानाधिकरण्यमेकवस्तुनिष्ठं वस्तुभेदे घटपटयोरिव तदयोगादित्यर्थः। नीलमुत्पलमितिवद्धर्मधर्मिविषयतया सामानाधिकरण्यस्य सुवचत्वान्न वस्त्वैक्यविषयत्वमिति चेन्नेत्याह नीलेति। न हि सामान्यविशेषयोर्भेदेऽभेदे च तद्भावो भेदाभेदौ च विरुद्धावतो जातिव्यक्त्योः सामानाधिकरण्यं नीलोत्पलयोरिव न गौणं किन्तु व्यावृत्तमनुवृत्ते कल्पितमित्येकनिष्ठमित्यर्थः। सामान्यविशेषयोरुक्तन्यायं गुणगुण्यादावतिदिशति धर्मेति। तुल्यौ हि तत्रापि विकल्पदोषाविति भावः। सामानाधिकरण्यानुपपत्त्या द्वे वस्तुनी सामान्यविशेषाविति पक्षं प्रतिक्षिप्य विशेषावेव वस्तुनीति पक्षं प्रतिक्षिपति तयोरिति। बुद्धिव्यभिचाराद्बोध्यव्यभिचारेऽपि कथं व्यावृत्तानां विशेषाणामवस्तुत्वमित्याशङ्क्याह तथा चेति। विकारो हि स इत्यादावपीति शेषः। न चैकं वस्तु सामान्यविशेषात्मकमेकस्य द्वैरूप्यविरोधादित्यभिप्रेत्य सामान्यमेकमेव वस्तु तद्बुद्धेरव्यभिचारात्, बोधस्यापि सतस्तथात्वादित्याह न त्विति। व्यभिचरतीति पूर्वेण सम्बन्धः। विशेषाणां व्यभिचारित्वे सतश्चाव्यभिचारित्वे फलितमुपसंहरति तस्मादिति। असत्त्वं कल्पितत्वम्। तच्छब्दार्थमेव स्फोरयति व्यभिचारादिति। सद्बुद्धिविषयस्य सतोऽकल्पितत्वे तच्छब्दोपात्तमेव हेतुमाह

मोहञ्च हित्वा शीतोष्णादीनि नियतानियतरूपाणि द्वन्द्वानि विकारोऽयमसन्नेव मरीचिजलवन्मिथ्यावभासतेति मनसि व्यस्य तितिक्षस्वेत्यभिप्रायः॥ १६॥

---

अव्यभिचारादिति। सद्बुद्धिव्यभिचारद्वारा बोध्यस्यापि व्यभिचारात्तदव्यभिचारित्वहेतोरसिद्धिरिति शङ्कते। घटे विनष्ट इति। सद्बुद्धेर्घटमात्रबुद्धिवद्घटविषयत्वाभावान्न घटनाशे व्यभिचारोऽस्ति इति परिहरति न पटादाविति। सद्बुद्धेरघटविषयत्वे निरालम्बत्वायोगात् विषयान्तरं वक्तव्यमित्याशङ्क्याह विशेषणेति। सतोऽकल्पितत्वहेतोरव्यभिचारित्वस्यासिद्धिमङ्गीकृत्य विशेषाणां कल्पितत्वहेतोर्व्यभिचारित्वस्यासिद्धिं शङ्कते सदिति। यथा सद्बुद्धिर्घटे नष्टे पटादौ दृष्टत्वात् व्यभिचारिणी अव्यभिचारः सतो दर्शितस्तथा घटबुद्धिरपि घटे नष्टे घटान्तरे दृष्टेत्यव्यभिचारात्तद्घटेऽव्यभिचारासिद्धौ विशेषान्तरेष्वपि कल्पितत्वहेतोः व्यभिचारो न सिध्यतीत्यर्थः। घटबुद्धेर्घटान्तरे दृष्टत्वेऽपि पटादावदृष्टत्वेन व्यभिचारात् पटादिविशेषेष्वपि व्यभिचारित्वसिद्धिरित्युत्तरमाह न पटादाविति। विशेषाणामेवं व्यभिचारित्वे सतोऽपि तदुपपत्तेरव्यभिचारित्वहेतुरसिद्धितादवस्थ्यमिति शङ्कते सद्बुद्धिरिति। घटादिनाशदेशे तदुपरक्ताकारेण सत्त्वाभानेऽपि नासत्त्वं घटाद्यभावाधिष्ठानतया भानादित्याह न विशेष्येति। यथा सर्वगता जातिरित्यत्र खण्डमुण्डादिव्यक्त्यभावदेशे गोत्वं व्यञ्जकाभावान्न व्यज्यते न गोत्वाभावात् तथा सत्त्वमपि घटादिनाशे व्यञ्जकाभावान्न भाति न स्वरूपाभावादित्युक्तमेव प्रपञ्चयति सदित्यादिना। सप्रतियोगिकविशेषणत्वव्यभिचारेऽपि स्वरूपाव्यभिचाराद्युक्तं मतः सत्यत्वमिति भावः। द्वयोः सतोरेव विशेषणविशेष्यत्वदर्शनात् घटसतोरपि विशेषणविशेष्यत्वे द्वयोः सत्त्वधौव्यात् घटादिविकल्पितत्वानुमानं सामानाधिकरण्यधीबाधितमिति चोदयति एकेति। अनुभवमनुसृत्य बाधितविषयत्वमनुमानस्य निरस्यति नेत्यादिना। घटादेः सति कल्पितत्वानुमानस्य दोषराहित्ये फलितमुपसंहरति तस्मादिति। प्रथमपादव्याख्यानपरिसमाप्ताविति शब्दः।

ननु नेदं व्याख्यानं भाष्यकाराभिप्रेतं सर्वद्वैतस्य शून्यत्वविवक्षायां शास्त्रतद्भाष्यविरोधात् केनापि पुनर्दुर्विदग्धेन स्वमनीषिकयोत्प्रेक्षितमेतदिति चेत् नैवं किमिदं द्वैतप्रपञ्चस्य शून्यत्वं किन्तुच्छत्वं किं सद्विलक्षणत्वं नाद्योऽनभ्युपगमात् द्वितीयानभ्युपगमे तु तथैव शास्त्रविरोधो भाष्यविरोधश्च सर्वं हि शास्त्रं तद्भाष्यं च द्वैतस्य सत्यत्वानधिकरणत्वसाधनेनाद्वैतसत्यत्वे पर्य्यवसितमिति तैर्विद्वद्भिस्तत्र तत्र प्रतिपादितं तथा च प्रक्षेपाशङ्कासम्प्रदायपरिचयाभावादिति द्रष्टव्यम्। अनात्मजातस्य कल्पितत्वेनावस्तुत्वप्रतिपादनपरतया प्रथमपादं व्याख्याय द्वितीयपादमात्मनः सर्वकल्पनाधिष्ठानस्याकल्पितत्वेन वस्तुत्वप्रसाधनपरतया व्याकरोति तथेति। नन्वात्मनः सदात्मनो विशेषेषु विनाशिषु तदुपरक्तस्य विनाशः स्यादित्याशङ्क्य विशिष्टनाशेऽपि स्वरूपानाशस्योक्तत्वात्सत्त्वमित्याह सर्वत्रेति। ननु कदाचिदसदेव पुनः सत्त्वमापद्यते प्रागसतो घटस्य जन्मना सत्त्वाभ्युपगमात् सच्च कदाचिदसत्त्वं प्रतिपद्यते स्थितिकाले सतो घटस्य पुनर्नाशेनासत्त्वाङ्गीकारादेवं सदसतोरव्यवस्थितत्वाविशेषादुभयोरपि हेयत्वमुपादेयत्वं वा तुल्यं स्यादिति तत्राह एवमिति। तुशब्दो दृष्टशब्देन सम्बध्यमानो दृष्टिमवधारयति न हि प्रागसतो घटस्य सत्त्वमसत्त्वे स्थिते सत्त्वप्राप्तिविरोधादसत्त्वनिवृत्तिश्च सत्त्वप्राप्त्या चेत् प्राप्तिमितरेतराश्रयत्वमन्तरेणैव सत्त्वापत्तिमसत्त्वनिवृत्तावसत्त्वमनवकाशि भवेत् एतेन सतोऽसत्त्वापत्तिरपि प्रतिनीतेति भावः। कथं तर्हि सतोऽसत्त्वमसतश्च सत्त्वं प्रतिभाति इत्याशङ्क्य तत्त्वदर्शनाभावादित्याह तत्त्वेति।

तस्य भावस्तत्त्वं न च तच्छब्देन परामर्शयोग्यं किञ्चिदस्ति। प्रकृतं प्रतिनियतमित्याशङ्क्य व्याचष्टे तदित्यादिना। ननु सदसतोरन्यथात्वं केचित् प्रतिपद्यन्ते केचित्तु तयोस्तन्निर्णयमनुसृत्य तथात्वमेवाभिगच्छन्ति तत्र केषां मतमर्पितव्यमिति तत्राह त्वमपीति ॥ १६ ॥

व्या० टी०। ननु तथापि शीतोष्णादिकमतिदुःसहं कथं सोढव्यं अत्यन्तं तत्सहने च कदाचिदात्मनो नाशः स्यादित्याशङ्क्य सदसद्विचारतः सर्वं सोढुं शक्यमित्याशयेनाह नासतो विद्यत इति। असतोऽनात्म-

धर्मत्वादविद्यमानस्य शीतोष्णादेरात्मनि भावः सत्ता न विद्यते, तथा सतः सत्स्वभावस्यात्मनोऽभावो विनाशो न विद्यते एवमुभयोः सदसतोरन्तो निर्णयो दृष्टः कैः तत्त्वदर्शिभिर्वस्तुयाथार्थ्यवेदिभिः एवमुक्तविवेकेन सह-स्वेत्यर्थः॥ १६॥

**अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्।**
**विनाशमव्ययस्यास्य न कश्चित् कर्त्तुमर्हति॥१७**

किं पुनस्तत् यत् सदैव सर्वदास्तीत्युच्यते अविनाशीति। अविनाशि न विनष्टुं शीलं यस्येति तु शब्दः सतो विशेषणार्थः तद्विद्धि विजानीहि, किं येन सर्वमिदं जगत्ततं व्याप्तं सदाख्येन ब्रह्मणा साकाशमाकाशेनेव घटादयः विनाशमदर्शनमभावमव्ययस्य न व्येति उपचयापचयौ न याति इत्यव्ययं तस्याव्ययस्य नैतत् सदाख्यं ब्रह्म स्वेन रूपेण व्येति न व्यभिचरति निरवयवत्वाद्देहादिवत् नाप्यात्मीयेनात्मीयाभावात् यथा देवदत्तो धनहान्या व्येति न त्वेवं ब्रह्म व्येत्यतोऽव्ययस्यास्य ब्रह्मणो विनाशं न कश्चित कर्त्तुमर्हति न कश्चित आत्मानं विनाशयितुं शक्नोति ईश्वरोऽप्यात्मा हि ब्रह्म स्वात्मनि च क्रियाविरोधात्॥ १७॥

ननु सदिति सामान्यं स्वरूपं वा प्रथमे तस्य विशेषसापेक्षतया प्रलयदशायामशेषविशेषविनाशे विनाशः स्यान्न चात्मादयो विशेषास्तदापि सन्तीति वाच्यं आत्मातिरिक्तानां विशेषाणां कार्य्यत्वाङ्गीकारात् प्रलयावस्थायामनवस्थानादात्मनस्तु सामान्यात्मनो धर्म्मित्वाद्भेदापाद्द्वितीये तु स्वरूपस्य व्यावृत्तत्वे कल्पितत्वाद्विनाशित्वमनुवृत्तत्वेन तस्यैव सामान्यतया प्रागुक्तदोषानुषक्तिरिति मन्वानश्चोदयति किं पुनरिति। सामान्यविशेषभावशून्यमखण्डैकरसं सदेवेत्यादि श्रुतिप्रमितं सर्वविक्रियारहितं वस्तु प्रकृतं सद्विवक्षितमित्युत्तरमाह उच्यत इति। आत्मनः सदात्मनो विना-

विच्छिद्यते स तस्या अन्तस्तथेमे देहाः स्वप्नमायादेहादिव-च्चान्तवन्तो नित्यस्य शरीरिणः शरीरवतोऽनाशिनोऽप्रमेय-स्यात्मनोऽन्तवन्त इत्युक्ता विवेकिभिरित्यर्थः, नित्यस्या-नाशिन इति न पुनरुक्तं नित्यत्वस्य द्विविधत्वाल्लोके नाशस्य च यथा देहो भस्मीभूतोऽदर्शनं गतो नष्ट उच्यते विद्यमानोऽपि यथा अन्यथा परिणतो व्याध्यादियुक्तो जातो नष्ट उच्यते तत्रानाशिनो नित्यस्येति द्विविधेनापि नाशेनासम्बन्धोऽस्ये-त्यर्थः। अन्यथा पृथिव्यादिवदपि नित्यत्वं स्यादात्मनस्तन्मा-भूदिति नित्यस्यानाशिन इत्याह अप्रमेयस्य न प्रमेयस्य प्रत्यक्षादिप्रमाणैरपरिच्छेद्यस्येत्यर्थः। नन्वागमेनात्मा परि-च्छिद्यते प्रत्यक्षादिना च पूर्वं नात्मनः स्वतः सिद्धत्वात् सिद्धे

---

आ०टी०। सदसतोरनन्तरप्रकृतयोः स्वरूपाव्यभिचारित्वेन परमार्थतया सन्निर्धारितमिदानीमसन्निर्दिधारयिषया पृच्छति किं पुनरिति। असदेवेति निर्धारितत्वात् प्रश्नस्य निरवकाशत्वमाशङ्क्य सूत्रं व्याचष्टे विवक्षितमसन्निर्धारयितुं तस्य सावकाशत्वमाह यत् स्वात्मेति। देहादेरनात्मवर्गस्य प्रकृतामसत्त्वविषयतेत्याह उच्यत इति। तेषां स्वातन्त्र्यं व्युदस्यति नित्यस्येति। आकाशादिव्यावृत्त्यर्थं विशिनष्टि शरीरिण इति। परिणामनित्यत्वं व्यवच्छिनत्ति अनाशिन इति। तस्य प्रत्यक्षाद्यविषयत्वमाह अप्रमेयस्येति। देहादेरवस्तुत्वादात्मनश्चैकरूपत्वाद् युद्धे स्वधर्मे प्रवृत्तस्यापि तव न हिंसादिदोषसम्भावनेत्याह तस्मादिति। ननु देहादिषु सद्बुद्धेरनुवृत्तेस्तस्याविच्छेदाभावात् कथमन्तवत्त्वं तेषामिष्यते तत्राह यथेति। तथेमे देहाः सद्बुद्धिभाजोऽपि प्रमाणतो निरूपणायामवसाने विच्छेदादन्तवन्तो भवन्तीति शेषः। देहत्वादिना च जाग्रद्देहादेरन्तवत्त्वं सम्प्रतिपन्नवदनुमातुं शक्यमित्याह स्वप्नेति। शरीरादेरन्तवत्त्वेऽपि प्रवाहरूपेणात्मनस्तत्सम्बन्धस्यानन्तत्वमाशङ्क्याह नित्य-

इवं नित्योऽविक्रियश्च आत्मा तस्मात् युद्धस्व युद्धादुपरमं माकार्षीरित्यर्थः, न ह्यत्र युद्धकर्त्तव्यता विधीयते युद्धे प्रवृत्त एव ह्यसौ शोकमोहप्रतिबद्धस्तूष्णीमास्तेऽतस्तस्य कर्त्तव्यप्रतिबन्धापनयनमात्रं भगवता क्रियते तस्माद्युद्धस्वेत्यनुवादमात्रं न विधिः॥ १८॥

---

वयमित्यर्थः। तथापि कथमस्य प्रत्यगात्मनि प्रामाण्यं तस्य स्वतः सिद्धत्वेनाविषयत्वादज्ञातज्ञापनायोगादित्याशङ्क्य स्वतोभासमानोऽपि प्रतीचौ मनुष्योऽहं कर्त्ताहमित्यादिना मनुष्यत्वकर्तृत्वादीनामतद्धर्माणामध्यारोपणेनात्मनि प्रतीयमानत्वात् तन्मात्रनिवर्त्तकत्वेनात्मनो विषयत्वमनापाद्यैव शास्त्रं प्रामाण्यं प्रतिपद्यते सिद्धन्तु निवर्त्तकत्वादिति न्यायादित्याह अतद्धर्मेति। घटादाविव स्फुरणातिशयजनकत्वेन किमित्यात्मनि शास्त्रप्रामाण्यं नेष्टमित्याशङ्क्य जड़त्वाजड़त्वाभ्यां विशेषादिति मत्वाह नत्विति। ब्रह्मात्मनो मानापेक्षामन्तरेण स्वतः स्फुरणे प्रमाणमाह तथा चेति। साक्षादन्यापेक्षामन्तरेणापरोक्षादपरोक्षस्फुरणात्मकं यद्ब्रह्म न च तस्यात्मनाऽर्थान्तरत्व सर्व्वाभ्यन्तरत्वेन सर्ववस्तुसारत्वात्तभावात्। व्याचष्टे योजना। अथ एवमात्मनित्यत्व प्रतिपादनं फलितं निगमयति तस्मादिति। स्वधर्मनिवृत्तिहेतुनिषेधे तात्पर्यं दर्शयति युद्धादिति। आत्मनो नित्यत्वादिस्वरूपमुपपाद्य युद्धकर्त्तव्यत्वविधानात् ज्ञानकर्म्मसमुच्चयोऽत्र भातीत्याशङ्क्याह न हीति। युद्धस्वेति वचनात्तत्प्रवर्त्तकत्वविधिरस्तीत्याशङ्क्याह युद्ध इति। कथं तर्हि, कथं भीष्ममहमित्यादर्ज्जुनस्य युद्धोपरमपरं वचनमिति तत्राह शोकेति। यदि स्वतो युद्धे प्रवृत्तिः तर्हि भगवद्वचनस्य का गतिरित्याशङ्क्याह तस्येति। भगवद्वचनस्य प्रतिबन्धनिवर्त्तकत्वे सत्यर्ज्जुनप्रवृत्तेः स्वाभाविकत्वे फलितमाह तस्मादिति॥ १८॥

स्वा० टी०। आगमापायधर्म्मकं सन्दर्शयति अन्तवन्त इति। नित्यस्य सर्व्वदैकरूपस्यात एवानाशिनोऽप्रमेयस्यापरिच्छिन्नस्यात्मन इमे

सुखदुःखादिधर्मकादेहा उक्तास्तत्त्वदर्शिभिः, यस्मादेवात्मनो न विनाशो न च सुखदुःखादिसम्बन्धस्तस्मान्मोहजं शोकं त्यक्त्वा युद्धस्व स्वधर्मं मा त्याक्षीरित्यर्थः ॥ १८ ॥

## य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
## उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥१९

शोकमोहादिसंसारकारणनिवृत्त्यर्थं गीताशास्त्रं न प्रवर्त्तकमित्येतत् पार्थस्य साक्षीभूते ऋचा वा निनाय भगवान् यत्तु मन्यसे युद्धे भीष्मादयो मया हन्यन्ते अहमेव तेषां हन्तेत्येषा बुद्धिर्मृषैव ते कथं य एनमिति । य एनं प्रकृतं देहिनं वेत्ति विजानाति हन्तारं हननक्रियायाः कर्त्तारं यश्चैनमन्यो मन्यते हतः देहहननेन हतोऽहमिति हननक्रियायाः कर्मभूतं तावुभौ न विजानीतो न ज्ञातवन्तौ अविवेकेनात्मानमहं प्रत्ययविषयं हन्ताहं हतोऽस्म्यहमिति देहहननेन आत्मानं यौ विजानीतस्तावात्मस्वरूपानभिज्ञावित्यर्थः, यस्मान्नायमात्मा हन्ति न हननक्रियायाः कर्त्ता भवति न च हन्यते न च कर्म भवतीत्यर्थः अविक्रियत्वात ॥ १९ ॥

अभिनाभि तु तद्विद्धीत्यत्र पूर्वार्द्धेन तत्पदार्थसमर्थनमुत्तरार्द्धेन निरीश्वरवादस्य परिणामवादस्य वा निराकरणमात्मनि जन्मादिप्रतिभानस्यौपचारिकत्व प्रदर्शनार्थं मन्तवन्त इत्यादि वचनमिति केचित्, अस्तु नामायमपि पन्थाः, पर्वोक्तस्य गीताशास्त्रार्थस्योत्प्रेक्षामात्रमूलत्वं निराकर्त्तुं मन्त्रद्वयं भगवानानीतवानिति श्लोकद्वयस्य सङ्गतिं दर्शयति शोकमोहादीति । तत्र प्रथममन्त्रस्य सङ्गतिमाह यस्त्विति । प्रत्यक्षनिबन्धनत्वादस्याबुद्धेरूपात्तमयुक्तमित्याक्षिपति । कथमिति । प्रत्यक्षस्याज्ञान

प्रसक्तत्वेनाभासत्वात् तत्कृता बुद्धिर्न प्रमेति परिहरति च एनमिति। हन्ता चेन्मन्यते हन्तुं इत्याद्या त्वचमर्थतोदर्शयित्वा व्याचष्टे च एनमिति। हन्तारं हतश्चात्मानं मन्यमानस्य कथमज्ञानमित्या शङ्काह हन्ताहमिति। हन्तृत्वादिज्ञानमज्ञान मित्यत्र हेतु माह यस्मादिति। आत्मनोहननं प्रति कर्तृत्वकर्मत्वयोरभावे हेतुं दर्शयति अविक्रियत्वादिति ॥ १९ ॥

व्या॰ टी॰। तदेवं भीष्मादिवत्वनिमित्तः शोकोनिवारितोयश्चात्मानोहन्तृत्वनिमित्तं दुःखमुक्तं एतान् हन्तुमिच्छामीत्यादिना तदपि तद्वदेव निर्निमित्तमित्याह च एनमिति। एनमात्मानमात्मनोहननक्रियायां कर्मत्ववत् कर्तृत्वमपि नास्तीत्यर्थः। तत्र हेतुर्नायमिति ॥ १९ ॥

न जायते म्रियते वा कदाचि-
न्नायं भूत्वा भविता वा न भूयः।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥२० ॥

कथमविक्रियः आत्मेति द्वितीयो मन्त्रः न जायते नोत्पद्यते जनिलक्षणा तु वस्तु विक्रियानात्मनो विद्यत इत्यर्थः, तथा न म्रियते वा तत्र वाशब्दश्चार्थे न म्रियते चेत्यन्त्या विनाशलक्षणा विक्रिया प्रतिषिध्यते, कदाचिच्छब्दः सर्वविक्रियाप्रतिषेधैः संबध्यते न कदाचिज्जायते न कदाचिन्म्रियत इत्येवं, यस्मादयमात्मा भूत्वा भवनक्रियामनुभूय पश्चादभविता अभावं गन्ता न भूयः पुनस्तस्मान्न म्रियते यो हि भूत्वा न भविता स म्रियत इत्युच्यते लोके, वाशब्दान्न शब्दाच्चायमात्मा भूत्वा वा भविता

देहवन्न भूयः पुनस्तस्मान्न जायते यो ह्यभूत्वा भविता स जायत इत्युच्यते नैवमात्माऽतो न जायते यस्मादेवं तस्मादजो यस्मान्न म्रियते तस्मान्नित्यश्च, यद्यप्याद्यन्तयोर्विक्रिययोः प्रतिषेधे सर्वा विक्रियाः प्रतिषिद्धा भवन्ति तथापि मध्यभाविनीनां विक्रियाणां तदर्थैः स्वशब्दैरेव प्रतिषेधः कर्त्तव्य इत्यनुक्तानामपि यौवनादिसमस्तविक्रियाणां प्रतिषेधो यथा स्यादित्याह शाश्वत इत्यादिना। शाश्वत इत्यपक्षयलक्षणा विक्रिया प्रतिषिध्यते शश्वद्भवः शाश्वतो नापक्षीयते स्वरूपेण निरवयवत्वान्निर्गुणत्वाच्च नापि गुणक्षयेणापक्षयः अपक्षयविपरीतापि वृद्धिलक्षणा विक्रिया प्रतिषिध्यते पुराण इति यो ह्यवयवागमेनोपचीयते स वर्द्धतेऽभिनव इति चोच्यते अयं त्वात्मा निरवयवत्वात्

---

तदेव साधयितुं न जायते म्रियते वा विपश्चिदित्यादिमन्त्रान्तरमवतारयति कथमिति। सर्वविक्रियाराहित्यप्रदर्शनेन हेतुं विशदयन् मन्त्रमेव पठति न जायत इति। जन्ममरणविक्रियाद्वयप्रतिषेधं साधयति नायमिति। अयमात्मा भूत्वा न भविता न भूत्वा भूयो भवितेति योजना। न केवलं विक्रियाद्वयमेवात्र निषिध्यते किन्तु सर्वमेव विक्रियाजातमित्याह अज इति वाच्यमर्थमुक्त्वा विवक्षितमर्थमाह अनिलक्षणेति। विकल्पार्थत्वं व्यावर्त्तयति वेति। निष्पन्नमर्थं निर्दिशति नेत्यादिना। सम्बन्धमेवातिनयति न कदाचिदिति। अन्त्यविक्रियाभावे हेतुत्वेन नायमित्यादि व्याचष्टे यस्मादिति। उक्तमेव व्यनक्ति योहीति। आत्मनि तु भूत्वा पुनरभवनाभावान्नास्ति मृत्युरित्यर्थः। आत्मनोजन्माभावेऽपि हेतुरिहैव विवक्षित इत्याह वाय-ब्दादिति। अभूत्वेति छेदः देहवदिति व्यतिरेकोदाहरणम्। उक्तमेवार्थं साधयति योहीति। जन्माभावे तत्पूर्विकास्तित्वविक्रियापि

पुरापि नव एवेति पुराणो न वर्द्धत इत्यर्थः, तथा न हन्यते न विपरिणम्यते हन्यमाने विपरिणम्यमानेऽपि शरीरे, हन्तिरत्र विपरिणामार्थो द्रष्टव्योऽपुनरुक्ततायै न विपरिणमत इत्यर्थः, अस्मिन् मन्त्रे षड्भावविकारा लौकिकवस्तुविक्रिया आत्मनि प्रतिषिध्यन्ते सर्वप्रकारविक्रियारहित आत्मेति वाक्यार्थः, यस्मादेवं तस्मादुभौ तौ न विजानीत इति पूर्वेण मन्त्रेणास्य सम्बन्धः ॥ २० ॥

---

नात्मनोऽस्तीत्याह यस्मादिति । प्राणवियोगादात्मनोऽनन्तरभावि सावयवनाशाभाववदविरवशेषनाशाभावोऽपि सिध्यतीत्याह यस्मादिति । ननु जन्मनाशयोर्निषेधे तदन्तर्गतानां विक्रियान्तराणामपि निषेधसिद्धेस्तन्निषेधार्थं न पृथक् यतितव्यमिति तत्राह यद्यपीति । स्वशब्दैर्मध्यवर्त्तिविक्रियानिषेधवाचकैरिति यावत् । आर्थिकेऽपि निषेधे निषेधस्य सिद्धतया शाब्दो निषेधोन पृथगर्थवानित्याशङ्क्याह अनुक्तानामिति । नित्यशब्देन शाश्वतशब्दस्य पौनरुक्त्यं परिहरन् व्याकरोति शाश्वत इत्यादिना । अपक्षयो हि स्वरूपेण वा स्याद्गुणापचयतो वेति विकल्प्य क्रमेण दूषयति नेत्यादिना । पुराणपदस्यागतार्थत्वं कथयति अपक्षयेति । तदेव स्फुटयति यो हीति । न म्रियते वेत्यनेन चतुर्थपादस्य पौनरुक्त्यमाशङ्क्य व्याचष्टे तथेत्यादिना । ननु हिंसार्थो हन्तिः श्रूयते तत्कथं विपरिणामो निषिध्यते तत्राह हन्तिरिति । हिंसार्थत्वसम्भवे किमित्यर्थान्तरं हन्तेरिष्यते तत्राह अपुनरुक्ततायै इति । हिंसार्थत्वे मृतिनिषेधेन पौनरुक्त्यं स्यात्तन्निषेधार्थं विपरिणामार्थत्वमेष्टव्यमित्यर्थः । पूर्वावस्थात्यागेनावस्थान्तरापत्तिर्विपरिणामः तदर्थश्चेदत्र हन्तिरिष्यते तदानिष्पन्नमर्थमाह नेति । न जायत इत्यादिमन्त्रार्थमुपसंहरति अस्मिन्निति । षण्णां विकाराणामात्मनि प्रतिषेधे फलितमाह सर्वेति । आत्मनः सर्वविक्रियाराहित्येऽपि किमायातमित्याशङ्क्याह यस्मादिति ॥ २० ॥

व्या॰ टी॰। न हन्यत इत्येतदेव षड्भावविकारशून्यत्वेन द्रढ़यति नेति। न जायत इति जन्मप्रतिषेधः, न म्रियत इति विनाशप्रतिषेधः, वाशब्दौ चार्थे, न चायं भूत्वा उत्पद्य भविता भवति अस्तित्वं भजते किन्तु प्रागेव स्वतः सद्रूप इति जन्मानन्तरास्तित्वलक्षणद्वितीयविकारप्रतिषेधस्तत्र हेतुः यस्मादजः यो हि जायते स जन्मानन्तरमस्तित्वं भजते न तु यः स्वत एवास्ति स भूयोऽप्यस्तित्वं भजत इत्यर्थः, नित्यः सर्वदैकरूप इति वृद्धि प्रतिषेधः, शाश्वतः शश्वद्भव इत्यपक्षय प्रतिषेधः, पुराण इति विपरिणामप्रतिषेधः, पुराऽपि नव एव न तु परिणामतो रूपान्तरं प्राप्य नवो भवतीत्यर्थः, यद्वा भवितेत्यस्यानुषङ्गं कृत्वा भूयोऽधिकं यथा भवति तथा न भवितेति वृद्धिप्रतिषेधः, अजो नित्य इति चोभयं वृद्ध्याद्यभावे हेतुरिति न पौनरुक्त्यम्। तदेवं जायते अस्ति वर्द्धते विपरिणमते अपक्षीयते नश्यतीत्येवं सांख्यादिभिरुक्ताः षड्भावविकारा निरस्ताः,यदर्थमेते विकारा निरस्तास्तं प्रस्तुतं विनाशाभावमुपसंहरति न हन्यते हन्यमाने शरीर इति॥ २०॥

**वेदाविनाशिनं नित्यं य एनमजमव्ययम्।**
**कथं स पुरुषः पार्थ! कं घातयति हन्ति कम्॥२१॥**

य एनं वेत्ति हन्तारमित्यनेन मन्त्रेण हननक्रियायाः कर्त्ता कर्म च न भवतीति प्रतिज्ञाय न जायत इत्यनेनाविक्रियत्वे हेतुमुक्त्वा प्रतिज्ञार्थमुपसंहरति वेदाविनाशिनमिति। वेद विजानाति अविनाशिनमन्त्यभावविकाररहितं नित्यं विपरिणामरहितं यो वेदेति सम्बन्धः एनं पूर्वेण मन्त्रेणोक्तलक्षणमजं अव्ययं उपजनापक्षयरहितं कथं केन प्रकारेण स विद्वान् पुरुषोऽधिकृतो हन्ति हननक्रियां करोति कथं वा घातयति हन्तारं प्रयोजयति न कथञ्चित् कञ्चित् हन्ति न कथञ्चित् किञ्चित् घातयतीत्युभयत्राक्षेप एवार्थः

प्रश्नार्थासम्भवात् हेत्वर्थस्य चाविक्रियत्वस्य च तुल्यत्वाद्विदुषः सर्वकर्मप्रतिषेध एव प्रकरणार्थोऽभिप्रेतो भगवता हन्तेस्त्वाक्षेप उदाहरणार्थत्वेन विदुषः किञ्चित् कर्मासम्भवे हेतुविशेषं पश्यन् कर्माण्याक्षिपति भगवान् कथं स पुरुष इति । ननूक्तमेव आत्मनोऽविक्रियत्वं सर्वकर्मासम्भवकारणविशेषः, सत्यमुक्तो न तु सकारणविशेषोऽन्यत्वाद्विदुषोऽविक्रियत्वादात्मन इति । नन्वविक्रियं स्थाणुं विदितवतः कर्म न सम्भवतीति चेन्न विदुष आत्मत्वान्न देहादिसंघातस्य विद्वत्ता अतः पारिशेष्यादसंहत आत्मा विद्वानविक्रिय इति तस्य विदुषः कर्मासम्भवादाक्षेपो युक्तः कथं स पुरुष इति यथा बुद्ध्याद्याहृतस्य शब्दाद्यर्थस्याविक्रिय एव सन् बुद्धि-

---

आ॰टी॰। पूर्वश्लोकार्थस्यैवोत्तरत्रापि प्रतिभानात् पौनरुक्त्यमाशङ्क्य वृत्तानुवादपूर्वकमुत्तरश्लोकमवतारयति य एनमित्यादिना । कर्तृत्वाद्यभिमानविरोधादद्वैतकूटस्थात्मनिश्चयसामर्थ्यात् प्राप्तं विदुषः संन्यासम् । विद्यापरिपाकार्थमभ्यनुजानाति वेदेति । पदद्वयस्य पूर्वमेव पौनरुक्त्यमाह अविनाशिनमित्यादिना । प्रश्नोऽपि सम्भवति किमिति तत्र उक्तेस्तेन व्याख्यायते तत्राह उभयत्रेति । उत्तरत्र प्रतिवचनादर्शनान्नात्र प्रश्नः सम्भवतीत्यर्थः । विवक्षितं प्रकरणार्थं निगमयति हेत्वर्थस्येति । अविक्रियत्वं हेत्वर्थस्तस्य विदुषः सर्वकर्मनिषेधे समानत्वादिति यावत् । यदि विदुषः सर्वकर्मनिषेधोऽभिमतस्तर्हि किमिति हन्त्यर्थ एवाक्षिप्यते तत्राह हन्तेरिति । उक्तं हेतुमाक्षेप्तुं पृच्छति विदुष इति । अभिप्रायमप्रतिपद्यमानो हेतुविशेषं पूर्वोक्तं स्मारयति नन्विति । उक्तमङ्गीकृत्याक्षिपति सत्यमिति । विदुषो विद्वानात्मनो ब्रह्मणश्च वेद्यस्य विरुद्धधर्मत्वेन दहन तुहिनवद्भिन्नत्वाद्विदुषः सर्वकर्मत्यागेन असौ कारणविशेषः स्यादित्याह अन्यत्वादिति । अविक्रियत्वादिति च्छेदः ।

ह्यत्वविवेकविज्ञानेनाविद्ययोपलब्धा आत्मा कल्प्यते एव-मेवात्मानात्मविवेकज्ञानेन बुद्धिवृत्त्याविद्यया असत्यरूपयैव परमार्थतोऽविक्रिय एवात्मा विद्वानुच्यते विदुषः कर्मासम्भव-वचनात् यानि कर्माणि शास्त्रेण विधीयन्ते तान्य विदुषो विहितानीति भगवतो निश्चयोऽवगम्यते। ननु विद्याप्यवि-दुष एव विधीयते विदितविद्यस्य पिष्टपेषणवद्विद्याविधाना-नर्थक्यात् तत्राविदुषः कर्माणि विधीयन्ते न विदुष इति विशेषो नोपपद्यते इति चेन्नानुष्ठेयस्य भावाभाव-विशेषोपपत्तेरग्निहोत्रादिविध्यर्थज्ञानोत्तरकालमग्निहोत्रा-दिकर्मानेकसाधनोपसंहारपूर्वकमनुष्ठेयं कर्त्ताहं मम कर्त्तव्यमित्येवंप्रकार विज्ञानवतोऽविदुषो यथानुष्ठेयं भवति न तु तथा न जायत इत्यात्मस्वरूपविध्यर्थ-ज्ञानोत्तरकालभावि किञ्चिदनुष्ठेयं भवति किन्तु

---

तथापि कूटस्थमविक्रियं ब्रह्म प्रतिपाद्यमानस्य कुतो विक्रिया सम्भवेत् ब्रह्मप्रतिपत्तिविरोधादित्याशङ्क्याह नन्विति। अयमात्मा ब्रह्मेत्यादि श्रुत्या समाधत्ते न विदुष इति। किञ्च विद्वत्ताविशिष्टस्य वा केवलस्य वा नाद्योऽविशिष्टस्य विद्वत्तायां विशेषणस्यापि तद्ब्रह्मसङ्गाच्च विशे-षणीभूतसङ्घातस्याचेतनत्वाद्विद्वत्तायुक्तत्वाह न देहादीति। द्वितीये तु जीवब्रह्मविभागासिद्धिरित्याह अत इति। किञ्च प्रामाणिकविरुद्धधर्म-वत्त्वस्यासिद्धत्वात् प्रातिभासिकस्य च बिम्बप्रतिबिम्बयोरनैकान्त्याद्भेदानुमा-नायोगात् जीवब्रह्मणोरभेदसिद्धिरित्यभिप्रेत्य फलितमाह इति तस्येति। नन्वविक्रियस्य ब्रह्मरूपतया सर्वकर्मासम्भवे विदुषो विद्वत्तापि कथं सम्भवति न हि ब्रह्मणोऽविक्रियस्य विद्याख्यणाविक्रिया सक्रिया भवितुमर्हति तत्राह यथेति। अदृष्टेन्द्रियादिसहकृतमन्तःकरणं प्रदीपप्रभावद्विषयपर्यन्तं परिणतं बुद्धिवृत्तिरुच्यते तत्र प्रतिबिम्बितं

नाहं कर्त्ता न भोक्तेत्यात्मनो कर्तृत्वाकर्तृत्वादिविषय-ज्ञानादन्यत् नोत्पद्यत इत्येष विशेष उपपद्यते यः पुनः कर्त्ताहमिति वेत्त्यात्मानं तस्य ममेदं कर्त्तव्यमिति अवश्यम्भाविनी बुद्धिः स्यात्तदपेक्षया सोऽधिक्रियत इति तं प्रति कर्म्माणि सम्भवन्ति स चाविद्वान् उभौ तौ न विजानीत इति वचनात् विशेषितस्य च विदुषः कर्म्मा-क्षेपवचनात् कथं स पुरुष इति तस्माद्विशेषितस्य अवि-क्रियात्मदर्शिनो विदुषो मुमुक्षोश्च सर्वकर्म्मसंन्यास एवा-धिकारोऽतएव भगवान्नारायणः सांख्यान् विदुषोऽविदु-षश्च कर्म्मिणः प्रविभज्य द्वे निष्ठे ग्राहयति ज्ञानयोगेन सांख्यानां कर्म्मयोगेन योगिनामिति तथा च पुत्रा-

---

चैतन्यं अभिव्यञ्जकबुद्धिवृत्त्यविवेकाद्विषयज्ञानमिति व्यवह्रियते तेना-त्मोपलब्धा कल्प्यते, तत्राविद्याप्रयुक्तमिथ्यासम्बन्धनिबन्धनं तथैवा-ध्यासिकसम्बन्धेन ब्रह्मात्मैक्याभिव्यञ्जकवाक्योत्थबुद्धिवृत्तिद्वारा विद्यमात्मा व्यपदिश्यते, न च मिथ्यासम्बन्धेन पारमार्थिकाविक्रियत्वविहतिरस्तीत्यर्थः। अहं ब्रह्मेति बुद्धिवृत्तेर्मोक्षावस्थायामपि भावादात्मनः सविशेषत्वमाशङ्क्य तस्य यावदुपाधिसत्त्वमेवेत्याह अस्येति। ननु कूटस्थस्यात्मनो मिथ्याविद्यावत्वेऽपि तस्य कर्म्माधिकारनिवृत्तौ कस्य कर्म्माणि विधीयन्ते न हि निरधिकाराणां तेषां विधिरित्याशङ्क्याह विदुष इति। कर्म्माण्यविदुषो विहितानीति विशेषमाक्षिपति नन्विति। कर्म्मविधानमविदुषो विदुषश्च विद्याविधानमिति विभागे का हानिरि-त्याशङ्क्याह विदितेति। विद्याया विदितत्वं लब्धत्वं कर्मविधिः अविदुषो विदुषो विद्याविधिरिति विभागासम्भवे फलितमाह तस्मेति। धर्म्मज्ञानानन्तरमनुष्ठेयस्य भावात् ब्रह्मज्ञानोत्तरकालञ्च तदभावात् ब्रह्मज्ञानहीनस्यैव कर्मविधिरिति समाधत्ते नानुष्ठेयस्येति। विशेषो-

थाह भगवान् व्यासो द्वाविमावथ पन्थानावित्यादि तथा च क्रियापथश्चैव पुरस्तात् पश्चात् संन्यासश्चेत्येतमेव विभागं पुनः पुनर्दर्शयिष्यति भगवान् अतत्त्वविदहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते तत्त्ववित्तु नाहं करोमीति तथा च सर्वकर्माणि मनसा संन्यस्यास्त इत्यादि, तत्र केचित् पण्डितम्मन्या वदन्ति जन्मादिषड्भावविक्रियारहितोऽविक्रियोऽकर्त्तैकोऽहमात्मेति न कस्यचित् ज्ञानमुत्पद्यते यस्मिन् सति सर्वकर्मसंन्यास उपदिश्यते तन्न न जायत इत्यादिशास्त्रोपदेशानर्थक्यप्रसङ्गात् यथा च शास्त्रोपदेशसामर्थ्याद्धर्माधर्मास्तित्वविज्ञानं कर्त्तुश्च देहान्तरसम्बन्धिज्ञानञ्चोत्पद्यते तथा च शास्त्रात् तस्यैवात्मनोऽविक्रियत्वाकर्त्तृत्वैकत्वादिविज्ञानं कस्मान्नोपपद्यते इति प्रष्टव्यास्ते, करण-

---

पर्यस्तमेव प्रपश्यसि अग्निहोत्रादीति। ननु देहादिव्यतिरिक्तात्मज्ञानं विना पारलौकिकेषु कर्मसु प्रवृत्तेरनुपपत्तेस्तथाविध ज्ञानवता कर्मानुष्ठेयमिति चेत्तत्राह कर्त्ताहमिति। आत्मनि कर्त्ता भोक्तेत्येवं विज्ञानवत्त्वेऽपि ब्रह्मज्ञानविहीनत्वेनाविदुषोऽनुष्ठेयं कर्मेत्यर्थः। देहादिव्यतिरिक्तात्मज्ञानवद्ब्रह्मज्ञानमपि ज्ञानत्वाविशेषात् कर्मप्रवृत्तावुपकरिष्यतीत्याशङ्क्याह नत्विति। अनुष्ठेयविरोधित्वादविक्रियात्मज्ञानस्येति शेषः। नन्वाद्वैकत्वज्ञानादुत्तरकालमपि कर्त्ताहमित्यादिज्ञानोत्पत्तौ कर्मविधिः सावकाशः स्यादिति नेत्याह नाहमिति। कारणाभावादिति शेषः, कर्त्तृत्वादिज्ञानमन्यादित्युक्तम्। अनुष्ठानानुष्ठानयोरुक्तविशेषाद्विदुषोऽनुष्ठानं विदुषो नेत्युपसंहरति इत्येष इति। नन्वात्मविदो न चेदनुष्ठेयं किञ्चिदस्ति कथं तर्हि विद्वान् यजेतेत्यादिशास्त्रात्तं प्रति कर्माणि विधीयन्ते तत्राह यः पुनरिति। आत्मनि कर्त्तृत्वादिज्ञानापेक्षया

गोचरत्वादिति चेन्न मनसैवानुद्रष्टव्यमिति श्रुतेः शास्त्राचार्य्योपदेशजनितशमदमादिसंस्कृतं मन आत्मदर्शने करणं तथा च तदधिगमायानुमाने आगमे च सति ज्ञानं नोत्पद्यते इति साहसमात्रमेतत् ज्ञानञ्चोत्पद्यमानं तद्विपरीतमज्ञानं अवश्यं बाधत इत्यभ्युपगन्तव्यं तच्चाज्ञानं दर्शितं हन्ताहं हतोऽस्मीत्युभौ तौ न विजानीत इत्यत्र चात्मनो हननक्रियायाः कर्त्तृत्वं कर्मत्वं हेतुकर्त्तृत्वञ्चाज्ञानकृतं दर्शितं तच्च सर्वक्रियास्वपि समानं कर्त्तृत्वादेरविद्याकृतत्वमविक्रियत्वादात्मनः विक्रियावान् हि कर्त्तात्मनः कर्मभूतमन्यं प्रयोजयति कुर्विति तदेतदविशेषेण विदुषः सर्वक्रियासु कर्त्तृत्वं हेतुकर्त्तृत्वञ्च प्रतिषेधति भगवान् विदुषः कर्माधिकारा-

---

कर्मस्वधिकृतत्वज्ञाने तथाविधं पुरुषं प्रति कर्म्माणि विधीयन्ते स च प्राचीनवचनादविद्वानेवेति निश्चीयते न खल्वकर्त्तृत्वादिज्ञानवतस्तद्विपरीतकर्त्तृत्वादिज्ञानद्वारा कर्मसु प्रवृत्तिरित्यर्थः । कर्म्मासम्भवे ब्रह्मविदो हेत्वन्तरमाह विशेषितस्येति । वेदाविनाशिनमित्यादिनेति शेषः । यद्यपि विदुषो नास्ति कर्म तथापि विविदिषोः स्यादित्याशङ्क्याह तस्मादिति । विद्यया विरुद्धत्वादिष्यमाणमोक्षप्रतिपक्षत्वाच्च कर्मणामित्यर्थः । यद्यपि मुमुक्षोराश्रमकर्म्माण्यपेक्षितानि तथापि विद्या तत्फलाभ्यामविरुद्धान्येव तान्यभ्युपगतान्यन्यथा विविदिषा संन्यासविधिविरोधादित्यभिप्रेत्योक्तेऽर्थे भगवतोऽनुमतिमाह अतएवेति । विदुषो विविदिषोश्च संन्यासेऽधिकारोऽविदुषस्तु कर्म्मणीति विभागस्येष्टत्वादित्यर्थः । अधिकारिभेदेन निष्ठाद्वयं भगवता वेदव्यासेनापि दर्शितमित्याह तथा चेति । अध्ययनविधिना स्वाध्यायपाठे त्रैवर्णिकस्य प्रवृत्त्यनन्तरं तत्र क्रियामार्गो ज्ञानमार्गश्चेति द्वौ मार्गावधिकारिभेदेनावेदितावित्यर्थः । आदिशब्दात्

ऽकारयतश्च देहे संन्यस्येति सम्बन्धो न देहे आस्त इति चेन्न सर्वत्रात्मनोऽविक्रियत्वावधारणात् आसनक्रियायाश्चाधिकरणापेक्षत्वात्तदनपेक्षत्वाच्च संन्यासस्य, संपूर्वस्तु न्यासशब्दोऽत्र त्यागार्थो न निक्षेपार्थः, तस्माद्गीताशास्त्रे

---

त्वमपि निरुपादानं भावकार्य्यस्योपादाननियमाच्च चानात्मा तदुपादानमात्मनि तत्प्रतिभानाच्च चात्मैव तदुपादानं कूटस्थस्य तस्य विद्यां विना तद्योगादित्याह अविक्रियत्वादिति। कर्त्तृत्वाभावेऽपि कारयितृत्वं स्यादित्याशङ्क्याह विक्रियायामिति। आत्मनि कर्त्तृत्वादिप्रतिभानस्यानाद्यनिर्वाच्यमज्ञानमुपादानं तन्निवृत्तिश्च तत्त्वज्ञानादित्युक्तमिदानीं कर्त्तृत्वकारयितृत्वयोरविद्याकृतत्वे भगवतोऽनुमतिं दर्शयति तदेतदिति। विदुषो यदि कर्म्माधिकाराभावो भगवतोऽभिमतः तर्हि कुत्र तस्य जीवतोऽधिकारः स्यादिति पृच्छति क्व पुनरिति। ज्ञाननिष्ठायामित्युक्तं स्मारयति उक्तमिति। तदङ्गभूते सर्वकर्मसंन्यासे च तस्याधिकारोऽस्तीत्याह तथेति। वक्ष्यमाणे वाक्ये सर्वकर्मसंन्यासो न प्रतिभाति मानसानामेव कर्म्मणां विशेषणवशात् त्यागावगमादिति शङ्कते नन्विति। विशेषणान्तरमाश्रित्य दूषयति न सर्वेति। मनसेति विशेषणान्मानसेष्वेव कर्मसु सर्वशब्दः सङ्कुचितः स्यादिति शङ्कते मानसानामिति। सर्वात्मना मनोव्यापारत्यागे व्यापारान्तराणामनुपपत्तेः सर्वकर्मसंन्यासं सिध्यतीति परिहरति नेत्यादिना। मानसेष्वपि कर्मसु संन्यासे सङ्कोचाच्च वागादिव्यापारानुपपत्तिरिति शङ्कते शास्त्रीयाणामिति। अन्यानीत्यशास्त्रीयवाक्कायकारणान्यशास्त्रीयाणि मानसानि तानि च सर्व्वाणि कर्म्माणीत्यर्थः। वाक्यशेषमादाय दूषयति न नैवेति। न हि विवेकबुद्ध्या सर्व्वाणि कर्म्माणि अशास्त्रीयाणि संन्यस्य तिष्ठतीति युक्तं नैव कुर्वन्नित्यादिविशेषणस्य विवेकबुद्धेश्च सर्वत्यागहेतोस्तुल्यत्वादित्यर्थः। भगवदभिमतसर्वकर्मसंन्यासस्यावस्थाविशेषे सङ्कोचं दर्शयन्नाशङ्कते मरिष्यत इति। संन्यासो जीवदवस्थायामेवात्र विवक्षित इत्यत्र लिङ्गं दर्शयन्नुत्तरमाह न नवेति। अनुपपत्तिमेव स्फोरयति न

**आत्मज्ञानवतः संन्यास एवाधिकारो न कर्मणीति तत्र तत्रोपरिष्टादात्मज्ञानप्रकरणे दर्शयिष्यामः॥ २१॥**

---

इतीति। अन्वयविशेषाव्याख्यानेन लिङ्गादिसिद्धिं चोदयति अकुर्वन इति। विवेकवशाद्विशेषाणयपि कर्माणि देहे यथोक्तं निःक्षिप्याकुर्वन्नकारयंश्च विद्वानवतिष्ठते तथा च देहे कर्माणि संन्यस्याकुर्वतोऽकारयतश्च सुखमासनमिति सम्बन्धसम्भवात् विशेषणस्य सति देहे कर्मत्यागविषयत्वाभावाज्जीवतः सर्वकर्मत्यागो नास्तीत्यर्थः, अथवा कुर्वन इत्यादि पूर्ववैव सम्बन्धनीयं, लिङ्गादिसिद्धि चोद्यन्तु देहे संन्यस्येतत्रारभ्योन्नेयम्। आत्मनः सत्वाविक्रियत्वनिर्द्धारणाद्देहसम्बन्धमन्तरेण कर्त्तृत्वकारयितृत्वाप्राप्तेरप्राप्तप्रतिषेधप्रसङ्गपरिहारार्थमसदुक्त एव सम्बन्धः साधीयानिति समाधत्ते न सर्वत्रेति। श्रुतिषु स्मृतिषु चेतत्रार्थः। किञ्च सम्बन्धस्याकाङ्क्षासन्निधियोग्यताधीनत्वादाकाङ्क्षावशादस्मदभिमतसम्बन्धसिद्धिरितत्राह आसनेति। भवदिष्टस्तु सम्बन्धो न सिध्यतत्राकाङ्क्षाभावादितत्राह तदनपेक्षत्वाच्चेति। संन्यासशब्दस्य विक्षेपार्थत्वात्तस्य चाधिकरणसापेक्षत्वादस्मदिष्टसम्बन्धसिद्धिरितत्राशङ्क्याह सपूर्वस्त्विति। अन्यथोपसर्गवैयर्थ्यादित्यर्थः। मनसा विवेकविज्ञानेन सर्वकर्माणि परितत्यज्यास्ते देहे विद्वानितत्रस्यैव सम्बन्धस्य साधुत्वं मत्वोपसंहरति तस्मादिति। सर्वव्यापारो परमात्मनः सर्वकर्मसंन्यासस्याविक्रियात्मज्ञानाविरोधित्वात् प्रयोजकज्ञानवतोविधे संन्यासेऽधिकारः सम्यग्ज्ञानवतस्त्वविधे स्वाभाविके फलात्मनीति विभागमभ्युपेतत्रोक्तेऽर्थे वाक्यशेषानुगुणत्वं दर्शयति इति तत्र तत्रेति॥ २१॥

स्वा० टी०। अतएवहन्तृत्वाभावोऽपि पूर्वोक्तः सिद्ध इत्याह वेदाविनाशिनमिति। नित्यं हृद्धिशून्यं अव्ययमपक्षयशून्यं अजं अविनाशिनञ्च यो वेद स पुरुषः कं हन्ति कथं वा हन्ति एवमात्मनस्तस्य वधे साधनाभावात्, तथा स्वयं प्रयोजको भूत्वान्येन कं घातयति कथं वा घातयति न कञ्चिदपि कथञ्चिदपीत्यर्थः, अनेन मय्यपि प्रयोजकत्वदोषदृष्टिं माकार्षीरित्युक्तं भवति॥ २१॥

भावप्रदर्शनार्थं वेदाविनाशिनं य एनं स पुरुष इत्या-
दिना, क पुनर्विदुषोऽधिकार इत्येतदुक्तं पूर्वमेव ज्ञान-
योगेन सांख्यानामिति तथा च सर्वकर्मसंन्यासं वक्ष्यति
सर्वकर्माणि मनसेत्यादिना. ननु मनसेति वचनान्न वा-
चिकानां कायिकानाञ्च सन्न्यास इति चेत् न सर्व-
कर्माणीति विशेषितत्वात् मानसानामेव सर्वकर्मणा-
मिति चेन्न मनोव्यापारपूर्वकत्वाद्वा वाक्कायव्यापाराणां
मनोव्यापाराभावे कर्मानुपपत्तेः शास्त्रीयाणां वाक्काय-

---

यत्र वेदाः प्रतिष्ठिता इत्यादि गृह्यते । उक्तयोर्मार्गयोस्तुल्यतां परिहर्त्तुमुदाहरणान्तरमाह तथेति । बुद्धिशुद्धिद्वारा कर्म तत्फलयोर्वैराग्योदयात् पूर्वं कर्म्ममार्गो विहितो विरक्तस्य पुनः सन्न्यासपूर्वको ज्ञानमार्गो दर्शितः स चेतरस्मादतिशयशालीति स्मृतमित्यर्थः । उक्तविभागे पुनरपि वाक्यशेषानुकूल्यमादर्शयति एतमेवेति । अहङ्कारविमूढात्मेत्यस्य व्याख्यानं अतत्त्वविदिति । तत्त्ववित्त्विति श्लोकमवतार्य्य तात्पर्य्यार्थं संगृह्णाति नाहमिति । पूर्वेण क्रियापदेनेति शब्दः सम्बध्यते । विरक्तमधिकृत्य वाक्यान्तरं पठति तथा चेति । आदिशब्दस्तस्यैव श्लोकस्य शेषसंग्रहार्थः । अविक्रियात्मज्ञानात् कर्म्मसंन्यासे दर्शिते मीमांसकमतमुत्थापयति तन्नेति । आत्मनो ज्ञानक्रियाशक्त्याधारत्वेनाविक्रियत्वाभावादविक्रियात्मज्ञानं संन्यासकारणीभूतं न सम्भवतीत्यर्थः । यथोक्तज्ञानाभावो विषयाभावाद्वा मानाभावाद्वेति विकल्पाद्यं दूषयति नेत्यादिना । न तावदविक्रियात्माभावो न जायते क्षियते वेत्यादिशास्त्रस्याप्तवाक्यतया प्रमाणस्यान्तरेण कारणमानर्थक्यायोगादित्यर्थः । द्वितीयं प्रत्याह यथा चेति । पारलौकिककर्मविधिसामर्थ्यसिद्धं विज्ञानमुदाहरति कर्त्तुश्चेति । कर्मकाण्डादज्ञाते धर्म्मादौ विज्ञानोत्पत्तिवत् ज्ञानकाण्डादज्ञाते अध्यात्मनि विज्ञानोत्पत्तिरविरुद्धा-प्रमाणत्वाविशेषादित्यर्थः । ज्ञानस्य मनःसंयोगजन्यत्वादात्मनश्च श्रुत्या

कर्मणां कारणानि मानसानि मनोव्यापाराणि वर्ज-यित्वान्यानि सर्वकर्माणि मनसा सन्न्यस्यास्त इति चेन्न नैव कुर्वन्नकारयन् इति विशेषणात् सर्वकर्मसंन्यासोऽयं भगवतोक्तो, मरिष्यतो न जीवत इति चेन्न नवद्वारे पुरे देही आस्ते इति विशेषणानुपपत्तेः न हि सर्वकर्मसंन्यासेन मृतस्य तद्देहे आसनं सम्भवत्यकुर्वतो-

---

मनोगोचरत्वनिरासादात्मज्ञाने साधनमस्तीति शङ्कते करणेति। श्रुतिमाश्रित्य परिहरति न मनसेति। तत्त्वमस्यादिवाक्योत्थ मनोवृत्त्यैव शास्त्राचार्य्योपदेशमनुसृत्य द्रष्टव्यं तत्त्वमिति श्रूयते स्वरूपेण स्वप्रकाशमपि ब्रह्मात्मवस्तु वाक्योत्थबुद्धिवृत्त्यभिव्यक्तं सविकल्पकव्यवहारालम्बनं भवतीति मनोगोचरत्वोपचारादसिद्धं करणागोचरत्वमित्यर्थः। कथं तर्हि ब्रह्मात्मनो मनोविषयत्वनिषेधश्रुतिरित्याशङ्क्य संस्कृतमनोवृत्त्यविषया सेति मन्वानः सन्नाह शास्त्रेति। सत्यपि श्रुत्यादौ तदनुग्राहकाभावान्नात्माकर्मविक्रियात्मकज्ञानमुत्पत्तुमर्हतीत्याशङ्क्याह तथेति। तस्याविक्रियस्यात्मनोऽधिगत्यर्थं विमतो विकारो नात्मधर्म्मो विकारत्वादुभयाभिमतविकारवदित्यनुमाने पूर्वोक्तश्रुतिस्मृतिरूपागमे च सत्येव तस्मिन्नोत्पद्यते ज्ञानमिति वचः साहसमात्रं सत्येव माने मेयं न भातीति वदित्यर्थः। ननु यथोक्तं ज्ञानमुत्पन्नमपि हानायोपादानाय वा न भवतीति कुतोऽस्य फलवत्त्वं तत्राह ज्ञानञ्चेति। अवश्यमिति प्रकाशप्रवृत्तेस्तमो निवृत्त्यव्यतिरेकेणानुपपत्तिवदात्माज्ञाननिवृत्तिमन्तरेणात्मज्ञानोत्पत्तेरनुपपत्तेरित्यर्थः। नन्वज्ञानस्य ज्ञानप्रागभावत्वात्तन्निवृत्तिरेव ज्ञानं न तु तन्निवर्त्तकमिति तत्राह तच्चेति। कथं पुनर्भगवतापि ज्ञानाभावातिरिक्तमज्ञानं दर्शितमित्याशङ्क्याह अत्र चेति। विमतं ज्ञानाभावो न भवत्युपादानत्वान्मृदादिवदिति भावः। ननु हननक्रियायाश्च न हिंस्यादिति निषिद्धत्वात् तत्कर्तृत्वादेरज्ञानकृतत्वेऽपि विहितक्रियाकर्तृत्वादेर्न तथात्वमिति नेत्याह तच्चेति। न तावदात्मनि कर्तृत्वादिनित्यत्वं अमुक्तिप्रसङ्गाच्च चानि-

**वासांसि जीर्णानि यथा विहाय**
**नवानि गृह्णाति नरोऽपराणि ।**
**तथा शरीराणि विहाय जीर्णा-**
**न्यन्यानि संयाति नवानि देही ॥ २२ ॥**

प्रकृतन्तु वक्ष्यामः, तत्रात्मनोऽविनाशित्वं प्रतिज्ञातं तत् किमिवेत्युच्यते वासांसीति । वासांसि वस्त्राणि जीर्णानि दुर्बलतां गतानि यथा लोके विहाय परित्यज्य नवान्यभिनवानि गृह्णात्युपादत्ते नरः पुरुषोऽपराण्यन्यानि तथा तद्वदेव शरीराणि विहाय जीर्णान्यन्यानि संयाति संगच्छति नवानि देह्यात्मा पुरुषवद्-विक्रिय एवेत्यर्थः ॥ २२ ॥

आत्मनोऽविक्रियत्वेन कर्मासम्भवं प्रतिपाद्याविक्रियत्वहेतुसमर्थनार्थमेवोत्तरग्रन्थमवतारयति प्रकृतं त्विति । किं तत् प्रकृतमिति शङ्कमानं प्रत्याह तत्रेति । अविनाशित्वमित्युपलक्षणमविक्रियत्वमित्यर्थः । तदेव दृष्टान्तेन स्पष्टयितुमुत्तरश्लोकमुत्थापयति तदित्यादिना । आत्मनः स्वतोऽविक्रियाभावेऽपि पुरातनदेहत्यागे नूतनदेहोपादाने च विक्रियावत्त्वध्रौव्यादविक्रियत्वमसिद्धमिति चेत्तत्राह वासांसीति । शरीराणि जीर्णानि वयोहानिं गतानि त्वग्वलीपलितादिसङ्कुलानीत्यर्थः । वाससां पुरातनानां परित्यागे नवानाञ्चोपादाने त्यागोपादानकर्तृभूतलौकिकपुरुषस्यापि अविकारित्वेनैकरूपत्ववदात्मनो देहत्यागोपादानयोरविरुद्धमविक्रियत्वमिति वाक्यार्थमाह पुरुषवदिति ॥ २२ ॥

स्वा० टी० । नन्वात्मनोऽविनाशेऽपि तदीयशरीरनाशं पर्यालोच्य शोचामीति चेत्तत्राह वासांसीति । कर्मनिबन्धनानां देहानाम-वश्यम्भावित्वात् जीर्णदेहनाशे न शोकावकाश इत्यर्थः ॥ २२ ॥

**नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः।**
**न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥२३॥**

कस्मादविक्रिय एवेत्याह नैनं छिन्दन्तीति। एनं प्रकृतं देहिनं न छिन्दन्ति शस्त्राणि निरवयवत्वान्नावयवविभागं कुर्वन्ति शस्त्राण्यस्यादीनि तथा नैनं दहति पावकोऽग्निरपि न भस्मीकरोति तथा न चैनं क्लेदयन्त्यापोऽपां हि सावयवस्य वस्तुनः आर्द्रीभावकरणेन अवयवविश्लेषापादने सामर्थ्यं तन्न निरवयव आत्मनि सम्भवति तथा स्नेहवत् द्रव्यं स्नेहशोषणेन नाशयति वायुरेनं त्वात्मानं न शोषयति मारुतोऽपि ॥ २३ ॥

पृथिव्यादिभूतचतुष्टयप्रयुक्तं विक्रियाभाक्त्वादात्मनोऽसिद्धमविक्रियत्वमिति शङ्कते कस्मादिति। यतो न भूतान्यात्मानं गोचरयितुमर्हन्त्यतो युक्तमाकाशवत्तस्याविक्रियत्वमित्याह आहेत्यादिना ॥ २३ ॥

स्वा° टी°। कथं हन्तीत्यनेनोक्तं वधसाधनाभावं दर्शयन् विनाशित्वमात्मनः स्फुटीकरोति नैनमिति। आपो न क्लेदयन्ति मृदुकरणेन शिथिलं न कुर्वन्ति ॥ २३ ॥

**अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च।**
**नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः।**
**अव्यक्तोऽयमचिन्त्योऽयमविकार्य्योऽयमुच्यते ॥२४**

यत एवं तस्मात् अच्छेद्योऽयमिति, यस्मादन्योन्यनाशहेतूनि भूतानि एनं आत्मानं नाशयितुं नोत्सहन्ते तस्मात् नित्योऽनित्यत्वात् सर्वगतः सर्वगतत्वात् स्थाणुरित्येतत् स्थिरत्वादचलोऽयमात्माऽतः सनातनश्चिरन्तनो न

कारणात् कुतश्चिन्निष्पन्नोऽनित्यवदित्यर्थः, न तेषां श्लोकानां पौनरुक्त्यं चोदनीयं यतः एकेनैव श्लोकेनात्मनोऽनित्यत्वमविक्रियत्वं चोक्तं न जायते म्रियते वा इत्यादिना तत्र यदेवात्मविषयं किञ्चिदुच्यते तदेतस्मात् श्लोकार्थान्नातिरिच्यते, किञ्चिच्छब्दतः पुनरुक्तं किञ्चिदर्थत इति दुर्बोधत्वादात्मवस्तुनः पुनः पुनः प्रसङ्गमापाद्य शब्दान्तरेण तदेव वस्तु निरूपयति भगवान् वासुदेवः कथं नु नाम संसारिणां असंसारित्वं बुद्धि-

आ० टी० । पृथिव्यादिभूतप्रयुक्तच्छेदनाद्यर्थक्रियाभावे योग्यताभावं कारणमाह यत इति । पूर्वार्द्धमुत्तरार्द्धे हेतुत्वेन योजयति यस्मादिति । नित्यत्वादीनामन्योन्यं हेतुहेतुमद्भावं सूचयति नित्यत्वादित्यादिना । न च नित्यत्वं परमाणुषु व्यभिचारादसाधकं सर्वगतत्वस्येति वाच्यं तेषामेवाप्रामाणिकत्वेन व्यभिचारानवतारात् सर्वगतत्वेऽपि विक्रियाशक्तिमत्त्वमात्मनोऽस्तीति युक्तं विभुत्वेनाभिमते नभसि तदनुपलम्भाच्च विक्रियाशक्तिमत्त्वे स्थैर्यमास्थातुं शक्यं तथाविधस्य मृदादेरस्थिरदर्शनादित्याशयेनाह स्थिरत्वादिति । स्वतोऽनित्यत्वेऽपि कारणाद्धाश्रसम्भवादुत्पत्तिरपि सम्भवितेति कुतश्चिन्नित्यत्वमित्याशङ्क्याह न कारणादिति । आत्मनोऽविक्रियत्वस्य न जायते म्रियते वेत्यादिना साधितत्वात्तस्यैव पुनरभिधाने पुनरुक्तिरित्याशङ्क्याह न तेषामिति । अनाशङ्कनीयस्य चोद्यस्य प्रसङ्गं दर्शयति यत इति । अतो वेदाविनाशिनमित्यादौ न शक्यते पौनरुक्त्यमिति शेषः। कथं तत्र पौनरुक्त्याशङ्का सम्भवति तत्राह तत्रेति । वेदाविनाशिनमित्यादिश्लोकः सप्तम्या परामृश्यते, श्लोकशब्देन न जायते म्रियते वेत्यादिरुच्यते । नन्विह श्लोके जन्ममरणाद्यभावोऽभिलप्यते, वेदेत्यादौ पुनरपक्षयाद्यभावो विवक्ष्यते तत्र कथमर्थातिरेकाभावमादाय पौनरुक्त्यं चोद्यते तत्राह किञ्चिदिति । कथं तर्हि पौनरुक्त्यं न चोदनीयमिति मन्यसे तत्राह दुर्बोधत्वादिति ।

गोचरतामापन्नं सद्व्यक्तं तत्त्वं संसारनिवृत्तये स्या-
दिति। किञ्च अव्यक्तोऽयमिति। अव्यक्तः सर्वकरणाविष-
यत्वान्न व्यज्यते इति अव्यक्तोऽयमात्मा अतएवाचिन्त्यो-
ऽयं यद्धीन्द्रियगोचरं वस्तु तच्चिन्ताविषयत्वमापद्यते अयं
त्वात्मानिन्द्रियगोचरत्वादचिन्त्योऽतएवाविकार्य्यो यथा क्षीरं
दध्यातञ्चनादिना विकारि न तथा अयमात्मा निरवय-
वत्वाच्चाविक्रियो न हि निरवयवं किञ्चिद्विक्रियात्मकं
दृष्टमविक्रियत्वादविकार्य्योऽयमात्मोच्यते ॥ २४ ॥

---

पुनःपुनर्विधानभेदेन वस्तु निरूपयतो भगवतोऽभिप्रायमाह कथं त्विति।
त्वं पदार्थपरिशोधनस्य प्रकृतत्वात्तस्यैव हेत्वन्तरमाह किञ्चेति। आत्मनो
नित्यत्वादिलक्षणस्य तथैव प्रथा किमिति न भवति तत्राह अव्यक्त इति।
मा तर्हि प्रत्यक्षत्वं भूदनुमेयत्वं तस्य किं न स्यादित्याशङ्क्याह अत
एवेति। तदेव प्रपञ्चयति यद्धीति। अतीन्द्रियत्वेऽपि सामान्यतो
दृष्टविषयत्वं भविष्यतीत्याशङ्क्य कूटस्थेनात्मना व्याप्तिलिङ्गाभावान्मैव-
मित्याह अविकार्य्य इति। अविकार्य्यत्वे व्यतिरेकदृष्टान्तमाह यथेति।
किञ्चात्मा न विक्रियते निरवयवद्रव्यत्वात्। घटादिरिति व्यतिरेकानुमान-
माह निरवयवत्वाच्चेति। निरवयवत्वेऽपि विक्रियावत्त्वे का क्षति-
रित्याशङ्क्याह न हीति। सावयवस्यैव विक्रियावत्त्वदर्शनात् विक्रिया-
वत्त्वे निरवयवत्वानुपपत्तिरित्यर्थः। यद्धि सावयवं सक्रियं क्षीरादि
तद्दध्यादिना विकारमापद्यते न च आत्मनः श्रुतिप्रमितनिरवयवत्वस्य
सावयवत्वमतोऽविक्रियत्वान्नायं विकार्य्यो भवितुमलमिति फलितमाह
अविक्रियत्वादिति ॥ २४ ॥

व्या॰ टी॰। तत्र हेतुमाह अच्छेद्य इति सार्द्धेन। निरवयवत्वा-
दच्छेद्योऽक्लेद्यश्च अमूर्त्तत्वाददाह्यः द्रवत्वाभावादशोष्य इति, इतश्च
छेदादियोग्यो न भवति यतोनित्योऽविनाशी सर्वगतः स्थाणुः स्थिरस्व-

भावो रूपान्तरापत्तिशून्यः अचलः पूर्वरूपा परित्यागी, सनातनोऽनादिः अव्यक्तश्चक्षुराद्यविषयः, अचिन्त्यो मनसोऽप्यविषयः, अविकार्य्यः कर्म्मेन्द्रियाणामप्यगोचर इत्यर्थः। उपयुत इति नित्यत्वादभियुक्तोक्तिं प्रमाणयति ॥ २४ ॥

# तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥२५॥

तस्मादेवं यथोक्तप्रकारेणैनमात्मानं विदित्वा त्वं नानुशोचितुमर्हसि हन्ताहमेषां मयैते हन्यन्ते इति ॥ २५ ॥

आत्मयाथात्म्योपदेशमशोच्यानन्वशोचस्त्वमित्युपक्रम्य व्याख्यानमुपसंहरति तस्मादिति। अव्यक्तत्वाचिन्त्यत्वाविकार्य्यत्वनित्यत्वसर्वगतत्वादिरूपो यस्मादात्मा निर्द्धारितस्तस्मात्तथैव ज्ञातुमुचितस्तज्ज्ञानस्य फलवत्त्वादित्यर्थः। प्रतिषेध्यमनुशोकमेवाभिनयति हन्ताहमिति ॥ २५ ॥

स्वा० टी०। उपसंहरति तस्मादेवमिति। तदेवमात्मनो जन्मविनाशाभावात्र शोकः कार्य्य इत्युक्तम् ॥ २५ ॥

# अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम्।
# तथापि त्वं महाबाहो! नैवं शोचितुमर्हसि ॥२६॥

आत्मनोऽनित्यत्वमभ्युपगम्येदमुच्यते अथ चैनमिति। अथ चेत्यभ्युपगमार्थः एनं प्रकृतमात्मानं नित्य जातं लोकप्रसिद्धया प्रत्यनेकशरीरोत्पत्तिं जातोजात इति वा मन्यसे तथा प्रति तत्तद्विनाशं नित्यं वा मन्यसे मृतं मृतोऽमृत इति तथापि भाविन्यपि आत्मनि त्वं महाबाहो नैवं शोचितुमर्हसि जन्मवतो नाशो नाशवतो जन्म चेत्येताववश्यम्भाविनाविति ॥ २६ ॥

आत्मनो नित्यत्वस्य प्रागेव सिद्धत्वादुत्तरश्लोकानुपपत्तिरित्याशङ्क्याह आत्मन इति। अनित्यत्वमिति छेदः, शक्यानां लोकायतानां वा मतसिद्धमा पराम्रश्यते। श्रोतुरर्जुनस्य पूर्व्वोक्तमात्मयाथात्म्यं श्रुत्वापि

तर्कोमिद्वांरत्वाविद्धेदं योर्मतयोरन्यतरमताभ्युपगमः शङ्कितस्तदर्थो निपातद्वयप्रयोग इत्याह अथ चेति। प्रकृतस्यात्मनो नित्यत्वादिलक्षणस्य पुनःपुनर्जातत्वाभिमानो मानाभावादसम्भावीत्याह लोकेति। नित्यजातत्वाभिनिवेशे पौनःपुन्येन मृतत्वाभिनिवेशो व्याहतः स्यादित्याशङ्कयाह तथेति। परकीयमतमनुभाषितमभ्युपेत्याक्षेपवत् मङ्गलमापं कर्त्तुं व्यवसिता वयमित्यादेस्तदीयशोकस्य निरवकाशत्वमित्याह तथापीति। एवमर्जुनस्य दृश्यमानमनुशोकप्रकारं दर्शयित्वा तस्य कर्म्मयोग्यत्वे हेतुमाह जन्मवत इति। जन्मवतो नाशो नाशवतश्च जन्मेत्येतावश्यम्भाविनौ मिथो व्याप्ताविति योजना॥ २६॥

स्वा० टी०। इदानीं देहेन सहात्मनो जन्म तद्विनाशे च विनाशमङ्गीकृत्यापि शोको न कार्य्य इत्याह अथ चैनमिति। अथ यद्यप्येनमात्मानं नित्यं सर्वदा तत्तद्देहे जाते जातं मन्यसे तथा तत्तद्देहे मृते मृतञ्च मन्यसे पुण्यपापयोस्तत्फलभूतयोश्च जन्ममरणयोरात्मगामित्वात्तथापि त्वं शोचितुं नार्हसि॥ २६॥

**जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च।**
**तस्मादपरिहार्य्येऽर्थे न त्वं शोचितुमर्हसि॥२७॥**

तथा च सति जातस्येति। जातस्य हि लब्धजन्मनो ध्रुवोऽव्यभिचारी मृत्युर्मरणं ध्रुवं जन्ममृतस्य च तस्मादपरिहार्य्योऽयं जन्ममरणलक्षणोऽर्थस्तस्मिन्नपरिहार्य्येऽर्थे न त्वं शोचितुमर्हसि॥ २७॥

तयोरवश्यम्भावित्वे सत्यनुशोकस्याकर्त्तव्यत्वे हेत्वन्तरमाह तथा चेति॥ २७॥

स्वा० टी०। कुत इत्यत आह जातस्य हीति। हि यस्माज्जातस्य स्वारम्भककर्मक्षये मृत्युर्ध्रुवो निश्चितः मृतस्य च तद्देहकृतेन कर्मणा जन्मापि ध्रुवमेव तस्मादेवमपरिहार्य्येऽर्थेऽवश्यम्भाविनि जन्ममरणलक्षणे अर्थे त्वं विद्वान् शोचितुं योग्यो न भवसि॥ २७॥

**अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।**
**अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ २८ ॥**

कार्य्यकारणसंघातात्मकान्यपि भूतान्युद्दिश्य शोको न युक्तः कर्तुं यतः अव्यक्तादीनीति । अव्यक्तादीन्यव्यक्त मदर्शनमनुपलब्धिरादिर्येषां भूतानां पुत्रमित्रादिकार्य्यकारणसंघातात्मकानां तानि अव्यक्तादीनि भूतानि प्रागुत्पत्तेः उत्पन्नानि च प्राक् मरणात् व्यक्तमध्यान्यव्यक्तनिधनान्येव पुनरव्यक्तमदर्शनं निधनं मरणं येषां तानि अव्यक्तनिधनानि मरणादूर्द्धमव्यक्ततामेव प्रतिपद्यन्ते इत्यर्थः तथा चोक्तं अदर्शनादापतितः पुनश्चादर्शनं गतः । नासौ तव न तस्य त्वं वृथा का परिदेवनेति तत्र का परिदेवना को वा प्रलापः अदृष्टदृष्टप्रनष्टभ्रान्तिभूतेष्वित्यर्थः ॥ २८ ॥

आत्मानमुद्दिश्यानुशोकस्य कर्त्तुमयोग्यत्वेऽपि भूतसंघातात्मकानि भूतान्युद्दिश्य तस्य कर्त्तव्यत्वमाशङ्क्याह कार्य्येति । समनन्तरश्लोकस्तत्र हेतुरित्याह यत इति । चाक्षुषदर्शनमात्रं वृत्तिं व्यावर्त्तयन्ति अनुपलब्धिरिति । न हि यथोक्तसंघातरूपाणि भूतानि पूर्वमुत्पत्तेरुपलभ्यन्ते तेन तानि तथा व्यपदेशभाञ्जि भवन्तीत्यर्थः । किं तन्मध्यं यदेषां व्यक्तमिष्यते तदाह उत्पन्नानीति । उत्पत्तेरूर्द्धं मरणाच्च पूर्वं व्यवहारिकं सत्त्वं मध्यमेषां व्यक्तमिति तथोच्यते जन्मानुसारित्वं विलयस्य युक्तमिति मत्वा तात्पर्य्यार्थमाह मरणादिति । उक्तेऽर्थे पौराणिकसम्मतिमाह तथाचेति । तत्रेत्यस्यार्थमाह अदृष्टेति । पूर्वमदृष्टानि सन्ति पुनर्दृष्टानि तान्येव पुनर्नष्टानि तदेवं भ्रान्तिविषयतया घटिकायन्त्रवच्चक्रीभूतेषु भूतेषु शोकनिमित्तस्य प्रलापस्य नावकाशोऽस्तीत्यर्थः ॥२८॥

स्वा॰ टी॰ । किञ्च देहादीनां स्वभावं पर्य्यालोच्य तदुपाधिके आत्मनो जन्ममरणे शोको न कार्य्य इत्याह अव्यक्तादीनीति । अव्यक्तं प्रधानं

तदेवादि उत्पत्तेः पूर्वरूपं येषां तानि अव्यक्तादीनि भूतानि शरीराणि कारणात्मना स्थितानामेवोत्पत्तेः. तथा व्यक्तमभिव्यक्तं मध्यं जन्म-मरणान्तरालं स्थितिलक्षणं येषां तानि व्यक्तमध्यानि, अव्यक्ते निधनं लयो येषां तानीमान्येवम्भूतान्येव, तत्र तेषु का परिदेवना कः शोक-निमित्तो विलापः, प्रतिबुद्धस्य स्वप्नदृष्टवस्तुष्विव शोको न युज्यत इत्यर्थः ॥ २८ ॥

**आश्चर्यवत् पश्यति कश्चिदेन-**
**माश्चर्यवद्वदति तथैव चान्यः ।**
**आश्चर्यवच्चैनमन्यः शृणोति**
**श्रुत्वाप्येनं वेद न चैव कश्चित् ॥ २९ ॥**

दुर्विज्ञेयोऽयं प्रकृतात्मा किं त्वामेवैकं उपालभेत् साधारणी भ्रान्तिनिमित्ते, कथं दुर्विज्ञेयोऽयमात्मेत्यत आह आश्चर्यवदिति । आश्चर्यवदाश्चर्यं अदृष्टपूर्वमद्भुतमकस्माद्दृश्यमानं तेन तुल्यमाश्चर्यवदाश्चर्यमिवैनमात्मानं पश्यति कश्चिदाश्चर्यवदेनं वदति तथैव चान्यः आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वा दृष्ट्वोक्त्वाप्यात्मानं वेद न चैव कश्चिदथ वा योऽयं आत्मानं पश्यति स आश्चर्यतुल्यो यो वदति यश्च शृणोति सोऽनेकसहस्रेषु कश्चिदेव भवत्यतो दुर्बोध आत्मेत्यभिप्रायः ॥ २९ ॥

अर्जुनं प्रत्युपालम्भं दर्शयित्वा प्रकृतस्यात्मनो दुर्विज्ञेयत्वात्तं प्रत्युपालम्भो न सम्भवतीति मन्वानः सन्नाह दुर्विज्ञेय इति । तथा चाज्ञानानिमित्तविप्रलम्भस्य साधारणत्वादसाधारणोपालम्भस्य निरवकाशतेत्याह किं त्वामेवेति । अहम्प्रत्ययवद्यत्वादात्मनो दुर्विज्ञेयत्वमसिद्धमिति शङ्कते कथमिति । विशिष्टस्यात्मनोऽहं प्रत्ययस्य दृष्टत्वेऽपि केवलस्य

तदभावादस्ति दुर्विज्ञेयतेति श्लोकमवतारयति आश्चेति । आश्चर्यवदिति आद्येन पादेनात्मविषयदर्शनस्य दुर्लभत्वं दर्शयता द्रष्टुर्दौर्लभ्यमुच्यते, द्वितीयेन च तद्विषयवदनस्य दुर्लभत्वोक्त्या तदुपदेष्टुस्तथात्वं कथ्यते, तृतीयेन तदीयश्रवणस्य दुर्लभत्वद्वारा श्रोतुर्विरलता विवक्षिता, श्रवणदर्शनोक्तीनां भावेऽपि तद्विषयसाक्षात्कारस्यात्यन्तायासलभ्यत्वं चतुर्थेनाभिमतमिति विभागः । आत्मगोचरदर्शनादिदुर्लभत्वद्वारा दुर्बोधत्वमात्मनः साधयति आश्चर्यवदिति । संप्रत्यात्मनि द्रष्टुर्वक्तुः श्रोतुः साक्षात्कर्तुश्च दुर्लभत्वाभिधानेन तदीयं दुर्बोधत्वं कथयति अथवेति । व्याख्यानद्वयेऽपि फलितमाह अत इति ॥ २९ ॥

स्वा॰ टी॰ । कुतस्तर्हि विद्वांसोऽपि लोके शोचन्ति आत्मा ज्ञानादेवेत्याशयेनात्मनो दुर्ज्ञेयतामाह आश्चर्यवदिति । कश्चिदेनमात्मानं शास्त्राचार्योपदेशाभ्यां पश्यन्नाश्चर्यवत् पश्यति सर्वगतस्य नित्यज्ञानानन्दस्वभावस्यात्मनोऽलौकिकत्वादैन्द्रजालिकवद्घटमानं पश्यन्निव विस्मयेन पश्यति असम्भावनाभिभूतत्वात्, तथाश्चर्यवदेवान्यो वदति, शृणोति चान्यः, कश्चित् पुनर्विपरीतभावनाभिभूतः श्रुत्वापि न वेद, चशब्दादुक्त्वापि दृष्ट्वापि न सम्यग्वेदेति द्रष्टव्यम् ॥ २९ ॥

**देही नित्यमवध्योऽयं देहे सर्वस्य भारत ।**
**तस्मात् सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥ ३० ॥**

अथेदानीं प्रकरणार्थमुपसंहरन् ब्रूते देहीति । यस्माद्देही शरीरी नित्यं सर्वावस्थास्ववध्यो निरवयवत्वान्नित्यत्वाच्च तत्रावध्योऽयं देहे शरीरे सर्वस्य सर्वगतत्वात् स्थावरादिषु स्थितोऽपि सर्वस्य प्राणिजातस्य देहे वध्यमानेऽपि अयं देही न वध्यो यस्मात्तस्माद्भीष्मादीनि सर्वाणि भूतान्युद्दिश्य न त्वं शोचितुमर्हसि ॥ ३० ॥

श्लोकान्तरमुत्थापयति अथेति । आत्मनोदुर्ज्ञानत्वमदर्शमानन्तर-

मिति यावत्, वस्तुवृत्तापेक्षया शोकमोहयोरकर्त्तव्यत्वं प्रकरणार्थः । देहे बध्यमानेऽपि देहिनो बध्यत्वाभावे फलितमाह यस्मादिति । हेतुभागं विभजते सर्वस्येति । फलितप्रदर्शनपरं श्लोकार्द्धं व्याचष्टे तस्माद्भीष्मादीनीति ॥ ३० ॥

स्वा॰ टी॰ । तदेव मवध्यत्वमात्मनः संक्षेपेणोपदिशन्शोच्यत्वमुपसंहरति देहीति । स्पष्टार्थः ॥ ३० ॥

**स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।**
**धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते ॥३१**

इह परमार्थतत्त्वापेक्षायां शोको वा मोहो वा न सम्भवतीत्युक्तं. न केवलं परमार्थतत्त्वापेक्षायामेव किन्तु स्वधर्ममिति । स्वधर्ममपि स्वो धर्मः क्षत्रियस्य धर्मः युद्धं. तमप्यवेक्ष्य त्वं न विकम्पितुं प्रचलितुं अर्हसि क्षत्रियस्य स्वाभाविकाद्धर्मात्स्वाभाव्यादित्यभिप्रायः, तच्च युद्धं पृथिवीजयद्वारेण धर्मार्थं प्रजारक्षणार्थञ्चेति धर्मादनपेतं परं धर्म्यं, तस्मात् धर्मात् युद्धात् श्रेयोऽन्यः क्षत्रियस्य न विद्यते हि यस्मात् । ३१ ॥

श्लोकान्तरमवतारयन् वृत्तं कीर्त्तयति इहेति । पूर्वश्लोकः सप्तम्यर्थः, यत्पारमार्थिकं तत्त्वं तदपेक्षायामेव केवलं शोकमोहयोरसम्भवो न भवति किन्तु स्वधर्ममपि चावेक्ष्येति सम्बन्धः, स्वकीयं क्षात्त्रधर्ममनुसन्धाय ततश्चलनं परिहर्त्तव्यमित्यर्थः । यद्वि क्षत्त्रियस्य धर्म्मादनपेतं श्रेयःसाधनं तदेव मयानुवर्त्तितव्यमित्याशङ्क्याह धर्म्यादिति । जातिप्रयुक्तं स्वाभाविकं स्वधर्ममेव विशिनष्टि क्षत्त्रियस्येति । पुनर्नकारोपादानमन्वयार्थं, प्रचलितुमयोग्यत्वे प्रतियोगिनं दर्शयति स्वाभाविकादिति । स्वाभाविकत्वमशास्त्रीयत्वमिति शङ्कां वारयितुं तात्पर्यमाह आत्मेति । आत्मनः स्वस्यार्जुनस्य स्वाभाव्यं क्षत्त्रियस्वभावप्रयुक्तं वर्णाश्रमोचितं कर्म तस्मा-

दित्यर्थः । धर्म्मार्थं प्रजापरिपालनार्थञ्च प्रयतमानस्य युद्धादुपरिरंसा अज्ञातव्येत्याशङ्क्याह तच्चेति । ततोऽपि श्रेयस्करं किञ्चिदनुष्ठातुं युद्धादुपरतिरुचितेत्याशङ्क्याह तस्मादिति । तस्माद् युद्धात् प्रचलनमनुचितमिति शेषः ॥ ३१ ॥

स्वा॰ टी॰ । यच्चोक्तमर्जुनेन वेपथुश्च शरीरे मे इत्यादि तदयुक्तमित्याह स्वधर्ममपीति । आत्मनो नाशाभावादेवैतेषां हननेऽपि विकम्पितुं नार्हसि, किञ्च स्वधर्ममप्यवेक्ष्य विकम्पितुं नार्हसीति सम्बन्धः । यच्चोक्तं न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहव इति तत्राह धर्म्याद्धीति । धर्मादनपेतान्न्याय्याद्युद्धादन्यत् ॥ ३१ ॥

**यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।**
**सुखिनः क्षत्रियाः पार्थ! लभन्ते युद्धमीदृशम् ॥३२॥**

कुतश्च तद्युद्धं कर्त्तव्यं इत्युच्यते यदृच्छयेति । यदृच्छया चाप्रार्थितमागतमुपपन्नं स्वर्गद्वारमपावृतमुद्घाटितं ये एतदीदृशं युद्धं लभन्ते क्षत्रियाः हे पार्थ । किन्न सुखिनस्ते ॥ ३२ ॥

युद्धस्य गुर्व्वाद्यनेकप्राणिहिंसात्मकस्याहिंसाशास्त्रविरोधान्नास्ति कर्त्तव्यतेति शङ्क्यते कुतश्चेति । अग्नीषोमीयहिंसाद् युद्धमपि क्षत्रियस्य विहितत्वादनुष्ठेयं सामान्यशास्त्रतो विशेषशास्त्रस्य बलीयस्त्वादित्याह उच्यत इति । तथापि युद्धे प्रवृत्तानामैहिकामुष्मिकस्यापि सुखाभावादुपरतिरेव ततो युक्ता प्रतिभातीत्याशङ्क्याह यदृच्छयेति । चिरेण चिरतरेण कालेन च यागाद्यनुष्ठायिनः स्वर्गादिभाजो भवन्ति युध्यमानास्तु क्षत्रिया बहिर्मुखताविहीनाः सहसैव स्वर्गादिसुखभोक्तारस्तेन तव कर्त्तव्यमेव युद्धमिति व्याख्यानेन स्फुटयति यदृच्छयेत्यादिना । इत्थाभूतञ्च भाविसुखवतामेव क्षत्रियाणां स्वधर्मभूतयुद्धसिद्धेस्तादर्थ्येनोत्थानं शोकमोहौ हित्वा कर्त्तव्यमित्यर्थः ॥ ३२ ॥

स्वा॰ टी॰ । किञ्च महति श्रेयसि स्वयमेवोपस्थिते सति कुतो

विकम्पसे इत्याह यदृच्छयेति। यदृच्छया अप्रार्थितमेवोपपन्नं प्राप्तमीदृशं युद्धं सुखिनः सुभाग्या एव लभन्ते यतोऽनिवारणं स्वर्गद्वारमेवैतत्, यद्वा य एवंविधं युद्धं लभन्ते त एव सुखिन इत्यर्थः, एतेन स्वजनं हि कथं हत्वा सुखिनः स्याम माधवेति यदुक्तं तन्निरस्तं भवति॥ ३२॥

## अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि।
## ततः स्वधर्मं कीर्त्तिञ्च हित्वा पापमवाप्स्यसि॥३३

एवं कर्त्तव्यताप्राप्तमपि अथेति। अथ त्वमिमं धर्म्यं धर्मादनपेतं विहितं संग्रामं युद्धं न करिष्यसि चेत् ततस्तदकरणात् स्वधर्मं कीर्त्तिञ्च महादेवादिसमागमनिमित्तां हित्वा केवलं पापमवाप्स्यसि॥ ३३॥

स्वधर्मस्य युद्धस्य श्रद्धया करणे स्वर्गादिमहाफलप्राप्तिं प्रदर्श्य तदकरणे प्रत्यवायप्राप्तिं प्रदर्शयन्नुत्तरश्लोकगताथशब्दार्थं कथयति एवमिति। विहितत्वं फलवत्त्वमित्यनेन प्रकारेणेत्यर्थः, अन्वयार्थं पुनश्चेदित्यनूद्यते, महादेवादीत्यादिशब्देन महेन्द्रादयो गृह्यन्ते॥ ३३॥

स्वा० टी०। विपक्षे दोषमाह अथ चेदिति॥ ३३॥

## अकीर्त्तिञ्चापि भूतानि कथयिष्यन्ति तेऽव्ययाम्।
## सम्भावितस्य चाकीर्त्तिर्मरणादतिरिच्यते॥३४॥

न केवलं स्वधर्मकीर्त्तिपरित्यागः अकीर्त्तिमिति। अकीर्त्तिञ्चापि युद्धे भूतानि कथयिष्यन्ति ते तवाव्ययां दीर्घकालां धर्मात्मा शूर इत्येवमादिभिर्गुणैः सम्भावितस्य चाकीर्त्तिर्मरणादतिरिच्यते सम्भावितस्य चाकीर्त्तेर्वरं मरणमित्यर्थः॥ ३४॥

युद्धाकरणे क्षत्रियस्य प्रत्यवायमात्रमुक्त्वा भाषाद्य [illegible]

दीर्घकालभाविनमैहिकमपि प्रत्यवायं प्रतिलप्स्यति न केवलमिति । युद्धे स्वमरणसन्देहात्तत्परिहारार्थमकीर्त्तिरपि सोढ़व्या स्वात्मसंरक्षणस्य श्रेयस्करत्वादित्याशङ्क्याह धर्म्यात्मेति । मान्यानामकीर्त्तिर्भवति मरणादपि दुःसहेति तात्पर्य्यार्थमाह सम्भावितस्येति ॥ २४ ॥

स्वा॰ टी॰ । किञ्च अकीर्त्तिमिति । अव्ययां शाश्वतीं, सम्भावितस्य बहुमतस्य, अतिरिच्यतेऽधिका भवति ॥ २४ ॥

**भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ।**
**येषाञ्च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥३५॥**

किञ्च भयादिति । भयात् कर्णादिभ्यो रणात् युद्धादुपरतं निवृत्तं मंस्यन्ते चिन्तयिष्यन्ति न कृपयेति त्वां महारथा दुर्य्योधनप्रभृतयः के मंस्यन्ते इत्याह येषाञ्च त्वं दुर्य्योधनादीनां बहुमतो बहुभिर्गुणैर्युक्त इत्येवं बहुमतो भूत्वा पुनस्त्वं यास्यसि लाघवं लघुभावम् ॥ ३५ ॥

इतश्च त्वया युद्धं कर्त्तव्यमित्याह किञ्चेति । प्राणिषु कृपया नाहं युद्धं करिष्यामीत्याशङ्क्याह भयादिति । महारथानेव विशिनष्टि येषाञ्चेति । दुर्य्योधनादिभिस्तवोपहास्यतानिरसनार्थं संग्रामे प्रवृत्तिरवश्यम्भाविनीत्यर्थः ॥ ३५ ॥

स्वा॰ टी॰ । किञ्च भयादिति । येषां बहुगुणत्वेन त्वं पूर्वं सम्मतोऽभूस्त एव भयात् संग्रामान्निवृत्तं त्वां मन्येरन्, ततश्च पूर्वं बहुमतो भूत्वा लाघवं लघुतां यास्यसि ॥ ३५ ॥

**अवाच्यवादांश्च बहून् वदिष्यन्ति तवाहिताः ।**
**निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥३६**

किञ्च अवाच्यवादानिति । अवाच्यवादान् अवक्तव्यवादान् च बहूननेकप्रकारान् वदिष्यन्ति तवाहिताः शत्रवः निन्दन्तः

कुत्सयन्तस्तव त्वदीयं सामर्थ्यं निभृतकवचादि युद्धनिमित्तं तस्मात्ततो निन्दा प्राप्ते दुःखात् नु किं ततः कष्टतरदुःखं नास्तीत्यर्थः ॥ ३६ ॥

इतश्च त्वं युद्धादुपरमं माकार्षीरित्याह किञ्चेति। ननु भीष्मद्रोणादिवधप्रयुक्तं कष्टतरं दुःखमसहमानो युद्धान्निवृत्तः स्वसामर्थ्यनिन्दादिप्रयुक्तं सोढुं शक्ष्यामीत्याशङ्क्याह तत इति॥ ३६ ॥

स्वा॰ टी॰। किञ्चावाच्यवादानिति। अवाच्यान् वादान् वचनानर्हान् शब्दांस्तवाहितास्त्वच्छत्रवो वदिष्यन्ति ॥ ३६ ॥

**हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्**
**तस्मादुत्तिष्ठ कौन्तेय! युद्धाय कृतनिश्चयः ॥३७॥**

युद्धे पुनः क्रियमाणे कर्णादिभिः किं हतो वेति। हतो वा प्राप्स्यसि स्वर्गं हतः सन् स्वर्गं प्राप्स्यसि जित्वा कर्णादीन् शूरान् भोक्ष्यसे महीं उभयथापि तव लाभ एवेत्यभिप्रायः यत एवं तस्मादुत्तिष्ठ कौन्तेय! युद्धाय कृतनिश्चयः जेष्यामि शत्रून् मरिष्यामि वेति निश्चयं कृत्वेत्यर्थः ॥ ३७ ॥

तर्हि युद्धे गुर्वादिवधवशान्मध्यस्थनिन्दा ततो निवृत्तौ शत्रुनिन्देत्युभयतः पाशरज्जुरित्याशङ्क्याह युद्धे पुनरिति। जये पराजये च लाभध्रौव्यात् युद्धार्थोद्योगनमावश्यकमित्याह तस्मादिति। न हि परिशुद्धकुलस्य क्षत्रियस्य युद्धायोद्युक्तस्य तस्मादुपरमः साधीयानित्याह कौन्तेयेति जये पराजये चेत्येतदुभयथेत्युच्यते जयादिनियमाभावेऽपि लाभनियमे फलितमाह यत इति। कृतनिश्चयत्वमेव विशदयति जेष्यामीति ॥ ३७ ॥

स्वा॰ टी॰। यच्चोक्तं न चैतद्विद्म इति तत्राह हतो वेति पक्षद्वयेऽपि तव लाभ एवेत्यर्थः ॥ ३७ ॥

**सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।**
**ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥३८॥**

तत्र युद्धं स्वधर्म इत्येवं युध्यमानस्य उपदेशमिमं शृणु सुखदुःखे इति । सुखदुःखे समे तुल्ये कृत्वा रागद्वेषावप्य-कृत्वेत्येतत् तथा च लाभालाभौ जयाजयौ च समौ कृत्वा ततो युद्धाय युज्यस्व घटस्व नैवं युद्धं कुर्वन् पापमवाप्-स्यसि इत्येष उपदेशः प्रासङ्गिकः ॥ ३८ ॥

पापभीरुतया युद्धाय निश्चयं कृत्वा योद्धुं शक्नोमीत्याशङ्क्याह तत इति । युद्धस्य स्वधर्मतया कर्तव्यत्वे सतीति यावत् । सुहृज्जीवन-मरणादिनिमित्तयोः सुखदुःखयोः समताकरणं कथमिति तत्राह रागद्वेषाविति । लाभः शत्रुकोषादिप्राप्तिः अलाभस्तद्विपर्ययः न्यायेन युद्धेनापरिभूतेन परस्य परिभवो जयस्तद्विपर्ययस्त्वजयः तयोः लाभा-लाभयोर्जयाजययोश्च समताकरणं समानमेव, रागद्वेषावकृत्वेत्यत्र तद्दर्शयितुं तयोस्तूक्तं, यथोक्तोपदेशवशात् परमार्थदर्शनप्रकरणे युद्धकर्तव्यतोक्तेः सत्त्वशुद्धिपरत्वं शास्त्रस्य प्राप्तमित्याशङ्क्याह एव इति । क्षत्रियस्य तव धर्मभूतयुद्धकर्तव्यतानुवादप्रसङ्गागतत्वादस्योपदेशस्य मानेन विषेव सत्त्व-शुद्धः सिध्यतीत्यर्थः ॥ ३८ ॥

श्री० टी० । यद्युक्तं पापमेवाश्रयेदस्मानिति तत्राह सुख-दुःखे इति । सुखदुःखे समे कृत्वा तथा तयोश्च कारणभूतौ लाभा-लाभावपि तयोरपि कारणभूतौ जयाजयावपि समौ कृत्वा एतेषां समत्वे कारणं हर्षविषादराहित्यं, युध्यस्व सन्नद्धो भव सुखदुःखाद्यभि-लाषं हित्वा स्वधर्मबुद्ध्या युध्यमानः पापं न प्राप्स्यसीत्यर्थः ॥ ३८ ॥

**एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु ।**
**बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥३९॥**

शोकमोहापनयनाय लौकिको न्यायः स्वधर्ममपि चा-

वेच्येत्याद्यैः श्लोकैरुक्तो न तु तात्पर्य्येण, परमार्थदर्शनं त्विह प्रकृतं तच्चोक्तमुपसंह्रियते एषा तेऽभिहितेति। शास्त्रविषयविभागप्रदर्शनाय इह हि दर्शिते पुनः शास्त्रविषयविभागे उपरिष्टात् ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनामिति निष्ठाद्वयविषयं शास्त्रं सुखं प्रवर्त्तिष्यति श्रोतारश्च विषयविभागेन सुखं ग्रहिष्यन्तीत्यत आह एषा ते इति। एषा ते तुभ्यमभिहितोक्ता सांख्ये परमार्थवस्तुविवेकविषये बुद्धिः ज्ञानं साक्षात् शोकमोहादिसंसारहेतुदोषनिवृत्तिकारणं, योगे तु तत्प्राप्त्युपाये निःसङ्गतया द्वन्द्वप्रहरणपूर्वकमीश्वराराधनार्थे कर्मयोगे कर्मानुष्ठाने

---

आ॰ टी॰। ननु स्वधर्ममपि चावेक्ष्येत्यादिश्लोकैर्न्यायावष्टम्भेन शोकमोहापनयनस्य तात्पर्य्येणोक्तत्वात्तस्मिन्नुपसंहर्त्तव्ये किमिति परमार्थदर्शनमुपसंह्रियते तत्राह शोकेति। स्वधर्ममपीत्यादिभिरतीतश्लोकैः शोकमोहयोः स्वजनमरणगुर्वादिवधशङ्कानिमित्तयोः सम्यग्ज्ञानप्रतिबन्धकयोरपनयार्थं वर्णाश्रमकृतं धर्ममनुतिष्ठतः स्वर्गादि सिध्यति नान्यथेत्यन्वयव्यतिरेकात्मको लोकप्रसिद्धो न्यायो यद्यपि दर्शितस्तथापि नासौ तात्पर्य्येणोक्त इत्यर्थः। किं तर्हि तात्पर्य्येणोक्तं तदाह परमार्थेति। न त्वेवाहं जातु नासमित्यादि सप्तम्या परामृश्यते, उक्तं न जायते म्रियते वा कदाचिदित्यादिनोपपादितमित्यर्थः। उपसंहारप्रयोजनमाह शास्त्रेति। तस्य वस्तुद्वारा विषयो निष्ठाद्वयं तस्य विभक्तस्य तेनैव विभागेन प्रदर्शनार्थं परमार्थदर्शनोपसंहार इत्यर्थः। ननु किमित्यत्र शास्त्रस्य विषयविभागः प्रदर्श्यते उत्तरत्रैव तद्विभागप्रदर्शनप्रतिपत्तेः सम्भवादिति तत्राह इहेति। [illegible] विभाग-[illegible]वचनमित्यर्थः। उपसंहारस्य फलवत्त्वमेवमुक्त्वा तमेवोपसंहारमव-

प्रसादे सति सर्वदुःखनाशस्ततश्च प्रसन्नचेतसो बुद्धिः प्रतिष्ठिता भवतीत्यर्थः ॥ ६५ ॥

**नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।**
**न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥ ६६ ॥**

सेयं प्रसन्नता स्तूयते नास्तीति । नास्ति न विद्यते न भवतीत्यर्थः बुद्धिरात्मस्वरूपविषया अयुक्तस्यासमाहितान्तःकरणस्य न चायुक्तस्येति न चास्य अयुक्तस्य भावना आत्मज्ञानाभिनिवेशः तथा च नास्य भावयतः आत्मज्ञानाभिनिवेशमकुर्वतः शान्तिरुपशमो न विद्यते अशान्तस्य कुतः सुखं इन्द्रियाणां हि विषयसेवा तृष्णातो निवृत्तिर्या तत् सुखं, न विषयविषया तृष्णा, दुःखमेव हि सा, न तृष्णायां सत्यां सुखस्य गन्धमात्रमपि उत्पद्यत इत्यर्थः ॥ ६६ ॥

किं पुनः सत्त्वशुद्ध्यैव यथोक्तबुद्धिः सिध्यति नेत्याह सेयमिति । असमाहितस्यापि बुद्धिमात्रमुत्पद्यमानं प्रतिभातीत्याशङ्क्य विशिनष्टि आत्मस्वरूपेति । न हि विक्षिप्तचित्तस्यात्मस्वरूपविषया बुद्धिरुदेतुमर्हतीत्यत्र हेतुमाह न चेति । आत्मज्ञाने शब्दादापाततो जाते सति सन्तानानुकरणं साक्षात्कारार्थमभिनिवेशो भावनेति चोच्यते । न चासौ विक्षिप्तबुद्धेः सिध्यतीति हेत्वर्थं विवक्षित्वाह आत्मज्ञानेति । भावनाद्वारा साक्षात्काराभावेऽपि का क्षतिरित्याशङ्क्याह तथेति । असमाहितस्य भावनाभावादिति यावत् । आत्मन्यापाततो ज्ञाते श्रवणाद्यावृत्तिरूपां सन्ततिमनातन्वानस्यापरोक्षबुद्ध्यभावेनानर्थनिवृत्तिः सिद्ध्यतीत्याह उपशम इति । अनिवृत्तानर्थस्य परमानन्दसागराद्विभक्तस्य संसारवारिधौ निमग्नस्य सुखाविर्भावो न सम्भवतीत्याह अशान्तस्येति । तस्यापि विषयसेविनो वैषयिकं सुखं सम्भवतीत्याशङ्क्याह इन्द्रियाणां हीति । तृष्णाक्षयस्य आत्मप्रविश्रमानुभविकस्य सुखत्वमिति वक्तुं हिशब्दः । विषयसेवा-

तृष्णयापि विषयोपभोगद्वारा सुखमुपलब्धमित्याशङ्क्याह दुःखमेवेति । तत्रापि हिशब्दोऽनुभवद्योती । तदेव स्पष्टयति नेत्यादिना ॥ ६६ ॥

स्वा॰ टी॰ । इन्द्रियनिग्रहस्य स्थितप्रज्ञतासाधनत्वं व्यतिरेकमुखेनोपपादयति नास्तीति । अयुक्तस्यावशीकृतेन्द्रियस्य नास्ति बुद्धिः शास्त्राचार्य्योपदेशाभ्यामात्मविषया बुद्धिः प्रथमेव नोत्पद्यते कुतस्तस्याः प्रतिष्ठावार्त्ता इत्यत आह नचेति । न चायुक्तस्य भावना ध्यानं, भावनया हि बुद्धेरात्मनि प्रतिष्ठा भवति सा चायुक्तस्य यतो नास्ति । न चाभावयत आत्मा ध्यानमकुर्वतः शान्तिरात्मनि चित्तोपरमः,अशान्तस्य कुतः सुखं मोक्षानन्दः इत्यर्थः ॥ ६६ ॥

## इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते । तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥६७॥

अयुक्तस्य कस्माद्बुद्धिर्नास्तीत्युच्यते इन्द्रियाणामिति । इन्द्रियाणां हि यस्मात् चरतां स्वविषयेषु प्रवर्त्तमानानां यन्मनोऽनुविधीयते अनुप्रवर्त्तते तदिन्द्रियविषयविकल्पनेन प्रवृत्तं मनोऽस्य यतेर्हरति प्रज्ञामात्मानात्मविवेकजां नाशयति, कथं, वायुर्नावमिवाम्भस्युदके जिगमिषतां मार्गादुद्धृत्योन्मार्गे यथा वायुर्नावं प्रवर्त्तयत्येवमात्मविषयां प्रज्ञां हृत्वा मनोविषयां कल्पनां करोति ॥ ६७ ॥

आकाङ्क्षाद्वारा श्लोकान्तरमुत्थापयति अयुक्तस्येति । विक्षिप्तचेतसो भावनाभावे साक्षात्कारलक्षणा बुद्धिर्न भवतीति हेत्वन्तरेण साधयति इन्द्रियाणामिति । यत्पदोपात्तं मनस्तत्पदेनापि गृह्यते, इन्द्रियाणां श्रोत्रादीनां विषयाः शब्दादयस्तेषां विकल्पनं मिथो विभज्य ग्रहणं तेनेति यावत् । दृष्टान्तं व्याकरोति उदक इति । यस्मात्तस्मादयुक्तस्य नोत्पद्यते बुद्धिरिति योजना ॥ ६७ ॥

स्वा॰ टी॰ । नास्ति बुद्धिरयुक्तस्येत्यत्र हेतुमाह इन्द्रियाणामिति ।

इन्द्रियाणामवशीकृतानां स्वैरं विषयेषु चरतां मध्ये यदेवैकमिन्द्रियं मनोऽनुविधीयते अवशीकृतं यदिन्द्रियेण सह गच्छति तदेवैकमिन्द्रियमस्य मनसः पुरुषस्य वा प्रज्ञां हरति विषयविक्षिप्तां करोति किमु वक्तव्यं बहूनि प्रज्ञां हरन्तीति, यथा प्रमत्तस्य कर्णधारस्य नावं वायुः समुद्रे सर्वतः परिभ्रामयति तद्वदिति ॥ ६७ ॥

**तस्माद् यस्य महाबाहो! निगृहीतानि सर्वशः।**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता॥६८॥**

यततो हीत्युपन्यस्तस्यार्थस्यानेकधोपपत्तिमुक्त्वा तच्चार्थमुपपाद्योपसंहरति तस्मादिति। इन्द्रियाणां प्रवृत्तौ दोष उपपादितो यस्मात् तस्मात् यस्य यतेः हे महाबाहो! निगृहीतानि सर्वशः सर्वप्रकारैर्मानसादिभेदैरिन्द्रियाणीन्द्रियार्थेभ्यः शब्दादिभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ६८ ॥

यततो हीत्यादिश्लोकाभ्यामुक्तस्यैवार्थस्य प्रकृतश्लोकाभ्यामपि कथ्यमानत्वादस्ति पुनरुक्तिरित्याशङ्क्य परिहरति यततो हीत्यादिना। ध्यायतो विषयानित्यादीनामुपपत्तिवचनमुक्तं यम्। तच्छब्दापेक्षितार्थोक्तिद्वारा श्लोकमवतारयति इन्द्रियाणामिति। असमाहितेन मनसा यस्मादनुविधीयमानानीन्द्रियाणि प्रसह्य प्रज्ञामपहरन्ति तस्मादिति योजना ॥ ६८ ॥

व्या॰ टी॰। इन्द्रियसंयमस्य स्थितप्रज्ञत्वे साधनत्वं लक्षणत्वञ्चोक्तमुपसंहरति तस्मादिति। साधनत्वोपसंहारे तस्य प्रज्ञा प्रतिष्ठिता भवतीत्यर्थः, लक्षणत्वोपसंहारे तस्य प्रज्ञा प्रतिष्ठिता ज्ञातव्येत्यर्थः। महाबाहो इति सम्बोधयन् वैरिनिग्रहे समर्थस्य तवात्रापि सामर्थ्यं भवेदिति सूचयति ॥ ६८ ॥

**या निशा सर्वभूतानां तस्यां जागर्त्ति संयमी।**
**यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः॥६९**

योऽयं लौकिको वैदिकश्च व्यवहारः समुत्पन्नविवेकज्ञानस्य स्थित प्रज्ञस्याविद्याकार्य्यत्वादविद्यानिवृत्तौ निवर्त्ततेऽविद्यायाश्च विद्याविरोधान्निवृत्तिरित्येतमर्थं स्फुटीकुर्वन्नाह या निशेति। या निशा रात्रिः सर्वपदार्थानामविवेककरी तमःस्वभावत्वात निशा सर्वेषां भूतानां सर्वभूतानां, किं तत्परमार्थतत्त्वं स्थितप्रज्ञस्य विषया यथा नक्तञ्चराणामहरेव सदन्येषां निशा भवति तद्वन्नक्तञ्चरस्थानीयानां अज्ञानिना सर्वभूतानां निशेव निशा परमार्थतत्त्वागोचरत्वादतद्बुद्धीनां, तस्यां परमार्थतत्त्वलक्षणायां अज्ञाननिद्रायां प्रबुद्धो जागर्त्ति संयमी संयमवान् जितेन्द्रियो योगीत्यर्थः, यस्यां ग्राह्यग्राहकभेदलक्षणायामविद्यानिद्रायां प्रसुप्तान्येव भूतानि जाग्रतीत्युच्यते यस्यां निशायां प्रसुप्ता इव स्वप्नदृशः सा निशा अवि-

व्या० टी०। आत्मविदः स्थितप्रज्ञस्य सर्वकर्मपरित्यागेऽधिकारस्तद्विपरीतस्याज्ञस्य कर्मणीत्येतस्मिन्नर्थे समनन्तरश्लोकमवतारयति योऽयमिति। अविद्यानिवृत्तौ सर्वकर्मनिवृत्तिश्चेत्तन्निवृत्तिरेव कथमित्याशङ्क्याह अविद्यायाश्चेति। स्फुटीकुर्वन् बाह्याभ्यन्तरकरणानां पराक् प्रत्यक् प्रवृत्तिस्तथाविधे दर्शने च मिथो विरुध्यते परागदर्शनस्यानाद्यात्मावरणाविद्याकार्य्यत्वादात्मदर्शनस्य च तन्निवर्त्तकत्वात्ततश्चात्मदर्शनार्थमिन्द्रियाण्यर्थेभ्यो निगृह्णीयादित्याहेति योजना। सर्वप्राणिनां निशा पदार्थाविवेककरीत्यत्र हेतुमाह तमःस्वभावत्वादिति। सर्वप्राणिसाधारणीं प्रसिद्धां निशां दर्शयित्वा तामेव प्रकृतानुगुणत्वेन प्रश्नपूर्वकं विशदयति किं तदित्यादिना। स्थितप्रज्ञविषयस्य परमार्थतत्त्वस्य प्रकाशैकस्वभावस्य कथमज्ञानं प्रति निशात्वमित्याशङ्क्याह यथेति। तत्र हेतुमाह अगोचरत्वादिति। अतद्बुद्धीनां परमार्थतत्त्वातिरिक्ते द्वैतप्रपञ्चे प्रवृत्तबुद्धीनामप्रतिपन्नत्वात् परमार्थतत्त्वं निशेवाविदुषामित्यर्थः। तस्यामित्यादि व्याचष्टे

द्यारूपत्वात् परमार्थतत्त्वं पश्यतो मुनेरतः कर्माण्यविद्या-
वस्थायामेव चोद्यन्ते न विद्यावस्थायां विद्यायां हि सत्यामु-
दिते सवितरि शार्वरमिव तमःप्रणाशमुपगच्छत्यविद्या प्राग्वि-
द्योत्पत्तेरविद्या प्रमाणबुद्ध्या गृह्यमाणा क्रियाकारकफलभे-
दरूपा सती सर्वकर्महेतुत्वं प्रतिपद्यते नाप्रमाणबुद्ध्या गृह्य-
माणायाः कर्महेतुत्वोपपत्तिः प्रमाणभूतेन वेदेन मम चोदितं
कर्त्तव्यं कर्मेति हि कर्मणि कर्त्ता प्रवर्त्तते नाविद्यामात्र-

---

तस्यामिति । निशावदुक्तायामवस्थायामिति यावत्, योगीति ज्ञानी कथ्यते । द्वितीयार्द्धं विभजते यस्यामिति । प्रसुप्तानां जागरणं विरुद्धमित्याशङ्क्याह प्रसुप्ता इवेति । परमार्थतत्त्वमनुभवतो निवृत्ताविद्यस्य संन्यासिनो द्वैतावस्था निशेत्यत्र हेतुमाह अविद्यारूपत्वादिति । परमार्थावस्था निशेत्यविदुषां विदुषान्तु द्वैतावस्था तथेति स्थिते फलितमाह अत इति । अविद्यावस्थायामेव क्रियाकारकफलभेदप्रतिभानादित्यर्थः । विद्योदयेऽपि तत्प्रतिभानाविशेषात् पूर्वमिव कर्माणि विधीयेरन्नित्याशङ्क्याह विद्यायामिति । अविद्यानिवृत्तौ बाधितानुवृत्त्या विभागभानेऽपि नास्ति कर्मविधिर्विभागाभिनिवेशाभावादित्यर्थः । अविद्यावस्थायामेव कर्मणीत्युक्तं व्यक्तीकरोति प्रागिति । विद्योदयात् पूर्वं बाधकाभावादबाधिता विद्या क्रियादिभेदमापाद्य प्रमाणरूपया बुद्ध्या ग्राह्यतां प्राप्य कर्महेतुर्भवति क्रियादिभेदाभिमानस्य तद्धेतुत्वादित्यर्थः । न विद्यावस्थायामित्युक्तं प्रपञ्चयति नाप्रमाणेति । उत्पन्नायान्तु विद्यायां अविद्यायाः निवृत्तत्वात् क्रियादिभेदभानमप्रमाणमिति बुद्धिरुत्पद्यते तया गृह्यमाणा यथोक्तविभागभागिन्यप्यविद्या न कर्महेतुत्वं प्रतिपद्यते बाधितत्वेनाभासतया तद्धेतुत्वायोगादित्यर्थः । विद्याविद्याविभागेनोक्तमेव विशेषं विवृणोति प्रमाणभूतेनेति । यथोक्तेन वेदेन कामनाजीवनादिमतो मम कर्म विहितं तेन मया तत्कर्त्तव्यमिति मन्वानः खलु कर्मण्यज्ञोऽधिक्रियते तं प्रतिबाधमविशेषवादिनो

मिदं सर्वं निशेवेति यस्य तु पुनर्निशेवाविद्यामात्रमिदं सर्वं भेदजातमिति ज्ञानं तस्यात्मज्ञस्य सर्वकर्मसंन्यास एवाधिकारो न प्रवृत्तौ तथा दर्शयिष्यति तद्बुद्धय स्तदात्मान इत्यादिना ज्ञाननिष्ठायामेव तस्याधिकारः तत्रापि प्रवर्त्तकप्रमाणाभावे प्रवृत्तेरनुपपत्तिरिति चेत् न स्वात्मविषयत्वादात्मविज्ञानस्य न ह्यात्मनः स्वात्मनि प्रवर्त्तक प्रमाणापेक्षता आत्मत्वादेव तदन्तत्वाच्च सर्वप्रमाणानां प्रमाणत्वस्य न ह्यात्मस्वरूपाधिगमे सति पुनः प्रमाण प्रमेय-व्यवहारः सम्भवति प्रमातृत्वं ह्यात्मनो निवर्त्तयत्यन्त्यं प्रमाणं निवर्त्तयदेव चाप्रमाणीभवति स्वप्नकाल प्रमाण मिव प्रबोधे लोके च वस्त्वधिगमे प्रवृत्तिहेतुत्वादर्शनात् प्रमाणस्य तस्मान् नात्मविदः कर्मण्यधिकार इति सिद्धम् ॥६९॥

वेदस्य प्रामाणिकत्वादित्यर्थः। कर्मनिष्ठस्य तावत् द्वैतं निशेवेति ज्ञानस्तु न प्रवर्त्तते कर्मणीति व्यावर्त्तयति नाविदुष इति। विदुषो न कर्मण्यधिकारस्तस्याधिकारसामर्थ्ये प्रमाणमाह यस्येति। तस्य त्वात्मज्ञस्य फलभूतसंन्यासाधिकारे वाक्यशेषं प्रमाणयति तथा चेति। प्रवर्त्तकं प्रमाणं विधिस्तदभावे कर्मस्विव विदुषो ज्ञाननिष्ठायामपि प्रवृत्तेरनुपपत्तेरन्वयव्यतिरेकाभ्यां ज्ञानवतोऽपि विधिरिति शङ्कते तत्रापीति। किमात्मज्ञानं विधिमपेक्षते किं वाऽऽत्मा नाद्यः तस्य स्वरूपविषयस्य यथा प्रमाणप्रमेयवस्तूत्पत्तेर्विध्यनपेक्षत्वादित्याह न स्वात्मेति। न द्वितीय इत्याह न हीति। प्रवर्त्तकप्रमाणापेक्षितस्य विधेः साध्यविषयत्वादा-त्मनश्चासाध्यत्वादिति हेतुमाह आत्मत्वादेवेति। आत्मतज्ज्ञानयो-र्विध्यनपेक्षत्वेऽपि ज्ञानिनो मानमेयव्यवहारं प्रतिनियमार्थं विध्यपेक्षा स्यादित्याशङ्क्याह तदन्तत्वाच्चेति। सर्वेषां प्रमाणानां प्रामाण्यस्या-ज्ञानोदयावसानत्वात्तस्मिन्नुत्पन्ने व्यवहारस्य निरवकाशत्वान्न तत्प्रति-

नियमाच स्वामिनो विधिरित्यर्थः । तस्मैव अङ्गीकरोति न कौति । व्यवहारिकमन्यदात्माधिगमेऽपि किमिति यथोक्तो व्यवहारो न भवतीत्याशङ्क्याह प्रमातृत्वं हीति । तन्निवृत्तौ कथमद्वैतज्ञानस्य प्रामाण्यमित्याशङ्क्याह निवर्त्तयदेवेति । निवर्त्तयदद्वैतज्ञानं स्वयं निवृत्तेर्न प्रमाणमित्यत्र दृष्टान्तमाह स्वप्नेति । आत्मज्ञानस्य विध्यनपेक्षत्वे हेत्वन्तरमाह लोके चेति । व्यवहारभूमौ हि प्रमाणस्य वस्तुनिश्चयफलपर्यन्तत्वे सति प्रवर्त्तकविधिसापेक्षत्वानुपलम्भादद्वैतज्ञानमपि प्रमाणत्वात्र विधिमपेक्षते रूपादिज्ञानवदित्यर्थः । आत्मज्ञानवतस्तन्निष्ठाविधिमन्तरेण ज्ञानमाहात्म्येनैव सिद्धत्वात्तस्य कर्मसंन्यासेऽधिकारो न कर्मणीत्युपसंहरति तस्मादिति ॥ ६९ ॥

स्वा॰ टी॰ । ननु न कश्चिदपि प्रसुप्त इव दर्शनादिव्यापारशून्यः सर्वात्मना निगृहीतेन्द्रियो लोके दृश्यते अतोऽसम्भावितमिदं लक्षणमित्याशङ्क्याह या निशेति । सर्वेषां भूतानां या निशा निशेव निशा आत्मनिष्ठा अज्ञानध्वान्ता हतमतीनां तस्यां दर्शनादिव्यापाराभावात् तस्यामात्मनिष्ठायां संयमी निगृहीतेन्द्रियो जागर्त्ति प्रबुध्यते यस्यान्तु विषयनिष्ठायां भूतानि जाग्रति प्रबुध्यन्ते सा आत्मतत्त्वं पश्यतो मुनेर्निशा तस्यां दर्शनादिव्यापारस्तस्य नास्तीत्यर्थः । एतदुक्तं भवति यथा दिवान्धानामुलूकादीनां रात्रावेव दर्शनं न तु दिवसे एवं ब्रह्मदृष्ट्योन्मीलिताक्षस्यापि ब्रह्मण्येव दृष्टिर्न तु विषयेषु अतो नासम्भावितमिदं लक्षणमिति ॥ ६९ ॥

आपूर्य्यमाणमचलप्रतिष्ठं
समुद्रमापः प्रविशन्ति यद्वत् ।
तद्वत् कामा यं प्रविशन्ति सर्व्वे
स शान्तिमाप्नोति न कामकामी ॥ ७० ॥

विदुषस्त्यक्तैषणस्य स्थितप्रज्ञस्य यतेरेव मोक्षप्राप्तिर्नत्वसंन्यासिनः कामकामिन इत्येतमर्थं दृष्टान्तेन प्रतिपाद-

विद्वानाह आपूर्य्यमिति। आपूर्य्यमाणमद्भिरचलप्रतिष्ठं अच-लतया प्रतिष्ठा अवस्थितिर्यस्य तमचलप्रतिष्ठं समुद्रमापः सर्वतो गताः प्रविशन्ति स्वात्मस्थमविक्रियमेव सन्तं यद्वत् तद्वत् कामा विषयसन्निधावपि सर्वत इच्छाविशेषा यं मुनिं समुद्रमिवापोऽविकुर्वन्तः प्रविशन्ति सर्वे आत्मन्येव प्रली-यन्ते न स्वात्मवशं कुर्वन्ति स शान्तिं मोक्षं प्राप्नोति नेतरः कामकामी काम्यन्त इति कामाः विषयास्तान् कामयितुं शीलं यस्य स कामकामी नैव प्राप्नोतीत्यर्थः॥ ७०॥

नन्वसंन्यासिनापि विद्यावता विद्याफलस्य मोक्षस्य लब्धुं शक्यत्वात् किमिति विदुषः संन्यासो नियम्यते तत्राह विदुष इति। आपातज्ञान-वतो विवेकवैराग्यादिविशिष्टस्यैषणाभ्यः सर्वाभ्यो व्युत्थितस्य श्रवणादि-द्वारा तत्त्वसाक्षात्कारवतो मुख्यस्य संन्यासिनो मोक्षो नान्यस्य विषयतृष्णापरिभूतस्य इत्येतद्दृष्टान्तेन प्रतिपादयितुमिच्छन् रागद्वेष-वियुक्तैस्तु इति श्लोकोक्तमेवार्थं पुनराहेति योजना। अद्भिः समुद्रस्य समन्तात् पूर्य्यमाणत्वे हृद्धिह्रासवती तदीया स्थितिरापतेदित्याशङ्क्याह अचलेति। न हि समुद्रस्योदकात्मकं प्रतिनियतं रूपं कदाचिद्विवर्द्धते ह्रसते वा तेन तदीया स्थितिरेकरूपैवेत्यर्थः। नद्यादेर्वाचोदापः समु-द्रान्तर्गच्छन्ति तर्हि तस्य विक्रियावत्त्वादप्रतिष्ठा स्यादित्याशङ्क्याह स्वात्म-स्थमिति। इच्छाविशेषाः विषयाणामसन्निधौ विदुषि निर्विकारे प्रवि-शन्तोऽपि सन्निधाने तस्मिन् प्रविशन्तो विकारमापादयेयुरित्याशङ्क्याह विषयेति। प्रवेशं विशदयति सर्वत इति। योऽकाम इत्यादि श्रुतेर्विषय-वितृष्णस्य निष्कामस्य मोक्षो न कामकामुकस्येत्याह स शान्तिमिति॥७०॥

श्वा० टी०। ननु विषयेषु दृष्टग्भावे कथमसौ तान् भुङ्क्ते इत्य-पेक्षायामाह आपूर्य्यमाणमिति। नानानदनदीभिरापूर्य्यमाणमप्यचल-प्रतिष्ठमनतिक्रान्तमर्य्यादमेव समुद्रं पुनरप्यन्या आपो यथा प्रविशन्ति तथा कामा विषयाः यं मुनिमन्तर्दृष्टिं भोगैरविक्रियमाणमेव प्रारब्ध-

कर्म्मभिराक्षिप्ताः सन्तः प्रविशन्ति स शान्तिं कैवल्यं प्राप्नोति न तु कामकामी भोगकामनाशीलः ॥ ७० ॥

**विहाय कामान् यः सर्वान् पुमांश्चरति निस्पृहः ।**
**निर्ममो निरहङ्कारः स शान्तिमधिगच्छति ॥७१॥**

यस्मादेवं तस्माद्विहायेति । विहाय परित्यज्य कामान् यः सन्न्यासी सर्व्वानशेषतः कार्त्स्न्येन चरति जीवनमात्रचेष्टाशेषः पर्य्यटतीत्यर्थः निस्पृहः शरीरजीवनमात्रेऽपि निर्गता स्पृहा यस्य स निस्पृहः सन् निर्मम इति ममत्ववर्जितः शरीरजीवनमात्राक्षिप्तपरिग्रहेऽपि ममेदमित्यभिनिवेशवर्जितः निरहङ्कारो विद्यावत्त्वादिनिमित्तात्मसम्भावनारहित इत्यर्थः स एवम्भूतः स्थितप्रज्ञो ब्रह्मवित् शान्तिं सर्वसंसारदुःखोपरमलक्षणां निर्वाणाख्यामधिगच्छति प्राप्नोति ब्रह्मभूतो भवतीत्यर्थः ॥ ७१ ॥

यदि गृहस्थेनापि क्रमेण समस्ताभिमानं हित्वा कूटस्थं ब्रह्मात्मानं परिभावयता ब्रह्मनिर्व्वाणमाप्यते तर्हि मौण्ड्यादिविडम्बनेनेत्याशङ्क्याह यस्मादिति । शब्दादिविषयप्रवणस्य तदतिच्छाभेदभागिनो न मुक्तिरिति व्यतिरेकस्य सिद्धत्वात् पूर्व्वोक्तमन्वयं निगमयितुमनन्तरं वाक्यमित्यर्थः । अशेषविषयत्यागे जीवनमपि कथमित्याशङ्क्याह जीवनेति । सम्भवद्रागद्वेषादिके देशे निवासव्यावृत्त्यर्थं चरतीत्येतद्व्याचष्टे पर्य्यटतीति । विहाय कामानित्यनेन पुनरुक्तिं परिहरति शरीरेति । निस्पृहत्वमुक्त्वा निर्ममत्वं पुनर्वदन् कथं पुनरुक्तिमार्थिकीं न पश्यसीत्याशङ्क्याह शरीरजीवनेति । सत्यहङ्कारे ममकारस्यावश्यकत्वान्निरहङ्कारत्वं व्याकरोति विद्यावत्त्वादीति । स शान्तिमाप्नोति इत्युक्तमुपसंहरति स एवम्भूत इति । संन्यासिनो मोक्षमपेक्ष्यमाणस्य सर्वकाम-

परित्यागादीनि श्लोकोक्तानि विशेषणानि यत्नसाध्यानि तत्सम्पत्तिफलन्तु कैवल्यमित्यर्थः ॥ ७१ ॥

स्वा० टी०। यस्मादेवं तस्मात् विहायेति। प्राप्तान् कामान् विहाय त्यक्त्वा उपेक्ष्य अप्राप्तेषु च निस्पृहः यतो निरहङ्कारः अत एव तद्भोगसाधनेषु निर्म्ममः सन्नन्तर्दृष्टिर्भूत्वा यश्चरति प्रारब्धवशेन भोगान् भुङ्क्ते यत्र कुत्रापि गच्छति वा स शान्तिं प्राप्नोति ॥ ७१ ॥

**एषा ब्राह्मी स्थितिः पार्थ। नैनां प्राप्य विमुह्यति।**
**स्थित्वास्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥७२**

**इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्ज्जुन संवादे सांख्ययोगो नाम द्वितीयोऽध्यायः।**

---

सैषा ज्ञाननिष्ठा स्तूयते एषा ब्राह्मीति। एषा यथोक्ता ब्राह्मी ब्रह्मणि भवेयं स्थितिः सर्वकर्म्मसंन्यस्य ब्रह्मरूपेणैवावस्थानमित्येतत् हे पार्थ। नैनां स्थितिं प्राप्य लब्ध्वा विमुह्यति न मोहं प्राप्नोति स्थित्वास्यां स्थितौ ब्राह्म्यां यथोक्तायामन्तकालेऽपि अन्ते वयस्यपि ब्रह्मनिर्वाणं ब्रह्मनिर्वृतिं मोक्षमृच्छति किमु वक्तव्यं ब्रह्मचर्य्यादेव संन्यस्य यावज्जीवं यो ब्रह्मण्येवावतिष्ठते स ब्रह्मनिर्वाणमृच्छतीति ॥ ७२ ॥

इति श्रीभगवद्गीताभाष्ये द्वितीयोऽध्यायः।

तत्र तत्र संक्षेपविस्तराभ्यां प्रदर्शितां ज्ञाननिष्ठां अधिकारिप्रशंसार्थत्वेन स्तोतुमुत्तरश्लोकमवतारयति सैषेति । गृहस्थः संन्यासीत्युभावपि चेन्मुक्तिभागिनौ किं तर्हि कष्टेन सर्वथैव संन्यासेनेत्याशङ्का संन्यासिव्यतिरिक्तानामन्तरायसम्भवादपेक्षितः संन्यासो मुमुक्षोरित्याह एषेति । स्थितिमेव व्याचष्टे सर्वमिति । न विमुह्यतीति पुनर्मोक्षोत्कर्षसमन्वयार्थं संन्यासिनो विमोहाभावेऽपि गृहस्थो धनदाराद्निमित्तं प्रायेण विमुह्यति विक्षिप्तः सन् परमार्थविवेकरहितो भवतीत्यर्थः । यथोक्ता ब्राह्मी स्थितिः सर्वकर्मसंन्यासपूर्विका ब्रह्मनिष्ठा, तस्यां स्थित्वा तामिमामायुषश्चतुर्थेऽपि भागे कृत्वेत्यर्थः । अपिशब्दसूचितं कैमुतिकन्यायमाह किमु वक्तव्यमिति । तदेवं तत्त्वं पदार्थौ तदैक्यं वाक्यार्थस्तज्ज्ञानादेकाकिनो मुक्तिस्तदुपायश्चेत्यतेषामेकैकत्र श्लोके प्राधान्येन प्रदर्शितमिति निष्ठाद्वयमुपायोपेयभूतमध्यायेन सिद्धम् ॥ ७२ ॥

इति द्वितीयोऽध्यायः ।

स्वा० टी० । उक्तां ज्ञाननिष्ठां स्तुवन्नुपसंहरति एषेति । ब्राह्मी स्थितिर्ब्रह्मज्ञाने निष्ठा एषा एवं विधा एनां परमेश्वराराधनेन विशुद्धान्तःकरणः पुमान् प्राप्य न मुह्यति पुनः संसारमोहं न प्राप्नोति । यतोऽन्तकाले मृत्युसमयेऽपि अस्यां क्षणमात्रं स्थित्वा ब्रह्मनिर्वाणं ब्रह्मणि लयमृच्छति प्राप्नोति किं पुनर्वक्तव्यं बाल्यमारभ्य स्थित्वा प्राप्नोतीति । शोकपङ्कनिमग्नं यः सांख्ययोगोपदेशतः । उज्जहारार्जुनं भक्तं स कृष्णः शरणं मम ॥ ७२ ॥

इति द्वितीयोऽध्यायः ।

---

# तृतीयोऽध्यायः ।

अर्ज्जुन उवाच ।

**ज्यायसी चेत् कर्म्मणस्ते मता बुद्धिर्जनार्दन ।**
**तत् किं कर्म्मणि घोरे मां नियोजयसि केशव ॥**

शाङ्करभाष्यम् । शास्त्रस्य प्रवृत्तिनिवृत्तिविषयभूते द्वे बुद्धी भगवता निर्दिष्टे सांख्यबुद्धिर्योगबुद्धिश्च, तत्र प्रजहाति यदा कामा नित्यारभ्याध्यायपरिसमाप्तेः सांख्यबुद्ध्याश्रितानां संन्यासकर्त्तव्यतामुक्त्वा तेषां तन्निष्ठतयैव च कृतार्थतोक्ता एषा ब्राह्मी स्थितिरित्यर्ज्जुनाय च कर्म्मण्येवाधिकारस्ते मा ते सङ्गोऽस्त्वकर्म्मणीति कर्म्मैव कर्त्तव्यमुक्तवान् योगबुद्धिमाश्रित्य, न तत एव श्रेयःप्राप्तिमुक्तवान्, तदेतदालक्ष्य पर्य्याकुलीभूतबुद्धिरर्ज्जुन उवाच, कथं भक्ताय श्रेयोऽर्थिने यत् साक्षात् श्रेयःप्राप्तिसाधनं सांख्यबुद्धिनिष्ठां श्रावयित्वा मां

---

आ॰ टी॰ । पूर्वोत्तराध्याययोः सम्बन्धं पूर्वस्मिन्नध्याये वृत्तमर्थं संक्षिप्यानुवदति शास्त्रस्येति । गीताशास्त्रप्रारम्भापेक्षितं हेतुफलभूतं बुद्धिद्वयं भगवतोपदिष्टमित्यर्थः । प्रष्टुरर्ज्जुनस्याभिप्रायं निर्देष्टुं वृत्तमर्थान्तरं कथयति तत्रेति । अध्याययोर्बुद्धिद्वयनिर्धारणं वा सप्तम्यर्थः, पारमार्थिके तत्त्वे तज्ज्ञानं तन्निष्ठानामशेषकामत्यागिनां काममूलानां कर्म्मणामपि प्रतिपत्तिकर्म्मवत्त्यागं कर्त्तव्यत्वेन भगवानुक्तवानित्यर्थः । तथापि मोक्षसाधने विकल्पसमुच्चययोरन्यतरस्य विवक्षितत्वबुद्ध्या समनन्तरप्रश्नप्रवृत्तिरित्याशङ्क्याह उक्तेति । अर्ज्जुनस्य मनसि व्याकुलत्वं प्रश्नबीजं दर्शयित्वा तत्प्रश्नमर्थान्तरमनुभाषते अर्ज्जुनाय चेति । सांख्यबुद्धिमाश्रित्य कर्म-

कर्मणि दृष्टानेकार्थयुक्ते पारम्पर्य्येणाप्यनैकान्तिकश्रेयः-
प्राप्तिफले नियुञ्ज्यादिति युक्तः पर्य्याकुलीभावोऽर्ज्जुनस्य
तदनुरूपश्च प्रश्नो ज्यायसी चेदित्यादिप्रश्नापाकरणवाक्यञ्च
भगवतो युक्तं यथोक्तं विभागविषये शास्त्रे। केचित्त्व-
र्ज्जुनस्य प्रश्नार्थमन्यथा कल्पयित्वा तत्प्रतिकूलं भगवतः
प्रतिवचनं वर्णयन्ति, यथा चात्मना सम्बन्धग्रन्थे गीतार्थो
निरूपितः तत्प्रतिकूलञ्चेह पुनः प्रश्नप्रतिवचनयोरर्थं निरू-
पयन्ति, कथं तत्र सम्बन्धग्रन्थे तावत् सर्वेषामाश्रमिणां
ज्ञानकर्म्मणोः समुच्चयो गीताशास्त्रे निरूपितोऽर्थ इत्युक्तः
पुनर्विशेषितञ्च यावज्जीवं श्रुतिचोदितानि कर्माणि परि-
त्यज्य केवलादेव ज्ञानान्मोक्षः प्राप्यते इत्येतदेकान्तेनैव

---

त्यागमुक्त्वा पुनस्तस्यैव कर्त्तव्यत्वं कथं मिथोविरुद्धं ब्रवीतीत्याशङ्क्याह
योगेति। यथा सांख्यबुद्धिमाश्रितानां संन्यासद्वारा तद्विज्ञानां कृतार्थतोक्ता
तथा योगबुद्धिमाश्रित्य कर्म कुर्वतोऽपि कृतार्थत्वमुक्तमित्याशङ्क्याह न
तत एवेति। दूरेण ह्यवरं कर्म बुद्धियोगादिति दर्शनादिति शेषः।
बुद्धिव्याकुलत्वं प्रश्नबीजं प्रतिलभ्य प्रश्नं करोतीत्याह तदेतदिति।
साक्षादेव श्रेयःसाधनं ज्ञानमन्येभ्यो दर्शितं तदित्युच्यते, तद्विपरीतं
कर्म स्वस्यानुष्ठेयत्वेनोक्तमेतदिति निर्दिश्यते भगवदुक्तेऽर्थे संदिह्यमानस्य
निर्णयाकाङ्क्षया प्रश्नप्रवृत्तेरस्ति पूर्वोत्तराध्याययोरुत्थाप्योत्थापक-
लक्षणा सङ्गतिरित्यर्थः। अर्जुनस्य प्रश्ननिमित्तं पर्य्याकुलत्वं प्रश्न-
पूर्वकं प्रपञ्चयति कथमित्यादिना। यदि साक्षादेव श्रेयःसाधनं सांख्य-
शब्दितं परमार्थतत्त्वविषयबुद्धौ निष्ठारूपं तदन्यस्मै श्रेयोऽर्थिने भक्ताय
श्रावयित्वा मां पुनरभक्तमश्रेयोऽर्थिनमिव कर्मणि पूर्वोक्तविपरीते
कथं भगवान्नियोक्तुमर्हति इत्यर्जुनस्य पर्य्याकुलीभावो युक्त इति
सम्बन्धः। ज्ञाननिष्ठातो वैपरीत्यं स्फोरयितुं कर्म विशिनष्टि दृष्टेति।

ज्ञानात् श्रौतकर्मरहितात् गृहस्थानां मोक्षः प्रतिषिध्यत इति तत्र गृहस्थानां विद्यमानमपि स्मार्त्तं कर्माविद्यमानवदुपेक्ष्य ज्ञानादेव केवलादित्युच्यते इत्येतदपि विरुद्धं कथं गृहस्थस्यैव स्मार्त्तकर्म्मणा समुच्चितात् ज्ञानान्मोक्षः प्रतिषिध्यते न त्वाश्रमान्तराणामिति कथं विवेकिभिः शक्यमवधारयितुं, किञ्च यदि मोक्षसाधनत्वेन स्मार्त्तानि कर्म्माण्यूर्द्ध्वरेतसां समुच्चीयन्ते तथा गृहस्थस्यापि इष्यतां स्मार्त्तैरेव समुच्चयो न श्रौतैः अथ श्रौतैः स्मार्त्तैश्च गृहस्थस्यैव समुच्चयो मोक्षायोर्द्ध्वरेतसां तु स्मार्त्तकर्म्ममात्रसमुच्चितात् ज्ञानान्मोक्ष इति, तत्रैवं

---

यितुं सम्बन्धग्रन्थोक्तमर्थमनुवदति तत्रेति। परकीया वृत्तिः समस्या समाप्यते, सम्बन्धग्रन्थे तावदयमर्थ उक्त इति सम्बन्धः। तमेवार्थं विघटयति सर्वेषामिति। सर्वकर्मसन्न्यासपूर्वकज्ञानादेव केवलात् कैवल्यमित्यभिप्रायं शास्त्रस्य पर्य्यवसानान्न समुच्चयो विवक्षितस्तत्रेत्याशङ्क्याह पुनरिति। उक्तो गीतार्थो वृत्तिकारैरेव कर्मत्यागायोगेन विशेषितत्वान्नाविर्भावितो भवितुमुत्सहते तथा च श्रौतानि कर्माणि त्यक्त्वा ज्ञानादेव केवलान्मुक्तिर्भवतीत्येतन्मतं नियमेनैव यावज्जीवश्रुतिभिर्विप्रतिषिद्धत्वान्नाभ्युपगन्तुमुचितमित्यर्थः। तथापि कथं मिथो विरोधधीरित्याशङ्क्याह इह त्विति।

प्रथमतो हि सम्बन्धग्रन्थे समुच्चयो गीतार्थः प्रतिपाद्यत्वेन वृत्तिकृता प्रतिज्ञातः श्रौतकर्मपरित्यागस्य स्मृतिविरोधादेव न सम्भवतीत्युक्तं तृतीयाध्यायारम्भे पुनः संन्यासिनां ज्ञाननिष्ठा कर्मिणां कर्मनिष्ठेत्याश्रमविभागमभिदधता पूर्वप्रतिषिद्धकर्मत्यागाभ्युपगमात्तयोर्विरोधो दर्शितः स्यादित्यर्थः। ननु यथा भगवता प्रतिपादितं तथैव वृत्तिकृता व्याख्यातमिति न तस्यापराधोऽस्तीत्याशङ्क्याह नह कथमिति। न हि इह भगवान् विरुद्धमर्थमभिधत्ते सर्वज्ञस्य तस्यासत्य विरुद्धार्थ-

सति गृहस्थस्यायासबाहुल्यात् श्रौतं स्मार्त्तञ्च बहुदुःखरूपं कर्म्म शिरस्यारोपितं स्यात्, अथ गृहस्थस्यैवायासबाहुल्यात् तत्कारणान्मोक्षः स्यादाश्रमान्तराणां श्रौतनित्यकर्म्मरहितत्वादिति तदप्यसत् सर्वोपनिषत्स्वितिहासपुराणयोगशास्त्रेषु च ज्ञानाङ्गत्वेन मुमुक्षोः सर्वकर्मसन्न्यासविधानादाश्रमविकल्पसमुच्चयविधानाच्च श्रुतिस्मृत्योः सिद्धस्तर्हि सर्वाश्रमिणां ज्ञानकर्मणोः समुच्चयो न मुमुक्षोः सर्वकर्म्मसन्न्यासविधानात् पुत्रैषणाया वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्य्यं चरन्ति, तस्मात् सन्न्यासमेषां तपसामतिरिक्तमाहुः न्यास एवात्यरेचयदिति न कर्म्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुरिति च ब्रह्मचर्य्यादेव

---

वादित्वायोगात् किन्तु तदभिप्रायापरिज्ञानादेव व्याख्यातुर्विरुद्धार्थवादितेत्यर्थः। भगवतो विरुद्धार्थवादित्वाभावेऽपि श्रोतुर्विरुद्धार्थप्रतिपत्तिं प्रतीत्य व्याचक्षाणो वृत्तिकारो नापराध्यतीत्याशङ्क्याह श्रोतावेति। अर्जुनो हि श्रोता सोऽपि बुद्धिपूर्वकारी भगवदुक्तमेवावधारयन् विरुद्धमर्थमवधारयितुमर्हतीति तथा च परस्यैव विरुद्धार्थवादितेत्यर्थः। विरोधं परिहरन्नाशङ्कते तत्रेति। सम्बन्धग्रन्थे हि वृत्तिकारस्यैतदभिप्रेतं गृहस्थानामेव सतां परिपक्वज्ञानमन्तरेण यावज्जीवश्रुतिचोदिताग्निहोत्रादित्यागेन केवलादेवापातिकादात्मज्ञानान्मोक्षमपेक्षमाणानां यावज्जीवादिशास्त्रैरसौ निषिध्यते न तु स्वरूपेणैव कर्मत्यागो ज्ञानान्मोक्षो वा निषेद्धुमिष्यते तृतीये पुनरध्याये कर्मत्यागिनां गृहस्थेभ्यो व्यतिरिक्तानामेव केवलादात्मज्ञानान्मोक्षो विवक्ष्यते अतो भिन्नविषयत्वान्निषेधाभ्यनुज्ञानयोर्न विरोधाशङ्केत्यर्थः। विरोधान्तरेण विरोधं दर्शयन्नुत्तरमाह एतदपीति। विरोधमेवाकाङ्क्षाद्वारा साधयति कथमित्यादिना। श्रौतं कर्म गृहस्थानामवश्यमनुष्ठेयमित्यनेनाभिप्रायेण तेषां

प्रवर्त्तेरित्याद्याः श्रुतयः त्यज धर्ममधर्मञ्च उभे सत्यानृते त्यज, येन त्यजसि तं त्यज, संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया । प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिता इति बृहस्पतिः, परमात्मनि यो रक्तो यो रक्तोऽपरमात्मनि सर्वैषणाविनिर्मुक्तः स भैक्ष्यं भोक्तुमर्हति, कर्म्मणा बध्यते जन्तुर्विद्यया च विमुच्यते । तस्मात् कर्म्म न कुर्वन्ति यतयः पारदर्शिन इति शुकानुशासनं, इहापि च सर्वकर्माणि मनसा संन्यस्येत्यादि, मोक्षस्य चाकार्य्यत्वान्मुमुक्षोः कर्मानर्थक्यं, नित्यानि प्रत्यवायपरिहारार्थानीति चेत् नासंन्यासिविषयत्वात् प्रत्यवायप्राप्तेर्न ह्यग्निकार्य्याद्यकरणात् संन्यासिनः

---

केवलादात्मज्ञानान्मोक्षो निषिध्यते ननु गृहस्थानां ज्ञानमात्रायत्तं मोक्षं प्रतिषिद्धान्येषां केवलज्ञानाधीनो मोक्षो विवक्ष्यते आश्रमान्तराणामपि स्मार्त्तेन कर्म्मणा समुच्चयाभ्युपगमादिति चोदयति चेति । तत्तद्दराद्दष्टं वचनमेवाभिनयति केवलादिति । ननु गृहस्थानां श्रौतकर्म्मराहित्येऽपि सति स्मार्त्ते कर्म्मणि कृते ज्ञानस्य केवलत्वं कथ्यते येन निषेधोक्तिरर्थवती तत्राह तत्रेति । प्रकृतवचनमेव वक्ष्यत्यर्थः, प्रधानं हि श्रौतं कर्म्म तद्राहित्ये सति स्मार्त्तस्य कर्म्मणः सतोऽप्यसद्भावमभिप्रेत्य ज्ञानस्य केवलत्वमुक्तमिति युक्ता निषेधोक्तिरित्यर्थः । गृहस्थानामेव श्रौतकर्म्मसमुच्चयो नान्येषां अन्येषान्तु स्मार्त्तेनेति पक्षपाते हेत्वभावं मन्वानः स्वयं परिहरति एतदपीति । तमेव हेत्वभावं प्रत्याहारा विवृणोति कथमित्यादिना । गृहस्थानां श्रौतस्मार्त्तकर्म्मसहचरितं ज्ञानं मुक्तिहेतुरित्यभ्युपगमात् केवलस्मार्त्तकर्म्मसहचरितात्ततो न मुक्तिरिति निषेधो युज्यते ऊर्द्धरेतसान्तु स्मार्त्तकर्म्ममात्रसहचरितात् ज्ञानान्मुक्तिरिति विभागे नास्ति हेतुरित्यर्थः । पक्षपाते कारणं नास्तीत्युक्त्वा पक्षपातपरित्यागे कारणमस्तीत्याह किञ्चेति । गृहस्थानामपि मुमुक्षाणां

प्रत्यवायः कल्पयितुं शक्यो यथा ब्रह्मचारिणां असंन्यासि-
नामपि न तावन्नित्यानां कर्म्मणामभावादेव भावरूपस्य
प्रत्यवायस्योत्पत्तिः कल्पयितुं शक्या कथमसतः सज्जायेतेत्य-
सतः सज्जन्मासम्भवश्रुतेः यदि विहिताकरणादसम्भा-
व्यमपि प्रत्यवायं ब्रूयाद्वेदस्तदानर्थकरो वेदोऽप्रमाणमि-
त्युक्तं स्यात् विहितस्य करणाकरणयोः दुःखमात्रफलत्वात्
तथा च कारकं शास्त्रं न ज्ञापकमित्यनुपपन्नार्थं कल्पितं
स्यान्न चैतदिष्टं तस्मान्न संन्यासिनां कर्म्मास्त्यतो ज्ञानकर्म्मणोः
समुच्चयानुपपत्तिः, ज्यायसी चेत् कर्म्मणस्ते मता बुद्धिरि-
त्यर्जुनस्य प्रश्नानुपपत्तेश्च, यदि हि भगवता द्वितीयेऽध्याये
ज्ञानं कर्म्म च समुच्चयेन त्वया एकेनानुष्ठेयमित्युक्तं स्यात्

---

स्मार्त्तैरेव कर्मभिः समुच्चितं मोक्षसाधनं ब्रह्मज्ञानत्वादूर्द्ध्वरेतःसुव्यवस्थित-
ब्रह्मज्ञानवदिति पक्षपातत्यागे हेतुं स्फुटयति यदीत्यादिना । यदि
गृहस्थानां ब्रह्मज्ञानं स्मार्त्तैरेव कर्मभिः समुच्चितं तदीयं ज्ञानं मोक्षस्य
हेतुरिति विवक्षितं तदा तान् प्रति यावज्जीवश्रुतिर्विरुध्येत, यदि
स्मार्त्तैरपि कर्मभिः समुच्चितं तदीयं ज्ञानं मोक्षसाधनं विवक्षितं तदा
सिद्धसाध्यतेति प्रागुक्तमभिप्रेत्य चोदयति अथेति । आश्रमान्तराणां
तर्हि केवलादेव ज्ञानान्मुक्तिरिति प्रागुक्तविरोधतादवस्थ्यमित्याशङ्क्याह
ऊर्द्ध्वरेतसां त्विति । यथोक्ते विभागे गार्हस्थ्यं क्लेशात्मकं कर्म बाहुल्यात्
अनुपादेयमापद्येतेति दूषयति तत्रेति । साधनभूयस्त्वमिति न्यायमा-
श्रित्य शङ्कते अथेति । क्लेशबाहुल्योपेतं श्रौतं स्मार्त्तञ्च बहु कर्म
तस्यानुष्ठानात् गृहस्थस्य मोक्षः स्यादेवेत्यर्थः । एकवारनिरस्तं
दूषयति नाश्रमान्तराणामिति । तेषां नास्ति मुक्तिरित्यत्र यावज्जी-
वादिश्रुतिविहिताशक्यानुष्ठेयकर्मराहित्यं हेतुं सूचयति श्रौतेति ।
शास्त्रविरोधे न्यायस्य निरवकाशत्वमभिप्रेत्य दूषयति तदपीति ।

ततोऽर्जुनस्य प्रश्नोऽनुपपन्नो ज्यायसी चेत् कर्म्मणस्ते मता बुद्धिरित्यर्ज्जुनाय चेत् बुद्धिकर्म्मणी त्वयानुष्ठेये इत्युक्ते या च कर्म्मणो ज्यायसी बुद्धिः साप्युक्तैवेति तत् किं कर्म्मणि घोरे मां नियोजयसि केशवेति उपालम्भो वा प्रश्नो वा न कथञ्चनोपपद्यते न चार्ज्जुनस्यैव ज्यायसी बुद्धिर्नानुष्ठेयेति भगवतोक्तं पूर्व्वमिति कल्पयितुं युक्तं येन ज्यायसी चेदिति विवेकतः प्रश्नः स्यात् यदि पुनरेकस्य पुरुषस्य ज्ञानकर्म्मणोर्विरोधात् युगपदनुष्ठानं न सम्भवतीति भिन्नपुरुषानुष्ठेयत्वं भगवता पूर्व्वमुक्तं स्यात् ततोऽयं प्रश्न उपपन्नो ज्यायसी चेदित्यादिरविवेकतः प्रश्नकल्पनायामपि

---

शेषाश्रमप्रत्युक्त्या गार्हस्थ्यस्यैव प्राधान्यादनधिकृतान्धादिविषयं कर्मसन्न्यासविधानमित्याशङ्क्याह ज्ञानाङ्गत्वेनेति । न खल्वनधिकृतानामन्धादीनां सन्न्यासः श्रवणाद्यावृत्तिद्वारा ज्ञानाङ्गं भवितुमलं तेषां श्रवणाद्यभ्याससामर्थ्यादतः श्रुत्यादीनां विरोधे नास्ति गार्हस्थ्यस्य प्राधान्यमित्यर्थः । तस्य प्राधान्याभावे हेत्वन्तरमाह आश्रमेति । ब्रह्मचर्य्यं समाप्य गृही भवेत् गृहाद्वनी भूत्वा प्रव्रजेत् यदि वेतरथा ब्रह्मचर्य्यादेव प्रव्रजेत् गृहाद्वा वनाद्वेति श्रुतौ तस्याश्रमविकल्पमेके ब्रुवते इति यमिच्छेत्तमावसेदित्यादि स्मृतौ चाश्रमाणां समुच्चयेन विकल्पेन चाश्रमान्तरमिच्छतां प्रतिविधानाच्च गार्हस्थ्यस्य प्रधानत्वमित्यर्थः । यदि सर्व्वेषामाश्रमाणां श्रुतिस्मृतिमूलत्वं तर्हि तत्तदाश्रमविहितकर्म्मणां ज्ञानेन समुच्चयः सिध्यतीति शङ्कते सिद्धस्तर्हीति । यद्यपि ज्ञानोत्पत्तावाश्रमकर्म्मणां साधनत्वं तथापि ज्ञानस्योत्पन्नस्यैव फले सहकारित्वेन नान्यपेक्षते अन्यथा सन्न्यासविध्यनुपपत्तेरिति दूषयति न समुच्चयोदिति । सन्न्यासविधानमेवानुक्रामति व्युत्थायेत्यादिना । एषणाभ्यो वैमुख्येनोत्थानं तत्परित्यागः आश्रमसमुच्चयानन्तरं तत्र विहितकर्म्मकलापा-

**भिन्नपुरुषानुष्ठेयत्वेन भगवतः प्रतिवचनं नोपपद्यते न चाज्ञाननिमित्तं भगवत्प्रतिवचनं कल्पनीयं अस्माच्च भिन्नपुरुषानुष्ठेयत्वेन ज्ञानकर्मनिष्ठयोर्भगवतः प्रतिवचनदर्शनात् ज्ञानकर्मणोः समुच्चयानुपपत्तिः तस्मात् केवलादेव ज्ञानान्मोक्ष इत्येषोऽर्थो निश्चितो गीतासु सर्वोपनिषत्सु**

---

नुष्ठानमपि कर्तव्यमित्याह चर्येति । प्रागुक्तानां सत्यादीनामल्पफलत्वात्त्यागस्य च ज्ञानद्वारा मोक्षफलत्वादित्याह तस्मादिति । अतिरिक्तमतिशयवत्त्वं महाफलमिति यावत् । प्रकृतकर्मभ्यः सकाशात्त्याग एवातिशयवानास्थीयतामित्यत्रार्थे वाक्यान्तरं पठति न्यास एवेति । लोकत्रयहेतुं साधनत्रयं परित्यज्य संसाराद्विरक्ताः संन्यासपूर्वकादात्मज्ञानादेव प्राप्नुवन्ति मोक्षमित्याह न कर्मणेति । सति वैराग्ये नास्ति कर्मापेक्षा सत्यां सामग्र्यां कार्योत्पत्त्यनपायेरित्याह ब्रह्मचर्यादेवेति । इत्याद्याः सर्वकर्मसंन्यासविधायिन्यः श्रुतयो भवन्तीति शेषः । आत्मानमेव लोकमिच्छन्तः प्रव्रजन्तीत्यादिवाक्यसंग्रहार्थमादिपदम् । तत्रैव स्मृतिमुदाहरति त्यजेति । धर्माधर्मयोः सत्यानृतयोश्च संसारारम्भकत्वान्मुमुक्षुणा तत्त्यागे प्रयतितव्यमित्यर्थः । त्यक्तत्वाभिमानस्यापि तत्त्वतः स्वरूपसम्बन्धाभावात् तत्त्याज्यत्वमविशिष्टमित्याह येनेति । अनुभवानुसारेण प्रमाणतोऽनुमत्य संसारस्य दुःखफलत्वमालक्ष्य मोक्षहेतुसम्यक्ज्ञानसिद्धये ब्रह्मचर्यादेव पारिव्राज्यमनुष्ठेयमित्युपपत्तिं विधिमुपन्यस्यति सम्भारमिति । तत्त्वज्ञानमुद्दिश्य ब्रह्मचर्यादेव कर्मसंन्यासे सामग्रीमभिदधानो विनियोगविधिं सूचयति परमिति । ज्ञानकर्मणोरसमुच्चयार्थं फलविभागं कथयति कर्मणेति । उक्तं फलविभागमनूद्य ज्ञाननिष्ठानां कर्मसंन्यासस्य कर्तव्यत्वमाह तस्मादिति । वाक्यशेषेऽपि सर्वकर्मसंन्यासो विवक्षितोऽस्तीत्याह इहापीति । ज्ञानार्थिनो मुमुक्षोः संन्यासविध्यनुपपत्तिबाधितं समुच्चयविधिवचनमित्युक्तमिदानीं मोक्षस्वभावालोचनयाऽपि समुच्चयवचनमनुचितमित्याह मोक्षस्य चेति । अकुर्वन्विहितं कर्म

च ज्ञानकर्मणोरेकं वद निश्चित्येति चैकविषयैव प्रार्थनानुपपन्नोभयोः समुच्चयसम्भवे कुरु कर्मैव तस्मात्त्वमिति च ज्ञाननिष्ठासम्भवमर्जुनस्यावधारणेन दर्शयिष्यति ज्यायसी चेदिति। ज्यायसी चेद्यदि कर्मणः सकाशात्ते तव मता

---

निन्दितञ्च समाचरन्। प्रसक्तश्चेन्द्रियार्थेषु नरः पतनमृच्छतीति स्मृतेः मुमुक्षूणामपि प्रत्यवायनिवृत्तये कर्त्तव्यं नित्यकर्मेति शङ्कते नित्यानीति। यो यस्मिन् कर्मण्यधिकृतस्तस्य तदकरणात् प्रत्यवायो भवति न तु कर्मानधिकारिणः संन्यासिनस्तदकरणात् प्रत्यवायः सम्भवतीति दूषयति नासंन्यासीति। तदेव स्पष्टयति न हीति। अग्निहोत्राध्ययनाद्यकरणात् प्रत्यवायः संन्यासिनो नास्तीत्यर्थः। तत्र व्यतिरेकोदाहरणमाह यथेति। अकरणात् प्रत्यवायोत्पत्तिमभ्युपेत्योक्तं सम्प्रति प्रतिषिद्धकरणादेव प्रत्यवायो न त्वकरणादभावात् भावोत्पत्तेर्लोकवेदविरुद्धत्वादित्याह न तावदिति। ननु नित्यकर्मविधायी वेदस्तदकरणात् प्रत्यवायो भवतीति ब्रवीति तत्कथमकरणात् प्रत्यवायो न भवतीति श्रुतिमाश्रित्योच्यते श्रुत्यन्तरविरोधादिति तत्राह यदीति। विहितस्याकरणे प्रत्यनर्थप्राप्तेर्न नित्यकर्मविधायी वेदोऽनर्थकरत्वेनाप्रमाणमित्याशङ्क्याह विहितस्येति। न हि विहितस्य करणे पितृलोकप्राप्तिलक्षणं फलं भवतीष्यते श्रमादिना नयनपीडादि दुःखं तु प्रत्यक्षमेवाकरणे च प्रत्यवायोत्पत्तिरुभयथाऽपि पुरुषस्यानर्थकरो वेदोऽप्रमाणमेव स्यादित्यर्थः। नन्वभावस्याऽपि भावोत्पादनसामर्थ्यं वेदः सम्पादयिष्यति तथा च विहिताकरणप्रत्यवायपरिहारो विहितकरणे फलिष्यतीति नेत्याह तथा चेति। लोकप्रसिद्धपदार्थशक्त्याश्रयणेन शास्त्रप्रवृत्त्यङ्गीकारादपूर्वशक्त्याधानायोगात् ज्ञापकमेव शास्त्रमित्यर्थः। कारकत्वे च तस्याप्रामाण्यमप्रत्यक्षं स्यादित्याह कारकमिति। भवतु शास्त्रस्याप्रामाण्यमित्याशङ्क्यापौरुषेयतया अशेषदोषानाघ्रातत्वान्नैवमित्याह न चेति। अनिर्वाच्यानुपलब्धस्य संवेदनमभावज्ञाने कारणं समीहितसाधनज्ञानं तु चरणाभावादि प्रवृत्तिकारणमित्यङ्गीकृत्योपसंहरति तस्मादिति।

उपालम्भमिव कुर्वन् तत् किं कस्मात् कर्मणि घोरे क्रूरे हिंसालक्षणे मां नियोजयसि केशवेति च यदाह तन्नोपपद्यते ॥ १ ॥

---

निश्चयार्थत्वं व्याचष्टे यदीति । बुद्धिशब्दस्यान्तःकरणविषयत्वं व्यवच्छिनत्ति ज्ञानमिति । पूर्व्वार्द्धस्याक्षरयोजनां कृत्वा समुच्चयाभावे तात्पर्य्यमाह यदीति । इष्टे भगवतेति शेषः, एकं ज्ञानं कर्म्मासमुच्चितमिति यावत्, ज्ञानकर्म्मणोरभीष्टे समुच्चये समुच्चितस्य श्रेयःसाधनत्वैकत्वात् कर्म्मणः सकाशात् ज्ञानस्य पृथक्करणमयुक्तमित्यर्थः । एकमपि साधनं फलतोऽतिरिक्तं किं न स्यादित्याशङ्क्याह न हीति । न च केवलात् कर्म्मणो ज्ञानस्य केवलस्य फलतोऽतिरिक्तत्वं विवक्षित्वा पृथक्करणं समुच्चयपक्षे प्रत्येकं श्रेयःसाधनत्वानभ्युपगमादिति भावः । पूर्व्वार्द्धस्येवोत्तरार्द्धस्यापि समुच्चयपक्षे तुल्यानुपपत्तिरित्याह तथेति । दूरेण ह्यवरं कर्म्मेत्यत्र कर्म्मणः सकाशात् बुद्धिः श्रेयस्करी भगवतोक्ता कर्म्म च बुद्धेः सकाशादश्रेयस्करमुक्तं तथापि तदेव कर्म्म कर्म्मण्येवाधिकारस्ते मा फलेष्विति स्निग्धं शिष्यं भक्तञ्च मां प्रति कुर्व्विति भगवान् प्रतिपादयति तत्र कारणानुपलम्भादयुक्तमतिक्रूरे कर्म्मणि भगवतोमन्नियोजनमिति यदर्ज्जुनो ब्रवीति तच्च समुच्चयपक्षेऽनुपपन्नं स्यादित्यर्थः ॥१॥

स्वा० टी० । एवं तावदशोच्यानन्वशोचस्त्वमित्यादिना प्रथमं मोक्षसाधनत्वेन देहात्मविवेकबुद्धिरुक्ता तदनन्तरमेषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु इत्यादिना कर्म्म चोक्तं न च तयोर्गुणप्रधानभावः स्पष्टं दर्शितः, तत्र बुद्धियुक्तस्य स्थितप्रज्ञस्य निष्क्रियत्वनियतेन्द्रियत्वनिरहङ्कारत्वाद्यभिधानादेषा ब्राह्मी स्थितिः पार्थेति च प्रशंसनुपसंहाराच्च बुद्धिकर्म्मणोर्म्मध्ये बुद्धेः श्रैष्ठ्यं भगवतोऽभिप्रेतं मन्वानोऽर्ज्जुन उवाच ज्यायसी चेदिति । कर्म्मणः सकाशान्मोक्षेऽन्तरङ्गत्वेन बुद्धिर्ज्यायसी अधिकतरा श्रेष्ठा चेत्तव सम्मता तर्हि किमर्थं तस्माद्युध्यस्वेति तस्मादुत्तिष्ठेति च वारं वारं वदन् घोरे हिंसात्मके कर्म्मणि मां प्रवर्त्तयसि ॥ १ ॥

**व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे।**
**तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥२॥**

अथ स्मार्तेनैव कर्मणा समुच्चयः सर्वेषां भगवतोक्तः अर्जुनेन चावधारितश्चेत् तत् किं कर्मणि घोरे मां नियोजयसीत्यादि कथं युक्तं वचनं, किञ्च व्यामिश्रेणेति व्यामिश्रेणेव यद्यपि विविक्ताभिधायी भगवान् तथापि मम मन्दबुद्धेर्व्यामिश्रमिव भगवद्वाक्यं प्रतिभाति तेन मम बुद्धिं मोहयसीवेति मम मन्दबुद्धेर्व्यामोहापनयाय हि प्रवृत्तस्त्वन्तु कथं मोहयस्यतो ब्रवीमि बुद्धिं मोहयसीवेति ममेति त्वं तु भिन्नकर्तृकयोर्ज्ञानकर्मणोरेकपुरुषानुष्ठानासम्भवं यदि मन्यसे तत्रैवं सति तत्तयोरेकं बुद्धिं कर्म वा इदमेवार्जुनस्य योग्यं बुद्धिशक्त्यवस्थानुरूपमिति निश्चित्य वद ब्रूहि येन ज्ञानेन कर्मणा वान्यतरेण श्रेयोऽहमाप्नुयां इति यदुक्तं तदपि नोपपद्यते यदि हि कर्मनिष्ठायां गुणभूतमपि ज्ञानं भगवतोक्तं स्यात्तत् कथं तयोरेकं वदेति एकविषयैवार्जुनस्य शुश्रूषा स्यान्न हि भगवतोक्तमन्यतरदेव ज्ञानकर्मणोर्वक्ष्यामि नैव द्वयमिति येनाभयप्राप्त्यसम्भवमात्मनो मन्यमान एकमेव प्रार्थयेत् ॥ २ ॥

आ० टी०। यत्तु वृत्तिकारैरुक्तं श्रौतेन स्मार्तेन च कर्मणा समुच्चयो गृहस्थानां श्रेयःसाधनमितरेषां स्मार्तेनैवेति भगवतोक्तमर्जुनेन च निर्द्धारितमिति तदेतदनुवदति अथेति। तत्रापि तत् किमित्याद्युपालम्भवचनमनुपपन्नं कर्ममात्रसमुच्चयवादिनो भगवतो नियोजनाभावादिति दूषयति तत् किमिति। इतश्च प्रश्नः समुच्चयानुसारी न भवतीत्याह

विद्धीति। भगवतो विविक्तार्थवादित्वादयुक्तं व्यामिश्रेणेत्यादिवचनमित्याशङ्क्याह यद्यपीति। यदि भगवद्वचनं सङ्कीर्णमिव ते भाति तर्हि तेन त्वदीयबुद्धिव्यामोहनमेव तस्य विवक्षितमिति किमिति मोहयसीवेत्युच्यते तत्राह ममेति। ज्ञानकर्मणी मिथो विरोधात् युगपदेकपुरुषाननुष्ठेयतया भिन्नकर्तृके कथ्येते तथा च तयोरन्यतरस्मिन्नेव त्वं नियुक्तो न तु ते बुद्धिव्यामोहनमभिमतमिति भगवतो मतमनुवदति त्वमिति। तदेकमित्यादिश्लोकार्द्धेनोत्तरमाह तत्रेति। उक्तं भागवतमतं सप्तम्या परामृश्यते एकमित्युक्तप्रकारोक्तिः। एकमित्युक्तमेव स्फुटयति बुद्धिमिति। निश्चयप्रकारं प्रकटयति इदमिति। योग्यत्वं स्पष्टयति बुद्धीति। अस्य हि क्षत्रियस्य सतोऽन्तःकरणस्य हेतुशक्तेः समरसमारम्भावस्थायामिदमेव ज्ञानं कर्म वानुष्ठेयमिति निश्चित्य ब्रूहि इत्यर्थः। निश्चित्यान्यतरोक्तौ तेन श्रोतुः श्रेयोवाप्तिफलमाह येनेति। तदेकमित्यादिवाक्यस्याक्षरोत्थमर्थमुक्त्वा समुच्चयस्य शास्त्रार्थत्वाभावे तात्पर्यमाह यदि हीति। गुणभूतमपि इत्यादिना प्रधानभूतमपि चेति विवक्षितं न तूभयप्राप्त्यसम्भवमात्मनो मन्यमानस्यार्जुनस्यान्यतरविषया शुश्रूषा भविष्यति नेत्याह न हीति। यथोक्तभगवद्वचनाभावे द्वयप्राप्त्यसम्भवबुद्ध्या नान्यतरप्रार्थना सम्भवतीत्याह येनेति। न हि तथाविधं भगवद्वचनं भवतेष्टं भगवतः समुच्चयवादित्वाङ्गीकारादतस्तदभावाद्युक्तबुद्ध्या न युक्तान्यतरप्रार्थनेत्यर्थः ॥ २ ॥

स्वा॰ टी॰। ननु धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यत इत्यादिना कर्मणोऽपि श्रेष्ठत्वमुक्तमेवेत्याशङ्क्याह व्यामिश्रेणेति। क्वचित् कर्मप्रशंसा क्वचिज्ज्ञानप्रशंसेत्येवं व्यामिश्रं सन्देहोत्पादकमिव यद्वाक्यं तेन मे मतिमुभयत्र दोलायितां कुर्वन् मोहयसीव परमकारुणिकस्य तव मोहकत्वं नास्त्येव तथापि भ्रान्त्या ममैवं भाति इतीवशब्देनोक्तं, अत उभयोर्मध्ये यद्भद्रं तदेकं निश्चित्य वदेति। यद्वा अहं इदमेव श्रेयःसाधनमिति निश्चित्य येनानुष्ठितेन श्रेयो मोक्षमहं प्राप्स्यामि तदेवैकं निश्चित्य वदेत्यर्थः ॥ २ ॥

## श्रीभगवानुवाच।

**लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयानघ।**
**ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्॥३॥**

प्रश्नानुरूपमेव प्रतिवचनं श्रीभगवानुवाच, लोकेऽस्मिन्निति। लोके अस्मिन् शास्त्रार्थानुष्ठानाधिकृतानां त्रैवर्णिकाणां द्विविधा द्विप्रकारा निष्ठा स्थितिरनुष्ठेयतात्पर्य्यं पुरा पूर्वं सर्गादौ प्रजाः सृष्ट्वा तासामभ्युदयनिःश्रेयसप्राप्तिसाधनं वेदार्थसंप्रदायं आविष्कुर्वता प्रोक्ता मया सर्वज्ञेन ईश्वरेण हे अनघ! अपाप! तत्र का सा द्विविधा निष्ठेत्याह ज्ञानेति। तत्र ज्ञानयोगेन ज्ञानमेव योगस्तेन सांख्यानामात्मविषयविवेकज्ञानवतां ब्रह्मचर्य्याश्रमादेव कृतसन्न्यासानां वेदान्तविज्ञानसुनिश्चितार्थानां परमहंसपरिव्राजकानां ब्रह्मण्येवावस्थितानां निष्ठा प्रोक्ता कर्म्मयोगेन कर्म्मैव योगः कर्म्मयोगस्तेन कर्म्मयोगेन योगिनां कर्म्मिणां निष्ठा प्रोक्तेत्यर्थः, यदि चैकेन पुरुषेणैकस्मै पुरुषार्थाय ज्ञानं कर्म्म च समुच्चित्यानुष्ठेयं भगवतेष्टमुक्तं वक्ष्यमाणं वा गीतासु वेदेषु चोक्तं कथमिहार्ज्जुनायोपसन्नाय प्रियाय विशिष्टभिन्नपुरुषकर्त्तृके एव ज्ञानकर्म्मनिष्ठे ब्रूयात्, यदि पुनरर्ज्जुनो ज्ञानं कर्म्म च द्वयं श्रुत्वा स्वयमेवानुष्ठास्यति अन्येषां तु भिन्नपुरुषानुष्ठेयतां वक्ष्यामीति मतं भगवतः कल्प्येत तदा रागद्वेषवानप्रमाणभूतो भगवान् कल्पितः स्यात्तच्चायुक्तं, तस्मात् कयापि युक्त्या न समुच्चयो ज्ञानकर्मणोः॥ ३॥

आ॰ टी॰ । समुच्चयविरोधितया प्रश्नं व्याख्याय तद्विरोधित्वेनैव प्रतिवचनमुत्थापयति प्रश्नेति । येयं व्यवहारभूमिरुपलभ्यते तत्र त्रैवर्णिकाः ज्ञानं कर्म वा शास्त्रीयमनुष्ठातुमधिक्रियन्ते तेषां द्विधा स्थितिर्मया प्रोक्तेति पूर्व्वार्द्धं योजयति लोकेऽस्मिन्निति । स्थितिमेव व्याकरोति अनुष्ठेयेति । पूर्वं प्रवचनप्रसङ्गं प्रदर्शयन् प्रकारं विशिनष्टि सर्गादाविति । प्रवचनस्यायथार्थत्वशङ्कां वारयति सर्वज्ञेनेति । अर्जुनस्य भगवदुपदेशश्रवणे योग्यत्वं सूचयति अनघेति । निर्द्धारणार्थे तत्रेति सप्तमी, ज्ञानं परमार्थवस्तुविषयं तदेव योगशब्दितं युज्यते अनेन ब्रह्मणेति व्युत्पत्तेस्तेन निष्ठेत्यनुवर्त्तते उक्तज्ञानोपायमुपदिशन् सांख्यशब्दार्थमाह आत्मेति । तेषामेव कर्मनिष्ठत्वं व्यावर्त्तयति ब्रह्मचर्य्येति । तेषां जपादिपारवश्येन श्रवणादिपराङ्मुखत्वं पराकरोति वेदान्तेति । उक्तविशेषणवतां मुख्यसंन्यासित्वेन फलावस्थत्वं दर्शयति परमहंसेति । कर्म वर्णाश्रमविहितं धर्माख्यं तदेव युज्यते तेनाभ्युदयेनेति योगस्तेन निष्ठा कर्मिणां प्रोक्तेत्यनुषङ्गं दर्शयन्नाह कर्मैवत्यादिना । एवं प्रतिवचनवाक्यस्यान्यथाक्षराणि व्याख्याय तस्यैव तात्पर्य्यार्थं कथयति यदि चेति । दृष्टस्यापि दुर्बोधत्वमाशङ्क्याह उक्तमिति । ज्ञानस्यापि मूलविकलतया विभ्रमत्वमाशङ्क्याह वेदेष्विति । तस्याशिष्यत्वबुद्ध्यान्यथाकथनमित्याशङ्क्याह उपसन्नायेति । तथापि तस्यौदासीन्यादन्यथोक्तिरित्याशङ्क्याह प्रियायेति । प्रतीति च भिन्नपुरुषकर्त्तृकं निष्ठाद्वयं तेन समुच्चयो भगवदभीष्टः शास्त्रार्थो न भवतीति शेषः । नन्वर्जुनस्य प्रेक्षापूर्वकारित्वाज्ज्ञानकर्मश्रवणानन्तरमुभयनिर्देशानुपपत्त्या समुच्चयानुष्ठानं सम्पत्स्यते तद्व्यतिरिक्तानान्तु ज्ञानकर्मणोर्भिन्नपुरुषानुष्ठेयत्वं श्रुत्वा प्रत्येकं तदनुष्ठानं भविष्यतीति भगवतो मतं कल्प्यते तस्यार्जुनेऽनुरागातिरेकादितरेषु च तदभावादिति तत्राह यदि पुनरिति । अप्रमाणभूतत्वमनाप्तत्वम् । न च भगवतो रागादिमत्त्वेनानाप्तत्वं युक्तं समं सर्वेषु भूतेषु तिष्ठन्तमित्यादिविरोधादित्याह तस्येति । निष्ठाद्वयस्य भिन्नपुरुषानुष्ठेयत्वनिर्देशफलमुपसंहरति तस्मादिति ॥३॥

स्वा० टी० । अत्रोत्तरं श्रीभगवानुवाच, लोकेऽस्मिन्निति । अयमर्थः यदि मया परस्परनिरपेक्षं मोक्षसाधनत्वेन कर्मज्ञानयोगरूपं निष्ठाद्वयमुक्तं स्यात्तर्हि द्वयोर्मध्ये यद्भद्रं स्यात्तदेकं वदेति त्वदीयः प्रश्नः सङ्गच्छते न तु मया तथोक्तं किन्तु द्वाभ्यामेकैव ब्रह्मनिष्ठोक्ता गुणप्रधानभूतयोस्तयोः स्वातन्त्र्यानुपपत्तेः एकस्या एव तु प्रकारभेदमात्रमधिकारिभेदेनोक्तमिति अस्मिन् शुद्धाशुद्धान्तःकरणतया द्विविधे लोकेऽधिकारिजने द्वे विधे प्रकारौ यस्याः सा द्विविधा निष्ठा मोक्षपरता पुरा पूर्वाध्याये मया सर्वज्ञेन प्रोक्ता स्पष्टमेवोक्ता । प्रकारद्वयमेव निर्दिशति सांख्यानां शुद्धान्तःकरणानां ज्ञानभूमिकारूढानां ज्ञानपरिपाकार्थं ज्ञानयोगेन ध्यानादिना निष्ठा ब्रह्मपरतोक्ता तानि सर्वाणि संयम्य युक्त आसीत मत्पर इत्यादिना सांख्यभूमिकामनारूढानान्तु अन्तःकरणशुद्धिद्वारा तदारोहार्थं तदुपायभूतकर्मयोगाधिकारिणां योगिनां कर्मयोगेन निष्ठोक्ता धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यत इत्यादिना, अत एव तव चित्तशुद्ध्यशुद्धिरूपावस्थाभेदेन द्विविधापि निष्ठोक्ता एषा तेऽभिहिता सांख्ये बुद्धियोगे त्विमां शृण्विति ॥ ३ ॥

**न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।**
**न च सन्न्यासनादेव सिद्धिं समधिगच्छति ॥ ४ ॥**

यदर्जुनेनोक्तं कर्मणो ज्यायस्त्वं बुद्धेः तच्च स्थितमनिराकरणात्तस्याश्च ज्ञाननिष्ठायाः संन्यासिनामेवानुष्ठेयत्वं भिन्नपुरुषानुष्ठेयत्ववचनाच्च भगवत एवमेवानुमतमिति गम्यते माञ्च बन्धकारणे कर्मण्येव नियोजयसीति विषण्णमनसं अर्जुनं कर्म नारभे इत्येवं मन्वानमालक्ष्याह भगवन्! न कर्मणामनारम्भादिति । अथ वा ज्ञानकर्मनिष्ठयोः परस्परविरोधादेकेन पुरुषेण युगपदनुष्ठातुमशक्यत्वे सतीतरेतरानपेक्षयोरेव पुरुषार्थहेतुत्वे प्राप्ते कर्मनिष्ठायाः ज्ञाननिष्ठा-

प्राप्तिहेतुत्वेन पुरुषार्थहेतुत्वं न स्वातन्त्र्येण ज्ञाननिष्ठा तु कर्मनिष्ठोपायलब्धात्मिका सती स्वातन्त्र्येण पुरुषार्थ हेतुरन्यानपेक्षेत्येतमर्थं दर्शयिष्यन्नाह भगवान् न कर्मणेति। न कर्मणामनारम्भादप्रारम्भात् कर्मणां क्रियाणां यज्ञादीनामिह जन्मनि जन्मान्तरे वानुष्ठितानामुपात्त-दुरितक्षयहेतुत्वेन सत्त्वशुद्धिकारणानां तत्कारणत्वेन च ज्ञानोत्पत्तिद्वारेण ज्ञाननिष्ठाहेतूनां ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः यथादर्शतलप्रख्ये पश्यत्यात्मानमात्मनीत्यादि स्मरणादनारम्भादनुष्ठानात् नैष्कर्म्यं निष्कर्मभावं कर्मशून्यतां ज्ञानयोगेन निष्ठां निष्क्रियात्मस्वरूपेणैवावस्थानमिति यावत् पुरुषो नाश्नुते न प्राप्नोतीत्यर्थः

---

व्या॰ टी॰ । किमिति भगवता बुद्धेर्ज्यायस्त्वं ज्यायसी चेदित्यत्रोक्तमुपेक्षितमिति तत्राह यदर्जुनेनेति । किञ्च ज्ञाननिष्ठायां संन्यासिनामेवाधिकारो भगवतोऽभिप्रेतोऽन्यथा तदीयविभागवचनविरोधादिति विभागवचनसामर्थ्यसिद्धमर्थमाह तस्याश्चेति । तर्हि विभागवचनानुरोधादर्जुनस्यापि संन्यासपूर्विकायां ज्ञाननिष्ठायामेवाधिकारो भविष्यति नेत्याह माञ्चेति । बुद्धेर्ज्यायस्त्वमुपेत्यापीति चकारार्थः, अर्जुनमालक्ष्य भगवानाहेति सम्बन्धः । अन्तरेणापि कर्म्माणि श्रवणादिभिर्ज्ञानावाप्तिर्भविष्यतीति परबुद्धिमनुरुध्य विशिनष्टि कर्मेति । विभागवचनवशादसमुच्चयश्चेदुभयोरपि ज्ञानकर्मणोः स्वातन्त्र्येण पुरुषार्थहेतुत्वमन्यथा कर्मवत् ज्ञानमपि न स्वातन्त्र्येण पुरुषार्थं साधयेदित्याशङ्क्य सम्बन्धान्तरमाह अथ वेति । तर्हि ज्ञाननिष्ठापि कर्मनिष्ठावत् निष्ठात्वाविशेषान्न स्वातन्त्र्येण पुरुषार्थहेतुरिति समुच्चयसिद्धिरित्याशङ्क्याह ज्ञाननिष्ठा त्विति । न हि रज्जुतत्त्वज्ञानमुत्पन्नं फलसिद्धौ सहकारिसापेक्षमालक्ष्यते तथेदमपि चोत्पन्नं मोक्षाय नान्यदपेक्षते

कर्म्मणामनारम्भान्नैष्कर्म्यं नाश्नुत इति वचनात्तद्विपर्य्ययात् तेषामारम्भात् नैष्कर्म्यमश्नुत इति गम्यते, कस्मात् पुनः कारणात् कर्म्मणामनारम्भान्नैष्कर्म्यं नाश्नुत इत्युच्यते कर्म्मारम्भस्यैव नैष्कर्म्योपायत्वात् न ह्युपायमन्तरेणोपेयोत्पत्तिरस्ति कर्म्मयोगोपायत्वञ्च नैष्कर्म्यलक्षणस्य ज्ञानयोगस्य श्रुताविह च प्रतिपादनात् श्रुतौ तावत् प्रकृतस्यात्मलोकस्य वेद्यस्य वेदनोपायत्वेन तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेनेत्यादिना कर्म्मयोगस्य ज्ञानयोगोपायत्वं प्रतिपादितमिहापि च संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः

---

नटाह अन्येति। यस्य चैतत् कर्मेति श्रुताविव कर्मशब्दस्य क्रियमाणवस्तुविषयत्वमाशङ्क्य व्याचष्टे क्रियाणामिति। ताश्च नित्यनैमित्तिकत्वेन विभजते यज्ञादीनामिति। अस्मिन्नेव जन्मन्यनुष्ठितानां कर्म्मणां बुद्धिशुद्धिद्वारा ज्ञानकारणत्वे ब्रह्मचारिणां कुतो ज्ञानोत्पत्तिर्जन्मान्तरकृतानां कर्म्मणां वा तथात्वे गृहस्थादीनामैहिकानि कर्म्माणि न ज्ञानहेतवः स्युरित्याशङ्क्या नियमं दर्शयति इहेति। नेमानि सत्त्वशुद्धिकारणान्युपात्तदुरितप्रतिबन्धादित्याशङ्क्याह उपात्तेति। तर्हि तावतैव कृतार्थानां कुतो ज्ञाननिष्ठाहेतुत्वं तत्राह तत्कारणत्वेनेति। कर्म्मणां चित्तशुद्धिद्वारा ज्ञानहेतुत्वमानमाह ज्ञानमिति। अनारम्भशब्दस्योपक्रमविपरीतविषयत्वं व्यावर्त्तयति अननुष्ठानादिति। निष्कर्म्मणः संन्यासिनः कर्म्म ज्ञानं नैष्कर्म्म्यमिति व्याचष्टे नैष्कर्म्म्यमिति। कर्म्माभावावस्थां व्यवच्छिनत्ति ज्ञानयोगेनेति। तस्याः साधनपक्षपातित्वं व्यावर्त्तयति निष्क्रियेति। कर्म्मानुष्ठानोपायलभ्या ज्ञाननिष्ठा स्वतन्त्रा पुमर्थहेतुरिति प्रकृतार्थसमर्थव्यतिरेकवचनस्यान्वये पर्य्यवसानं मत्वा व्याचष्टे कर्म्मणामिति। तद्विपर्य्ययमेव व्याचष्टे तेषामिति। उक्तेऽर्थे हेतुं पृच्छति कस्मादिति। जिज्ञासितं हेतुमाह उच्यत इति। उपा-

योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये यज्ञो दानं तपश्चैव पावनानि मनीषिणामित्यादि प्रतिपादयिष्यति, ननु चाभयं सर्वभूतेभ्यो दत्त्वा नैष्कर्म्यमाचरेदित्यादौ कर्त्तव्यकर्मसंन्यासादपि नैष्कर्म्यं प्राप्तिं दर्शयति लोके च कर्मणामनारम्भान्नैष्कर्म्यमितिप्रसिद्धतरमतश्च नैष्कर्म्यार्थिनः किं कर्मारम्भेणेति प्राप्तमत आह न च संन्यसनादेवेति नापि संन्यसनादेव केवलात् कर्मपरित्यागमात्रादेव ज्ञानरहितात् सिद्धिं नैष्कर्म्यलक्षणां ज्ञानयोगेन निष्ठां समधिगच्छति न प्राप्नोति ॥ ४ ॥

---

यत्वेऽपि तदभावे कुतो न नैष्कर्म्यसिद्धिरित्याशङ्क्याह न कर्मेति । ज्ञानयोगं प्रति कर्मयोगस्य उपायत्वे श्रुतिस्मृती प्रमाणयति कर्मयोगेति । श्रौतमुपायोपेयत्वप्रतिपादनं प्रकटयति श्रुताविति । यत्तु गीताशास्त्रे कर्मयोगस्य ज्ञानयोगं प्रत्युपायत्वोपपादनं तदिदानीमुदाहरति इहापि चेति । न कर्मणामित्यादिना पूर्वार्द्धं व्याख्यायोत्तरार्द्धं व्याख्यातुमाशङ्कयति नन्विति । आदिशब्देन शान्तो दान्त उपरतस्तितिक्षुः संन्यासयोगाद्यतयः शुद्धसत्त्वा इत्यादि गृह्यते । तत्रैव लोकप्रसिद्धिमनुकूलयति लोके चेति । प्रसिद्धतरं यतो यतो निवर्त्तते ततस्ततो विमुच्यते निवर्त्तनाद्धि सर्वतो न वेत्ति दुःखमण्वपीत्यादिदर्शनादिति शेषः । लौकिकवैदिकप्रसिद्धिभ्यां सिद्धमर्थमाह अतश्चेति । तत्रोत्तरत्वेनोत्तरार्द्धमवतार्य्य व्याकरोति अत आहेत्यादिना । एवकारार्थमाह केवलादिति । तदेव स्पष्टयति कर्मेति । उक्तमेव नञमनुकृष्य क्रियापदेन सङ्गतिं दर्शयति न प्राप्नोतीति ॥ ४ ॥

स्वा॰ टी॰ । ततः सम्यक्चित्तशुद्ध्यर्थं ज्ञानोत्पत्तिपर्य्यन्तं वर्णाश्रमोचितानि कर्माणि कर्त्तव्यानि अन्यथा चित्तशुद्ध्यभावेन ज्ञानानुत्पत्तेरित्याह न कर्मणामिति । कर्मणां अनारम्भात् अननुष्ठानान्नैष्कर्म्यं

ज्ञानं नाश्नुते न प्राप्नोति। ननु चैतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्तीति श्रुत्या संन्यासस्य मोक्षाङ्गत्वश्रुतेः संन्यासादेव मोक्षो भविष्यति किं कर्मभिरित्याशङ्क्योक्तं न चेति। न च चित्तशुद्धिं विना कृतात् संन्यसनादेव ज्ञानशून्यात् सिद्धं मोक्षं समधिगच्छति प्राप्नोति ॥४॥

**न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्।**
**कार्य्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ५ ॥**

कस्मात् पुनः कारणात् कर्मसंन्यासमात्रादेव केवलात् ज्ञानरहितात् सिद्धिं नैष्कर्म्यलक्षणां पुरुषो नाधिगच्छतीति हेत्वाकाङ्क्षायामाह न हीति। न हि यस्मात् क्षणमपि कालं जातु कदाचित् कश्चित्तिष्ठत्यकर्मकृत् सन् कस्मात् कार्य्यते हि यस्मादवश एव कर्म सर्वः प्राणी प्रकृतिजैः प्रकृतितो जातैः सत्त्वरजस्तमोभिर्गुणैः अज्ञ इति वाक्यशेषो यतो वक्ष्यति गुणैर्यो न विचाल्यत इति सांख्यानां पृथक्करणादज्ञानामेव हि कर्मयोगो न ज्ञानिनां ज्ञानिनान्तु गुणैरचाल्यमानानां स्वतश्चलनाभावात् कर्मयोगो नोपपद्यते तथा च व्याख्यातं वेदाविनाशिनमित्यत्र ॥ ५ ॥

आ॰टी॰। अज्ञोऽयं बुभुत्सितं हेतुं प्रश्नपूर्वकं श्लोकेनोपपादयति कस्मादिति। कस्माच्च कर्मसंन्यासादेव सिद्धिमधिगच्छतीति पूर्वेण सम्बन्धः। कदाचित् क्षणमात्रमपि न कश्चिदकर्मकृत्तिष्ठतीत्यत्र हेतुत्वेनोत्तरार्द्धं व्याचष्टे कस्मादिति। सर्वशब्दात् ज्ञानवानपि गुणैरवशः सन् कर्म कार्य्यते ततश्च ज्ञानवतः संन्यासवचनमनवकाशं स्यादित्याशङ्क्याह अज्ञ इतीति। तमेव वाक्यशेषं वाक्यशेषावष्टम्भेन स्पष्टयति यत इति। आत्मज्ञानवतो गुणैरविचाल्यतया गुणातीतत्ववचनादज्ञस्यैव सत्त्वादिगुणैरिच्छाभेदेन कार्य्यकरणसङ्घातं प्रवर्त्तयद्भिरभिभूतस्याजितकार्य्यकरणसङ्घातस्य क्रियासु प्रवर्त्तमानत्वमित्यर्थः। ज्ञानयोगेनेत्यादिना उक्तन्यायाच्च वाक्यशेषोपप-

स्थितिरित्याह सांख्यानामिति। ज्ञानिनो गुणप्रयुक्तचलनाभावेऽपि स्वाभाविकचलनबलात् कर्म्मयोगो भविष्यतीत्याशङ्ग्याह ज्ञानिनां त्विति। प्रत्यगात्मनि स्वारसिकचलनासम्भवे प्रागुक्तं न्यायं स्मारयति नथा चेति ॥ ५ ॥

स्वा॰ टी॰। कर्मणान्तु संन्यासस्त्वनासक्तिमात्रं नतु स्वरूपेणाशक्यत्वादित्याह न हि कश्चिदिति। जातु कस्याञ्चिदप्यवस्थायां क्षणमात्रमपि कश्चिदपि ज्ञानी अज्ञानी वा अकर्मकृत् कर्म्माण्यकुर्व्वाणो न तिष्ठति। अत्र हेतुः प्रकृतिजैः स्वभावप्रभवैरागद्वेषादिभिर्गुणैः सर्व्वोऽपि जनः कर्म्म कार्य्यते कर्म्मणि प्रवर्त्त्यते अवशोऽस्वतन्त्रः सन् ॥ ५ ॥

## कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन्।
## इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते॥६

यस्त्वनात्मज्ञचोदितं कर्म नारभत इति तदसदेवेत्याह कर्मेन्द्रियाणीति। कर्मेन्द्रियाणि हस्तादीनि संयम्य संहृत्य य आस्ते तिष्ठति मनसा स्मरन्निन्द्रियार्थान् विषयान् विमूढात्मा विमूढान्तःकरणो मिथ्याचारो मृषाचारः पापाचारः स उच्यते ॥ ६ ॥

आ॰ टी॰। आत्मज्ञवदनात्मज्ञस्यापि तर्हि कर्म्माकुर्वतो न प्रत्यवायः शरीरेन्द्रियसङ्घातं नियन्तुमसमर्थस्य मुमुक्षोरपि संन्याससम्भवादित्याशङ्क्याह यस्त्विति। तस्य चोदिताकरणं तत्फलेन परास्मयते तदर्हति। मिथ्याचारत्वादिति भावः। मिथ्याचारतामेव वर्णयति कर्मेन्द्रियाणीति ॥ ६ ॥

स्वा॰ टी॰। अतोऽज्ञं कर्मत्यागिनं निन्दति कर्मेन्द्रियाणीति। वाक्पाण्यादीनि कर्मेन्द्रियाणि संयम्य निगृह्य यो मनसा भगवद्ध्यानच्छलेन इन्द्रियार्थान् विषयान् स्मरन्नास्तेऽविशुद्धतया मनसा आत्मनि स्थैर्य्याभावात् स मिथ्याचारः कपटाचारो दाम्भिक उच्यत इत्यर्थः ॥६ ॥

**यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ! ।**
**कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥७॥**

यस्त्विति । यस्तु पुनः कर्मण्यधिकृतोऽज्ञो बुद्धीन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ! कर्मेन्द्रियैर्वाक्पाण्यादिभिः, किमारभते इत्याह कर्मयोगमसक्तः सन् फलाभिसन्धिवर्जित स विशिष्यते इतरस्मान्मिथ्याचारात् ॥ ७ ॥

आ० टी० । अनात्मज्ञस्य चोदितमकुर्वतो जाग्रतो विषयान्तरदर्शनध्रौव्यात् मिथ्याचारस्तेन प्रत्यवायित्वमुक्त्वा विहितमनुतिष्ठतस्तस्यैव फलाभिलाषविकलस्य सदाचारत्वेन वैशिष्ट्यमाचष्टे यस्त्विन्द्रियाणीति । विहितमनुतिष्ठतो मूर्खात् कर्म त्यजतो वैशिष्ट्यमक्षरयोजनया स्फुटयति यस्तु पुनरिति ॥ ७ ॥

स्वा० टी० । एतद्विपरीतः कर्मकर्त्ता तु श्रेष्ठ इत्याह यस्त्विन्द्रियाणीति । यस्तु ज्ञानेन्द्रियाणि मनसा नियम्य ईश्वरपराणि कृत्वा कर्मेन्द्रियैः कर्मरूपं योगमुपायमारभतेऽनुतिष्ठति असक्तः फलाभिलाषरहितः स विशिष्यते विशिष्टो भवति चित्तशुद्ध्या ज्ञानवान् भवतीत्यर्थः ॥ ७ ॥

**नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।**
**शरीरयात्राऽपि च ते न प्रसिध्येदकर्मणः ॥८॥**

यत एवमतो नियतं नित्यं शास्त्रोपदिष्टं यो यस्मिन् कर्मण्यधिकृतः फलाय चाश्रुतं तन्नियतं कर्म तत् कुरु त्वं हे अर्जुन ! यतः कर्म ज्यायोऽधिकतरं फलतो हि यस्मादकर्मणोऽकरणादनारम्भात्, कथं शरीरयात्रा शरीरस्थितिरपि च ते तव न प्रसिध्येत् प्रसिद्धिं न गच्छेदकर्मणोऽकरणात् अतो दृष्टः कर्माकर्मणोर्विशेषो लोके ॥ ८ ॥

व्या॰ टी॰। कर्म्मानुष्ठायिनो वैशिष्ट्यमुपदिष्टमनूद्य तदनुष्ठानमधिकृतेन कर्त्तव्यमिति नियमयति यत इति। उक्तमेव हेतुं भगवदनुमतिकथनेन स्फुटयति कर्मेति। इतश्च त्वया कर्त्तव्यं कर्म्मेत्याह शरीरेति। तन्नियतं तस्याधिकृतस्येति सम्बन्धः। स्वर्गादिफले दर्शपूर्णमासादावधिकृतस्य तस्य तदपि नित्यं स्यादित्याशङ्क्य विशिनष्टि फलायेति। नित्यं कर्म्मेति नियमेन कर्त्तव्यमित्यत्र हेतुमाह यत इति। हि शब्दोपात्तमुक्तमेव हेतुमनुवदति यस्मादिति। करणस्याकरणाज्ज्यायस्त्वं प्रश्नपूर्वकं प्रकटयति कथमित्यादिना। सत्येव कर्मणि देहादिचेष्टाद्वारा शरीरं स्थातुं पारयति तदभावे जीवनमेव दुर्लभं भवेदिति फलितमाह अत इति॥ ८॥

स्वा॰ टी॰। नियतमिति। यस्मादेवं तस्मान्नियतं नित्यं कर्म सन्ध्योपासनादि कुरु हि यस्मादकर्मणः सर्वकर्मणोऽकरणात् सकाशात् कर्मकरणं ज्यायोऽधिकतरम्। अन्यथा अकर्मणः सर्वकर्मशून्यस्य तव शरीरनिर्वाहोऽपि न भवेत्॥ ८॥

**यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः।**
**तदर्थं कर्म कौन्तेय! मुक्तसङ्गः समाचर॥ ९॥**

यच्च मन्यसे बन्धार्थत्वात् कर्म न कर्त्तव्यमिति तदप्यसत् कथं यज्ञार्थादिति। यज्ञो वै विष्णुरिति श्रुतेर्यज्ञ ईश्वरस्तदर्थं यत् क्रियते तद्यज्ञार्थं कर्म तस्मात् कर्मणोऽन्यत्रानेन कर्मणा लोकोऽयमधिकृतः कर्मकृत् कर्मबन्धनः कर्म बन्धनं यस्य सोऽयं कर्मबन्धनो लोको न तु यज्ञार्थादतस्तदर्थं यज्ञार्थं कर्म कौन्तेय! मुक्तसङ्गः कर्मफलसङ्गवर्जितः सन् समाचर निर्वर्त्तय॥ ९॥

व्या॰टी॰। कर्मणा बध्यते जन्तुरिति स्मृतेर्बन्धार्थं कर्म तन्न श्रेयोऽर्थिना कर्त्तव्यमित्याशङ्कामनूद्य दूषयति यच्चेत्यादिना। कर्म्माधिकृतस्य तदक-

रणमयुक्तमिति प्रतिज्ञातं प्रश्नपूर्वकं विवृणोति कथमित्यादिना। कथा-सक्तिमन्तरेण यज्ञार्थं कर्म कुर्वाणस्य बन्धाभावात् तादर्थ्येन कर्म कर्त्त-व्यमित्याह तदर्थमिति। यज्ञार्थं कर्मेत्ययुक्तं न हि कर्मार्थमेव कर्मे-त्याशङ्क्य व्याचष्टे यज्ञो वै विष्णुरिति। कथं तर्हि कर्मणा बध्यते जन्तुरिति स्मृतिस्तत्राह तस्मादिति। ईश्वरार्पणबुद्ध्या क्रतस्य कर्मणो बन्धार्थत्वाभावे फलितमाह अत इति ॥ ९ ॥

स्वा॰ टी॰। सांख्यास्तु सर्वमपि कर्म बन्धकत्वान्न कार्यमित्याहु-स्तन्निराकुर्वन्नाह यज्ञार्थादिति। यज्ञो वै विष्णुरिति श्रुतेः, तदाराध-नार्थात् कर्मणोऽन्यत्र तदेकं विना लोकोऽयं कर्मबन्धनः कर्मभिर्बध्यते न त्वीश्वराराधनार्थेन कर्मणा अतस्तदर्थं विष्णुप्रीत्यर्थं मुक्तसङ्गो निष्कामः सन् कर्म समाचर ॥ ९ ॥

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥१० ॥

इतश्चाधिकृतेन कर्म कर्त्तव्यं सहेति। सह यज्ञा यज्ञ-सहिताः प्रजास्त्रयोवर्णास्ता सृष्ट्वोत्पाद्य पुरा पूर्वं सर्गादा-ववाचोक्तवान् प्रजापतिः प्रजानां स्रष्टा अनेन यज्ञेन प्रस-विष्यध्वं प्रसवो वृद्धिरुत्पत्तिस्तां कुरुध्वमेष वो यज्ञः युष्माक-मस्तु भवतु इष्टकामधुक् इष्टानभिप्रेतान् कामान् फलवि-शेषान् दोग्धीतीष्टकामधुक् ॥ १० ॥

आ॰ टी॰। नित्यस्य कर्मणो नैमित्तिकसहितस्याधिकृतेन कर्त्तव्यत्वे हेत्वन्तरपरत्वेनानन्तरश्लोकमवतारयति इतश्चेति। कथं पुनरनेन यज्ञेन वृद्धिरस्माभिः शक्या कर्त्तुमित्याशङ्क्याह एष इति ॥ १० ॥

स्वा॰ टी॰। प्रजापतिवचनादपि कर्मकर्त्तैव श्रेष्ठ इत्याह सह-यज्ञा इति चतुर्भिः। यज्ञेन सह वर्त्तन्त इति सहयज्ञा यज्ञाधिकृता ब्राह्मणाद्याः प्रजाः पुरा सर्गादौ सृष्ट्वेदमुवाच ब्रह्मा अनेन यज्ञेन

प्रसविष्यध्वं प्रसवो वृद्धिः उत्तरोत्तरामतिवृद्धिं लभध्वमित्यर्थः, तत्र हेतुः एष यज्ञो वो युष्माकमिष्टकामधुक् इष्टान् कामान् दोग्धीति तथा अभीष्टभोगप्रदोऽस्त्वित्यर्थः, अत्र च यज्ञपदमावश्यककर्मोपलक्षणार्थं, काम्यकर्मप्रशंसा तु प्रकरणेऽसङ्गतापि सामान्यतोऽकर्मणः कर्म श्रेष्ठमित्येतदर्थमित्यदोषः ॥ १० ॥

**देवान् भावयतानेन ते देवा भावयन्तु वः।**
**परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ ११ ॥**

कथं देवानिति। देवानिन्द्रादीन् भावयत वर्द्धयत अनेन यज्ञेन ते देवा भावयन्तु आप्याययन्तु वृष्ट्यादिना वो युष्मानेवं परस्परमन्योन्यं भावयतः श्रेयःपरमपि मोक्षलक्षणं ज्ञानप्राप्तिं क्रमेणावाप्स्यथ स्वर्गं वा परं श्रेयो वावाप्स्यथ ॥ ११ ॥

व्या०टी०। कथं पुनरभीष्टफलविशेषहेतुत्वं यज्ञस्य विज्ञायते न हि देवताप्रसादादृते स्वर्गादिरभ्युदयो लभ्यते नापि सम्यग्दर्शनमन्तरेण निःश्रेयसं सेद्धुं पारयतीति शङ्कते कथमिति। तत्र श्लोकेनोत्तरमाह देवानिति। मुमुक्षुत्वबुभुक्षुत्वविभागेन श्रेयसि विकल्पः ॥ ११ ॥

स्वा० टी०। कथमिष्टकामदोग्धा यज्ञो भवेदित्यत्राह देवानिति। अनेन यज्ञेन यूयं देवान् भावयत हविर्भागैः संवर्द्धयत ते च देवा वो युष्मान् संवर्द्धयन्तु वृष्ट्यादिनाऽन्नोत्पत्तिद्वारेण, एवमन्योन्यं संवर्द्धयन्तो देवाश्च यूयञ्च परस्परं श्रेयोऽभीष्टमर्थं प्राप्स्यथ ॥ ११ ॥

**इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः।**
**तैर्दत्तान प्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः॥१२॥**

किञ्च इष्टान् भोगानिति। इष्टानभिप्रेतान् भोगान् हि वो युष्मभ्यं देवा दास्यन्ते वितरिष्यन्ति स्त्रीपशुपुत्रा-

दीन् यज्ञभाविता यज्ञैर्वर्द्धितास्तोषिता इत्यर्थः, तैर्देवैर्दत्तान् भोगानप्रदायादत्त्वा आनृण्यमकृत्वेत्यर्थः एभ्यो देवेभ्यो यो भुङ्क्ते स्वदेहेन्द्रियाण्येव तर्पयन्ति स्तेन एव तस्कर एव स देवादिस्वापहारी ॥ १२ ॥

आ० टी० । इतश्चाधिकृतेन कर्म कर्त्तव्यमित्याह किञ्चेति । कथमस्माभिर्भाविताः सन्तो देवा भावयिष्यन्ति अस्मानिति तदाह इष्टानिति । यज्ञानुष्ठानेन पूर्वोक्तरीत्या स्वर्गापवर्गयोर्भावेऽपि कथं स्त्रीपशुपुत्रादिर्सिद्धिरित्याशङ्क्य पूर्वार्द्धं व्याकरोति इष्टानभिप्रेतानिति । पश्वादिभिश्च यज्ञानुष्ठानद्वारा भोगा निवर्त्तनीयोऽन्यथा प्रत्यवायप्रसङ्गादित्युत्तरार्द्धं व्याचष्टे तैरिति । आनृण्यमकृत्वेत्ययमर्थः, देवानामृषीणां पितॄणाञ्च यज्ञेन ब्रह्मचर्य्येण प्रजया च सन्तोषमनापाद्य स्वकीयं कार्य्यकारणसंघातमेव पोष्टुं भुञ्जानस्तस्करो भवतीति ॥ १२ ॥

स्वा० टी० । एतदेव स्पष्टीकुर्वन् कर्म्माकरणे दोषमाह इष्टानिति । यज्ञैर्भाविता देवा वृष्ट्यादिद्वारेण वो युष्मभ्यं भोगान् दास्यन्ति हि अतो देवैर्दत्तानन्नादीनेभ्यो देवेभ्यः पञ्चयज्ञादिभिरदत्त्वा यो भुङ्क्ते स तु चौर एव ज्ञेयः ॥ १२ ॥

**यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्विषैः ।**
**भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥ १३**

ये पुनः देवयज्ञादीन्निर्वर्त्त्य तच्छिष्टमशनममृताख्यमशितुं शीलं येषां ते यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्विषैः सर्वैः पापैश्चुल्ल्यादिपञ्चसूनाकृतैः प्रमादकृतहिंसादिजनितैश्चान्यैर्ये त्वात्मम्भरयो भुञ्जते ते त्वघं पापं स्वयमपि पापाः ये पचन्ति पाकं निर्वर्त्तयन्ति आत्मकारणादात्महेतोः ॥ १३ ॥

आ० टी०। देवादिभ्यः संविभागमकृत्वा भुञ्जानानां प्रत्यवायित्वमुक्त्वा तदन्येषां सर्वदोषराहित्यं दर्शयति यज्ञेति पुनरिति। यज्ञशिष्टाशिनो ये पुनस्ते तादृशाः सन्तः सर्वकिल्बिषैर्मुच्यन्त इति योजना। तैर्दत्तानित्यादिनोक्तं निगमयति भुञ्जत इति। देवयज्ञादीनित्यादिशब्देन पितृयज्ञो मनुष्ययज्ञो भूतयज्ञो ब्रह्मयज्ञश्चेति चत्वारो यज्ञाः गृह्यन्ते, चुल्लीशब्देन पिठरधारणाद्यर्थक्रियां कुर्वतो विन्यासविशेषवन्तस्त्रयो पाषाणो विवक्ष्यन्ते आदिशब्देन कण्डनी पेषणी मार्ज्जन्युदककुम्भश्चेत्येते हिंसाहेतवो गृहीतास्तान्येतानि पञ्चप्राणिनां सूनास्थानानि हिंसाकारणानि तत्प्रयुक्तैः सर्वैरपि बुद्धिपूर्वकैर्दुरितैर्मुच्यन्त इति सम्बन्धः, प्रमादो विचारव्यतिरेकेणाबुद्धिपूर्वकमुपनतं पादपातादिकार्य्यं तेन प्राणिनां हिंसा सम्भाव्यते आदिशब्देनाशुचिसंस्पर्शादि गृहीतं, तदुत्थैश्च पापै र्महायज्ञकारिणो मुच्यन्ते, उक्तं हि० कण्डनं पेषणं चुल्ली उदकुम्भश्च मार्जनम्। पञ्च सूना गृहस्थस्य पञ्चयज्ञात् प्रणश्यतीति। पञ्च सूना गृहस्थस्य चुल्ली पेषण्युपस्करः कण्डनी चैव कुम्भश्च बध्यते यास्तु वाहयन्निति च, अस्यायमर्थः, या यथोक्ताः पञ्चसङ्ख्यका गृहस्थस्य सूनास्ता यो वाहयन्व्यापादयन् वर्त्तते तेन प्राणिनो बुद्धिपूर्वकञ्च बध्यन्ते तत्प्रयुक्तं सर्वमपि पापं महायज्ञानुष्ठानात् प्रणश्यतीति महायज्ञानुष्ठानस्तुत्यर्थम्। तदनुष्ठानविमुखान् निन्दति ये त्विति। आत्मम्भरित्वमेव स्फोरयति ये पचन्तीति। स्वदेहेन्द्रियपोषणार्थमेव पाकं कुर्वतां देवयज्ञादिपराङ्मुखानां पापभूयस्त्वं दर्शयति भुञ्जत इति। पाठक्रमस्त्वर्थक्रमादपबाधनीयः ॥ १२ ॥

भा० टी०। इतश्च यजन्त एव श्रेष्ठा नेतर इत्याह यज्ञशिष्टाशिन इति। वैश्वदेवादियज्ञावशिष्टं येऽश्नन्ति ते पञ्चसूनादिकृतैः सर्वैः किल्बिषैर्मुच्यन्ते, पञ्चसूनाश्च स्मृतावुक्ताः कण्डनी पेषणी चुल्ली उदकुम्भी च मार्जनी। पञ्च सूना गृहस्थस्य ताभिः स्वर्गं न गच्छति। ये त्वात्मनो भोजनार्थमेव पचन्ति न तु वैश्वदेवाद्यर्थं ते पापा दुराचारा अघमेव भुञ्जते ॥ १२ ॥

**अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः।**
**यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः॥ १४॥**

इतश्चाधिकृतेन कर्म कर्त्तव्यं जगच्चक्रप्रवृत्तिहेतुर्हि कर्म कथमित्युच्यते अन्नाद्भवन्तीति। अन्नाद्भुक्ताल्लोहित-रेतःपरिणतात् प्रत्यक्षं भवन्ति जायन्ते भूतानि पर्जन्याद्-वृष्टेरन्नस्य सम्भवः अन्नसम्भवः यज्ञाद्भवति पर्जन्यः अग्नौ प्राहिताहुतिः सम्यगादित्यमुपतिष्ठते आदित्याज्जायते वृष्टि-र्वृष्टेरन्नं ततः प्रजा इति यज्ञोऽपूर्वं स च यज्ञः कर्मसमु-द्भवः ऋत्विग्यजमानयोश्च व्यापारः कर्म ततः समुद्भवो यस्य यज्ञस्यापूर्वस्य स यज्ञः कर्मसमुद्भवः॥ १४॥

आ० टी०। देवयज्ञादिकं कर्माधिकृतेन कर्त्तव्यमित्यत्र हेत्वन्तरमितः शब्दोपात्तमेव दर्शयति जगदिति। ननु भुक्तमन्नं रेतोलोहितपरिणति-क्रमेण प्रजारूपेण जायते तस्माच्च वृष्टिसम्भवं प्रत्यक्षदृष्टं तत् कथं कर्मणो जगच्चक्रप्रवर्त्तकत्वमिति शङ्कते कथमिति। पारम्पर्येण कर्मणस्तद्धे-तुत्वं साधयति उच्यत इति। उक्तेऽर्थे स्मृत्यन्तरं संवादयति अग्ना-विति। तत्र हि देवताभिध्यानपूर्वकं तदुद्देशेन प्राहिताहुतिरपूर्वतां गता रश्मिद्वारेणादित्यमारुह्य वृष्ट्यात्मना पृथिवीं प्राप्य व्रीहियवाद्यन्न-भावमापद्य संस्कृतो भूत्वा शुक्रशोणितरूपेण परिणता प्रजाभावं प्राप्नो-तीत्यर्थः। यज्ञः कर्मसमुद्भव इत्ययुक्तं स्वस्यैव स्वोद्भवे कारणत्वायोगा-दित्याशङ्क्याह ऋत्विगिति। द्रव्यदेवतयोः संपादकश्चकारः॥ १४॥

श्रा० टी०। जगच्चक्रप्रवृत्तिहेतुत्वादपि कर्म कर्त्तव्यमित्याह अन्नादिति त्रिभिः। अन्नाच्छुक्रशोणितरूपेण परिणताद्भूतान्युद्भवन्ति अन्नस्य च सम्भवः पर्जन्याद्वृष्टेः, स च पर्जन्यो यज्ञाद्भवति, स च यज्ञः कर्मसमुद्भवः कर्मणा यजमानादिव्यापारेण सम्यक् सम्पाद्यत इत्यर्थः,

अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते, आदित्याज्जायते वृष्टि-र्वृष्टेरन्नं ततः प्रजा इति श्रुतेः ॥ १४ ॥

**कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।**
**तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥१५॥**

तच्च एवं विधं कर्म कुतो जातमित्याह कर्मेति । तच्च कर्म ब्रह्मोद्भवं ब्रह्म वेद स उद्भवो यस्य तत कर्म ब्रह्मोद्भवं विद्धि विजानीहि ब्रह्म पुनर्वेदाख्यमक्षरसमुद्भवं अक्षरं ब्रह्म परमात्मा समुद्भवो यस्य तदक्षरसमुद्भवं ब्रह्म वेद इत्यर्थः, यस्मात् साक्षात्परमात्माख्यादक्षरात्तत्पुरुषनिश्वासवत् समुद्भवं ब्रह्म तस्मात् सर्वार्थप्रकाशकत्वात् सर्वगतमपि सत् नित्यं सदा यज्ञविधिप्रधानत्वाद्यज्ञे प्रतिष्ठितम् ॥ १५ ॥

आ० टी० । यदपूर्वश्लोकेन कर्मोक्तं तत् किं चैत्यवन्दनादि किं वाग्निहोत्रादि इति सन्देहानं प्रत्याह कर्मेति । किमिति कर्मणो ब्रह्मो-द्भवत्वमुच्यते सर्वस्य तदुद्भवत्वाविशेषादित्याशङ्क्याह ब्रह्म वेद इति । ब्रह्म तर्हि वेदाख्यमनादि नित्यमिति तत्राह ब्रह्म पुनरिति । अक्षरात्मनो वेदस्य पुनरक्षरेभ्यः सकाशादेव समुद्भवो न सम्भवतीत्याशङ्क्याह अक्षर-मिति । ब्रह्मेत्यक्षरमेवोक्तं, तत् कथं तस्मादेवोद्भवतीत्याशङ्क्य ब्रह्म-शब्दार्थमुक्तमेव स्मारयति ब्रह्म वेद इति । ननु ब्रह्मप्रभवितस्य वेदस्यापि पौरुषेयत्वात् प्रामाण्यसन्देहात् कथं तदुक्तमग्निहोत्रादिकं कर्म निर्द्धा-रयितुं शक्यते तत्राह यस्मादिति । कथं तर्हि तस्य यज्ञे प्रतिष्ठितत्वं सर्वगतत्वे विशेषायोगादित्याशङ्क्याह सर्वगतमपीति ॥ १५ ॥

स्वा०टी० । तथा कर्मेति । तच्च यजमानादिव्यापाररूपं कर्म ब्रह्मोद्भवं विद्धि ब्रह्म वेदस्तस्मात् प्रवृत्तं जानीहि, तच्च वेदाख्यं ब्रह्म अक्षरात् पर-मात्मनः समुद्भूतं जानीहि, अस्य महतो भूतस्य निश्वसितमेतदृग्वेदो यजुर्वेदः सामवेद इति श्रुतेः, यत एवमक्षरादेव यज्ञप्रवृत्तेरत्यन्तमभितो

यस्मात्तस्मात् सर्वगतमप्यक्षरं ब्रह्म नित्यं सर्वदा यज्ञे प्रतिष्ठितं यज्ञेनो-पायभूतेन प्राप्यत इति यज्ञे प्रतिष्ठितमुच्यत इति तद्यमस्या यदा लक्ष्मी-रितिवत् । यद्वा यस्माज्जगच्चक्रस्य मूलं कर्म तस्मात् सर्वगतं मन्त्रार्थ-वादैः सर्वेषु भूतार्थाख्यानादिषु गतं स्थितमपि वेदाख्यं ब्रह्म सर्वदा यज्ञे तात्पर्य्येण प्रतिष्ठितं अतो यज्ञादि कर्म कर्त्तव्यमित्यर्थः ॥ १५ ॥

**एवं प्रवर्त्तितं चक्रं नानुवर्त्तयतीह यः ।**
**अघायुरिन्द्रियारामो मोघं पार्थ ! स जीवति॥१६॥**

एवमिति । एवमीश्वरेण वेदयज्ञपूर्वकं जगच्चक्रं प्रवर्त्तितं नानुवर्त्तयतीह लोके यः कर्मण्यधिकृतः सन्नघायु-रघं पापमायुर्जीवनं यस्य सोऽघायुः पापजीवन इति यावत् इन्द्रियाराम इन्द्रियैरारमणमाक्रीड़ा विषयेषु यस्य स इन्द्रियारामो मोघं वृथा हे पार्थ ! स जीवति तस्माद-ज्ञेनाधिकृतेन कर्त्तव्यमेव कर्मेति प्रकरणार्थः, प्रागात्मज्ञा-ननिष्ठायोग्यताप्राप्तेस्तादर्थ्येन कर्मयोगानुष्ठानमधिकृते-नानात्मज्ञेन कर्त्तव्यमित्येतत् न कर्मणामनारम्भादित्यत आरभ्य शरीरयात्रापि च तेन प्रसिध्येदकर्मण इत्येवम-न्तेन प्रतिपाद्य यज्ञार्थात् कर्मणोऽन्यत्रेत्यादिना मोघं पार्थ! स जीवतीत्येवमन्तेनापि ग्रन्थेन प्रासङ्गिकमधिकृतस्याना-त्मविदः कर्मानुष्ठाने बहुकारणमुक्तं तदकरणे च दोष-संकीर्त्तनं कृतम् ॥ १६ ॥

आ०टी० । अधिकृतेनाध्ययनादिद्वारा जगच्चक्रमनुवर्त्तनीयमन्यथेश्वरा-ज्ञातिलङ्घिनस्तस्य प्रत्यवायः स्यादित्याह एवमिति । न कर्मणामनारम्भा-दित्यादिनोक्तमुपसंहरति तस्मादिति । जगच्चक्रस्य प्रागुक्तप्रकारेणानु-वर्त्तने वृथा जीवनमघसाधनं यस्मात्तस्माज्जीवता नियतं कर्म कर्त्तव्य-

मित्यर्थः। यद्यधिकृतेन कर्त्तव्यमेव कर्म तर्हि किमित्यनेनेति विधियते ज्ञाननिष्ठेनापि तत् कर्त्तव्यमेवाधिकृतत्वाविशेषादित्याशङ्क्य पूर्वोक्तमनुवदति प्रागिति। न हि ज्ञानकर्म्मणोर्विरोधात् ज्ञाननिष्ठेन कर्म्म कर्त्तुं शक्यते तथा चानात्मज्ञेनैव चित्तशुद्ध्यादिपरम्परया ज्ञानार्थं कर्म्मानुष्ठेयमिति प्रतिपादितमित्यर्थः। तर्हि यज्ञार्थादित्यादि किमर्थं न हि तत्र ज्ञाननिष्ठा प्रतिपाद्यते कर्मनिष्ठा तु पूर्वमेवोक्तत्वात्तत्र वक्तव्येत्याशङ्क्य वृत्तमर्थान्तरमनुवदति प्रतिपाद्येति। प्रासङ्गिकमपास्य कर्मकर्त्तव्यतोक्तिप्रसङ्गागतमिति यावत्, बहुकारणमीश्वरप्रसादो देवताप्रीतिरित्यादिदोषसंकीर्त्तनं तैर्दत्ता न प्रदायेत्यादि ॥ १६ ॥

स्वा० टी०। यस्मादेवं परमेश्वरेणैव भूतानां पुरुषार्थसिद्धये कर्म्मादिचक्रं प्रवर्त्तितं तस्मात्तदकुर्वतो वृथैव जीवितमित्याह एवमिति। परमेश्वराक्यभूताद्वेदाख्यब्रह्मणः पुरुषाणां कर्म्मणि प्रवृत्तिस्ततः कर्म्मनिष्पत्तिस्ततः पर्जन्यस्ततोऽन्नं ततो भूतानि भूतानां पुनस्तथैव कर्म्मप्रवृत्तिरित्येवं प्रवर्त्तितं चक्रं यो नानुवर्त्तयति नानुतिष्ठति अघं पापरूपमायुर्यस्य सः, यत इन्द्रियैर्विषयेष्वेवारमति न त्वीश्वराराधनार्थे कर्म्मणि अतो मोघं व्यर्थं स जीवति ॥ १६ ॥

## यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः।
## आत्मन्येव च सन्तुष्टस्तस्य कार्य्यं न विद्यते ॥१७॥

एवं स्थिते किमेवं प्रवर्त्तितं चक्रं सर्व्वेणानुवर्त्तनीयमाहोस्वित् पूर्व्वोक्तकर्मयोगानुष्ठानोपायप्राप्यामात्मविदो ज्ञानयोगेनैव निष्ठामात्मविद्भिः सांख्यैरनुष्ठेयप्राप्तेनैवेत्येवमर्थमर्जुनस्य प्रश्नमाशङ्क्य स्वयमेव वा शास्त्रार्थस्य विवेकप्रतिपत्त्यर्थमेव चेतमात्मानं विदित्वा निवृत्तमिथ्याज्ञानाः सन्तो ब्राह्मणा मिथ्याज्ञानवद्भिरवश्यं कर्त्तव्येभ्यः पुत्रैषणादिभ्यो व्युत्थायाथ भिक्षाचर्य्यं शरीरस्थितिमात्रप्रयुक्तं

चरन्ति न तेषामात्मज्ञाननिष्ठाव्यतिरेकेणान्यकार्य्यमस्ति इत्येवं मुख्यर्थमिह गीताशास्त्रे प्रतिपादयिषितमाविष्कुर्वन्नाह भगवान् यस्त्विति। यस्तु सांख्य आत्मज्ञाननिष्ठ आत्मरतिः आत्मनि एव रतिर्न विषयेषु यस्य स आत्मरतिरेव स्याद्भवेत् आत्मतृप्तश्च आत्मनैव तृप्तो नान्नरसादिना स मानवो मनुष्यः संन्यासी आत्मन्येव च सन्तुष्टः सन्तोषो हि बाह्यार्थलाभेन सर्वस्य भवति तमनपेक्ष्यात्मन्येव च सन्तुष्टः सर्वतो विगततृष्ण इत्येतत् य ईदृश आत्मवित्तस्य कार्य्यं करणीयं न विद्यते नास्तीत्यर्थः ॥१७॥

आ॰टी॰। उक्तमर्थमेवं विभज्यानुवादानन्तरज्ञो क्रमाशङ्कोत्तरत्वेनावतारयति एवमिति। अर्जुनस्य पश्चमित्येवमर्थमाशङ्काह भगवानिति सम्बन्धः। नन्वेषा शङ्का नानाकाममासादयत्यनात्मज्ञेन कर्त्तव्यं कर्मेति वस्तुनो विशेषितत्वादित्याशङ्काह स्वयमेवेति। किमर्थं मुख्यं स्वयमेव भगवानत्र प्रतिपादयति इत्याशङ्काह शास्त्रार्थस्येति। गीताशास्त्रस्य सर्वव्यासं ज्ञानमेव मुक्तिसाधनमन्यो नार्थान्तरमिति विवेकार्थमिह मुख्यं संक्षिपति कीर्त्तयतीत्यर्थः। तमेव मुख्यं संक्षिपति एवमिति। विद्वत्स्वेदात्मवेदनमनर्थकं तर्हि व्युत्थानादौत्याशङ्काह प्रतिकर्विज्ञानफलमाह निवृत्तेति। नाह्मणग्रहणं तेषामेव व्युत्थाने मुख्यमधिकारित्वमिति ज्ञापनार्थम्। कर्मात्मकत्वादेषणानां ताभ्यो व्युत्थानं कर्मणां स्वाभाविकत्वादविधित्सितमित्याशङ्काह भिक्षेति। भिक्षाचर्यं चरन्तीति वचनं व्युत्थानविरुद्धमित्याशङ्काह शरीरेति। तर्हि तद्वदेव तेषामग्निहोत्रादपि कर्त्तव्यमापद्येतेत्याशङ्का व्युत्थानस्याश्रमधर्मवदग्निहोत्रादेरनुष्ठापकभावान्नैवमित्याह न तेषामिति। यथोक्तं मुख्यर्थमस्मिन् गीताशास्त्रे पौर्व्वापर्य्येण पर्य्यालोच्यमाने प्रतिपादयितुमिष्टं प्रकटीकुर्वन् कर्त्तव्यमेव कर्म जीवतेति नियमे ज्ञानयोगेन सांख्यानामिति चोद्यपरिहारमुपदर्शयति इत्येवमिति। आत्मनिष्ठस्य विषयसङ्गराहित्य

इष्टं तद्नात्मत्वेन जिज्ञासुना कर्त्तव्यमिति मत्वाह यस्तु  सांख्य इति । किञ्च आत्मनस्य ज्ञानेनात्मनैव परितृप्तत्वाद्वाह्यपानादिना बाध्या तृप्ति-रिष्टा तेन विद्यार्थिना संन्यासिनापि नाह्नरवादावासक्तिर्युक्ता कर्त्तुं-मित्याह आत्मतृप्त इति । किञ्च आत्मविदः सर्वतो वैतृष्ण्यं इष्टं तद्नात्मविदा विद्यार्थिना कर्त्तव्यमित्याह आत्मन्येवेति । रतितृप्ति-सन्तोषाणां मोदप्रमोदानन्दवद्वान्तरभेदः, अथवा रतिर्विषयासक्तिः तृप्तिर्विषयविशेषसम्बन्धजं सुखं सन्तोषोऽभीष्टविषयमात्रलाभाधीनं सुख-सामान्यमिति भेदः । नन्वात्मरतेरात्मतृप्तस्यात्मन्येव सन्तुष्टस्यापि किञ्चित् कर्त्तव्यं सन्नये भविष्यतीति नेत्याह य इत्यत इति ॥ १७ ॥

स्वा॰ टी॰ । तदेवं न कर्म्मणामनारम्भादित्यादिना अज्ञस्यान्तः-करणशुद्ध्यर्थं कर्म्मयोगमुक्त्वा ज्ञानिनः कर्म्मानुपयोगमाह यस्त्विति द्वाभ्याम् । आत्मन्येव रतिः प्रीतिर्यस्य सः, ततश्चात्मन्येव तृप्तः स्वान-न्दानुभवेन निर्वृतः, अतएवात्मन्येव सन्तुष्टो भोगापेक्षारहितो यस्तस्य कर्त्तव्यं कर्म नास्तीति ॥ १७ ॥

**नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।**
**न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ १८ ॥**

किञ्च नैवेति । नैव तस्य परमात्मरतेः कृतेन कर्मणार्थः प्रयोजनमस्ति अस्तु तर्ह्यकृतेन अकरणेन प्रत्यवायाख्योऽनर्थो नाकृतेनेह लोके कश्चन कश्चिदपि प्रत्यवायप्राप्तिरूपः आत्म-हानिलक्षणो वा नैवास्ति न चास्य सर्वभूतेषु ब्रह्मादिस्था-वरान्तेषु कश्चिदर्थव्यपाश्रयः प्रयोजननिमित्तक्रियासाध्यो व्यपाश्रयः व्यपाश्रयणं आलम्बनं कञ्चिद्भूतविशेषमाश्रित्य न साध्यः कश्चिदर्थोऽस्ति येन तदर्था क्रियानुष्ठेया स्यात्त त्वं एत-स्मिन् सर्वतः संप्लुतोदकस्थानीये सम्यग्दर्शने वर्त्तसे ॥१८॥

स्वा॰टी॰। इतश्चात्मविदो न किञ्चित् कर्त्तव्यमित्याह किञ्चेति । अस्य दयनिः-

श्रेयसयोरन्यतरत् प्रयोजनं कृतेन सुकृतेनात्मविदो भविष्यतीत्याशङ्क्याह नैवेति । प्रत्यवायनिवृत्तये स्वरूपप्रच्युतिप्रत्याख्यानाय वा कर्म स्यादित्याशङ्क्याह नेत्यादिना । ब्रह्मादिषु स्थावरान्तेषु भूतेषु कश्चिद्भूत-विशेषमाश्रित्य कश्चिदर्थो विदुषः साध्यो भविष्यति तदर्थं तेन कर्त्तव्यं कर्मेत्याशङ्क्याह न चेति । तस्माद्यं पदमादत्ते नैवेति । तं व्याचष्टे तस्येति । आत्मविदः स्वर्गाद्यभ्युदयानर्थित्वं निःश्रेयसस्य च प्राप्तत्वाच्च कृतं कर्मार्थवदित्यर्थः । आत्मविदा चेत् कर्म न क्रियते तर्हि तेनाकृतेन तस्यानर्थो भविष्यतीति तत्प्रत्याख्यानार्थं तस्य कर्त्तव्यं कर्मेति शङ्कते तर्हीति । द्वितीयपादेनोत्तरमाह नेत्यादिना । अतो न तन्निवृत्त्यर्थं कृतमर्थवदिति शेषः । द्वितीयं भागं विभजते न चास्येति । व्यपाश्रयणमालम्बनं नेति सम्बन्धः । पदार्थमुक्त्वा वाक्यार्थमाह किञ्चिदिति । भूतविशेषमाश्रितस्यापि क्रियाद्वारा प्रयोजनप्रसवहेतुत्वमिति मत्वाह येनेति । तर्हि मयापि यथोक्तं तत्त्वमाश्रित्य त्याज्यमेव कर्मेत्यर्जुनस्य मतमाशङ्क्याह न त्वमिति ॥ १८ ॥

स्वा॰ टी॰ । तत्र हेतुमाह नैवेति । कृतेन कर्मणा तस्यार्थः पुण्यं नैवास्ति न चाकृतेन कश्चन कोऽपि प्रत्यवायोऽस्ति निरहङ्कारत्वेन विधिनिषेधातीतत्वात् । तथापि तद्धैषां न प्रियं यदेतन्मनुष्या विदुरिति श्रुतेर्मोक्षे देवकृतविघ्नसम्भवात्तत्परिहारार्थं कर्मभिर्देवाः सेव्या इत्याशङ्क्योक्तं सर्वभूतेषु ब्रह्मादिस्थावरान्तेषु कश्चिदप्यर्थव्यपाश्रयः आश्रय एव व्यपाश्रयः अर्थे मोक्षे आश्रयणीयोऽस्य नास्तीत्यर्थः, विघ्नाभावस्य श्रुत्यैवोक्तत्वात्, तथा च श्रुतिः । तस्य ह न देवाश्च नाभूत्या ईशते आत्मा ह्येषां स भवतीति, ह नेत्यव्ययमप्यर्थे, देवा अपि तस्यात्मतत्त्वज्ञस्य अभूत्यै ब्रह्मभावप्रतिबन्धाय नेशते न शक्नुवन्तीति श्रुतेरर्थः । देवकृतास्तु विघ्नाः सम्यग्ज्ञानोत्पत्तेः प्रागेव यदेतद्ब्रह्म मनुष्या विदुस्तदेषां देवानां न प्रियमिति श्रुत्या ब्रह्मज्ञानस्यैवाप्रियत्वोक्त्या तत्रैव विघ्नकर्तृत्वस्य सूचितत्वात् ॥ १८ ॥

**तस्मादसक्तः सततं कार्य्यं कर्म्म समाचर।**
**असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः ॥१९॥**

यत एवं तस्मादिति। तस्मादसक्तः संसर्गवर्जितः सततं सर्वदा कार्य्यं कर्त्तव्यं नित्यं कर्म समाचर निर्व्वर्त्तय असक्तो हि यस्मात् समाचरन्नीश्वरार्थं कर्म कुर्वन् परमाप्नोति पूरुषः मोक्षमाप्नोति पुरुषः सत्त्वशुद्धिद्वारेणेत्यर्थः ॥ १९ ॥

व्या० टी०। सम्यग्ज्ञाननिष्ठत्वाभावे कर्म्मानुष्ठानमावश्यकमित्याह यत इति। तस्मात् ज्ञाननिष्ठाराहित्यादिति यावत्। मोक्षमेवापेक्षमाणस्य कथं कर्म्मणि फलान्तरवति नियोगः स्यादित्याशङ्क्याह असक्तो हीति ॥ १९ ॥

स्वा० टी०। यस्मादेवंभूतस्य ज्ञानिन एव कर्म्मानुपयोगो नान्यस्य तस्मात्त्वं कर्म कुर्वित्याह तस्मादिति। असक्तः फलसङ्गरहितः सन् कार्य्यमवश्यकर्त्तव्यतया विहितं नित्यनैमित्तिकं कर्म्म सम्यगाचर हि यस्मादसक्तः कर्म्माचरन् पुरुषः परं मोक्षं चित्तशुद्धिद्वारा प्राप्नोति ॥१९॥

**कर्म्मणैव हि संसिद्धिमास्थिता जनकादयः।**
**लोकसंग्रहमेवापि संपश्यन् कर्त्तुमर्हसि ॥२०॥**

यस्माच्च कर्मणैवेति। कर्मणैव हि तस्मात् पूर्वे क्षत्रियाः विद्वांसः संसिद्धिं मोक्षं गन्तुमास्थिताः प्रवृत्ता जनकादयो जनकाश्वपतिप्रभृतयो यदि ते प्राप्तसम्यग्दर्शनास्ततो लोकसंग्रहार्थं प्रारब्धकर्म्मत्वात् कर्म्मणा सहैवासंन्यस्यैव कर्म संसिद्धिमास्थिता इत्यर्थः। अथाप्राप्तसम्यग्दर्शना जनकादयस्तदा कर्मणा सत्त्वशुद्धिसाधनभूतेन क्रमेण संसिद्धिमास्थिता इति व्याख्येयः श्लोकोऽयं मन्यते पूर्वैरपि जन-

कादिभिरप्यजानद्भिरिव कर्त्तव्यं कृतं कर्म तवता नावश्य- मन्येन कर्त्तव्यं सम्यग्दर्शनवता कृतार्थेनेति तथापि प्रारब्धकर्मायत्तस्त्वं लोकसंग्रहमेवापि लोकस्योन्मार्गप्रवृत्ति- निवारणं लोकसंग्रहस्तमेवापि प्रयोजनं संपश्यन् कर्त्तु- मर्हसि ॥ २० ॥

आ०टी०। यद्यपि जितेन्द्रियोऽपि विवेकी श्रवणादिभिरजस्रं ब्रह्मणि निष्ठातुं शक्नोति तथापि क्षत्रियेण त्वया विहितं कर्म न त्याज्यमित्याह कर्मणेति। तस्मात्त्वमपि कर्म कर्त्तुमर्हसीति सम्बन्धः। इतो- ऽपि त्वया विहितं कर्म कर्त्तव्यमित्याह लोकेति। पूर्वार्द्धं विभजते कर्मणैवेति। कथं जनकादीनां कर्मणा संसिद्धिप्राप्तिरुच्यते कर्मत्यजां हि सम्यग्दर्शनवतां प्रसिद्धा संसिद्धिरिति तत् किं जनका- दयोऽपि प्राप्तसम्यग्दर्शनाः स्युः उत अप्राप्तसम्यग्दर्शना भवेयुरिति विकल्प्य प्रथमं प्रत्याह यदीति। लोकसंग्रहार्थं कर्मणा सहैव संसिद्धिमास्थिता इति सम्बन्धः। कर्मणा सहैवेत्येतत् व्याकरोति असंन्यस्यैव कर्मेति। तत्र हेतुमाह प्रारब्धेति। जनकादीनां सत्यपि ज्ञानित्वे प्रारब्धकर्मवशात् कर्मापरित्यज्यैव लोकसंग्रहार्थं प्रवर्त्तमानानां ज्ञानमाहात्म्यादुपपन्ना संसिद्धिरित्यर्थः। द्वितीयमनूद्य पूर्वार्द्धेनोत्तरमाह अथेत्यादिना। द्वितीयार्द्धं व्यावर्त्त्यामाशङ्कामुत्थापयति अथेति। अनेनाकृतार्थेन कृतं कर्मेत्येतावता ज्ञानवता कृतकृत्येन न तत् कर्त्तव्यमित्युक्तमङ्गीकरोति तथापीति। तर्हि मयापि ज्ञानवता कृतार्थेन कर्म न कर्त्तव्यमित्याशङ्क्याऽर्जुनस्य कर्त्तव्यमेव कर्मेत्युत्तरार्द्धव्याख्यानेन कथयति प्रारब्धेति ॥ २० ॥

स्वा० टी०। अत्र सदाचारं प्रमाणयति कर्मणैवेति। कर्मणैव शुद्धसत्त्वाः सन्तः संसिद्धिं सम्यग्ज्ञानं प्राप्ता इत्यर्थः, यद्यपि त्वं सम्यग्ज्ञानिनमेवात्मानं मन्यसे तथापि कर्माचरणं भद्रमेवेत्याह लोकसं- ग्रहमित्यादि। लोकस्य संग्रहः स्वधर्मे प्रवर्त्तनं मया कर्मणि कृते

जनः सर्वोऽपि करिष्यति अन्यथा ज्ञानिदृष्टान्तेनाज्ञो निजधर्मं नित्यं कर्म त्यजन् पतेदित्येवं लोकरक्षणमपि तावत् प्रयोजनं पश्यन् कर्म कर्त्तुमेवार्हसि न त्यक्तुमित्यर्थः ॥ २० ॥

**यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।**
**स यत् प्रमाणं कुरुते लोकस्तदनुवर्त्तते ॥ २१ ॥**

लोकसंग्रहः किमर्थ उच्यते यद्यदिति । यद्यत् कर्म आचरति श्रेष्ठः प्रधानस्तत्तदेव कर्माचरति इतरो जनस्तदनुगतः किञ्च श्रेष्ठो यत् प्रमाणं कुरुते लौकिकं वैदिकं वा लोकस्तदनुवर्त्तते तदेव प्रमाणीकरोतीत्यर्थः ॥ २१ ॥

व्या० टी० । ज्ञानवता कृतार्थेन लोकसंग्रहार्थमपि न प्रवर्त्तितव्यमित्याशङ्कामनूद्य परिहरति लोकेत्यादिना । श्रुताध्ययनसम्पन्नत्वेनाभिमतो यद्यद्विहितं प्रतिषिद्धं वा कर्मानुतिष्ठति तत्तदेव प्राकृतो जनोऽनुवर्त्तते तेन विद्यावतापि लोकमर्यादास्थापनार्थं विहितं कर्त्तव्यमित्यर्थः । श्रेष्ठानुसारित्वमितरेषामाचारे दर्शयित्वा प्रतिपत्तावपि दर्शयति किञ्चेति ॥ २१ ॥

ख्या० टी० । कर्मकरणे लोकसंग्रहो यथा स्यात्तदाह यद्यदिति । इतरः प्राकृतोऽपि जनस्तत्तदेवाचरति स श्रेष्ठो जनः कर्मशास्त्रं तन्निवृत्तिशास्त्रं वा यत् प्रमाणं मन्यते तदेव लोकोऽप्यनुसरति ॥ २१ ॥

**न मे पार्थास्ति कर्त्तव्यं त्रिषु लोकेषु किञ्चन ।**
**नानवाप्तमवाप्तव्यं वर्त्त एव च कर्मणि ॥ २२ ॥**

यद्यत्र लोकसंग्रहकर्त्तव्यतायां विप्रतिपत्तिस्तर्हि मां किं न पश्यसि नेति । न मे मम पार्थ ! नास्ति न विद्यते कर्त्तव्यं त्रिष्वपि लोकेषु किञ्चन किञ्चिदपि कस्मात् अनवाप्तमप्राप्तमवाप्तव्यं प्रापणीयं तथापि वर्त्त एव च कर्मण्यहम् ॥ २२ ॥

आ॰टी॰। कृतार्थस्यापि लोकसंग्रहार्थं विहितं कर्म कर्त्तव्यमित्युक्त्वा तत्रैव भागवतमतमुदाहरणत्वेनोपन्यस्यति यदित्यादिना। अप्राप्तस्य प्राप्तये तत्रापि कर्त्तृत्वसम्भवात् न किञ्चिदपि विद्यते कर्त्तव्यमिति कथमुक्तमित्याशङ्क्याह नानवाप्तमिति। प्रतीकमुपादाय व्याख्यानद्वारा विद्यावतोऽपि कर्मप्रवृत्तिं सम्भावयति नेत्यादिना। अनयार्थं पुनर्नञोऽनुवादः। भगवतो मे नास्ति कर्त्तव्यमित्येतदाकाङ्क्षाद्वारा स्फोरयति कस्मादित्यादिना। प्रयोजनाभावे त्वयापि नानुष्ठेयं कर्मेत्याशङ्क्य लोकसंग्रहार्थं ममापि कर्मानुष्ठानमिति मत्वाह तथापीति ॥२२॥

स्वा॰ टी॰। अत्र चाहमेव दृष्टान्त इत्याह न मे इति त्रिभिः। हे पार्थ! मे कर्त्तव्यं नास्ति यतस्त्रिष्वपि लोकेष्वनवाप्तमप्राप्तं अवाप्तव्यं प्राप्यं नास्ति तथापि कर्मणि वर्त्त एव कर्म करोम्येवेत्यर्थः ॥ २२ ॥

# यदि ह्यहं न वर्त्तेयं जातु कर्मण्यतन्द्रितः।
# मम वर्त्मानुवर्त्तन्ते मनुष्याः पार्थ! सर्व्वशः॥२३॥

यदि हि पुनरहं न वर्त्तेयं जातु कदाचित् कर्मण्यतन्द्रितोऽनलसः सन् मम श्रेष्ठस्य सतो वर्त्म मार्गमनुवर्त्तन्ते मनुष्याः हे पार्थ! सर्वशः सर्वप्रकारैः॥ २३ ॥

आ॰टी॰। लोकसंग्रहोऽपि न ते कर्त्तव्यो विफलत्वादित्याशङ्क्याह यदि हीति ॥ २३ ॥

स्वा॰ टी॰। अकरणे लोकस्य नाशं दर्शयति यदि ह्यहमिति। जातु कदाचिदतन्द्रितोऽनलसः सन् यदि कर्मणि न वर्त्तेयं कर्म नानुतिष्ठेयं तर्हि ममैव वर्त्म मार्गं मनुष्या अनुवर्त्तन्तेऽनुवर्त्तेरन्नित्यर्थः ॥ २३ ॥

# उत्सीदेयुरिमे लोका न कुर्य्यां कर्म चेदहम्।
# सङ्करस्य च कर्त्ता स्यामुपहन्यामिमाः प्रजाः॥२४

तथा च को दोष इत्याह उत्सीदेयुर्विनश्येयुरिमे सर्वे लोकाः लोकस्थितिनिमित्तस्य कर्मणोऽभावात् न कुर्य्यां कर्म चेदहं किञ्च सङ्करस्य च कर्त्ता स्यां तेन कारणेनोपहन्यामिमाः प्रजाः प्रजानामनुग्रहाय प्रवृत्तस्तदुपहतिं उपहननं कुर्य्यामित्यर्थः।.ममेश्वरस्याननुरूपमापद्येत यदि पुनरहमिव त्वं कृतार्थबुद्धिरात्मविदन्यो वा तस्याप्यात्मनः कर्त्तव्याभावेऽपि परानुग्रह एव कर्त्तव्य इति॥ २४॥

आ॰टी॰। भोऽस्य तव मार्गानुवर्त्तित्वं मनुष्याणां सूचितमेवेत्याशङ्क्य दूषयति तथाचेत्यादिना। ईश्वरस्य कर्मण्यप्रवृत्तौ तदनुवर्त्तिनामपि कर्मानुपपत्तेरिति हेतुमाह लोकस्थितीति। इतश्चेश्वरेण कर्म कर्त्तव्यमित्याह किञ्चेति। यदि कर्म न कुर्य्यामिति शेषः। सङ्करकरणस्य कार्य्यं कथयति तेनेति। प्रजोपहतिरपि प्राप्यते चेत् किं तया तव स्यादिति तत्राह प्रजानामिति। त्वामनाचरन्तमनुवर्त्तमानां सर्वेषां को दोषः स्यादित्यपेक्षायामीश्वरस्य कृतार्थतया कर्मानुष्ठानाभावे तदनुवर्त्तिनामपि तदभावादेव स्थितिहेत्वभावात् पृथिव्यादिभूतानां विनाशप्रसङ्गाद्वर्णाश्रमधर्मव्यवस्थानुपपत्तेश्चाधिकृतानां प्राणभृतां पापोपहतत्वप्रसङ्गात् परानुग्रहार्थं प्रवृत्तिरीश्वरस्येत्युक्तं सम्प्रति लोकसंग्रहाय कर्म कुर्वाणस्य कर्त्तृत्वाभिमानेन ज्ञानाभिभवे प्राप्ते मत्याह यदि पुनरिति। कृतार्थबुद्धित्वे हेतुमाह आत्मविदिति। यथावदात्मानमवगच्छन् कर्त्तृत्वाद्यभिमानाभावात् कृतार्थो भवत्येवेत्यर्थः। अर्जुनादन्यत्रापि ज्ञानवति कृतार्थबुद्धित्वं कर्त्तृत्वाद्यभिमानहीने तुल्यमित्याह अन्यो वेति। तस्य तर्हि कर्मानुष्ठानमफलत्वादनर्थकमित्याशङ्क्याह तस्यापीति। कर्त्तव्य इत्यात्मविदापि परानुग्रहाय कर्त्तव्यमेव कर्मेत्याहेति शेषः॥ २४॥

स्वा॰ टी॰। ततः किमत आह उत्सीदेयुरिति। उत्सीदेयुः धर्मलोपेन नश्येयुः ततश्च यो वर्णसङ्करो भवेत्तस्याप्यहमेव कर्त्ता स्यां भवेयं, एवमहमेव प्रजा उपहन्यां मलिनीकुर्य्यामिति॥ २४॥

**सक्ताः कर्मण्यविद्वांसो यथा कुर्व्वन्ति भारत!।**
**कुर्य्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहः ॥२५॥**

सक्ता इति। सक्ताः कर्मण्यस्य कर्मणः फलं मम भविष्यतीति केचिदविद्वांसो यथा कुर्वन्ति भारत! कुर्य्याद्विद्वानात्मवित्तथा असक्तः सन् तद्वत् किमर्थं करोति तच्छृणु चिकीर्षुरेष्या कर्त्तुमिच्छुः लोकसंग्रहम् ॥ २५॥

श्रा० टी०। इदानीं दार्ष्टान्तिकरूपं श्लोकं व्याकरोति सक्ता इत्यादिना। असक्तः सन् कर्त्तृत्वाभिमानं फलाभिसन्धिं वाऽकुर्व्वन्निति यावत् ॥२५॥

म० टी०। तस्मादात्मविदापि लोकसंग्रहार्थं तत्कृपया कर्म्म कार्य्यमेवेत्युपसंहरति सक्ता इति। कर्म्मणि सक्ताः अभिनिविष्टाः सन्तो यथाऽज्ञाः कर्म्माणि कुर्व्वन्ति असक्तः सन् विद्वानपि तथैव कुर्य्याल्लोकसंग्रहं कर्त्तुमिच्छुः ॥ २५ ॥

**न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्।**
**योजयेत् सर्व्वकर्माणि विद्वान् युक्तः समाचरन् ॥२६**

एवं लोकसंग्रहं चिकीर्षोर्ममात्मविदः कर्त्तव्यमस्त्यन्यस्य वा लोकसंग्रहमुक्त्वा ततस्तस्यात्मविद इदमुपदिश्यते नेति। बुद्धेर्भेदो बुद्धिभेदः मया इदं कर्त्तव्यं भोक्तव्यञ्चास्य कर्मणः फलमिति निश्चयरूपाया बुद्धेर्भेदनं चालनं बुद्धिभेदस्तन्न जनयेन्नोत्पादयेदज्ञानामविवेकिनां कर्मसङ्गिनां कर्मण्यासक्तानां आसङ्गवतां किन्तु कुर्य्यात् योजयेत् कारयेत् सर्वकर्माणि विद्वान् स्वयं तदेवाविदुषां कर्म युक्तोऽभियुक्तः समाचरन् ॥ २६ ॥

श्रा० टी०। इत्यमनद्योत्तरश्लोकमवतारयति एवमिति। कर्त्तव्यं कर्मेति

शेषः। पूर्वार्द्धमेवं व्याख्याय उत्तरार्द्धं प्रश्नपूर्वकं अवतार्य्य व्याचष्टे किन्तु कुर्य्यादिति। सर्वकर्माणि कारयेत्तेषु प्रीतिं कुर्वन्निति शेषः। कथं कारयेदित्याकाङ्क्षायामाह तदेवेति ॥ २६ ॥

स्वा॰ टी॰। ननु कृपया तत्त्वज्ञानमेवोपदेष्टुं युक्तं नेत्याह न बुद्धिभेदमिति। अज्ञानामत एव कर्मसङ्गिनां कर्माभिज्ञानामकर्त्तात्मोपदेशेन बुद्धेर्भेदमन्यथात्वं न जनयेत् कर्म्मणः सकाशाद्बुद्धिविचालनं न कुर्य्यात् अपि तु योजयेत् सेवयेत् अज्ञान् कर्माणि कारयेदित्यर्थः, कथं, युक्तोऽवहितो भूत्वा स्वयमाचरन् सन्, बुद्धिविचालने कृते सति कर्मसु श्रद्धानिवृत्तेर्ज्ञानस्य चानुत्पत्तेस्तेषामुभयभ्रंशः स्यादिति भावः ॥ २६ ॥

**प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्व्वशः।**
**अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते ॥२७॥**

अविद्वान् अज्ञः कथं कर्मसु सज्जत इत्याह प्रकृतेरिति। प्रकृतेः प्रकृतिः प्रधानं सत्त्वरजस्तमसां गुणानां साम्यावस्था तस्याः प्रकृतेर्गुणैर्विकारैः कार्य्यकरणरूपैः क्रियमाणानि कर्माणि लौकिकानि शास्त्रीयाणि च सर्वशः सर्वप्रकारैरहङ्कारविमूढात्मा कार्य्यकरणसंघातात्मप्रत्ययोऽहङ्कारस्तेन विविधं मूढः आत्मान्तःकरणं यस्य सोऽयं कार्य्यकरणधर्मा कार्य्यकरणाभिमान्यविद्यया कर्माण्यात्मनि मन्यमानस्तत्तत्कर्मणामहं कर्त्तेति मन्यते ॥ २७ ॥

अज्ञानां कर्मसङ्गिनामित्युक्तं तेनोत्तरश्लोकस्य सङ्गतिमाह अविद्वानिति। कर्त्तृत्वमात्मनो वास्तवमित्यभ्युपगमाद्विद्वान् कथं कुर्वन्नेव तस्याभावं पश्यतीत्याशङ्क्याह प्रकृतेरिति। कर्मस्वविदुषः सक्तिप्रकारं प्रकटयन् व्याकरोति प्रकृतेरित्यादिना। प्रधानशब्देन मायाशक्तिरुच्यते, अविद्ययेत्युभयतः संबध्यते ॥ २७ ॥

स्वा० टी०। ननु विदुषापि चेत् कर्म्म कर्त्तव्यं तर्हि विद्वद्विदुषोः को विशेष इत्याशङ्क्योभयोर्विशेषं दर्शयति प्रकृतेरिति द्वाभ्याम्। प्रकृतेर्गुणैः प्रकृतिकार्य्यैरिन्द्रियैः सर्वप्रकारेण क्रियमाणानि कर्म्माणि तान्यहमेव कर्त्ता करोमीति मन्यते। तत्र हेतुः अहमिति। अहङ्कारेणेन्द्रियादिष्वात्माध्यासेन विमूढ़बुद्धिः सन्॥ २७॥

**तत्त्ववित्तु महाबाहो! गुणकर्मविभागयोः।**
**गुणा गुणेषु वर्त्तन्त इति मत्वा न सज्जते॥२८॥**

यः पुनर्मन्यते तत्त्वविदिति। तत्त्ववित्तु महाबाहो! कस्य तत्त्ववित् गुणकर्मविभागयोर्गुणविभागस्य कर्म्मविभागस्य च तत्त्वविदित्यर्थः गुणाः करणात्मकाः गुणेषु विषयात्मकेषु वर्त्तन्ते नात्मेति मत्वा न सज्जते सक्तिं न करोति॥ २८॥

आ०टी०। अज्ञस्य कर्मसु सक्तिमुक्त्वा विदुषस्तदभावमभिदधाति यः पुनरिति। तत्त्वं याथार्थ्यं वेत्तीति व्युत्पत्त्या तत्त्वविदिति तु शब्देनास्माद्विशिष्टो निर्दिष्टः। प्रश्नपूर्वकं द्वितीयपादमवतार्य्य व्याचष्टे कस्येत्यादिना। गुणानामेव गुणेषु वर्त्तमानत्वमयुक्तं निर्गुणत्वात्तेषामित्याशङ्क्य विभजते गुणा इति। कार्य्यकरणानामेव विषयेषु प्रवृत्तिरात्मनस्तु कूटस्थत्वान्नैवमिति ज्ञात्वा तत्त्ववित् कर्म्मसु दृढ़तरं कर्त्तृत्वाभिमानं न करोतीत्यर्थः॥ २८॥

स्वा० टी०। विद्वांस्तु तथा न मन्यत इत्याह तत्त्वविदिति। नाहं गुणात्मक इति गुणेभ्यः आत्मनो विभागः न मे कर्म्माणीति कर्म्मभ्योऽप्यात्मनो विभाग तयोर्गुणकर्म्मविभागयोर्यस्तत्त्वं वेत्ति स तु न सज्जते कर्त्तृत्वाभिनिवेशं न करोति [illegible] गुणा इति। गुणा इन्द्रियाणि गुणेषु विषयेषु वर्त्तन्ते [illegible] २८॥

**प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु ।**
**तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत् ॥२९॥**

ये पुनः प्रकृतेरिति । प्रकृतेर्गुणैः सम्यक् मूढाः संमोहिताः सन्तः सज्जन्ते गुणानां कर्मसु गुणकर्मसु वयं कर्म कुर्मः फलायेति, तान् कर्मसङ्गिनोऽकृत्स्नविदः कर्मफलमात्रदर्शिनो मन्दान् मन्दप्रज्ञान् कृत्स्नविदात्मवित् स्वयं न विचालयेत् बुद्धिभेदकरणमेव चालनं तन्न कुर्य्यादित्यर्थः ॥ २९ ॥

आ०टी० । विद्वानविद्वानित्युभावपि प्रकृत्य विद्वानविदुषो बुद्धिभेदं कुर्य्यादित्युपसंहरति ये पुनरिति । प्रकृतेरुक्तायाः गुणैर्देहादिभिर्विकारैः संमूढास्तानेवात्मत्वेन मन्यमाना ये ते गुणानां तेषामेव देहादीनां कर्मसु व्यापारेषु सज्जन्ते सक्तिं दृढतरामात्मीयबुद्धिं कुर्वन्तीत्याह प्रकृतेरित्यादिना । तेषामनात्मविदां स्वयमात्मविद्बुद्धिभेदं नापादयेदित्याह तानित्यादिना ॥ २९ ॥

स्वा० टी० । न बुद्धिभेदमित्युपसंहरति प्रकृतेरिति । यैः प्रकृतेर्गुणैः सत्त्वादिभिः संमूढाः सन्तो गुणेषु इन्द्रियेषु तत्कर्मसु च सज्जन्ते तानकृत्स्नविदो मन्दमतीन् कृत्स्नवित् सर्वज्ञो न विचालयेत् ॥ २९ ॥

**मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।**
**निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥३०॥**

कथं पुनः कर्मण्यधिकृतेनाज्ञेन मुमुक्षुणा कर्म कर्त्तव्यमित्युच्यते मयीति । मयि वासुदेवे परमेश्वरे सर्वज्ञे सर्वात्मनि सर्वाणि कर्माणि संन्यस्य निक्षिप्याध्यात्मचेतसा विवेकबुद्ध्याऽहं कर्त्तेश्वराय भृत्यवत् करोमीत्यनया बुद्ध्या

किञ्च निराशीः त्यक्ताशीः निर्ममो ममभावश्च निर्गतो यस्य तव स त्वं निर्ममो भूत्वा युध्यस्व विगतज्वरो विगतसन्तापो विगतशोकः सन्नित्यर्थः ॥ ३० ॥

आ॰ टी॰ । यद्यपि कर्म शुद्धयेऽधिक्रियते तथापि मोक्षमाणेन तेन कर्म त्यक्तव्यं मोक्षस्य कर्मासाध्यत्वान्न तु तेन कर्म कर्तुं शक्यं कर्मणः सापेक्षितविरोधित्वादिति शङ्कते कथमिति । श्लोकेनोत्तरमाह उच्यत इति । यथोक्ते परस्मिन्नात्मनि सर्वकर्मणां समर्पणे कारणमाह अध्यात्मेति । विवेकबुद्धिमेव व्याकरोति अहमिति । दर्शितरीत्या कर्मसु प्रवृत्तस्य कर्तव्यान्तरमाह किञ्चेति । त्यक्ताशीः फलप्रार्थनाहीनः सन्नित्यर्थः, निर्ममो भूत्वा पुत्रभ्रात्रादिष्विति शेषः । ननु युद्धे नियोगो नोपपद्यते पुत्रभ्रात्रादिहिंसात्मनस्तस्य सन्तापहेतोः नियोगविषयत्वायोगादिति तत्राह विगतेति ॥ ३० ॥

श्री॰ टी॰ । तदेवं तत्त्वविदापि कर्म कर्तव्यं त्वं तु नाद्यापि तत्त्ववित् अतः कर्मैव कुर्वित्याह मयीति । सर्वाणि कर्माणि मयि सन्न्यस्य समर्प्याध्यात्मचेतसाऽन्तर्याम्यधीनोऽहं कर्म करोमीति दृष्ट्या निराशीर्निष्कामोऽत एव मत्फलसाधनं मदर्थमिदं कर्मेत्येवं ममताशून्यश्च भूत्वा विगतज्वरस्त्यक्तशोकश्च भूत्वा युध्यस्व ॥ ३० ॥

**ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।**
**श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥३१॥**

यदेतन्मम मतं कर्म कर्तव्यमिति सप्रमाणमुक्तं तत्तथा ये मे इति । ये मदीयमिदं मतमनुतिष्ठन्ति अनुवर्तन्ते मानवा मनुष्याः श्रद्धावन्तः श्रद्दधानाः अनसूयन्तोऽसूयाञ्च मयि परमगुरौ वासुदेवेऽकुर्वन्तो मुच्यन्ते तेऽप्येवम्भूताः कर्मभिर्धर्माधर्माख्यैः ॥ ३१ ॥

आ॰ टी॰ । प्रकृतं भगवतो मतमुक्तप्रकारमनुसृत्यैवानुतिष्ठतां फलमाह-

कथं कथयति यदेतदिति । शास्त्राचार्य्योपदिष्टे अदृष्टार्थे विश्वासवत्त्वं श्रद्धावत्त्वं, गुणेषु दोषाविष्करणमसूया, अपि यथोक्तायास्तरनुष्ठान-द्योतनार्थः ॥ ३१ ॥

स्वा० टी० । एवं कर्म्मानुष्ठाने गुणमाह ये म इति । महाक्ये श्रद्धावन्तोऽनसूयन्तो दुःखात्मके कर्म्मणि प्रवर्त्तयतीति दोषदृष्टिमकुर्वन्तश्च ये मदीयमिदं मतमनुतिष्ठन्ति तेऽपि शनैः कर्म कुर्वाणाः सम्यग्ज्ञानिवत् कर्म्मभिर्मुच्यन्ते ॥ ३१ ॥

# ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।
# सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः ॥३२॥

ये त्विति । ये तु तद्विपरीता एतत् मम मतं अभ्यसूयन्तो निन्दन्तो नानुतिष्ठन्ति नानुवर्त्तन्ते मे मतं सर्वेषु ज्ञानेषु विविधं मूढास्ते सर्वज्ञानविमूढास्तान् विनष्टान् नाशं गतानचेतसोऽविवेकिनः ॥ ३२ ॥

स्वा० टी० । भगवन्मतानुवर्त्तिनां प्रत्यवायित्वं प्रत्याययति ये त्विति । तद्विपरीतत्वं भगवन्मतानुवर्त्तिभ्यो वैपरीत्यं, तदेव दर्शयति एतदित्यादिना । अभ्यसूयन्तस्तत्रासन्तमपि दोषमुद्भावयन्त इत्यर्थः, सर्वज्ञानानि सगुणनिर्गुणविषयाणि, प्रमाणप्रमेयप्रयोजनविभागतो विविधत्वम् ॥ ३२ ॥

स्वा० टी० । विपक्षे दोषमाह ये त्वेतदिति । ये तु नानुतिष्ठन्ति तानचेतसो विवेकशून्यान् अत एव सर्वस्मिन् कर्म्मणि ब्रह्मविषये च यज्ज्ञानं तत्र विमूढान्नष्टान विद्धि ॥ ३२ ॥

# सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।
# प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥३३

कस्मात् पुनः कारणात् त्वदीयं मतं नानुतिष्ठन्तः

परधर्माननुतिष्ठन्ति स्वधर्मञ्च नानुवर्त्तन्ते तत्प्रतिकूलाः कथं न बिभ्यति तच्छासनातिक्रमदोषात् तत्राह सदृशमिति। सदृशमनुरूपं चेष्टते चेष्टां करोति कस्याः स्वस्याः स्वकीयायाः प्रकृतेः प्रकृतिर्नाम पूर्वकृतधर्माधर्मादिसंस्कारो वर्त्तमानजन्मादावभिव्यक्तः सा प्रकृतिस्तस्याः सदृशमेव सर्वो जन्तुर्ज्ञानवानपि चेष्टते किं पुनर्मूर्खस्तस्मात् प्रकृतिं यान्ति अनुगच्छन्ति भूतानि निग्रहः निषेधरूपः किं करिष्यति मम चान्यस्य वा ॥ ३३ ॥

आ॰टी॰। भगवन्मतानुवर्त्तनमन्तरेण परधर्मानुष्ठाने स्वधर्माननुष्ठाने च कारणं पृच्छति कस्मादिति। भगवत्प्रतिकूलत्वमेव तत्र कारणमित्याशङ्क्याह तत्प्रतिकूला इति। राजानुशासनातिक्रमे दोषदर्शनात् भगवदनुशासनातिक्रमेऽपि दोषसम्भवात् तत्प्रतिकूलत्वं भयकारणमित्यर्थः। उत्तरत्वेन श्लोकमवतारयति सदृशमिति। सर्वस्य प्राणिवर्गस्य प्रकृतिवशवर्त्तित्वे कैमुतिकन्यायं सूचयति ज्ञानवानपीति। सर्वाण्यपि भूतान्यनिच्छन्त्यपि प्रकृतिसदृशीं चेष्टां गच्छन्तीति निगमयति प्रकृतिमिति। भूतानां प्रकृतेरधीनत्वेऽपि प्रकृतिर्भगवता निग्राह्येत्याशङ्क्याह निग्रह इति। का पुनरियं प्रकृतिर्यदनुसारिणी भूतानां चेष्टेति पृच्छति प्रकृतिर्नामेति। भगवदभिप्रेतां प्रकृतिं प्रकटयति पूर्वेति। आदिशब्देन ज्ञानेच्छादि सङ्गृह्यते। यथोक्तः संस्कारः स्वसत्तया प्रवर्त्तकश्चेत् प्रलयेऽपि प्रवृत्तिः स्यादित्याशङ्क्य विशिनष्टि वर्त्तमानेति। सर्वो जन्तुरित्युक्तं विवेकिप्रवृत्तेरतथात्वादित्याशङ्क्याह ज्ञानवानिति। ज्ञानवतामज्ञानवताञ्च प्रकृत्यधीनत्वाविशेषे फलितमाह तस्मादिति। प्रकृतिं यान्ति प्रकृतिसदृशीं चेष्टां गच्छन्त्यनिच्छन्त्यपि सर्वाणि भूतानि इत्यर्थः। प्रकृतेर्भगवता तत्तुल्येन वा केनचित् निग्रहमाशङ्क्यावतारितचतुर्थपादस्यार्थमपेक्षितं पूरयति मम चेति ॥ ३३ ॥

व्या॰ टी॰। ननु तर्हि महाफलत्वादिन्द्रियाणि निगृह्य निष्कामाः सन्तः सर्वेऽपि स्वधर्ममेव किं नानुतिष्ठन्ति तत्राह सदृशमिति। प्रकृतेः प्राचीनकर्मसंस्काराधीनः स्वभावः स्वस्याः स्वकीयायाः प्रकृतेः स्वभावस्य सदृशमनुरूपमेव गुणदोषज्ञानवानपि चेष्टते किं पुनर्वक्तव्यमज्ञश्चेष्टत इति, यस्माद्भूतानि सर्वेऽपि प्राणिनः प्रकृतिं यान्ति अनुवर्तन्ते एवञ्च सतीन्द्रियनिग्रहः किं करिष्यति प्रकृतेर्बलीयस्त्वादित्यर्थः॥ ३३॥

**इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ।**
**तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ॥३४॥**

यदि सर्वो जन्तुरात्मनः प्रकृतिसदृशमेव चेष्टते न च प्रकृतिशून्यः कश्चिदस्ति ततः पुरुषकारस्य विषयानुपपत्तेः शास्त्रानर्थक्यप्राप्ताविदमुच्यते इन्द्रियस्येति। इन्द्रियस्येन्द्रियस्यार्थे सर्वेन्द्रियाणामर्थे शब्दादिविषये इष्टे शब्दादौ रागोऽनिष्टे द्वेष इत्येवं प्रतीन्द्रियार्थं रागद्वेषाववश्यम्भाविनौ तत्रायं पुरुषकारस्य शास्त्रार्थस्य विषय उच्यते शास्त्रार्थे प्रवृत्तः पूर्वमेव रागद्वेषयोर्वशं नागच्छेत् या

व्या॰टी॰। सर्वस्य भूतवर्गस्य प्रकृतिवशवर्तित्वे लौकिकवैदिकपुरुषकारविषयाभावाद्विधिनिषेधानर्थक्यमिति शङ्कते यदीति। ननु यस्य न प्रकृतिरस्ति तस्य पुरुषकारसम्भवादर्थवत्त्वं तद्विषये विधिनिषेधयोर्भविष्यति नेत्याह न चेति। शङ्कितदोषं श्लोकेन परिहरति इदमित्यादिना। वीप्सायाः सर्वकरणगोचरत्वं दर्शयति सर्वेति। प्रत्यर्थं रागद्वेषयोरवस्थायां प्राप्तौ प्रत्यादिशति इष्ट इति। प्रतिविषयं विभागेन तयोरवस्थानस्यावश्यकत्वेऽपि पुरुषकारविषयाभावप्रयुक्तं प्रागुक्तं दूषणं कथं समाधेयमित्याशङ्क्याह तत्रेति। तयोरित्याद्यवतारितं भागं

हि पुरुषस्य प्रकृतिः सा रागद्वेषपुरःसरैव स्वकार्य्ये पुरुषं प्रवर्त्तयति यदा तदा स्वधर्मपरित्यागः परधर्मानुष्ठानञ्च भवति यदा पुनः रागद्वेषौ तत्प्रतिपक्षेण नियमयति तदा शास्त्रदृष्टिरेव पुरुषो भवति न प्रकृतिवशस्तस्मात्तयो राग-द्वेषयोर्वशं नागच्छेद्यतस्तौ ह्यस्य पुरुषस्य परिपन्थिनौ श्रेयोमार्गस्य विघ्नकर्त्तारौ तस्कराविवेत्यर्थः ॥ ३४ ॥

विभजते शास्त्रार्थस्येति । प्रकृतिवशत्वाद्दुर्जन्तोर्निन नियोज्यत्वमित्या-शङ्क्याह यद्यपीति । रागद्वेषद्वारा प्रकृतिवशवर्त्तित्वे स्वधर्मत्यागादि दुर्वारमित्युक्तमिदानीं विवेकविज्ञानेन रागादिनिवारणे शास्त्रीयदृष्ट्या प्रकृतिपारवश्यं परिहर्त्तुं शक्यमित्याह यदेति । मिथ्याज्ञाननिबन्धनौ हि रागद्वेषौ तत्प्रतिपक्षत्वं विवेकविज्ञानस्य मिथ्याज्ञानविरोधित्वादव-सेयम् । रागद्वेषयोर्मूलनिवृत्त्या निवृत्तौ प्रतिबन्धध्वंसे कार्यसिद्धिम-भिसन्धायोक्तं तदेति । एवकारस्यान्ययोगव्यवच्छेदकत्वं दर्शयति नेति । पूर्वोक्तं नियोगमुपसंहरति तस्मादिति । तत्र हेतुमाह स-हीति । हिशब्दोपात्तो हेतुर्यत इति प्रकटितः स च पूर्वेण तच्छब्देन सम्बन्धनीयः । पुरुषपरिपन्थित्वमेव तयोः चोटाहरणं स्फोरयति श्रेयोमार्गस्येति ॥ ३४ ॥

स्वा॰ टी॰ । नन्वेवं प्रकृत्यधीनैव चेत् पुरुषस्य प्रवृत्तिस्तर्हि विधिनिषेध-शास्त्रस्य वैयर्थ्यं प्राप्तमित्याशङ्क्याह इन्द्रियस्येति । इन्द्रियस्येन्द्रियस्येति वीप्सया सर्वेषामिन्द्रियाणां प्रत्येकमित्युक्तं, अर्थे स्वस्वविषये अनुकूले रागः प्रतिकूले द्वेष इत्येवं रागद्वेषौ व्यवस्थितौ अवश्यम्भाविनौ, ततश्च तदनुरूपा प्रवृत्तिरिति भूतानां प्रकृतिः, तथापि तयोर्वशवर्त्ती न भवे-दिति शास्त्रेण नियम्यते हि यस्मादस्य तावुभौ परिपन्थिनौ प्रति-पक्षौ, अयं भावः, विषयस्मरणादिना रागद्वेषावुत्पाद्यानर्थकूपे पुरुष-मनर्थेऽतिगम्भीरे स्रोतसीव प्रकृतिर्बलात् प्रवर्त्तयति शास्त्रं तु ततः प्रागेव विषयेषु रागद्वेषप्रतिबन्धके परमेश्वरभजनादौ तं प्रवर्त्तयति

ततश्च गम्भीरस्रोतःपातात् पूर्वमेव नायमाश्रित इव नानर्थं प्राप्नोति, तदेवं स्वाभाविकीं पश्वादिसदृशीं प्रवृत्तिं त्यक्त्वा धर्मे प्रवर्त्तितव्यमित्युक्तम् ॥ ३४ ॥

**श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात्।**
**स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ ३५ ॥**

तत्र रागद्वेषप्रयुक्तो मन्यते शास्त्रार्थमप्यन्यथा परधर्मोऽपि धर्मत्वादनुष्ठेय एवेति तदसत् श्रेयानिति। श्रेयान् प्रशस्यतरः स्वधर्मः स्वकीयधर्मो विगुणोऽपि विगतगुणोऽपि अनुष्ठीयमानः परधर्मात् स्वनुष्ठितात् साद्‌गुण्येन सम्पादितादपि स्वधर्मे स्थितस्य निधनं मरणमपि श्रेयः परधर्मे स्थितस्य जीवितात् कस्मात् परधर्मो भयावहः नरकादिलक्षणं भयमावहति यतः ॥ ३५ ॥

आ०टी०। रागद्वेषयोः श्रेयोमार्गप्रतिपक्षत्वं प्रकटयितुं परमतोपन्यास द्वारा समनन्तरश्लोकमवतारयति तत्रेत्यादिना। व्यवहारभूमिः सप्तम्यर्थः। शास्त्रार्थस्यान्यथा प्रतिपत्तिमेव प्रत्याययति परधर्मोऽपीति। स्वधर्मवदिव्यपेरर्थः। अनुमानं दूषयन्नुत्तरत्वेन श्लोकमवतारयति तदसदिति। स्वधर्माद्युद्धाद्‌दुरनुष्ठानां परिव्राड्धर्मस्य भिक्षाशनादिलक्षणस्य स्वानुष्ठेयतया ममापि कर्त्तव्यत्वं प्राप्तमित्याशङ्क्य व्याचष्टे श्रेयानिति। उक्तेऽर्थे प्रश्नपूर्वकं हेतुमाह कस्मादित्यादिना। स्वधर्ममवधूय परधर्ममनुतिष्ठतः स्वधर्मातिक्रमकृतदोषस्य दुष्परिहरत्वात्तत्त्यागः साधीयानित्यर्थः ॥ ३५ ॥

स्वा० टी०। तर्हि स्वधर्मस्य युद्धादेर्दुःखरूपस्य यथावत् कर्त्तुमशक्यत्वात् परधर्मस्य चाहिंसादेः सुकरत्वाद्धर्मत्वाविशेषाच्च तत्र प्रवर्त्तितुमिच्छन्तं प्रत्याह श्रेयानिति। किञ्चिदङ्गहीनोऽपि स्वधर्मः श्रेयान् प्रशस्यतरः स्वनुष्ठितात् सकलाङ्गसम्पूर्त्त्या कृतादपि परधर्मात् सकाशात्।

तत्र हेतुः स्वधर्मे युद्धादौ प्रवर्त्तमानस्य निधनं मरणमपि श्रेष्ठं स्वर्गादि प्रापकत्वात् परधर्मन्तु परस्य भयावहो निषिद्धत्वेन नरकप्रापकत्वात् ॥३५॥

## अर्जुन उवाच ।

**अथ केन प्रयुक्तोऽयं पापञ्चरति पूरुषः ।**
**अनिच्छन्नपि वार्ष्णेय ! बलादिव नियोजितः ॥३६**

यद्यप्यनर्थमूलं ध्यायतो विषयान् पुंसो रागद्वेषौ ह्यस्य परिपन्थिनाविति चोक्तं विक्षिप्तमनवधारितं च यदुक्तं तत् संक्षिप्तं निश्चितञ्चेदमेवेति ज्ञातुमिच्छन्नर्जुन उवाच ज्ञाते हि तस्मिन् तदुच्छेदाय यत्नं कुर्य्यामिति अथेति । अथ केन हेतुभूतेन प्रयुक्तः सन् राज्ञेव भृत्योऽयं पापं कर्म्म चरत्याचरति पूरुषः स्वयमनिच्छन्नपि हे वार्ष्णेय ! वृष्णि कुलप्रसूत ! बलादिव नियोजितो राज्ञेवत्युक्तो दृष्टान्तः ॥३६॥

आ० टी०। रागेद्वानर्थमूलस्योक्तत्वात् पुनरुक्तिज्जिज्ञासया प्रश्नानुपपत्तिरित्याशङ्क्याह यद्यपीति । विक्षिप्तं विविधेषु प्रदेशेषु क्षिप्तं दर्शितमिति यावत्, अनवधारितमनेकत्वोक्तत्वादनेकधा वा विवेककामादिभिर्विकल्पितत्वादित्यर्थः । नन्वनर्थमूलं परिहर्त्तव्यं तत् किमिति ज्ञातुमिष्यते तत्राह ज्ञाते हीति । कुर्य्यामिति तज्ज्ञानमर्थवदिति शेषः । वाक्यारम्भार्थत्वमथशब्दस्य गृहीत्वा प्रश्नवाक्यं व्याकरोति अथेत्यादिना । अनिच्छतोऽपि बलादेव दुश्चरिते प्रेरितस्य दृष्टान्तमाचष्टे राज्ञेवेति । विनियोज्यस्येच्छासापेक्षत्वात्तदभावे तदसिद्धिमाशङ्क्य प्रागुक्तं स्मारयति राज्ञेवेत्युक्त इति ॥३६ ॥

स्वा० टी० । तयोर्न वशमागच्छेदित्युक्तं तदेतदशक्यं मन्वानोऽर्जुन उवाच अथेति । वृष्णिवंशेऽवतीर्णो वार्ष्णेयः हे वार्ष्णेयः ! अनर्थरूपं पापं कर्त्तुमनिच्छन्नपि केन प्रयुक्तः प्रेरितोऽयं पुरुषः पापं चरति, कामक्रोधौ विवेकबलेन निरुन्धतोऽपि पुरुषस्य पुनः पापे प्रवृत्ति-

दर्शनात्, अन्योऽपि तयोर्मूलभूतः कश्चित् प्रवर्त्तको भवेदिति सम्भावनया प्रश्नः ॥ ३६ ॥

## श्रीभगवानुवाच।

**काम एष क्रोध एष रजोगुणसमुद्भवः।**
**महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ३७**

शृणु त्वं तं वैरिणं सर्व्वानर्थकरं यं त्वं पृच्छसि भगवानुवाच ऐश्वर्य्यस्य समग्रस्य धर्मस्य यशसः श्रियः वैराग्यस्याथ मोक्षस्य षण्णां भग इतीङ्गणा। ऐश्वर्य्यादि षट्कं यस्मिन् वासुदेवे नित्यमप्रतिबन्धत्वेन सामस्त्येन च वर्त्तते उत्पत्तिं प्रलयञ्चैव भूतानामागतिं गतिं वेत्ति विद्यामविद्याञ्च स वाच्यो भगवानिति। उत्पत्त्यादिविषयञ्च विज्ञानं यस्य स वासुदेवो वाच्यो भगवानिति,काम इति। काम एष सर्व्वलोकवशं कुर्व्वन् शत्रुर्य्यन्निमित्ता सर्व्वानर्थप्राप्तिः प्राणिनां स एष कामः प्रतिहतः केनचित् क्रोधत्वेन परिणमतेऽतः क्रोधोऽप्येष एव रजोगुणसमुद्भवो रजश्च तद्गुणश्च रजोगुणः समुद्भवो यस्य सः कामो रजोगुणसमुद्भवो रजोगुणस्य वा समुद्भवः कामो ह्युद्भूतो रजः प्रवर्त्तयन् पुरुषं प्रवर्त्तयति तृष्णया ह्यहङ्कारितः इति गुणदुःखिनां रजःकार्य्ये सेवादौ प्रवृत्तानां प्रलापः श्रूयते महाशनो महदशनमस्येति महाशनोऽत एव महापाप्मा कामेन प्रेरितो जन्तुः पापं करोति अतो विद्ध्येनं काममिह संसारे वैरिणम् ॥ ३७॥

आ० टी०। सम्प्रतिर्पात्तिवचनं प्रस्तौति भ्रंशयति। तस्य वैपरीत्यं स्फोरयति बर्वेति। अप्रस्तुतं किमिति प्रस्तूयते तत्राह

यं त्वमिति। भगवच्छब्दार्थं निर्धारयितुं पौराणिकं वचनमुदा-हरति ऐश्वर्य्यस्येति। समग्रस्येत्येतत् प्रत्येकं विशेषणैः सम्बध्यते, श्रयशब्देन तदुपायो ज्ञानं विवक्ष्यते। उदाहृतवचसस्तात्पर्य्यमाह ऐश्वर्य्यादीति। स वाच्यो भगवानिति सम्बन्धः। तत्रैव पौराणिकं वाक्यान्तरं पठति उत्पत्तिमिति। भूतानामिति प्रत्येकमुत्पत्त्यादिभिः सम्बध्यते कारणार्थौ चोत्पत्तिप्रलयशब्दौ क्रियामात्रस्य पुरुषान्तर-गोचरत्वसम्भवादागतिर्गतिश्चेत्यागामिन्यौ सम्पदापदौ सूच्येते। वाक्या-न्तरस्यापि तात्पर्य्यमाह उत्पत्त्यादीति। वेत्तीत्युक्तः साक्षात्कारो विज्ञानमित्युच्यते, समग्रैश्वर्य्यादिसम्पत्तिसमुच्चयार्थश्चकारः। उक्तलक्षणो भगवान् किमुक्तवानिति तदाह काम इति। कामस्य सर्वलोकशत्रुत्वं विशदयति यन्निमित्तेति। तथापि कथं तस्यैव क्रोधत्वं तदाह स एव इति। कामक्रोधयोरेव हेयत्वद्योतनार्थं कारणं कथयति रजोगुण इति। कारणद्वारा कामादेरेव हेयत्वमुक्त्वा कार्य्यद्वारापि तस्य हेयत्वं सूचयति रजोगुणस्येति। कामस्य पुरुषप्रवर्त्तकत्वमेव न रजोगुण-जनकत्वमित्याशङ्क्याह कामो हीति। तत्रैवानुभवानुसारिणीं लोक-प्रसिद्धिं प्रमाणयति तृष्णया हीति। तस्य योग्यायोग्यविभागमन्तरेण वस्तुविषयत्वं दर्शयति महाशन इति। वस्तुविषयत्वप्रयुक्तं कर्म निर्दि-शति अत इति। सर्वविषयत्वेऽपि कुतोऽस्य पापत्वमित्याशङ्क्याह कामे-नेति। कामस्योक्तविशेषणवत्त्वे फलितमाह अत इति ॥ ३७ ॥

श्वा॰ टी॰। अत्रोत्तरं श्रीभगवानुवाच काम एष क्रोध एष इत्यादि। यस्त्वया दृष्टो हेतुरेष काम एव, ननु क्रोधोऽपि पूर्वं त्वयोक्त इन्द्रियस्येन्द्रियस्यार्थ इत्यत्र, सत्यं नासौ ततः पृथक् किन्तु क्रोधोऽप्येष काम एव हि केनचित् प्रतिहतः क्रोधात्मना परिणमते पूर्वं पृथगुक्तोऽपि क्रोधः कामज एवेत्यभिप्रायेणैकात्म्योच्यते, रजोगुणात् समुद्भवतीति तथा, अनेन सत्त्ववृद्ध्या रजसि क्षयं नीते सति कामो न जायत इति सूचितं, एनं काममिह मोक्षमार्गे वैरिणं विद्धि, अयञ्च वक्ष्यमाणक्रमेण हन्तव्य एव यतो नासौ दानेन सन्धातुं शक्य इत्याह

महाशनो महदशनं यस्य दुष्पूर इत्यर्थः, न च साम्ना सन्धातुं शक्यो यतो महापाप्मा अत्युग्रः ॥ २७ ॥

**धूमेनाव्रियते वह्निर्यथादर्शो मलेन च ।**
**यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम् ॥३८॥**

कथं वैरीति दृष्टान्तैः प्रत्याययति धूमेनेति । धूमेन सहजेनाव्रियते वह्निः प्रकाशात्मकोऽप्रकाशात्मकेन यथा वादर्शो मलेन च यथोल्बेन गर्भवेष्टनेन जरायुणा आवृत आच्छादितो गर्भस्तथा तेनेदमावृतम् ॥ ३८ ॥

व्या०टी० । उत्तरश्लोकमवतारयति कथमिति । अनेकदृष्टान्तोपादानं प्रतिपत्तिसौकर्य्यार्थम् । सहजस्य धूमस्य प्रकाशात्मकवह्निं प्रति आवरकत्व-सिद्ध्यर्थं विशिनष्टि अप्रकाशात्मकेनेति ॥ ३८ ॥

स्वा० टी० । कामस्य वैरित्वं दर्शयति धूमेनेति । धूमेन सहजेन यथा वह्निराव्रियत आच्छाद्यते यथा चादर्शो मलेन आगन्तुकेन यथा चोल्बेन गर्भवेष्टनचर्मणा गर्भः सर्वतो निरुद्ध आवृतस्तथा प्रकारत्रयेणापि तेन कामेनावृतमिदम् ॥ ३८ ॥

**आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।**
**कामरूपेण कौन्तेय ! दुष्पूरेणानलेन च ॥३९॥**

किं पुनस्तदिदं शब्दवाच्यं यत् कामेनावृतमित्युच्यते आवृतमिति । आवृतमेतेन ज्ञानं ज्ञानिनो नित्यवैरिणा ज्ञानी हि जानात्यनेन अहमनर्थे प्रयुक्तः पूर्वमेवातः दुःखी च भवति नित्यमेव अतोऽसौ ज्ञानिनो नित्यवैरी न तु मूर्खस्य स हि कामं तृष्णाकाले मित्रमिव पश्यंस्तत्कार्य्ये दुःखे प्राप्ते जानाति तृष्णयाहं दुःखित्वमापादित इति न पूर्वमेवातो ज्ञानिन एव नित्यवैरी किंरूपेण कामरूपेण

काम इच्छैव रूपमस्येति कामरूपस्तेन दुष्पूरेण दुःखेन पूरणमस्येति दुःपूरोऽतस्तेनानलेन नास्यालं पर्य्याप्तिर्विद्यत इत्यनलस्तेन ॥ ३८ ॥

आ०टी०। समान्यतो निर्दिष्टं विशेषतो निर्देष्टुं आकाङ्क्षापूर्वकमनन्तर-श्लोकमवतारयति किं पुनरिति। कामस्य ज्ञानं प्रत्यावरणत्वसिद्ध्यर्थं ज्ञानिनो नित्यवैरिणेत्यादिविशेषणम्। प्रतीकमादाय व्याचष्टे आवृतमित्यादिना। ज्ञानिनं प्रति वैरित्वेऽपि नित्यवैरित्वं कामस्य कथमित्याह ज्ञानी हीति। अनर्थप्राप्तिमन्तरेण कामस्य प्रसङ्गावस्था पूर्वमेवेत्युच्यते, अतः-शब्देन कामप्रसक्तिरेव परामृश्यते. नित्यमेवेत्युत्पत्त्यवस्था कार्य्यावस्था च कामस्य कथ्यते। ननु सर्वस्यापि कामात्मता न प्रशस्तेति कामो नित्यवैरी भवति ततः कुतो ज्ञानिविशेषणमित्याशङ्क्याह न त्विति। अज्ञस्य नासौ नित्यवैरीत्येतदुपपादयति स हीति। कार्य्यप्राप्तिप्राग-वस्था पूर्वमित्युक्ता, अज्ञं प्रति वैरित्वे सत्यपि कामस्य नित्यवैरित्वाभावे फलितमाह अत इति। स्वरूपतो नित्यवैरित्वाविशेषेऽपि ज्ञानाज्ञाना-भ्यामवान्तरभेदसिद्धिरित्यर्थः। आकाङ्क्षाद्वारा प्रकृतं वैरिणमेव स्फोर-यति किं रूपेणेत्यादिना॥ ३८॥

स्वा० टी०। इदं शब्दनिर्दिष्टं दर्शयन् वैरित्वं स्फुटयति आवृ-तमिति। इदं विवेकज्ञानं एतेनावृतं, अज्ञस्य खलु भोगसमये कामः सुखहेतुरेव परिणामे तु वैरित्वं प्रतिपद्यते ज्ञानिनः पुनस्तत्कालमप्य-नर्थानुसन्धानाद् दुःखहेतुरेवेति नित्यवैरिणेत्युक्तम्। किञ्च विषयैः पूर्य्य-माणोऽपि यो दुष्पूरः अपर्य्यमाणस्तु शोकसन्तापहेतुत्वादनलतुल्यः अनेन सर्वान् प्रतिवैरित्वमुक्तम्॥ ३८॥

इन्द्रियाणि मनोबुद्धिरस्याधिष्ठानमुच्यते।
एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥४०॥

किमधिष्ठानः पुनः कामो ज्ञानस्यावरणत्वेन वैरी सर्वस्येत्यपेक्षायामाह ज्ञाते हि शत्रोरधिष्ठाने सुखेन निब-

च्छेणं कर्त्तुं शक्य इति इन्द्रियाणीति। इन्द्रियाणि मनो बुद्धिश्चास्य कामस्याधिष्ठानमुच्यते एतैरिन्द्रियादिभिराश्रयै-र्विमोहयति विविधं मोहयत्येष कामो ज्ञानमावृत्याच्छाद्य देहिनं शरीरिणम्॥ ४०॥

आ०टी। कामस्य निराश्रयस्य कार्य्यकरत्वाभावं मत्वा प्रश्नपूर्वकमाश्रयं दर्शयति किमधिष्ठान इति। कामस्य नित्यवैरित्वेन परिजिहीर्षितस्य किमित्यधिष्ठानं ज्ञायते तत्राह ज्ञाते हीति। इन्द्रियादीनां कामाधि-ष्ठानत्वं प्रकटयति एतैरिति। नन्वेताभिरिति वक्तव्ये कथमेतैरित्यु-च्यते तत्राह इन्द्रियादिभिरिति॥ ४०॥

स्वा० टी०। इदानीं तस्याधिष्ठानं कथयन् जयोपायमाह इन्द्रि-याणीति द्वाभ्याम्। विषयदर्शनश्रवणादिभिः संकल्पेनाध्यवसायेन च कामस्याविर्भावादिन्द्रियाणि च मनश्च बुद्धिश्चास्याधिष्ठानमुच्यते एतै-रिन्द्रियादिभिर्दर्शनादिव्यापारवद्भिराश्रयभूतैर्विवेकज्ञानमावृत्य देहिनं विमोहयति॥ ४०॥

**तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ!।**
**पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम्॥४१॥**

यत एवं तस्मादिति। तस्मात्त्वमिन्द्रियाण्यादौ पूर्वं नियम्य वशीकृत्य भरतर्षभ! पाप्मानं पापाचारं कामं प्रजहि परित्यज हि यस्मात् एनं प्रकृतं वैरिणं ज्ञानवि-ज्ञाननाशनं ज्ञानं शास्त्रत आचार्य्यतश्च आत्मादीनामव-बोधः विज्ञानं विशेषतस्तदनुभवस्तयोर्ज्ञानविज्ञानयोः श्रेयःप्राप्तिहेत्वोर्नाशनं नाशमन्तन्नाशं प्रजहि आत्मनः परि-त्यजेत्यर्थः॥ ४१॥

आ० टी०। तेषां कामाश्रयत्वे सिद्धे साश्रयस्य तस्य परिहर्त्तव्यत्वमाह यत इति। तस्मादिन्द्रियादीनामाश्रयत्वादिति यावत्, पूर्वं कामनिरोधात्

प्रागवस्थायामित्यर्थः। तेषु नियमितेषु मनोबुद्ध्योर्नियमः सिध्यति तत् प्रवृत्तेरितरप्रवृत्तिव्यतिरेकेणाफलत्वादिति भावः, पापमूलतया कामस्य तच्छब्दवाच्यत्वमुन्नेयम्। कामस्य परित्यक्तव्यत्वे वैरित्वं हेतुः, तमेव हेतुं साधयति ज्ञानेति। ज्ञानविज्ञानशब्दयोरर्थभेदमावेदयति ज्ञानमित्यादिना ॥ ४१ ॥

स्वा० टी०। यस्मादेवं तस्मादिति। तस्मादादौ विमोहात् पूर्व-मेवेन्द्रियाणि मनो बुद्धिञ्च नियम्य पाप्मानं पापरूपमेनं कामं हि स्फुटं प्रजहि घातय, यद्वा प्रजहि परित्यज, ज्ञानमात्मविषयं विज्ञानं शास्त्रीयं तयोर्नाशनं, यद्वा ज्ञानं शास्त्राचार्य्योपदेशजं विज्ञानं निदिध्यासजं तमेव धीरो विज्ञाय प्रज्ञां कुर्वीतेति श्रुतेः ॥ ४१ ॥

**इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः।**
**मनसस्तु परा बुद्धिर्बुद्धेर्यः परतस्तु सः ॥ ४२ ॥**

इन्द्रियाणि आदौ नियम्य कामं शत्रुं जहि इत्युक्तं तत्र किमाश्रयः कामं जह्यादित्युच्यते इन्द्रियाणीति। इन्द्रियाणि श्रोत्रादीनि पञ्च देहं स्थूलं बाह्यं परिच्छिन्नं चापेक्ष्य सौक्ष्म्यान्तरस्थत्वव्यापित्वाद्यपेक्ष्य पराणि प्रकृष्टान्याहुः पण्डितास्तथेन्द्रियेभ्यः परं मनः सङ्कल्पात्मकं तथा मनसस्तु परा बुद्धिर्निश्चयात्मिका तथा यः सर्वदृश्येभ्यो बुद्ध्यन्तेभ्योऽभ्यन्तरोऽयं देहिनं इन्द्रियादिभिराश्रयैर्युक्तः कामो ज्ञानावरणद्वारेण मोहयतीत्युक्तं बुद्धेः परतस्तु सः स बुद्धेर्द्रष्टा परमात्मा ॥ ४२ ॥

स्वा०टी०। पूर्वोक्तमनूद्य कामत्यागस्य दुष्करत्वं मन्वानो रक्षोऽप्यस्येत्यत्रोक्तमेव स्पष्टीकर्त्तुं प्रश्नपूर्वकं श्लोकान्तरमवतारयति इन्द्रियाणीत्यादिना। पञ्चेति ज्ञानेन्द्रियवत् कर्म्मेन्द्रियाण्यपि वागादीनि गृह्यन्ते। किमपेक्षया तेषां परत्वं तत्राह देहमिति। तथापि केन प्रकारेण परत्वं

तदाह सौक्ष्म्येति । आदिशब्देन कारणत्वादि गृह्यते । इन्द्रियापेक्षया सूक्ष्मत्वादिना मनसः स्वरूपोक्तिपूर्व्वकं परत्वं कथयति तथेति । मनसि दर्शितं न्यायं बुद्धावतिदिशति तथा मनसस्त्विति । यो बुद्धेरित्यादि व्याचष्टे तथेत्यादिना । आत्मनो यथोक्तविशेषणस्याप्रकृतत्वमाशङ्क्याह यं देहिनमिति ॥ ४२ ॥

स्वा॰ टी॰ । यत्र चित्तप्रणिधानेनेन्द्रियाणि नियन्तुं शक्यन्ते तदात्मस्वरूपं देहादिभ्यो विविच्य दर्शयति इन्द्रियाणीति । इन्द्रियाणि देहादिभ्यो ग्राह्येभ्यः पराणि श्रेष्ठान्याहुः सूक्ष्मत्वात् प्रकाशकत्वाच्च अतएव तद्व्यतिरिक्तत्वमप्यर्थादुक्तं भवति, इन्द्रियेभ्यश्च संकल्पात्मकं मनः परं तत्प्रवर्त्तकत्वात्, मनसस्तु निश्चयात्मिका बुद्धिः परा निश्चयपूर्ब्बकत्वात् सकल्पस्य, यस्तु बुद्धेः परतस्तत्साक्षित्वेनावस्थितः सर्व्वान्तरः स आत्मा तं विमोहयति देहिनमिति देहिशब्दोक्त आत्मा स इति परामृश्यते ॥ ४२ ॥

**एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना ।**
**जहि शत्रुं महाबाहो ! कामरूपं दुरासदम् ॥४३**

**इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्व्वणि श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्ज्जुनसंवादे कर्मयोगो नाम तृतीयोऽध्यायः ।**

---

ततः किं एवमिति । एवं बुद्धेः परमात्मानं बुद्ध्वा ज्ञात्वा संस्तभ्य सम्यक् स्तम्भनं कृत्वा स्वेनैवात्मना संस्कृतेन मनसा सम्यक् समाधायेत्यर्थः, जहीति नं शत्रुं महा-

बाहो ! कामरूपं दुरासदं दुःखेनासदः आसादनं प्राप्ति-र्यस्य तं दुरासदं दुर्विज्ञेयानेकविशेषमिति ॥ ४३ ॥

इति श्रीभगवद्गीताभाष्ये तृतीयोऽध्यायः ।

आ० टी० । इन्द्रियादिसमाधानपूर्वकमात्मज्ञानात् कामजयो भवतीत्युपसंहरति एवमित्यादिना । संस्कृतं मनो मनःसमाधाने हेतुरिति सूचयति संस्तभ्येति । प्रकृतं शत्रुमेव विशिनष्टि कामरूपमिति । तस्य दुरासदत्वे हेतुमाह दुर्विज्ञेयेति । अनेको विशेषकादयो महाशनत्वादिस्तदनेनोपायभूता कर्म्मनिष्ठा प्राधान्येनोक्ता उपेयात्तु ज्ञाननिष्ठागुणत्वेनेति विवेक्तव्यम् ॥ ४३ ॥

इति तृतीयोऽध्यायः ।

स्वा० टी० । उपसंहरति एवमिति । बुद्धेरेव विषयेन्द्रियादिजन्याः कामादिविक्रियाः आत्मा तु निर्विकारस्तत्साक्षीत्येवं बुद्धेः परमात्मानं बुद्ध्वा आत्मना एवंभूतया निश्चयात्मिकया बुद्ध्या आत्मानं मनः संस्तभ्य निश्चलं कृत्वा कामरूपिणं शत्रुं जहि मारय दुरासदं दुःखेनासादनीयं दुर्विज्ञेयमित्यर्थः । स्वधर्म्मेण यमाराध्य भक्त्या मुक्तिमिता बुधाः । तं कृष्णं परमानन्दं तोषयेत् सर्वकर्म्मभिः ॥ ४३ ॥

इति तृतीयोऽध्यायः ।

---

# चतुर्थोऽध्यायः ।

## श्रीभगवानुवाच ।

**इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।**
**विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥१॥**

श्रीभगवानुवाच । योऽयं योगोऽध्यायद्वयेनोक्तो ज्ञाननिष्ठा-लक्षणः स संन्यासः स कर्म्मयोगोपायः यस्मिन् वेदार्थः परि-समाप्तः प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च गीतासु च सर्वास्वय-

मेव योगो विवक्षितो भगवता अतः परिसमाप्तं वेदार्थं मन्वानस्तं वंशकथनेन स्तौति भगवान् । इमं अध्यायद्वयेनोक्तं योगं विवस्वते आदित्याय सर्गादौ प्रोक्तवान् अहं जगत्परिपालयितॄणां क्षत्रियाणां बलाधानाय तेन योगबलेन युक्तास्ते समर्था भवन्ति ब्रह्म परिरक्षितुं ब्रह्मक्षत्रे परिपालिते जगत् परिपालयितुमलं अव्ययमव्ययफलत्वान्न ह्यस्य सम्यक्दर्शननिष्ठालक्षणस्य मोक्षाख्यं फलं वेति स च विवस्वान् मनवे प्राह मनुरिक्ष्वाकवे स्वपुत्रायादिराजायाब्रवीत् ॥१॥

आ० टी० । पूर्वाभ्यामध्यायाभ्यां निष्ठाद्वयात्मनो योगस्य गीतत्वात् वेदार्थस्य च समाप्तत्वात् वक्तव्याशेषाभावात् उक्तयोगस्य कृतिमत्त्वशङ्कानिवृत्तये वंशकथनपूर्विकां स्तुतिं भगवानुक्तवानित्याह श्रीभगवानिति । तदेतद्भगवद्वचनं वृत्तानुवादद्वारेण प्रस्तौति येयमिति । उक्तमेव योगं विभज्यानुवदति ज्ञानेति । संन्यासेनेतिकर्त्तव्यतया सहितस्य ज्ञानात्मनो योगस्य कर्माख्यो योगो हेतुरतस्तोपायोमेयभूतं निष्ठाद्वयं प्रतिष्ठापितमित्यर्थः । उक्ते योगद्वये प्रमाणमुपन्यस्यति यस्मिन्निति । अथवा ज्ञानयोगस्य कर्मयोगोपायत्वमेव स्फुटयति यस्मिन्निति । प्रवृत्त्या लक्ष्यते ज्ञायते कर्मयोगो निवृत्त्या च लक्ष्यते ज्ञानयोग इति विभागः । यद्यपि पूर्वस्मिन्नध्यायद्वये यथोक्तनिष्ठाद्वयं व्याख्यातं तथापि वक्ष्यमाणाध्यायेषु वक्तव्यान्तरमस्तीत्याशङ्क्याह गीतासु चेति । कथं तर्हि समनन्तराध्यायस्य प्रवृत्तिरत आह अत इति । वंशकथनं सम्प्रदायोपन्यासः सम्प्रदायो देशस्य, अकृत्रिमत्वशङ्कानिवृत्त्या योगः स्तुतौ पर्यवस्यति । गुरुशिष्यपरम्परोपन्यासमेवानुक्रामति इममिति । इममित्यस्य सन्निहितं विषयं दर्शयति अध्यायेति । योगं ज्ञाननिष्ठालक्षणं कर्मयोगोपायलभ्यमित्यर्थः । स्वयमकृतार्थानां प्रयोजनव्यग्राणां परार्थप्रवृत्त्यसम्भवाद्भगवतस्तथाविधप्रवृत्तिदर्शनात् कृतार्थता कल्पनीयेत्याह विवस्वत इति । अव्ययवेदमूलत्वादव्ययत्वं योगस्य गमयितव्यं

किमिति भगवता कृतार्थेनापि योगप्रवचनं कृतमिति तदाह जगदिति। कथं यथोक्तेन योगेन क्षत्रियाणां बलाधानं तदाह तेनेति युक्ताः क्षत्रिया इति शेषः, ब्रह्मशब्देन ब्राह्मणत्वजातिरुच्यते। यद्यपि योगप्रवचनेन क्षत्रं रक्षितं तेन च ब्राह्मणत्वं तथापि कथं रक्षणीयं जगदशेषं रक्षितमित्याशङ्क्याह ब्रह्मेति। ताभ्यां हि कर्मफलभूतं जगदनुष्ठानद्वारा रक्षितुं शक्यमित्यर्थः। योगस्याव्ययत्वे हेत्वन्तरमाह अव्ययफलत्वादिति। ननु कर्मफलवदुक्तयोगफलस्यापि साध्यत्वेन क्षयिष्णुत्वमनुमीयते नेत्याह न हीति। अपुनरावृत्तिश्रुतिप्रतिहतमनुमानं न प्रमाणीभवतीति भावः। भगवता विवस्वते प्रोक्तो योगस्तत्रैव पर्यवस्यतीत्याशङ्क्याह स चेति। स्वपुत्रायेत्युभयत्र सम्बध्यते, आदिराजायेक्ष्वाकोः सूर्य्यवंशप्रवर्त्तकत्वेन वैशिष्ट्यमुच्यते॥ १॥

स्वा० टी०। आविर्भावतिरोभावावाविष्कर्त्तुं स्वयं हरिः। तत्त्वम्पदविवेकार्थं कर्मयोगं प्रशंसति॥ एवं तावदध्यायद्वयेन कर्मयोगोपायकज्ञानयोगो मोक्षसाधनत्वेनोक्तस्तमेव ब्रह्मार्पणादिगुणविधानेन तत्त्वंपदार्थविवेकादिना च प्रपञ्चयिष्यन् प्रथमं तावत् परम्पराप्राप्तत्वेन स्तुवन् श्रीभगवानुवाच। इममिति त्रिभिः। अव्ययफलत्वादव्ययं इमं योगं पुराहं विवस्वते आदित्याय कथितवान्, स च स्वपुत्राय मनवे श्राद्धदेवाय प्राह, स च मनुः स्वपुत्रायेक्ष्वाकवेऽब्रवीत्॥ १॥

## एवं परम्पराप्राप्तमिमं राजर्षयो विदुः।
## स कालेनेह महता योगो नष्टः परन्तप!॥२॥

एवमिति। एवं क्षत्रियपरम्पराप्राप्तमिमं राजर्षयो राजानश्च ते ऋषयश्च राजर्षयो विदुरिमं योगं स योगः कालेनेह महता दीर्घेण नष्टो विच्छिन्नसंप्रदायः संवृत्तो हे परन्तप! आत्मनो विपक्षभूताः परे उच्यन्ते तान् शौर्य्यतेजोगभस्तिभिर्भानुरिव तापयतीति परन्तपः शत्रुतापन इत्यर्थः॥ २॥

आ० टी०। यथोक्ते योगे परम्परागते विशिष्टजनसम्मतिमुदाहरति एवमिति। तस्य कथं सम्प्रति वक्तव्यत्वं तदाह स कालेनेति। पूर्वार्द्धं व्याकरोति एवमित्यादिना। ऐश्वर्य्यसम्पत्तिमत्त्वं राजत्वं तेषामेव सूक्ष्मार्थनिरीक्षणक्षमत्वमृषित्वमित्युक्तेति भगवतोऽर्ज्जुनेन सह संव्यवहारकालो गृह्यते। परन्तपेति सम्बोधनं विभजते आत्मन इति ॥ २ ॥

स्वा० टी०। एवमिति एवं राजानश्च ते ऋषयश्चेति अन्येऽपि राजर्षयो निमिप्रमुखाः स्वपित्रादिभिरिक्ष्वाकुप्रमुखैः प्रोक्तमिमं योगं विदुर्जानन्ति स्म, अद्यतनानामज्ञाने कारणमाह हे परन्तप! शत्रु-तापन! स योगः कालवशादिह लोके नष्टो विच्छिन्नः ॥ २ ॥

**स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः।**
**भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥३॥**

दुर्बलान् अजितेन्द्रियान् प्राप्य नष्टं योगमिममुपलभ्य लोकञ्चापुरुषसम्बन्धिनं स एवायमिति। स एवायं मया ते तुभ्यमद्येदानीं योगः प्रोक्तः पुरातनः भक्तोऽसि मे सखा चासीति रहस्यं हि यस्मादेतदुत्तमं योगं ज्ञानमित्यर्थः ॥३॥

आ० टी०। किमिति वर्त्तमाने काले प्रकृतो योगः सम्प्रदायरहितोऽभूदित्याशङ्क्याधिकार्य्यभावादित्याह दुर्बलानिति। तदेव दौर्बल्यं प्रकृतोपयोगित्वेन व्याकरोति अजितेन्द्रियानिति। यद्यपि कामक्रोधादिप्रधानान् पुरुषान् प्रतिलभ्य कामक्रोधादिभिरभिभूयमानो योगो नष्टो विच्छिन्नसम्प्रदायः सञ्जातस्तथापि योगादृते पुरुषार्थो लोकस्य लभ्यते चेत् किमनेन योगोपदेशेनेत्याशङ्क्य यथोक्तयोगाभावे परमपुरुषार्थाप्राप्तेर्नैवमित्याह लोकञ्चेति। पूर्वो योगो विच्छिन्नसम्प्रदायोऽधुना लब्धयोगो मदर्थमुच्यते भगवतेत्याशङ्क्याह स एवेति। कस्मादन्यस्मै कस्मैचिद् पुरातनो योगो नोक्तो भगवतेत्याशङ्क्याह भक्तोऽसीति। उक्तानधिकारिणं प्रति योगस्य वक्तव्यत्वे हेतुमाह रहस्यं हीति। अनादि

वेदमूलत्वात् योगस्य पुरातनत्वं भक्तिः शरणबुद्धिः प्रीतिस्तया युक्तो निरुपाधिप्रेम्णा भक्तो विवक्षितः समानवयःस्निग्धः सहायः सखेत्यु-च्यते। एतदिति कथं योगो विशेष्यते तत्राह ज्ञानमिति ॥ ३ ॥

स्वा० टी०। स एवायमिति। स एवायं योगो विच्छिन्ने सम्प्र-दाये सति पुनश्च मया ते तुभ्यमुक्तो यतस्त्वं मम भक्तोऽसि सखा च अन्यस्मै मया नोच्यते हि यस्मादेतदुत्तमं रहस्यम् ॥ ३ ॥

## अर्जुन उवाच।

**अपरं भवतो जन्म परं जन्म विवस्वतः।**
**कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥४॥**

भगवता विप्रतिषिद्धमुक्तमिति मा भूत् कस्यचित् बुद्धिरिति परिहारार्थं चोद्यमिव कुर्वन् अर्जुन उवाच अपरमिति। अपरमर्वाक् वसुदेवगृहे भवतो जन्म परं पूर्वं सर्गादौ जन्मोत्पत्तिर्विवस्वत आदित्यस्य तत् कथमेत-द्विजानीयामविरुद्धार्थतया यस्त्वमेवादौ प्रोक्तवानिमं योगं स एव त्वमिदानीं मह्यं प्रोक्तवानसीति ॥ ४ ॥

आ० टी०। भगवति लोकस्यानीश्वरत्वशङ्कां निवर्त्तयितुं चोद्यमुद्भावयति भगवतेति। परिहारार्थं भगवतो मनुष्यवदवस्थित-स्यानीश्वरत्वमुपेत्य तद्वचने प्रसक्तविप्रतिषेधस्येति शेषः। भगवतो निज-रूपमपेत्य नेदं चोद्यं किन्तु लीलाविग्रहं मत्वेति यत्तु चोद्य-मिवेत्युक्तम्। एतच्छङ्कार्थमेव स्फुटयति अपरमिति ॥ ४ ॥

स्वा० टी०। भगवतो विवस्वन्तं प्रति योगोपदेशासम्भवं पश्य-न्नर्जुन उवाच अपरमिति। अपरं अर्वाचीनं तव जन्म परं प्राक्कालीनं विवस्वतो जन्म तस्मात्त्वमाधुनिकत्वाच्चिरन्तनाय विवस्वते त्वमादौ योगं प्रोक्तवानित्येतत् कथमहं जानीयां ज्ञातुं शक्नुयाम् ॥ ४ ॥

**श्रीभगवानुवाच।**

**बहूनि मे व्यतीतानि जन्मानि तव चार्जुन!।**
**तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप!॥५॥**

या वासुदेवेऽनीश्वरा सर्वज्ञाशङ्का मूर्खाणां तां परिहरन् श्रीभगवानुवाच। यदर्थो ह्यर्जुनस्य प्रश्नः बहूनीति। बहूनि मे मम व्यतीतानि अतिक्रान्तानि जन्मानि तव च हे अर्जुन! तान्यहं वेद जाने सर्वाणि न त्वं वेत्थ न जानीषे परन्तप! धर्माद्दिप्रतिबद्धज्ञानशक्तित्वादहं पुनर्नित्यशुद्धबुद्ध-मुक्तसत्यस्वभावत्वादनावरणज्ञानशक्तिरिति वेदाहं हे परन्तप!॥ ५॥

आ० टी०। भगवत्यज्ञानां मनुष्यत्वशङ्कां वारयितुं प्रतिवचन-मवतारयति या वासुदेव इति। अन्यथा प्रश्ने कथमाशङ्कान्तरं परि-हर्तुं भगवद्वचनमित्याशङ्क्य प्रतिवचनयोरेकार्थत्वमाह यदर्थो हीति। यस्य शङ्कितस्य विरोधस्य परिहारार्थः तस्य प्रश्नस्तमेव परिहारं वक्तुं भगवद्वचनमित्यर्थः। अतीतानेकजन्मवत्त्वं ममैव नासाधारणं किन्तु सर्वप्राणिसाधारणमित्याह तव चेति। तानि प्रमाणाभावान्न प्रति-भान्तीत्याशङ्क्याह तानीति। ईश्वरत्वादाहतज्ञानत्वादित्यर्थः। किमिति ... तानि मम न प्रतीयन्ते तवाहतज्ञानत्वादित्याह न त्वमिति। ... परिकल्प्य तत्परिभवार्थं प्रवृत्तत्वात्तव ज्ञानावरणं विशेषमित्याह ...दिति। अर्जुनस्य भगवता सहातीतानेकजन्मवत्त्वे तुल्येऽपि ज्ञान-... हेतुमाह धर्मेति। आदिशब्देन रागलोभादयो गृह्यन्ते। ...तातीत ...गमवत्तं मानसत्वा ... हेतुमाह अहमिति ॥५॥

श्रा० टी०। इदानीं ... त्वभिप्रायेणोत्तरं श्रीभगवा-... बहूनीति। तान्यहं वेद वेद्मि अलुप्तविद्याशक्तित्वात् त्वन्तु न ... अविद्यावृतत्वात् ॥ ५॥

**अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्।**
**प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ॥ ६ ॥**

कथं तर्हि तव नित्येश्वरस्य धर्माधर्माभावेऽपि जन्मेत्युच्यते अजोऽपीति। अजोऽपि जन्मरहितोऽपि संस्तथाव्ययात्मा अक्षीणज्ञानशक्तिस्वभावोऽपि सन् तथा भूतानां ब्रह्मादिस्तम्बपर्य्यन्तानां ईश्वर ईशनशीलोऽपि सन् प्रकृतिं मायां मम वैष्णवीं त्रिगुणात्मिकां यस्या वशे सर्वं जगत् वर्त्तते यया मोहितः सन् स्वमात्मानं वासुदेवं न जानाति तां प्रकृतिं स्वामधिष्ठाय वशीकृत्य सम्भवामि देहवानिव भवामि जात इवात्ममायया न परमार्थतो लोकवत् ॥ ६ ॥

व्या० टी०। ईश्वरस्य कारणाभावात् जन्मैवायुक्तमतो नानेकजन्मवत्त्वन्तु दूरोत्सारितमिति शङ्कते कथमिति। वस्तुतो जन्माभावेऽपि मायावशाज्जन्म सम्भवतीत्युत्तरमाह उच्यत इति। पारमार्थिकजन्मायोगे कारणं पूर्वार्द्धेनानूद्य प्रातिभासिकजन्मसम्भवे कारणमाह प्रकृतिमिति। प्रकृतिशब्दस्य स्वरूपविषयत्वं प्रत्यादिष्टमात्ममाययेत्युक्तम्। वस्तुतो जन्माभावे कारणानुवादभागं विवृणोति अजोऽपीत्यादिना। प्रातिभासिकजन्मसम्भवे कारणकथनपरमुत्तरार्द्धं विभजते प्रकृतिमित्यादिना। प्रकृतिशब्दस्य स्वरूपशब्दपर्य्यायत्वं वारयति मायामिति। तस्याः स्वातन्त्र्यं निराकृत्य भगवदधीनत्वमाह ममेति। तस्याश्च अधिकरणद्वारेणावच्छिन्नत्वं सूचयति वैष्णवीमिति। मायाशब्दस्यापि प्रज्ञानामसु पाठाद्ज्ञानशक्तिविषयत्वमाशङ्क्याह त्रिगुणात्मिकामिति। तस्याः कार्य्यलिङ्गकमनुमानं सूचयति यस्या इति। जगतो मायावशवर्त्तित्वमेव स्फुटयति ययेति। यथा लोके कश्चिज्जातो देहवानालक्ष्यते एवमहमपि मायामाश्रित्य तया स्ववशया सम्भवामि तेन मायामयमीश्वरस्य जन्मेत्याह तां प्रकृतिमित्यादिना। सम्भवामि इत्युक्तमेव

विभजते देहवानिति । अजादेरिव तथापि पारमार्थिकत्वाभिमानो जन्मादिविषये स्यादित्याशङ्क्य प्रागुक्तस्वरूपपरिज्ञानवत्त्वादीश्वरस्य नैवमित्याह न परमार्थेनेति । अज्ञातज्ञानवतो लोकस्य जन्मादिविषये परमार्थत्वाभिमानः सम्भवतीत्याह लोकवदिति ॥ ६ ॥

स्वा० टी० । ननु अनादेस्तव कुतो जन्म अविनाशिनश्च कथं पुनः पुनर्जन्म येन बहूनि मे व्यतीतानीत्युच्यते ईश्वरस्य तव पुण्यपापविहीनस्य कथं वा जीववज्जन्मेत्यत आह अजोऽपीति । सत्यमेवं तथापि अजोऽपि जन्मशून्योऽपि सन् तथाऽव्ययात्मापि अनश्वरस्वभावोऽपि सन् तथा ईश्वरोऽपि कर्मपारतन्त्र्यरहितोऽपि सन् स्वमायया सम्भवामि सम्यगप्रच्युतज्ञानबलवीर्यादिशक्त्यैव भवामि, ननु तथापि षोडशकलात्मकलिङ्गदेहशून्यस्य च तव कुतो जन्म इत्यत उक्तं स्वां शुद्धसत्त्वात्मिकां प्रकृतिमधिष्ठाय स्वीकृत्य विशुद्धोर्जितसत्त्वमूर्त्या स्वेच्छयावतरामीत्यर्थः ॥ ६ ॥

## यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ! ।
## अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥७॥

तच्च जन्म कदा किमर्थं वेत्युच्यते यदेति । यदा यदा हि धर्मस्य ग्लानिर्हानिर्वर्णाश्रमादिलक्षणस्य प्राणिनामभ्युदयनिःश्रेयससाधनस्य अभावो भवति भारत! अभ्युत्थानं समुद्भवोऽधर्मस्य तदा तदात्मानं सृजाम्यहं मायया ॥ ७ ॥

आ० टी० । यदीश्वरस्य मायानिबन्धनं जन्मेत्युक्तं तस्य प्रश्नपूर्वकं कालं कथयति तच्चेत्यादिना । चातुर्वर्ण्ये चातुराश्रम्ये च यथावदनुष्ठीयमाने नास्ति धर्महानिरिति मन्वानो विशिनष्टि वर्णेति । वर्णैराश्रमैस्तदाचारैश्च लक्ष्यते ज्ञायते धर्मः तस्येति यावत् । धर्महानौ समस्तपुरुषार्थभङ्गो भवतीत्यभिप्रेत्याह प्राणिनामिति । न च यथोक्तधर्मस्य हानिः सोढुं शक्यो भवानित्याह भारतेति । न केवलं प्राणिनां धर्महानिरेव भगवतो मायाविग्रहस्य परिग्रहे हेतुरपि तु

**तत्त्वतः तत्त्वेन यथावत्त्यक्त्वा देहमिमं पुनर्जन्म पुनरुत्पत्तिं नैति न प्राप्नोति मामित्यागच्छति समुच्यते अर्जुन ।॥ ९॥**

आ॰ टी॰। मायामयमीश्वरस्य जन्म न वास्तवं तस्यैव च जगत्परिपालनं कर्म नान्यस्येति जानतः श्रेयोऽवाप्तिं दर्शयन् विपक्षे प्रत्यवायं सूचयति तज्जन्मेत्यादिना। यथोक्तं मायामयं कल्पितमिति यावत्, वदनस्य यथावत्त्वं वेद्यस्य जन्मादेरुक्तरूपानतिवर्तित्वं यदि पुनर्भगवतो वास्तवं जन्म साधुजनपरिपालनादि चान्यस्यैव कर्म क्षत्रियस्येति विवक्ष्यते तदा तत्त्वापरिज्ञानप्रयुक्तो जन्मादिः संसारो दुर्वारः स्यादिति भावः ॥ ९ ॥

स्वा॰ टी॰। एवंविधानामीश्वरजन्मकर्मणां ज्ञाने फलमाह जन्मेति। स्वेच्छया कृतं मम जन्म कर्म च धर्मपालनरूपं दिव्यमलौकिकं तत्त्वतः परानुग्रहार्थमेवेति यो वेत्ति स देहाभिमानं त्यक्त्वा पुनर्जन्म संसारं नैति न प्राप्नोति किन्तु मामेव प्राप्नोति ॥ ९ ॥

**वीतरागभयक्रोधा मन्मया मामुपाश्रिताः।**
**बहवो ज्ञानतपसा पूता मद्भावमागताः॥ १० ॥**

नैष मोक्षमार्ग इदानीं प्रवृत्तः किं तर्हि पूर्वमपि वीतरागेति। वीतरागभयक्रोधाः रागश्च भयञ्च क्रोधश्च रागभयक्रोधाः वीता विगता येभ्यस्ते वीतरागभयक्रोधा मन्मया ब्रह्मविद ईश्वराभेददर्शिनो मामेव च परमेश्वरमुपाश्रिताः केवलज्ञाननिष्ठा इत्यर्थः बहवोऽनेके ज्ञानतपसा ज्ञानमेव च परमात्मविषयं तपस्तेन ज्ञानतपसा पूताः परां शुद्धिं गताः सन्तो मद्भावमीश्वरभावं मोक्षमागताः समनुप्राप्ताः इतरतपोनिरपेक्षा ज्ञाननिष्ठा इत्यस्य लिङ्गं ज्ञानतपसेति विशेषणम् ॥ १० ॥

आ०टी०। सम्प्रति प्रस्तुतमोक्षमार्गस्य नूतनत्वेनानाश्वास्यत्वमाशङ्क्य परिहरति नैष इति। तन्मयत्वस्य तद्भावगमनेनापौनरुक्त्यं दर्शयति ब्रह्मविद इति। आत्मनो भिन्नत्वेन भिन्नाभिन्नत्वेन वा ब्रह्मणो वेदनं व्यावर्त्तयति ईश्वरेति। अभेददर्शनेन सर्वाश्रयं कर्मानुष्ठानं प्रत्याचष्टे मामेवेति। तदुपाश्रयत्वमेव विशदयति केवलेति। मामुपाश्रिता इति केवलज्ञाननिष्ठत्वमुक्त्वा ज्ञानतपसा पूता इति किमर्थं पुनरुच्यते तत्राह इतरेति ॥ १० ॥

स्वा० टी०। कथं जन्मकर्मज्ञाने त्वत्प्राप्तिः स्यादित्यत आह वीतरागेति। अहं शुद्धसत्त्वावतारैर्धर्मपालनं करोमीति मदीयं परमकारुणिकत्वं ज्ञात्वा वीता विगता रागभयक्रोधा येभ्यस्ते। अतएव तेषामभावान्मन्मया मदेकचित्ता मत्तामेवोपाश्रिताः सन्तो मत्प्रसादलब्धं यदात्मज्ञानन्तु तदेव तत्परिपाकहेतुः स्वधर्मः। [illegible]। तेन ज्ञानतपसा पूताः शुद्धा निरस्ताज्ञानतत्कार्यमला मद्भावं मत्सायुज्यं प्राप्ता बहवः, न त्विदानीमेव प्रवृत्तोऽयं मद्भक्तिमार्ग इत्यर्थः, नैव तान्यहं वेद सर्वाणीत्यादिना विद्याविद्योपाधिकया तत्त्वं [illegible] जीवे प्रदर्श्य ईश्वरस्य चाविद्याभावेन नित्यशुद्धत्वाज्जीवस्य च तत्प्रसादलब्धज्ञानेनाज्ञाननिवृत्तेः शुद्धस्य स्वतत्त्वविदेति तदैक्यमभिप्रेतम् [illegible] ॥ १० ॥

**ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्।**

**मम वर्त्मानुवर्त्तन्ते मनुष्याः पार्थ! सर्वशः ॥११॥**

तव तर्हि रागद्वेषौ स्तः येन केभ्यश्चिदेवात्मभावं प्रयच्छसि न सर्वेभ्य इत्युच्यते ये यथेति। ये यथा येन प्रकारेण येन प्रयोजनेन यत्फलार्थितया मां प्रपद्यन्ते तांस्तथैव तत्फलदानेन भजाम्यहमनुगृह्णाम्यहं इत्येतत् तेषां मोक्षं प्रत्यक्षं प्रत्यनर्थित्वान्न ह्येकस्य मुमुक्षुत्वं फलार्थित्वञ्च युगपत् सम्भवति अतो ये यत्फलार्थिनः तान् तत्-

मद्वृत्तमनुवर्त्तन्ते तेषु भगवतोऽनुग्रहविशेषं दर्शयति तथेति । पूर्वार्द्धव्याख्यानमुपसंहरति इत्थेवमिति । भगवतोऽनुग्रहे निमित्तान्तरं निवारयति न पुनरिति । फलार्थित्वे मुमुक्षुत्वे च जन्तूनां भगवदनुवर्त्तनमावश्यकमित्युत्तरार्द्धं विभजते सर्वथापीति । सर्वावस्थत्वं येन तेनात्मना परस्यैवेश्वरस्यावस्थानं, मार्गो ज्ञानकर्मलक्षणः मनुष्यग्रहणा-दितरेषामीश्वरमार्गानुवर्त्तित्वमप्युदासः स्यादित्याशङ्क्याह यत्फलेति । सर्वप्रकारैर्मम मार्गमनुवर्त्तन्त इति पूर्वेण सम्बन्धः ॥ ११ ॥

स्वा° टी° । ननु तर्हि किं त्वय्यपि वैषम्यमस्ति यस्मादेवं त्वदेक-शरणानामेवात्मभावं ददासि नान्येषां सकामानामित्यत आह ये इति । यथा येन प्रकारेण सकामतया निष्कामतया वा ये मां भजन्ति तानहं तथैव तदपेक्षितफलदानेन भजामि अनुगृह्णामि न तु सकामा मां विहायेन्द्रादीनेव ये भजन्ते तानहमुपेक्ष इति मन्तव्यं यतः सर्वशः सर्वप्रकारैरिन्द्रादिसेवका अपि ममैव वर्त्म भजनमार्गमनुवर्त्तन्ते इन्द्रा-दिरूपेणापि ममैव सेव्यत्वात् ॥ ११ ॥

**काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ।**
**क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥१२**

यदि तवेश्वरस्य रागादिदोषाभावः तदा सर्वप्राणिषु अनुजिघृक्षायां तुल्यायां सर्वफलप्रदानसमर्थे च त्वयि सति वासुदेवः सर्वमिति ज्ञानेनैव मुमुक्षवः सन्तः कस्मा-त्त्वामेव सर्वे न प्रतिपद्यन्त इति शृणु तत्र कारणं काङ्क्षन्त इति । अभिलषन्तः कर्मणां सिद्धिं फलनिष्पत्तिं प्रार्थ-यन्तो यजन्ते इहास्मिन् लोके देवता इन्द्राग्न्याद्याः अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानामिति श्रुतेः तेषां हि भिन्नदेवतायाजिनां फलाकाङ्क्षिणां क्षिप्रं शीघ्रं हि यस्मान्मानुषे लोके मनुष्य-

लोके हि शास्त्राधिकारः क्षिप्रं हि मानुषे लोके इति विशेषणादन्येष्वपि कर्म्मफलसिद्धिं दर्शयति भगवान्मानुषे लोके वर्णाश्रमादिकर्म्माणीति विशेषः तेषाञ्च वर्णाश्रमाद्यधिकारिणां कर्म्मणां फलसिद्धिः क्षिप्रं भवति कर्म्मजा कर्म्मणो जाता ॥ १२ ॥

आ° टी° । अनुग्राह्याणां ज्ञानकर्मानुरोधेन भगवता तेष्वनुग्रहविधानात्तस्य रागद्वेषौ यदि न भवतस्तर्हि तस्य रागाद्यभावादेव सर्वेषु प्राणिष्वनुग्रहेच्छातुल्या प्राप्ता न च तस्यां सत्यामेव फलस्याल्पीयसः सम्पादने सामर्थ्यं न तु भगवतो महतो मोक्षाख्यस्य फलस्य प्रदानेऽशक्तिरिति युक्तमप्रतिहतज्ञानेच्छाक्रियाशक्तिमतस्तस्य सर्वफलप्रदानसामर्थ्यात्तथा च यथोक्तानुजिघृक्षायां सत्यां त्वयि च यथोक्तसामर्थ्यवति सति सर्वे फल्गुफलादभ्युदयात् विमुखा मोक्षमेवापेक्षमाणा ज्ञानेन त्वमेव किमिति न प्रतिपद्येरन्निति चोदयति यदीति । मोक्षापेक्षाभावात्तदुपायभूतज्ञानादपि वैमुख्याद्भगवत्प्राप्त्यभावे हेतुमभिदधानः समाधत्ते शृण्विति । कर्मफलसिद्धिमिच्छता किमिति मानुषे लोके देवतायजनमिष्यते तत्राह क्षिप्रं हीति । कर्मफलसम्पत्त्यर्थिनां यष्टृयष्टव्यविभागदर्शिनां तद्दर्शने कारणमात्मज्ञानमित्यत्र बृहदारण्यकश्रुतिमुदाहरति अथेति । अविद्याप्रकरणोपक्रमार्थमथेत्युक्तम् । उपायनं भेददर्शनमित्यनूद्य कारणमात्मज्ञानं न तत्रेति दर्शयति नेति । यथाश्वादीनां हलवहनादिना पशुरुपकरोत्येवमज्ञो देवादीनां यागादिभिरुपकरोतीत्याह यथेति । किमिति ते फलाकाङ्क्षिणो भिन्नदेवतायाजिनो ज्ञानमार्गं नापेक्षन्ते मन्त्रोत्तरार्द्धमुत्तरत्वेन योजयति तेषामित्यादिना । यस्माद्यथोक्तानामधिकारिणां कर्मप्रयुक्तं फलं लोकविशेषे झटिति सिध्यति तस्मात्तेषां मोक्षमार्गादस्ति वैमुख्यमित्यर्थः । मानुषलोकविशेषणं किमर्थमित्याशङ्क्याह मनुष्यलोके हीति । लोकान्तरेषु तर्हि कर्मफलसिद्धिर्नास्तीत्याशङ्क्य क्षिप्रविशेषणस्य तात्पर्यमाह क्षिप्रमिति । क्वचित् कर्मफलसिद्धिरविलम्बेन भवत्यन्यत्र तु विलम्बेनेति

विभागे को हेतुरित्याशङ्क्य सामग्रीभावाभावाभ्यामित्याह मानुष इति। मनुष्यलोके कर्मफलसिद्धेः शैघ्र्यात्तदभिमुखानां ज्ञानमार्गवैमुख्यं प्रायिकमित्युपसंहरति तेषामिति ॥ १२ ॥

स्वा॰ टी॰। तर्हि मोक्षार्थमेव किमिति सर्वे त्वां न भजन्तीत्यत आह काङ्क्षन्त इति। कर्मणां सिद्धिं कर्मफलं काङ्क्षन्तः प्रायेणेह मनुष्यलोके इन्द्रादिदेवता एव यजन्ते न तु साक्षान्मामेव हि यस्मात् कर्मजा सिद्धिः कर्मजं फलं शीघ्रं भवति न तु ज्ञानफलं कैवल्यं दुष्प्राप्यत्वाज्ज्ञानस्य ॥ १२ ॥

**चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः।**
**तस्य कर्त्तारमपि मां विद्ध्यकर्त्तारमव्ययम् ॥१३॥**

मानुष एव लोके वर्णाश्रमादिकर्म्माधिकारो नान्येषु लोकेष्विति नियमः किं निमित्त इति अथ वा वर्णाश्रमादिप्रविभागोपेताः मनुष्या मम वर्त्मानुवर्त्तन्ते सर्वश इत्युक्तं कस्मात् पुनः कारणात् नियमेन तवैव वर्त्मानुवर्त्तन्ते नान्यस्येत्युच्यते चातुर्वर्ण्यमिति। चातुर्वर्ण्यं चत्वार एव वर्णाश्चातुर्वर्ण्यं मयेश्वरेण सृष्टमुत्पादितं ब्राह्मणोऽस्य मुखमासीदित्यादिश्रुतेः गुणकर्म्मविभागशः गुणविभागशः कर्म्मविभागशश्च गुणाः सत्त्वरजस्तमांसि तत्र सात्त्विकस्य सत्त्वप्रधानस्य ब्राह्मणस्य शमो दमस्तप इत्यादीनि कर्म्माणि सत्त्वोपसर्जनरजःप्रधानस्य क्षत्रियस्य शौर्य्यतेजःप्रभृतीनि कर्म्माणि तम उपसर्जनरजःप्रधानस्य वैश्यस्य कृष्यादीनि कर्म्माणि रजउपसर्जनतमःप्रधानस्य शूद्रस्य शुश्रूषैव कर्म्मेत्येवं गुणकर्म्मविभागशः चातुर्वर्ण्यं मया सृष्टमित्यर्थः तच्चेदं चातुर्वर्ण्यं नान्येषु लोकेषु अतो मानुषे लोके इति

विशेषणं, हन्त तर्हि चातुर्वर्ण्यस्य धर्मादेः कर्मणः कर्तृत्वात्तत्फलेषु युज्यसे अतो न त्वं नित्यमुक्तो नित्येश्वर इत्युच्यते यद्यपि मायासंव्यवहारेण तस्य कर्मणां कर्तारमपि सन्तं तथापि मां परमार्थतो विद्ध्यकर्तारमत एवाव्ययमसंसारिणञ्च मां विद्धि॥ १३॥

आ०टी०। मनुष्यलोके चातुर्वर्ण्यं चातुराश्रम्यमित्यनेन द्वारेण कर्माधिकारनियमे कारणं पृच्छति मानुष एवेति। आदिशब्देनावस्थाविशेषा विवक्ष्यन्ते। प्रकारान्तरेण इत्तानुवादपूर्वकं चोद्यमुत्थापयति अथ वेत्यादिना। प्रश्नद्वयं परिहरति उच्यत इति। तर्हि तव कर्तृत्वभोक्तृत्वसम्भवादस्मदादितुल्यत्वेनानीश्वरत्वमित्याशङ्क्याह तस्येति। ईश्वरस्य विषमसृष्टिं विदधानस्य सृष्टिवैषम्यनिर्वाहकं कथयति गुणेति। गुणविभागेन कर्मविभागस्तेन। चातुर्वर्ण्यस्य सृष्टिमेवोपदिष्टां स्पष्टयति तत्रेत्यादिना। प्रश्नद्वयप्रतिविधानं प्रकृतमुपसंहरति तस्मादिति। मनुष्यलोके परं वर्णाश्रमादिपूर्वके कर्मण्यधिकारः तत्रैव वर्णादेरीश्वरेण सृष्टत्वात् लोकान्तरेषु तत्र वर्णादेरीश्वरमेव चातुर्वर्ण्याश्रमादिविभागभागिनोऽधिकारिणोऽनुवर्त्तन्ते तेनैव वर्णादेस्तद्व्यापारस्य च सृष्टत्वात्तदनुवर्त्तनस्य युक्तत्वादित्यर्थः। तस्येत्यादि द्वितीयभागापोद्यं चोद्यमनुद्रवति हन्तेति। यदि चातुर्वर्ण्यादिकर्तृत्वादीश्वरस्य प्रागुक्तो नियमोऽभिमतस्तर्हि तद्विषयसृष्ट्यादेस्तन्निष्ठव्यापारस्य च धर्मादेर्निर्वर्त्तकत्वात्तत्फलस्य कर्त्तृगामित्वात् कर्तृत्वभोक्तृत्वयोस्तवापि प्रसङ्गात् नित्यमुक्तत्वादि ते न स्यादित्यर्थः। मायया कर्तृत्वं परमार्थतस्त्वकर्तृत्वमित्यभ्युपगमान्नित्यमुक्तत्वादि सिध्यतीत्युत्तरमाह उच्यत इति। मायाप्रयुक्तेन संव्यवहारेण चातुर्वर्ण्यादेस्तत्कर्मणश्च यद्यपि कर्ताहं तथापि तथाविधं मां परमार्थतोऽकर्तारं विद्धीति योजना। अकर्तृत्वादेवाभोक्तृत्वसिद्धिरित्याह अत एवेति॥१३॥

आ० टी०। ननु केचित् सकामतया प्रवर्त्तन्ते केचिन्निष्कामतयेति कर्मवैचित्र्यं तत्कर्तृणाञ्च ब्राह्मणादीनामुत्तममध्यमादिवैचित्र्यं सर्वं तत्र कथं वैषम्यं नास्तीत्याशङ्क्याह चातुर्वर्ण्यमिति। चत्वारो-

यस्मा एवेति चातुर्वर्ण्यं स्वार्थे ष्यञ्प्रत्ययः, अयमर्थः सत्त्वप्रधाना ब्राह्मणास्तेषां शमदमादीनि कर्माणि, सत्त्वरजःप्रधानाः क्षत्रियास्तेषां शौर्य्ययुद्धादीनि कर्माणि रजस्तमःप्रधाना वैश्यास्तेषाञ्च कृषिवाणिज्यादीनि कर्माणि, तमःप्रधानाः शूद्रास्तेषाञ्च त्रैवर्णिकशुश्रूषादीनि कर्माणीत्येवं गुणानां कर्मणाञ्च विभागैश्चातुर्वर्ण्यं मयैव सृष्टमिति सत्यं तथाप्येवं तस्य कर्त्तारमपि फलतोऽकर्त्तारमेव मां विद्धि, तत्र हेतुरव्ययं आसक्तिराहित्येन श्रमरहितम् ॥ १३ ॥

**न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा।**
**इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥१४॥**

येषान्तु कर्मणां कर्त्तारं मां मन्यसे परमार्थतस्तेषामकर्त्तैवाहं यतः नेति। न मां तानि कर्माणि लिम्पन्ति देहाद्यारम्भकत्वेनाहङ्काराभावात् च तेषां कर्मणां फलेषु मे स्पृहा तृष्णा येषान्तु संसारिणां अहं कर्त्तेत्यभिमानः कर्मसु स्पृहा तत्फलेषु च तान् कर्माणि लिम्पन्तीति युक्तं तदभावात् मां कर्माणि लिम्पन्तीत्येवं योऽन्योऽपि मामात्मत्वेनाभिजानाति नाहं कर्त्ता न मे कर्म्मफले स्पृहेति स कर्म्मभिर्निबध्यते तस्यापि न देहाद्यारम्भकानि कर्माणि भवन्तीत्यर्थः ॥ १४ ॥

व्या॰ टी॰। ईश्वरस्य कर्त्तृत्वभोक्तृत्वयोर्वस्तुतोऽभावे कर्मतत्फले सम्बन्धवैधुर्य्यं फलतीत्याह येषां त्विति। कर्मतत्फलसंसर्गशून्यमीश्वरं मां यस्तो दर्शनानुरूपं फलं दर्शयति न मामिति। तानि कर्माणीति येषां कर्मणामहं कर्त्ता तवाभिमतस्तानीति यावत्। देहेन्द्रियाद्यारम्भकत्वेन तेषां कर्मणामीश्वरे संश्लेषाभावे तस्य तत्कारणावस्थायामहङ्काराभावं चेतुं करोति। अहङ्काराभावादिति। कर्मफलतृष्णाभावाश्चेश्वरं

कर्माणि न लिम्पन्तीत्याह न चेति । उक्तमेव प्रपञ्चयति येषां स्विति । तदभावात् कर्मस्वहं कर्त्तेत्यभिमानस्य तत्फलेषु स्पृहायाश्चाभावादित्यर्थः। ईश्वरस्य कर्मनिर्लेपेऽपि चेतनस्य किमायातमित्याशङ्क्योत्तरार्द्धं व्याचष्टे इत्येवमिति । अभिज्ञानप्रकारमभिनयति नाहमिति । ज्ञानफलं कथयति स कर्मभिरिति । कर्माऽसम्बन्धं विदुषि विघटयति सत्यपीति ॥ १४ ॥

स्वा० टी० । तदेव दर्शयन्नाह न मामिति । कर्माणि विश्वसृष्ट्यादीन्यपि मां न लिम्पन्ति आसक्तं न कुर्वन्ति निरहङ्कारत्वादाप्तकामत्वेन मम कर्मफले स्पृहाभावाच्च, मां न लिम्पन्तीति किं वक्तव्यं, यतः कर्मलेपराहित्येन मां योऽभिजानाति सोऽपि कर्मभिर्न बध्यते मम निर्लेपत्वकारणं निरहङ्कारत्वमिस्पृहत्वादिकं जानतस्तस्याप्यहङ्कारादिशैथिल्यात् ॥ १४ ॥

## एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।
## कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥१५॥

नाहं कर्त्ता न मे कर्म्मफले स्पृहेति एवमिति । एवं ज्ञात्वा कृतं कर्म्म पूर्वैरप्यतिक्रान्तैर्मुमुक्षुभिः कुरु तेन कर्मैव त्वं न तूष्णीमासनं नापि संन्यासः कर्त्तव्यस्तस्मात्त्वं पूर्वैरप्यनुष्ठितत्वादयथनात्मज्ञस्त्वं तदात्मशुद्ध्यर्थं तत्त्ववित्ते लोकसंग्रहार्थं पूर्वैर्जनकादिभिः पूर्वतरं कृतं नाधुनातनं कृतं निर्वर्त्तितम् ॥ १५ ॥

आ० टी० । तव कर्मतत्फलसम्बन्धाभावे तथा ज्ञानवतश्च तदसम्बन्धे ममापि किं कर्मणेत्याशङ्क्य कर्मणि कर्त्तृत्वाभिमानं तत्फले स्पृहाञ्चाकृत्वा मुमुक्षुवत् त्वया कर्म्म कर्त्तव्यमेवेत्याह नाहमित्यादिना । एवंमति नाहं कर्त्तेत्येवमादि परामृश्यते, तेन पूर्वैर्मुमुक्षुभिरनुष्ठितत्वेन हेतुनेत्यर्थः । कर्मैवत्येवकारार्थमाह नेत्यादिना । त्वंपदस्य क्रियापदेन सम्बन्धः । तस्मादित्युक्तमेव स्फुटयति पूर्वैरिति । यदुक्तं किं मम

कर्म्मैवेति तत्र त्वमज्ञो वा तत्त्वविद्वा यद्यज्ञस्तदा चित्तशुद्ध्यर्थं कुरु कर्म्मेत्याह यदीति । द्वितीयं पक्षमाह तत्त्वविदिति । कुरु कर्म्मेति सम्बन्धः । पूर्व्वैर्वृद्धैराचरितमित्येतावता किमिति विवेकवता मया तत् कर्त्तव्यमित्याशङ्क्याह जनकादिभिरिति । ते तदैव संपाद्य कर्म्म कृतयत्नो न तदिदानीमप्रामाणिकत्वादनुष्ठेयमित्याशङ्क्याह पूर्व्वतरमिति ॥ १५ ॥

व्या० टी० । ये यथा मामित्यादिचतुर्भिः श्लोकैः प्रासङ्गिकमीश्वरस्य वैषम्यं परिहृत्य पूर्व्वोक्तमेव कर्म्मयोगं प्रपञ्चयितुमनुसारयति एवमिति । अहङ्कारादिराहित्येन कृतं कर्म्म बन्धकं न भवतीत्येवं ज्ञात्वा पूर्व्वैर्जनकादिभिरपि मुमुक्षुभिः सत्त्वशुद्ध्यर्थं पूर्व्वतरं युगान्तरेष्वपि कृतं तस्मात्त्वमपि प्रथमं कर्म्मैव कुरु ॥ १५ ॥

**किं कर्म्म किमकर्म्मेति कवयोऽप्यत्र मोहिताः ।**
**तत्ते कर्म्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् १६**

तत्र कर्म्म चेत् कर्त्तव्यं त्वद्वचनादेव करोम्यहं किं विशेषितेन पूर्व्वैः पूर्व्वतरं कृतमित्युच्यते यस्मान्महद्वैषम्यं कर्म्माकर्म्मणि कथं किं कर्म्मेति । किं कर्म्म किञ्चाकर्म्मेति कवयो मेधाविनोऽपि अत्रास्मिन् कर्म्मादिविषये मोहिताः मोहं गताः अतस्ते तुभ्यमहं कर्म्माकर्म्म च प्रवक्ष्यामि यत् ज्ञात्वा विदित्वा कर्म्मादि मोक्ष्यसे अशुभात् संसारात्, न चैव त्वया मन्तव्यं कर्म्म नाम देहादिचेष्टा लोकप्रसिद्धमकर्म्म नाम तदक्रिया तूष्णीमासनं किं तत्र बोद्धव्यमिति ॥१६

व्या० टी० । कर्म्मविशेषणमाक्षिपति तत्रेति । मनुष्यलोकः सप्तम्यर्थः । कर्म्मणि महतो वैषम्यस्य विद्यमानत्वात्तस्य पूर्व्वैरनुष्ठितत्वेन पूर्व्वतरत्वेन च विशेषितम्, तस्मिन् प्रवृत्तिस्तव दुष्करेति युक्तं विशेषणमिति परिहरति उच्यत इति । कर्म्मणि देहादिचेष्टारूपे लोकप्रसिद्धे नास्ति वैषम्यमिति शङ्कते कथमिति । विज्ञानवतामपि कर्म्मादिविषये

व्यामोहोपपत्तेः सुतरामेव तव तद्विषये व्यामोहसम्भवात्तदपोहार्थं वाक्यापेक्षत्वादस्ति कर्म्मणि वैषम्यमित्युत्तरमाह किं कर्मेति। तत्र कर्मेत्यत्राकारानुबन्धेनापि पदं छेत्तव्यम्। कर्म्मादिप्रवचनस्य प्रयोजनमाह यज्ज्ञात्वेति। तत्कर्म्माकर्म्म चेति सम्बन्धः, अतो मेधाविनोऽपि यथोक्ते विषये व्यामोहस्य सत्त्वादित्यर्थः। कर्मणोऽकर्मणश्च प्रसिद्धत्वात्तद्विषये न किञ्चिद्बोद्धव्यमिति चोद्यमनूद्य निरस्यति न चेति ॥ १६ ॥

स्वा० टी०। तच्च तत्त्वविद्भिः सह विचार्य्य कर्त्तव्यं न लोकपरम्परामात्रेणेत्याह किं कर्मेति। किं कर्म कीदृशं कर्म्म करणं किमकर्म्म कीदृशं कर्म्माकरणं इत्यस्मिन्नर्थे विवेकिनोऽपि मोहिताः, अतो यज्ज्ञात्वा यदनुष्ठायाशुभात् संसारान्मोक्ष्यसे मुक्तो भविष्यसि तत् कर्माकर्म च तुभ्यमहं प्रवक्ष्यामि तच्छृणु ॥ १६ ॥

**कर्मणो ह्यपि बोद्धव्यं बोद्धव्यञ्च विकर्मणः।**
**अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥ १७ ॥**

कस्मात् उच्यते कर्म्मण इति। कर्म्मणः शास्त्रविहितस्य हि यस्मात् अप्यस्ति बोद्धव्यं बोद्धव्यञ्चास्त्येव विकर्म्मणः प्रतिषिद्धस्य तथा अकर्मणश्च तूष्णीम्भावस्य बोद्धव्यमस्तीति त्रिष्वप्यध्याहारः कर्त्तव्यो यस्मात् गहना विषमा दुर्ज्ञेया कर्म्मण इत्युपलक्षणार्थं कर्मादीनां कर्माकर्म्मविकर्म्मणां गतिर्याथात्म्यं तत्त्वमित्यर्थः ॥ १७ ॥

आ० टी०। तत्र हेत्वाकाङ्क्षापूर्वकमनन्तरं श्लोकमवतारयति कस्मादिति। त्रिष्वपि कर्म्माकर्म्मविकर्म्मसु बोद्धव्यमस्तीति यस्मादध्याहारस्तस्मान्मदीय प्रवचनमर्थवदिति योजना। बोद्धव्यसद्भावे हेतुमाह यस्मादिति। त्रितयं प्रकृत्यान्यतमस्य गहनत्ववचनमयुक्तमित्याशङ्क्यान्यतमगहनस्योपलक्षणार्थत्वमुपेत्य विवक्षितमर्थमाह कर्म्मादीनामिति ॥ १७ ॥

स्वा० टी०। ननु लोकप्रसिद्धमेव कर्म देहादिव्यापारात्मकं

अकर्म्म च तदव्यापारात्मकं अतः कथमुच्यते कथयोऽप्यत्र मोहं प्राप्ता इति तत्राह कर्म्मण इति । कर्म्मणो विहितव्यापारस्यापि तत्त्वं बोद्धव्यमस्ति न तु लोकप्रसिद्धमात्रमेव, अकर्मणोऽविहितव्यापारस्यापि तत्त्वं बोद्धव्यमस्ति विकर्मणः निषिद्धव्यापारस्यापि तत्त्वं बोद्धव्यमस्ति, यतः कर्मणो गतिर्गहना, कर्म इत्युपलक्षणार्थं कर्म्माकर्म्मविकर्मणां तत्त्वं दुर्विज्ञेयमित्यर्थः ॥ १७ ॥

**कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।**
**स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥१८**

किं पुनस्तत्त्व कर्मादिर्यज्ज्ञात्वा वक्ष्यामीति प्रतिज्ञातमुच्यते कर्मणीति । कर्मणि कर्म क्रियत इति व्यापारमात्रं तस्मिन् कर्मणि अकर्म कर्माभावं यः पश्येदकर्मणि च कर्माभावे कर्तृतन्त्रत्वात् प्रवृत्तिनिवृत्त्योर्वस्त्वप्राप्येव हि सर्व एव क्रियाकारकादिव्यवहारोऽविद्याभूमावेव कर्म यः पश्येत् यः पश्यति स बुद्धिमान् मनुष्येषु स युक्तो योगी च कृत्स्नकर्मकृत् समस्तकर्मकृच्च स इति स्तूयते कर्माकर्मणोरितरेतरदर्शी, ननु किमिदं विरुद्धमुच्यते कर्मण्यकर्म यः पश्येदित्यकर्मणि

---

व्या० टी० । उत्तरश्लोकमाकाङ्क्षापूर्वकमुपादत्ते किं पुनरिति । प्रथमपादस्याक्षरोत्थमर्थं कथयति कर्मणीत्यादिना । द्वितीयपादस्याऽपि अक्षरमकाशितमर्थं निर्दिशति अकर्मणि चेति । कर्माभावे यः कर्म पश्यतीति सम्बन्धः । प्रवृत्तेरेव कर्मत्वाभिव्यक्तेस्तदभावत्वात्तत्र कर्मदर्शनं अयायमित्युक्तं कर्त्रुरपि कारकाधीनत्वेनापि प्रोक्तमभिप्रेत्याह कर्तृतन्त्रत्वादिति । प्रवृत्ताविव निवृत्तावपि कर्मदर्शनमविरुद्धमिति शेषः । ननु निवृत्तेर्वस्त्वधीनत्वात् कारकनिबन्धनाभावात् तत्र कर्मदर्शनं युज्यते

च कर्मेति, न हि कर्माकर्म स्यादकर्म वा कर्म तत्र विरुद्धं कथं पश्येत् द्रष्टा, नन्वकर्मैव परमार्थतः सत्कर्मवदवभासते मूढदृष्टेर्लोकस्य तथा कर्मैवाकर्मवत् तत्र यथा भूतदर्शनार्थमाह भगवान् कर्म्मण्यकर्म्म यः पश्येदित्यादि, अतो न विरुद्धं बुद्धिमत्त्वाद्युपपत्तेश्च बोद्धव्यमिति च यथा भूतं दर्शनमुच्यते, न च विपरीतज्ञानादशुभान्मोक्षणं स्यात् यत् ज्ञात्वा मोक्ष्यसेऽशुभादिति चोक्तं तस्मात् कर्माकर्मणी विपर्य्ययेण गृह्णीते प्राणिभिस्तद्विपर्य्ययग्रहणनिवृत्त्यर्थं भगवतो वचनं कर्म्मण्यकर्म्म यः इत्यादि न चात्र कर्माधिकरणमकर्मास्ति कुण्डे वदराणीव नाप्यकर्माधिकरणं कर्मास्ति कर्माभावत्वादकर्म्मणोऽतो विपरीते गृह्णीते एव कर्माकर्मणी लौकिकैः यथा मृगतृष्णिकायामुदकं शुक्तिकायां वा रजतं, ननु कर्म्म कर्मैव सर्वेषां न क्वचित्

---

तत्राह पश्येदिति । क्रियाकारकफलव्यवहारस्य सर्वस्याविद्यावस्थायामेव प्रवृत्तत्वाद्वस्तुसंस्पर्शशून्यत्वात् प्रवृत्तिनिवृत्त्योरपि यः कर्म पश्यति स मनुष्येषु बुद्धिमानिति सम्बन्धः । कर्मण्यकर्म अकर्मणि च कर्म पश्यतो बुद्धिमत्त्वं युक्तं समस्तकर्मकृत्त्वञ्च कथमित्याशङ्क्याह इति स्तूयत इति । श्लोकस्य शब्दोत्थेऽर्थे दर्शिते तात्पर्य्यार्थपरिज्ञानाय विरोधं शङ्कते नन्विति । कथमिदं विरुद्धमित्याशङ्क्याह कर्मणीति । विषयसप्तमी वा स्यादधिकरणसप्तमी वेति विकल्पमाद्येऽन्याकारं ज्ञानमन्यालम्बनमिति स्पष्टो विरोधः स्यादित्याह न हीति । अन्यस्यान्यात्मतायोगात् कर्माकर्मणोर्भेदादसम्भवादकर्माकारं कर्मालम्बनं ज्ञानमयुक्तमित्यर्थः । द्वितीयं दूषयति तत्रेति । कर्मण्यधिकरणे ततो विरुद्धमकर्म कथमाधेयं द्रष्टा द्रष्टुमीष्टे न हि कर्माकर्मणोर्मिथो विरुद्धयोराधाराधेयभावः सम्भ-

व्यभिचरति तत्र नौस्थस्य नावि गच्छन्त्यां तटस्थेष्वगतिकेषु नगेषु प्रतिकूलगतिदर्शनात् दूरेषु चक्षुषाऽसन्निकृष्टेषु गच्छत्सु गत्यभावदर्शनादेवमिहाप्यकर्मणि अहं करोमीति कर्मदर्शनं कर्मणि चाकर्मदर्शनं विपरीतदर्शनं येन तन्निराकरणार्थमुच्यते कर्मण्यकर्म यः पश्येदित्यादि, तदेतदुक्तप्रतिवचनमप्यसकृदत्यन्त विपरीतदर्शनभावितया मोमुह्यमानो लोकः श्रुतमप्यसकृत्तत्त्वं विस्मृत्य मिथ्याप्रसङ्गमव-

---

वतीत्यर्थः। विपर्ययप्रसङ्गमनुपेत्य सिद्धान्ती परिहरति नन्वकर्मैवेति। लोकस्य अदृष्टविवेकस्यार्जितस्य परमार्थेन ब्रह्माकर्माक्रियमेव सत् भ्रान्त्या कर्मसहितं क्रियावदिव प्रतिभातीत्युत्तरार्थः। परस्पराध्याससमुपेत्योक्तं तथेति। यथा खल्वकर्म ब्रह्म कर्मवदुपलभ्यते तथा कर्म सक्रियमेव द्वैतं अक्रिये ब्रह्मण्यधिष्ठाने संसृष्टं तद्वद्भातीत्यक्षरयोजना। कर्माकर्मणोरितरेतराध्यासे सिद्धे सम्यग्दर्शनसिद्ध्यर्थं भगवतो वचनमुचितमित्याह नवेति। यथा यदिदं रजतमिति प्रतिपन्नं तदिदानीं शुक्तिशकलं पश्येति भ्रान्तिसिद्धरजतरूपं पश्चादनुवादेन तदधिष्ठानं शुक्तिमात्रमुपदिश्यते तथा भ्रमसिद्धकर्मादिमात्मानमनुवादेन तदधिष्ठानं कर्मादिरहितं कूटस्थं ब्रह्म भगवता व्यपदिश्यते तथा च भगवद्वचनमविरुद्धमित्याह अत इति। इत्यध्यारोपितकर्माद्यनुवादेन तदधिष्ठानस्य कर्मादिरहितस्य निर्विशेषस्य ब्रह्मणो भगवता बोध्यमानत्वान्न तत्र विरोधाशङ्कावकाशो भवतीत्याह बुद्धिमत्त्वादिति। कूटस्थाद् ब्रह्मणोऽन्यस्य सर्वस्य मायामात्रत्वात् अन्यज्ञानाद्बुद्धिमत्त्वयुक्तत्वसर्वकर्मकृत्त्वानामनुपपत्तेरेव च बुद्धिमानित्यादिना बुद्धिमत्त्वादिनिर्देशात् ब्रह्मज्ञानादेव तदुपपत्तेः सर्वक्रियारहितं ब्रह्मज्ञानमेव निश्चितमित्यर्थः। बोद्धव्यस्य सम्यग्ज्ञाने प्रसिद्धत्वात् कर्माकर्मविकर्मणां स्वरूपं बोद्धव्यमस्तीति वदता सम्यग्ज्ञानोपदेशस्य विवक्षितत्वादपि कूटस्थं ब्रह्माकर्माभि-

वार्थ्यावतार्य्यं चोदयतीति पुनः पुनरुत्तरमाह भगवान्, दुर्विज्ञेयत्वञ्चालक्ष्य वस्तुनः अव्यक्तोऽयमचिन्त्योऽयं न जायते म्रियते इत्यादिनात्मनि कर्माभावः श्रुतिस्मृतिन्यायप्रसिद्ध उक्तो वक्ष्यमाणश्च तस्मिन्नात्मनि कर्माभावे अकर्मणि कर्मविपरीतदर्शनमत्यन्तनिरूढं यतः किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः देहाद्याश्रयं कर्मात्मन्यध्यारोप्याहं कर्त्ता ममैतत् कर्म मयास्य कर्मणः फलं भोक्तव्यमिति च तथाहं तूष्णीं भवामि येनाहं निरायासोऽकर्मा सुखी

---

प्रेतमित्याह बोद्धव्यमिति । फलवचनपर्य्यालोचनायामपि कूटस्थं ब्रह्मात्माभिप्रेतं प्रतिभातीत्याह न चेति । सम्यग्ज्ञानाधीनफलमत्र न श्रुतमित्याशङ्क्याह यं ज्ञात्वेति । अध्यारोपापवादार्थं भगवद्वचनमविरुद्धमित्युपपादितमुपसंहरति तस्मादिति । तद्विपर्य्ययेणात्र तच्छब्देन प्राणिनो दृष्टान्तो । विषमसमीपरिग्रहेण परिहारमभिधायाधिकरणसमीपत्वं दर्शितं दूषणमङ्गीकारेण परिहरति न चेति । व्यवहारभूमिरत्रोच्यते. योग्यत्वे सत्यनुपलब्धेरित्यर्थः । अकर्माधिकरणं कर्म न सम्भवतीत्यत्र हेत्वन्तरमाह कर्माभावत्वादिति । न हि तुच्छस्याधिकरणत्वं क्वचिद् दृष्टमिष्टं वेत्यर्थः । निरूप्यमाणे कर्माकर्मणोरधिकरणाधिकरणिभावासम्भवे फलितमाह यत इति । शास्त्रपरिचयविरहिणामध्यारोपमुदाहरति यथेति । कर्माकर्मणोरारोपितत्वमुक्तमसहमानः शङ्कते नन्विति । कर्म कर्मैवेत्यकर्म चाकर्मैवेति द्रष्टव्यं, विमतं सत्यमव्यभिचारित्वात् ब्रह्मवदित्यर्थः । तत्र कर्म तत्त्वतो नाव्यभिचारि कर्मत्वान्नौस्थस्य तटस्थवृक्षगमनवदित्यव्यभिचारित्वं कर्मणोऽसिद्धमिति परिहरति तन्नेति । अकर्म च तत्त्वतो नाव्यभिचारि कर्माभावत्वात् दूरप्रदेशे चैत्रमैत्रादिषु गच्छत्स्वेव चक्षुषा सन्निधानविधुरेषु दृश्यमानगत्यभावादित्याह दूर इति । दूरत्वादेव विशेषतः सन्निकर्षविरहितेषु तेषु स्वरूपेण चक्षुः-

स्वामिति कार्य्यं करणाश्रयव्यापारोपरमं कर्मैव तत्कृतञ्च सुखित्वमात्मन्यध्यारोप्य न करोमि किञ्च तूष्णीं सुखमासमित्यभिमन्यते लोकस्तत्रेदं लोकस्य विपरीतदर्शनापनयनायाह भगवान् कर्मण्यकर्म यः पश्येदित्यादि । अत्र च कर्म कर्मैव सत् कार्यकरणाश्रयं कर्मरहितेऽविक्रिये आत्मनि सर्वैरध्यस्तं यतः पण्डितोऽप्यहं करोमीति मन्यते अत आत्मसमवेततया सर्वलोकप्रसिद्धे कर्मणि नदीकूलस्थेष्विव वृक्षेषु गतिः प्रातिलोम्येनातोऽकर्म कर्माभावं यथा-

---

चलितकटेषु चक्षुषा गत्यभावदर्शनादिति योजना । गतिरहितेषु तटस्थेषु गतिदर्शनवत् प्रकृते ब्रह्मण्यविक्रये कर्मदर्शनं सक्रिये च द्वैतप्रपञ्चे चितिमत्सु चैत्रादिषु गत्यभावदर्शनवत् कर्माभावस्य विपरीतदर्शनं येन हेतुना सम्भवति तेन तस्य विपरीतदर्शनस्य निरसनार्थं भगवद्वचनमिति दार्ष्टान्तिकं निगमयति एवमित्यादिना । ननु कर्म तदभावयोरारोपितत्वादविक्रियस्य ब्रह्मणो ज्ञानमात्राभिप्रेतं चेदव्यक्तोऽयमचिन्त्योऽयं न जायते म्रियते वेत्यादिना पौनरुक्त्यं प्राप्तं तत्रैव ब्रह्मात्मनो निर्विकारत्वस्योक्तत्वादिति तत्राह तदेतदिति । तदेतदात्मनि यत्कृतं सक्रियत्वमसदुक्तं प्रतिवचनमपि निर्विकारात्मवस्त्वपेक्षयात्यन्तविपरीतदर्शनं मिथ्याज्ञानं तेन भावितत्वं तत्संस्कारप्रचयवत्त्वं ततोऽतिशयेन मोहमापद्यमानो लोकः श्रुतमपि तत्त्वं विस्मृत्य पुनर्यत्किञ्चित् प्रसङ्गमापाद्य सक्रियत्वमेवात्मनश्चोदयतीति पुनः पुनस्तत्त्वभूतमुत्तरं भगवानभिधत्ते वस्तुनस्य दुर्विज्ञेयत्वात् पुनः पुनः प्रतिपादनं तत्तद्भ्रमनिराकरणार्थमुपयुज्यते तथा च नास्ति पुनरुक्तिरित्यर्थः । असकृदुक्तप्रतिवचनमेवानुवदति अव्यक्तोऽयमिति । कर्माभाव उक्त इति सम्बन्धः । उक्तस्य न जायते म्रियते वा विपश्चिदित्यादिश्रुतौ प्रकृतकृताकृतत्वादिन्यायेन च प्रसिद्धत्वमस्तीत्याह श्रुतीति । न केवलमुक्तः कर्माभावः किन्तु सर्वकर्मा...

भूतं गत्यभावमिव वृक्षेषु यः पश्येत् अकर्मणि च कार्य्यकरणव्यापारोपरमे कर्मवत् आत्मन्यध्यारोपिते तूष्णीमकुर्वन् सुखमासे इत्यहङ्काराभिसन्धिहेतुत्वात्तस्मिन् अकर्मणि च कर्म यः पश्येत् य एवं कर्माकर्मविभागज्ञः स बुद्धिमान् पण्डितो मनुष्येषु स युक्तो योगी कृत्स्नकर्मकृच्च सोऽशुभान्मोक्षितः कृतकृत्यो भवतीत्यर्थः।

अयं श्लोकोऽन्यथा व्याख्यातः कैश्चित्, कथं नित्यानां किल कर्मणामीश्वरार्थेऽनुष्ठीयमानानां तत्-

---

मनसा संन्यस्येत्यादौ वक्ष्यमाणश्चेत्याह वक्ष्यमाणश्चेति। ननु कर्मणां देहादिनिर्वर्त्तकत्वेन नैर्विध्यात् कूटस्थस्वभावस्यात्मनोऽसङ्गत्वात्तद्व्यापाररूपस्य कर्मणोऽप्रसिद्धत्वात् न तस्मिन्नकर्मणि विपरीतस्य कर्मणो दर्शनं सिध्यतीत्याशङ्क्याह तस्मिन्निति। कर्मैव विपरीतं तस्य दर्शनमिति यावत्, अहं कर्त्तेत्यात्मसमानाधिकरणस्य व्यापारस्यानुभवात् कर्मभ्रमस्तावदात्मन्यत्यन्तरूढोऽस्तीत्यर्थः। आत्मनि कर्मविभ्रमोऽस्तीत्यत्र हेतुमाह यत इति। आत्मनो निष्क्रियत्वे कुतस्तस्मिन् यथोक्तो विभ्रमः सम्भवेदित्याशङ्क्याह देहेति। इदानीमात्मन्यकर्मभ्रममुदाहरति तथेत्यादिना। यथा शुक्तौ स्वाभाविकमरूप्यत्वं रूप्यत्वमारोपितं तदभावोऽप्यारोप्याभावत्वादारोपपक्षपाती तथात्मनोऽपि स्वाभाविकमविक्रियत्वं पुनरध्यस्तं तदभावत्वात् कर्माभावोऽप्यध्यस्त एवेति मन्वानः समुपसंहरति तस्मेदमिति। आत्मनि कर्मादिविभ्रमे लौकिके सिद्धे सति एवं कर्मणीत्यादिवचनं तत्परिहारार्थं भगवतानुक्तमित्यर्थः। सम्प्रत्युक्तेऽर्थे श्लोकाक्षरसमनुगमं दर्शयितुं कर्मणीत्यादि व्याचिख्यासुः भूमिकां करोति यत्र चेति। व्यवहारभूमौ कार्य्यकारणाधिकरणं कर्म स्वेनैव रूपेण व्यवस्थितं तदात्मन्यविक्रिये कार्य्यकरणारोपणद्वारेण सर्वैरारोपितमित्यत्र हेतुमाह यत इति। अविवेकिनान्तु कर्त्तृत्वाभिमानः सुतरामिति वक्तु-

फलाभावादकर्माणि तान्युच्यते गौण्या वृत्त्या तेषाञ्चाकरणमकर्म तच्च प्रत्यवायफलत्वात् कर्मोच्यते गौण्यैव वृत्त्या तत्र नित्ये कर्मणि अकर्म यः पश्येत् फलाभावात् यथा धेनुरपि गौरगौरुच्यते क्षीराख्यं फलं न प्रयच्छतीति तद्वत् तथा नित्याकरणे त्वकर्मणि कर्म यः पश्येत् नरकादि प्रत्यवायफलं प्रयच्छतीति, नैतत् युक्तं व्याख्यानमेवं ज्ञानादशुभान्मोक्षानुपपत्तेर्यत ज्ञात्वा मोक्ष-

---

मपि शब्दः । आत्मनि कर्मरहिते कर्मारोपे दृष्टान्तमाह नदीति । एवमात्मनि कर्मारोपमुपपाद्य प्रथमपादं व्याचष्टे अत इति । आरोपवशादात्मनिष्ठत्वेन कर्मणि सर्वलोकप्रसिद्धे कर्माभावं यः पश्येत् स बुद्धिमानिति सम्बन्धः अकर्मदर्शनस्य यथाभूतत्त्वं सम्यक्त्वम् । तत्र दृष्टान्तमाह गत्यभावमिवेति । द्वितीयपादं व्याकरोति अकर्मणि चेति । अध्यारोपमभिनयति तूष्णीमिति । अकर्मणि कर्मदर्शने युक्तिमाह अहङ्कारेति । पूर्वार्द्धं नोक्तमनूद्योत्तरार्द्धं विभजते य एवमिति । आत्मनि कार्यकरणसङ्घातसमारोपद्वारेण तद्व्यापारमात्मे कर्मणि शुक्तिकायामिव रजतमारोपिते विषये तदभावमकर्म वस्तुतो यो रजताभाववदनुभवति अकर्मणि च सङ्घातव्यापारोपरमे तद्द्वारा स्वात्मन्यहं तूष्णीमासे सुखमित्यारोपिते गोचरे कर्माहङ्कारहेतुकं यस्तत्त्वतो मन्यते स कृत्यतदभावविभागहीनशुक्तिमात्रवदात्ममात्रं कर्म तदभावविभागशून्यं कूटस्थं परमार्थतोऽवगच्छन् बुद्धिमानित्यादिस्तुतियोग्यतां गच्छतीत्येवं स्वाभिप्रायेण श्लोकं व्याख्याय अत्र वृत्तिकारव्याख्यानमुत्थापयति अयमिति । अन्यथा व्याख्यानमेव प्रश्नद्वारा प्रकटयति कथमित्यादिना । ईश्वरार्थमनुष्ठाने फलाभाववचनं व्याहतमिति मत्वाह क्रियेति । नित्यानामकर्मत्वमप्रसिद्धमित्याशङ्क्य फलराहित्यगुणयोगात्तेष्वकर्मत्वव्यवहारः सिध्यतीत्याह गौण्येति । नित्यानामकरणं मुख्यवृत्त्यैवाकर्मपदवाच्य-

सेऽशुभादिति भगवतोक्तं वचनं बाध्येत, कथं नित्यानामनुष्ठानादशुभात् स्यान्नाम मोक्षणं न तु तेषां फलाभावज्ञानाच्च हि नित्यानां फलाभावज्ञानमशुभमुक्तिफलत्वेन चोदितं नित्यकर्मज्ञानं वा न च भगवतैवेहोक्तं एतेनाकर्मणि कर्मदर्शनं प्रत्युक्तं न ह्यकर्मणि कर्मेति दर्शनं कर्त्तव्यतयेह चोद्यते, नित्यस्य तु कर्त्तव्यतामात्रं न चाकरणान्नित्यस्य प्रत्यवायो भवतीति विज्ञानात् किञ्चित् फलं

---

मित्याह नेचाश्चेति । तत्र कर्म्मशब्दस्य प्रत्यवायाख्यफलहेतुत्वगुणयोगात् गौण्यैव वृत्त्या प्रवृत्तिरित्याह तच्चेति । पातनिकामेवं कृत्वा श्लोकाक्षराणि व्याचष्टे तत्रेत्यादिना । अकर्म्मणि चेत्यादि व्याकरोति तथेति । स बुद्धिमानित्यादिपूर्ववत् । परकीयं व्याख्यानं व्युदस्यति नैतदिति । नित्यं कर्म्माकर्म्म नित्याकरणं कर्मेति ज्ञानात् दुरितनिवृत्त्यनुपपत्तेर्भगवद्वचनं वृत्तिकारमते बाधितं स्यादित्यर्थः । धर्मेण पापमपनुदतीति श्रुतेर्नित्यानुष्ठानात् दुरितनिवर्हणप्रसिद्धेस्तदनुष्ठानस्य फलान्तराभावात्तदकर्मेति ज्ञात्वानुष्ठाने क्रियमाणे कथमशुभक्षयो नेति यद्युक्तं कथमिति । चेतसश्चेश्वरज्ञानाद्विशुद्धिः परमा मतेति स्मरणात् कर्मणामन्तिका शुभक्षयाभावेऽप्यङ्गीकृत्य परिहरति नित्यानामिति । नित्यानुष्ठानादशुभक्षयेऽपि नास्मिन् प्रकरणे तद्विवक्षितं यत् ज्ञात्वा मोक्ष्यसेऽशुभादिति ज्ञानादशुभक्षयस्य प्रतिज्ञातत्वाच्च च तज्ज्ञानफलाभावविषयमेवेत्यमित्याह न त्विति । अशुभस्य फलाभावाज्ञानकार्य्यत्वाभावात् न फलाभावज्ञानाक्षयः सिध्यतीत्यर्थः । किञ्चातीन्द्रियोऽर्थः शास्त्रादेवावगम्यते न च नित्यकर्मणां फलाभावज्ञानादशुभनिवृत्तिरित्यत्र शास्त्रमस्तीत्याह न चेति । नित्याकरणं कर्म्मेति ज्ञानमपि नाशुभनिवृत्तिफलत्वेन चोदितमस्तीत्याह नित्यकर्म्मेति । भगवद्वचनमेवात्र प्रमाणमित्याशङ्क्याह न चेति । साधारणमेव यत् ज्ञात्वेत्यादि भगवतो

स्यान्नापि नित्याकरणं ज्ञेयत्वेन चोदितं नापि कर्माकर्मेति मिथ्यादर्शनादशुभान्मोक्षणं न च बुद्धिमत्त्वं युक्तता कृत्स्नकर्मकृत्त्वादि च फलमुपपद्यते स्तुतिर्वा मिथ्याज्ञानमेव हि साक्षादशुभरूपं कुतोऽन्यस्मादशुभान्मोक्षणं न हि तमस्तमसो निवर्त्तकं भवति, ननु कर्मणि चाकर्मदर्शनं

---

वचनं न तु नित्यानां फलाभावं ज्ञात्वेति विशेषविषयमित्यर्थः। अशुभान्मोक्षणासम्भवदर्शनेन कर्मण्यकर्मदर्शननिराकरणन्यायेनाकर्मणि कर्मदर्शनं निराकरोति एतेनेति। नामादिषु फलाय ब्रह्मदृष्टिवद्कर्मण्यपि फलार्थं कर्मदृष्टिविधानाच्छुभमोक्षणानुपपत्तिरित्याशङ्क्याह न हीति। अत्र हि श्लोके नित्यस्य कर्त्तव्यतामात्रं परमते विवक्षितमतश्चाकर्मणि कर्मदर्शनं विधीयते, तत्फलायेति कल्पनापरस्य सिद्धान्तविरुद्धत्वादाह नित्यस्य त्विति। परमतेऽपि नित्यस्य कर्त्तव्यतामात्रमत्र श्लोके न विवक्षितं किन्तु नित्यानुष्ठाने प्रवृत्तिसिद्ध्यर्थं नित्याकरणात् प्रत्यवायो भवतीति ज्ञानमपि कर्त्तव्यत्वेनात्र विवक्षितमेवेत्याशङ्क्याह न चेति। न तावत् प्रवृत्तिरस्य विज्ञानस्य फलं नियोगादेव तदुपपत्तेर्नापि फलान्तरमनुपलम्भादतोऽफलत्वादकरणात् प्रत्यवायो भवतीति ज्ञानं नात्र कर्त्तव्यत्वेन विवक्षितमित्यर्थः। किञ्चाकरणे कर्मदृष्टिविधावकरणस्यालम्बनत्वेन प्रधानत्वात् ज्ञेयत्वं वक्तव्यं तच्च तुच्छत्वादनुपपन्नमित्याह नापीति। अकरणस्यासतो नामादिवदालम्बनत्वेन दर्शनासम्भवेऽपि सामानाधिकरण्येनेदं रजतमितिवद्दर्शनं भविष्यतीत्याशङ्क्याह नापि कर्मेति। आदिशब्देन सर्वोत्कर्षादि गृह्यते, फलवत्त्वं स्तुतिर्वा सम्यग्ज्ञानस्य युक्तं न मिथ्याज्ञानस्यानुपपत्तेरित्यर्थः। स्वप्ने मिथ्याज्ञानमपि फलवदुपलब्धमित्याशङ्क्य मिथ्याज्ञानस्याशुभाविरोधित्वान्न तस्मात्तन्निवृत्तिरित्याह मिथ्याज्ञानमेवेति। अशुभादेवाशुभा-

अकर्मणि वा कर्मदर्शनं न तत् मिथ्याज्ञानं किं तर्हि गौणं फलभावाभावनिमित्तं न कर्माकर्मविज्ञानादपि गौणात् फलस्याश्रवणान्नापि श्रुतहान्यश्रुतपरिकल्पनया कश्चिद्विशेषो लभ्यते स्वशब्देनापि शक्यं वक्तुं नित्यकर्मणां फलं नास्त्यकरणाच्च तेषां नरकपातः स्यादिति तत्र व्याजेन परव्यामोहरूपेण कर्मण्यकर्म यः पश्येदित्यादिना किं तत्रैवं व्याचक्षाणेन भगवतोक्तं वाक्यं लोकव्यामोहार्थमिति व्यक्तं कल्पितं स्यात् न चैतच्छद्मरूपेण वाक्येन

---

निवृत्तौ दृष्टान्तमाह न हीति। अविवेकपूर्वकमिदं रजतमिति शुक्तेः सामानाधिकरण्यान्मिथ्याज्ञानं युक्तं कर्माकर्मणोस्तु विवेकेन भावतः सामानाधिकरण्याधीनं ज्ञानं सिंहदेवदत्तयोरिव गौणं न मिथ्याज्ञानं इति शङ्कते नन्विति। कर्माकर्मेति दर्शने फलाभावो गुणः अकर्मकर्मेति दर्शने तु फलभावो गुणस्तन्निमित्तमिदं ज्ञानं गौणमित्याह फलेति। यथोक्तज्ञानस्य गौणत्वेऽपि प्रामाणिकफलाभावापत्तेस्तु गौणतोचितेति दूषयति नेत्यादिना। कर्माकर्मेत्यादि गौणविज्ञानोपन्यासव्याजेन नित्यकर्मकर्त्तव्यतया विवक्षितत्वाद्गौणज्ञानस्याफलत्वमदूषणमित्याशङ्क्याह नापीति। ज्ञानादशुभमोक्षणस्य श्रुतस्य हानिरश्रुतस्य नित्यानुष्ठानस्य कल्पनेत्यनेन व्यापारगौरवेण न कश्चिद्विशेषः सिध्यतीत्यर्थः। उक्तमेव प्रपञ्चयति स्वशब्देनेति। नरकपातः स्यादतो विधेरवानुष्ठेयानि तानीति शेषः। यथोक्तवाचकशब्दप्रयोगादेवापेक्षितार्थसिद्धिसम्भवे भगवतो व्याजवचनकल्पनमनुचितमित्याह तत्रेति। प्रकृते श्लोके इत्थंकृतां व्याख्यानेन परमाप्तस्यैव भगवतो विप्रलम्भकत्वमापादितमिति मदीयं व्याख्यानमुपेक्षितव्यमपि फलितमाह तत्रैवमिति। नित्यकर्मानुष्ठानविवक्षयैव व्याजरूपमिति भगवद्वचनमनुचितमित्याशङ्क्य स्वशब्देनापीत्यादि प्रागुक्तपरिभाषयापि तदनुष्ठानबोधनसम्भवान्नैवमित्याह न चेतदिति। वस्तु-

संस्थानीमानि भूतानीति अथो अपि मयि वासुदेवे परमेश्वरे चेमानीति क्षेत्रज्ञेश्वरैकत्वं सर्वोपनिषत्प्रसिद्धं द्रक्ष्यसीत्यर्थः ॥ ३५ ॥

आ॰ टी॰ । विशिष्टैराचार्यैरुपदिष्टे ज्ञाने कार्यक्षमे प्राप्ते सति तदनन्तरवचनमपि योग्यविषयमर्थवद्भवतीत्याह तथा चेति । अतस्तस्मिन् विशिष्टे ज्ञाने त्वदीयमोहापोहहेतौ निष्ठावता भवता भवितव्यमिति शेषः । तत्र निष्ठाप्रतिष्ठायै तदेव ज्ञानं पुनर्विशिनष्टि येनेति । यज्ज्ञात्वेत्युक्तं ज्ञानायोगादित्याशङ्क्य प्राप्त्यर्थत्वमधिपूर्वस्य गमेरङ्गीकृत्य व्याकरोति अधिगम्येति । इतश्चाचार्योपदेशलभ्ये ज्ञाने फलवति प्रतिष्ठावता भवितव्यमित्याह किञ्चेति । जीवे चेश्वरे चोभयत्र भूतानां प्रतिष्ठितत्वप्रतिनिर्देशे भेदवादानुमतिः स्यादित्याशङ्क्याह क्षेत्रज्ञेति । मूलप्रमाणाभावे कथं तदैकत्वदर्शनं स्यादित्याशङ्क्याह सर्वेति ॥ ३५ ॥

आ॰ टी॰ । ज्ञानफलमाह यज्ज्ञात्वेति सार्द्धैस्त्रिभिः । यज्ज्ञानं ज्ञात्वा प्राप्य पुनर्बन्धुवधादिनिमित्तं मोहं न प्राप्स्यसि । तत्र हेतुर्येन ज्ञानेन भूतानि पितृपुत्रादीनि स्वाविद्याविजृम्भितानि आत्मन्येवाभेदेन द्रक्ष्यसि । अथो अनन्तरं आत्मानं मयि परमात्मन्यभेदेन द्रक्ष्यसीत्यर्थः ॥ ३५ ॥

अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।
सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि ॥३६॥

किञ्चैतस्य ज्ञानस्य माहात्म्यं अपीति । अपि चेदसि पापिभ्यः पापकृद्भ्यः सर्वेभ्यः सकाशादतिशयेन पापकृत् पापकृत्तमः यदसि भवसि सर्वं ज्ञानप्लवेनैव ज्ञानमेव प्लवं ज्ञानप्लवं कृत्वा वृजिनं वृजिनार्णवं पापं सन्तरिष्यसि धर्मोऽपीह मुमुक्षोः पापमुच्यते ॥ ३६ ॥

व्या० टी०। ज्ञानस्य प्रकारान्तरेण प्रशंसां प्रस्तौति किञ्चेति। पापकारिभ्यः सर्वेभ्यः सकाशादतिशयेन पापकारित्वमेकस्मिन्नसम्भावितमपि ज्ञानमाहात्म्यप्रदिदर्शयिषयाङ्गीकृत्य ब्रवीति अपि चेदिति। ब्रह्मात्मैक्यज्ञानस्य सर्वपापनिवर्त्तकत्वेन माहात्म्यमिदानीं प्रकटयति सर्वमिति। अधर्मे निवृत्तेऽपि धर्मरूपप्रतिबन्धात् ज्ञानवतोऽपि मोक्षः सम्भवतीत्याशङ्क्याह धर्मोऽपीति। इत्येवमध्यात्मशास्त्रं गृह्यते ॥ ३६ ॥

व्या० टी०। किञ्च अपि चेदिति। सर्वेभ्योऽपि पापकारिभ्यो यद्यप्यतिशयेन पापकारी त्वमसि तथापि सर्वं पापसमुद्रं ज्ञानप्लवेनैव ज्ञानपोतेनैव सम्यगनायासेन तरिष्यसि ॥ ३६ ॥

**यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन।**
**ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा ॥ ३७**

ज्ञानं कथं नाशयति पापमिति सदृष्टान्तमुच्यते यथेति। यथा एधांसि काष्ठानि समिद्धः सम्यक् इद्धो दीप्तोऽग्निर्भस्मसात् भस्मीभावं कुरुतेऽर्जुन एवं ज्ञानमेव अग्निर्ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा निर्वीजं करोतीत्यर्थः, न हि साक्षादेव ज्ञानाग्निः तानि कर्माणीन्धनवद्भस्मीकर्त्तुं शक्नोति तस्मात् सम्यक् दर्शनं सर्वकर्मणां निर्वीजत्वे कारणमित्यभिप्रायः सामर्थ्यात् येन कर्मणा शरीरमारब्धं तत् प्रवृत्तफलत्वादुपभोगेनैव क्षीयतेऽतोयान्यप्रवृत्तफलानि ज्ञानोत्पत्तेः प्राक् कृतानि ज्ञानसहभावीनि चातीतानेकजन्मकृतानि च तान्येव सर्वाणि भस्मसात् कुरुते ॥ ३७ ॥

व्या० टी०। ज्ञाने सत्यपि धर्माधर्मयोरुपलम्भात् कुतस्तयोस्ततो निवृत्तिरित्याशङ्क्य ज्ञानस्य धर्माधर्मनिवर्त्तकत्वं दृष्टान्तेन दर्शयितुमनन्तरश्लोकमवतारयति ज्ञानमिति। योग्यायोग्यविभागेन निवर्त्तकत्वाभिव-

तानि यस्येन्द्रियाणि स संयतेन्द्रियो योगी य एवम्भूतः श्रद्धावांस्तत्परः संयतेन्द्रियश्च सोऽवश्यं ज्ञानं लभते प्रणिपातादिस्तु वाह्यानैकान्तिकोऽपि भवति मायावित्वादिसम्भवात् न तु तथा तच्छ्रद्धावत्त्वादावित्येकान्ततो ज्ञानलब्ध्युपायः किं पुनर्ज्ञानलाभात् स्यादित्युच्यते ज्ञानं लब्ध्वा परां मोक्षाख्यं शान्तिमुपरतिमचिरेण क्षिप्रमेवाधिगच्छति सम्यग्दर्शनात् क्षिप्रमेव मोक्षो भवतीति सर्वशास्त्रन्यायप्रसिद्धः सुनिश्चितोऽर्थः ॥ ३९ ॥

आ० टी० । कर्मयोगेन समाधियोगेन च सम्पन्नस्य ज्ञानोत्पत्त्यन्तरङ्गसाधनमुपदिशति येनेति । ज्ञानलाभे प्रयोजनमाह ज्ञानमिति । न केवलं श्रद्धालुत्वमेव सहायं ज्ञानलाभे हेतुरपि तु तात्पर्य्यमपीत्याह श्रद्धालुत्वेऽपीति । मन्दप्रस्थानत्वं तात्पर्य्यविधुरत्वं, न च तस्योपदिष्टमपि ज्ञानमुत्पत्तुमीष्टे तेन तात्पर्य्यमपि तत्र कारणं भवतीत्याह अत आहेति । अभियुक्तो निष्ठावान्, उपासनादावित्यादिशब्देन श्रवणादि गृह्यते । न केवलं श्रद्धा तात्पर्य्यञ्चेत्युभयमेव ज्ञानकारणं किन्तु संयतेन्द्रियत्वमपि तदभावे श्रद्धादेरकिञ्चित्करत्वादित्याशयेनाह श्रद्धावानिति । उक्तसाधनानां ज्ञानेन सहैकान्तिकत्वमाह य एवम्भूत इति । तर्हि प्रणिपातेनेत्यादौ प्रागेव प्रणिपातादेर्ज्ञानहेतोरुक्तत्वात् किमितीदानीं हेत्वन्तरमुच्यते तत्राह प्रणिपातादिस्त्विति । तद्धि बहिरङ्गमिदं पुनरन्तरङ्गं न च तत्र ज्ञानेन प्रतिनियमो मनस्यन्यथा कृत्वा बहिरन्यथा प्रदर्शनात्मनो मायावित्वस्य सम्भवाद्विप्रलम्भकत्वादेरपि सम्भावनोपनीतत्वादित्यर्थः । मायावित्वादेः श्रद्धावत्त्वतात्पर्य्यादावपि सम्भवादनैकान्तिकत्वमविशिष्टमित्याशङ्क्याह न त्विति । न हि मायया विप्रलम्भेन वा श्रद्धातात्पर्य्यसंयमानि योगतो निष्ठातुमर्हतीत्यर्थः । उत्तरार्द्धं प्रश्नपूर्वकमवतार्य्य व्याकरोति किं पुनरित्यादिना । सम्यग्ज्ञानादभ्यासादिसाधनानपेक्षान्मोक्षो भवती

तत्र प्रमाणमाह सम्यगदर्शनादिति। शास्त्रशब्देन तमेव विदित्वा ज्ञानादेव तु कैवल्यमित्यादिविवक्षितं न्यायस्तु ज्ञानादज्ञाननिवृत्तेः रज्ज्वादौ प्रसिद्धत्वात् आत्मज्ञानादपि निरपेक्षादज्ञानतत्कार्य्यप्रशमलक्षणो मोक्षः स्यादित्येवं लक्षणम्॥ ३९॥

स्वा° टी°। किञ्च श्रद्धावानिति। श्रद्धावान् गुरूपदिष्टे अर्थे आस्तिक्यबुद्धिमान् तत्परस्तदेकनिष्ठः संयतेन्द्रियस्य तज्ज्ञानं लभते नान्यः, अतः श्रद्धादिसम्पत्त्या ज्ञानलाभात् प्राक् कर्मयोग एव शुद्ध्यर्थमनुष्ठेयः, ज्ञानलाभानन्तरन्तु न तस्य किञ्चित् कर्त्तव्यमित्याह ज्ञानं लब्ध्वा तु मोक्षमचिरेण प्राप्नोति॥ ३९॥

**अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति।**
**नायं लोकोऽस्ति न परो न सुखं संशयात्मनः॥४०**

अत्र संशयो हि न कर्त्तव्यः पापिष्ठो हि संशयः कथमित्युच्यते अज्ञश्चेति। अज्ञश्चानात्मज्ञोऽश्रद्दधानश्च संशयात्मा च विनश्यति अज्ञाश्रद्दधानौ यद्यपि विनश्यतः तथापि न तथा यथा संशयात्मा स तु पापिष्ठः सर्वेषां, कथं नायं साधारणोऽपि लोकोऽस्ति तथा न परलोको न सुखं तत्रापि संशयोपपत्तेः संशयात्मनः संशयचित्तस्य तस्मात् संशयो न कर्त्तव्यः॥ ४०॥

आ°टी°। उत्तरश्लोकस्य पातनिकां करोति अत्रेति। यथोक्तसाधनवाननुपदेशमपेक्ष्याचिरेण ब्रह्मसाक्षात्करोति साक्षात्कृतब्रह्मत्वेऽचिरेणैव मोक्षं प्राप्नोतीत्येषोऽर्थः सप्रश्चा पराक्रश्यते। संशयस्याकर्त्तव्यत्वे हेतुमाह पापिष्ठो हीति। उक्तं हेतुं प्रश्नपूर्वकमुत्तरश्लोकेन साधयति कथमित्यादिना। अज्ञादश्रद्दधानाच्च संशयचित्तस्य विशेषमादर्शयति नायमिति। द्वितीयविभागविभजनार्थं भूमिकां करोति अज्ञेति। अज्ञादीनां मध्ये संशयात्मनो यत्पापिष्ठत्वं तत् प्रश्नद्वारा प्रकटयति कथमिति। लोकद्वयस्य तत्प्रयुक्तसुखस्य चाभावे हेतुमाह तत्रापीति। संशयचित्तस्य सर्वत्र

संशयप्रवृत्तेर्दुर्निवारत्वादित्यर्थः । संशयस्यानर्थमूलत्वे स्थिते फलितमाह तस्मादिति ॥ ४० ॥

व्या० टी० । ज्ञानाधिकारिणमुक्त्वा तद्विपरीतमनधिकारिणमाह अज्ञश्चेति । अज्ञो गुरूपदिष्टार्थानभिज्ञः कथञ्चिज्ज्ञाने जातेऽपि तत्रा-श्रद्दधानश्च जातायामपि श्रद्धायां ममेदं सिध्येन्न वेति संशयाक्रान्तचित्तश्च विनश्यति स्वार्थाद्भ्रश्यति, एतेषु त्रिष्वपि संशयात्मा सर्वथा नश्यति यतस्तस्यायं लोको नास्ति धनार्जनविवाहाद्यसिद्धेः, न च परलोको धर्मस्यानिष्पत्तेः, न च सुखं संशयेनैव भोगस्याप्यसम्भवात् ॥ ४० ॥

**योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम् ।**
**आत्मवन्तं न कर्माणि निबध्नन्ति धनञ्जय ! ॥४१॥**

कस्मात् योगेति । योगसंन्यस्तकर्माणं परमार्थदर्शन-लक्षणेन योगेन संन्यस्तानि कर्माणि येन परमार्थदर्शिना धर्माधर्माख्यानि तं योगसन्यस्तकर्माणं कथं योगसंन्यस्त-कर्मेत्याह ज्ञानेनात्मेश्वरैकत्वदर्शनलक्षणेन संछिन्नः संशयो यस्य स ज्ञानसंछिन्नसंशयः य एवं योगसंन्यस्तकर्मा तमा-त्मवन्तमप्रमत्तं गुणचेष्टारूपेण दृष्टानि न कर्माणि निब-ध्नन्ति अनिष्टादिरूपं फलं नारभन्ते हे धनञ्जय ! ॥ ४१ ॥

व्या० टी० । यद्यपि संशयः सर्वानर्थहेतुत्वात् कर्त्तव्यो न भवति तथापि निवर्त्तकाभावे तदकरणमस्वाधीनमिति शङ्कते कस्मादिति । श्रुतियुक्तिप्रयुक्तैक्यज्ञानं तन्निवर्त्तकमित्युत्तरमाह ज्ञानेनेति । संशय-रहितस्यापि कर्माण्यनर्थहेतूनि भवन्तीत्याशङ्क्याह योगेति । विषयपर-वशस्य पुंसो योगायोगात् कुतो योगसंन्यस्तकर्मत्वमित्याशङ्क्याह आत्म-वन्तमिति । परमार्थदर्शनतः संशयोच्छित्तौ तदुच्छेदकज्ञानमाहात्म्यादेव कर्मणाञ्च निवृत्तावप्रमत्तस्य प्रातिभासिकानि कर्माणि बन्धहेतवो न भवन्तीत्याह न कर्माणीति । कर्मयोगादेव कर्मसंन्यासस्यानुपपत्ति-

माशङ्क्य आद्यं पादं विभजते परमार्थेति। तत्र वैधसंन्यासपक्षे परोक्षं फलसंन्यासपक्षे त्वपरोक्षमिति विवेकः। यथोक्तज्ञानेन संन्यस्तकर्मत्वमेव सति संशये न सिध्यति संशयवतस्तद्योगादिति शङ्कते कथमिति। द्वितीयं पादं व्याकुर्वन् परिहरति आहेत्यादिना। पाठक्रमादर्थक्रमस्य बलीयस्त्वादादौ द्वितीयं पादं व्याख्याय पश्चादाद्यं पादं व्याचष्टेत्याह एवमिति। सर्वमिदं प्रमादवतो विषयपरवशस्य न सिध्यतीत्यभिसन्धाय आत्मवन्तं व्याकरोति अप्रमत्तमिति। न कर्म्माणीत्यादिफलोक्तिं व्याचष्टे गुणचेष्टेति। अनिष्टादीत्यादिशब्देन इष्टं मिश्रञ्च गृह्यते ॥ ४१ ॥

स्वा० टी०। अध्यायद्वयोक्तां पूर्व्वापरभूमिकाभेदेन कर्म्मज्ञानमयीं द्विविधां ब्रह्मनिष्ठामुपसंहरति योगेति द्वाभ्याम्। योगेन परमेश्वराराधनरूपेण तस्मिन् संन्यस्तानि समर्पितानि कर्म्माणि येन तं पुरुषं कर्म्माणि स्वफलैर्न निबध्नन्ति, ततश्च ज्ञानेनात्मबोधेन संछिन्नः संशयो देहाद्यभिमानलक्षणो यस्य तमात्मवन्तमप्रमादिनं कर्म्माणि लोकसंग्रहार्थानि स्वाभाविकानि वा न निबध्नन्ति ॥ ४१ ॥

**तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनात्मनः।**
**छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत! ॥४२॥**

**इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे ज्ञानकर्मसंन्यासयोगो नाम चतुर्थोऽध्यायः।**

---

यस्मात् कर्मयोगानुष्ठानात् अशुद्धिक्षयहेतुकज्ञानसंच्छिन्नसंशयो न निबध्यते कर्मभिर्ज्ञानाग्निदग्धकर्मत्वादेव यस्माच्च ज्ञानकर्मानुष्ठानविषये संशयवान् विनश्यति तस्मादिति। तस्मात् पापिष्ठमज्ञानसम्भूतं अज्ञानादविवेकाज्जातं हृत्स्थं हृदि बुद्धौ स्थितं ज्ञानासिना शोकमोहादिदोषहरं सम्यक् दर्शनं ज्ञानं तदेवासिः खड्गस्तेन ज्ञानासिनात्मनः स्वस्य आत्मविषयत्वात् संशयस्य न हि परस्य संशयोऽपरेण छेत्तव्यतां प्राप्तो येन स्वस्येति विशेष्यतेऽत आत्मविषयोऽपि स्वस्यैव भवति ज्ञानासिना छित्त्वैनं संशयं स्वविनाशहेतुभूतं योगं सम्यक् दर्शनोपायं कर्मानुष्ठानमातिष्ठ कुर्वित्यर्थः उत्तिष्ठ चेदानीं युद्धाय भारतेति॥ ४२॥

इति श्रीभगवद्गीताभाष्ये चतुर्थोऽध्यायः।

व्या॰ टी॰। तस्मादित्यादिश्लोकगतं तत्पदापेक्षितमर्थमाह यस्मादिति। सतां कर्मणामस्मदादिषु फलारम्भकत्वोपलम्भात् विदुष्यपि तेषां तद्भावमनपायमित्याशङ्क्याह ज्ञानाग्नीति। ननु सन्दिहानस्य तत्प्रतिबन्धाच्च कर्मयोगानुष्ठानं नापि तद्धेतुकज्ञानं तत्रापि संशयात्तारादित्याशङ्क्याह यस्माच्चेति। श्लोकाक्षराणि व्याचष्टे तस्मादित्यादिना। पापिष्ठमिति संशयस्य सर्वानर्थमूलत्वेन त्याज्यत्वं सूच्यते। विवेकाप्रहमस्तत्वादपि तस्य हेयत्वमविवेकस्यानर्थकरत्वप्रसिद्धेरित्याह अविवेकादिति। न च तस्य चैतन्यवदात्मनिष्ठत्वादत्याज्यत्वं शङ्कितव्यमित्याह हृदीति। शोकमोहाभ्यामभिभूतस्य पुंसो मनसि प्रादुर्भवतः संशयस्य प्रबलप्रतिबन्धकाभावेनैव प्रध्वंसः सिध्येदित्याशङ्क्याह ज्ञानासिनेति। स्वाश्रयस्य संशयस्य स्वाश्रयेणैव ज्ञानेन समुच्छेदसम्भवात्

किमिति स्वस्येति विशेषणमित्याशङ्क्याह आत्मविषयत्वादिति स्थाण्वादिविषयः संशयः तद्विषयेण ज्ञानेन देवदत्तनिष्ठेन तन्निष्ठो व्यावर्त्यते प्रकृते त्वात्मविषयस्तदाश्रयश्च संशयः तथाविधेन ज्ञानेन अपनीयते तेन विशेषणमर्थवदित्यर्थः। तदेव प्रपञ्चयति न हीति। आत्माश्रयत्वस्य प्रकृते संशये सिद्धत्वेनाविवक्षितत्वात् तद्विषयस्य तद्विषयेणैव तस्य तेन निवृत्तिर्विवक्षितेत्युपसंहरति अत इति। संशयसमुच्छित्त्यनन्तरं कर्त्तव्यमुपदिशति छित्त्वैनमिति। अग्निहोत्रादिकं कर्म भगवदाज्ञया क्रमेण करिष्यामि युद्धात् पुनरुपरंस्यैवेत्याशङ्क्याह उत्तिष्ठेति। भरतान्वये महति क्षत्रियवंशे प्रसूतस्य समुपस्थितसमरविमुखत्वमनुचितमिति मन्वानः सन्नाह भारतेति। तदनेन योगस्य कृत्रिमत्वं भगवतोऽनीश्वरत्वञ्च निराकृत्य कर्मादावकर्मादिदर्शनादात्मनः सम्यग्ज्ञानात् सर्वा-पातादेर्बहिरङ्गादन्तरङ्गाच्च श्रद्धादेरुक्तादशेषानर्थनिवृत्त्या ब्रह्मभावमभिदधता स्वस्मादुत्कृष्टे तस्मिन्नसंशयानस्याधिकारादप्रदोषान्तं संशयं हित्वोत्तमस्य ज्ञाननिष्ठापरस्य कर्मनिष्ठेति स्थापितम्॥ ४२॥

इति चतुर्थोऽध्यायः।

व्या॰ टी॰। तस्मादज्ञानेति। यस्मादेवं तस्मादात्मनोऽज्ञानेन सम्भूतं हृदि स्थितमेनं संशयं शोकादिनिमित्तं देहात्मविवेकज्ञानखड्गेन छित्त्वा कर्मयोगमातिष्ठ आश्रय तत्र च प्रथमं प्रस्तुताय युद्धायोत्तिष्ठ हे भारतेति क्षत्रियत्वेन युद्धस्य धर्मत्वं दर्शितम्। पृथगवस्थाविभेदेन कर्मज्ञानमयी द्विधा। निष्ठोक्ता येन तं वन्दे शौरिं संशयसंच्छिदम्॥ ४२॥

इति चतुर्थोऽध्यायः।

# पञ्चमोऽध्यायः ।

---

## अर्जुन उवाच ।

**संन्यासं कर्मणां कृष्ण ! पुनर्योगञ्च शंससि ।**
**यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥१॥**

कर्मण्यकर्म यः पश्येदित्यारभ्य स युक्तः कृत्स्नकर्मकृत ज्ञानाग्निदग्धकर्माणं शारीरं केवलं कर्म कुर्वन् यदृच्छालाभसन्तुष्टो ब्रह्मार्पणं ब्रह्म हविः कर्मजान् विद्धि तान् सर्वान् सर्वं कर्माखिलं पार्थ ज्ञानाग्निः सर्वकर्माणि योगसंन्यस्तकर्माणमित्येतैर्वचनैः सर्वकर्मसंन्यासमवोचद्भगवान्। छित्त्वैनं संशयं योगमातिष्ठेत्यनेन वचनेन पुनर्योगञ्च कर्मानुष्ठानलक्षणमनुतिष्ठेत्युक्तवान् तयोरुभयोश्च कर्मानुष्ठानकर्मसंन्यासयोः स्थितिगतिवत् परस्परविरोधादेकेन सह कर्तुमशक्यत्वात् कालभेदेन चानुष्ठानविधानाभावा-

आ॰ टी॰ । पूर्वोत्तराध्याययोः सम्बन्धमभिदधानो वृत्तानुवादपूर्वकमर्जुनप्रश्नस्याभिप्रायं प्रदर्शयितुं प्रक्रमते कर्मणीत्यादिना । इत्यारभ्य कर्मण्यकर्मदर्शनमुक्त्वा तत्प्रशंसा प्रसारितेत्याह स युक्त इति । ज्ञानवन्तं सर्वाणि कर्माणि लोकसंग्रहार्थं कुर्वन्तं ज्ञानलक्षणेनाग्निना दग्धसर्वकर्माणं कर्माद्युक्तफलसम्बन्धविधुरं विवेकवन्तो वदन्तीति । ज्ञानवतो ज्ञानफलभूतं संन्यासं विवक्षन् विविदिषोः साधनरूपमपि संन्यासं भगवान् विवक्षितवानित्याह ज्ञानाग्नीति । निराशीरित्यारभ्य शरीरस्थितिमात्रकारणं कर्म शरीरस्थितावपि सङ्गरहितः सन् समाचरन्

र्दर्शितयोरन्यतरकर्त्तव्यतायां प्राप्तौ सत्यां यत् प्रशस्यतरमेतयोः कर्मानुष्ठानकर्मसंन्यासयोः तत् कर्त्तव्यं नेतरदित्येवं मन्यमानः प्रशस्यतरबुभुत्सयार्जुन उवाच संन्यासं कर्मणां कृष्णेत्यादिना। ननु चात्मविदो ज्ञानयोगेन निष्ठां प्रतिपादयिष्यन् पूर्वोदाहृतैर्वचनैर्भगवान् सर्वकर्मसंन्यासमवोचन्न त्वनात्मज्ञस्यातश्च कर्मानुष्ठानकर्मसंन्यासयोर्भिन्नपुरुषविषयत्वादन्यतरस्य प्रशस्यतरत्वबुभुत्सया प्रश्नोऽनुपपन्नः सत्यमेवं त्वदभिप्रायेण प्रश्नो नोपपद्यते प्रष्टुः स्वाभिप्रायेण पुनः प्रश्नो युज्यत एवेति वदामः, कथं पूर्वोदाहृतैर्वचनैर्भगवता कर्मसंन्यासस्य कर्त्तव्यतया विव-

---

धर्म्माधर्मफलभागी न भवतीत्यपि पूर्वोत्तराभ्यामध्यायाभ्यां द्विविधं संन्यासं सूचितवानित्याह शारीरमिति। यदृच्छेत्यादावपि संन्यासः सूचितः तद्धर्मफलायोपदेशादित्याह यदृच्छेति। ज्ञानस्य यज्ञत्वसम्पादनपूर्वकं प्रशंसावचनादपि कर्मसंन्यासो दर्शितो ज्ञाननिष्ठस्येत्याह ब्रह्मार्पणमिति। ज्ञानयज्ञस्तुत्यर्थः विहितानानाविधान् यज्ञाननूद्य तेषां देहादिव्यापारजन्यत्ववचनेनात्मनो निर्व्यापारत्वविज्ञानफलाभिलाषादपि यथोक्तमात्मानं विविदिषोः सर्वकर्मसंन्यासेऽधिकारो ध्वनित इत्याह कर्मजानिति। समस्तस्यैवावशेषवर्जितस्य कर्मणो ज्ञाने पर्य्यवसानाभिधानाच्च जिज्ञासोः सर्वकर्मसंन्यासः सूचित इत्याह सर्वमिति। तद्विद्धीत्यादिना ज्ञानप्राप्त्युपायं प्रणिपातादि प्रदर्श्य प्राप्तेन ज्ञानेनातिशयमाहात्म्यवता सर्वकर्मणां निवृत्तिरेवेति वदता च ज्ञानार्थिनः संन्यासेऽधिकारो दर्शितो भगवतेत्याह ज्ञानाग्निरिति। ज्ञानेन समुच्छिन्नसंशयं तस्मादेव ज्ञानात् कर्म्माणि संन्यस्य व्यवस्थितमप्रमत्तं यथोक्तकार्य्यकरणसङ्घातयन्त्रं प्रातिभासिकानि कर्म्माणि न निबध्नन्ति इत्यपि द्विविधः संन्यासो भगवतोक्त इत्याह योगेति। कर्मणीत्यारभ्य योग-

चितत्वात् प्राधान्यमन्तरेण च कर्त्तारं तस्य कर्त्तव्यत्वासम्भवादनात्मविदपि कर्त्ता पक्षे प्राप्तोऽनूद्यत इति न पुनरात्मवित्कर्त्तृकत्वमेव संन्यासस्य विवक्षितमित्येवं मन्वानस्यार्जुनस्य कर्मानुष्ठानकर्मसंन्यासयोरविद्वत्पुरुषकर्त्तृकत्वमप्यस्तीति पूर्वोक्तेन प्रकारेण तयोः परस्परविरोधादन्यतरस्य कर्त्तव्यत्वे प्राप्ते प्रशस्यतरञ्च कर्त्तव्यं नेतरदिति प्रशस्यतरविविदिषया प्रश्नो नानुपपन्नः, प्रतिवचनवाक्यार्थनिरूपणेनापि प्रष्टुरभिप्राय एवमेवेति गम्यते, कथं

---

संन्यस्तकर्माणमित्यन्तैरुदाहृतैर्वचनैरुक्तं संन्यासमुपसंहरति इत्यन्तैरिति। तर्हि कर्मसंन्यासस्यैव जिज्ञासुना ज्ञानवता चादरणीयत्वात् कर्मानुष्ठानमनादेयमापन्नमित्याशङ्क्योक्तमर्थान्तरमनुवदति किन्त्वेवमिति। कर्मतत्त्यागयोरुक्तयोरेकेनैव पुरुषेणानुष्ठेयत्वमसम्भवान्न विरोधोऽस्तीत्याशङ्क्य युगपद्वा क्रमेण वानुष्ठानमिति विकल्प्याद्यं दूषयति उभयोरिति। द्वितीयं प्रत्याह कालभेदेनेति। उक्तयोर्द्वयोरेकेन पुरुषेणानुष्ठेयत्वासम्भवे कथं कर्त्तव्यत्वसिद्धिरित्याशङ्क्याह अर्थादिति। द्वयोरुक्तयोरेकेन युगपत्क्रमाभ्यां अनुष्ठानानुपपत्तेरित्यर्थः। अन्यतरस्य कर्त्तव्यत्वे कतरस्येति कुतो निर्णयो द्वयोः सन्निधानाविशेषादित्याशङ्क्याह यत् प्रशस्यतरमिति। भगवता कर्मणा संन्यासो योगश्चोक्तो न च तयोः समुच्चित्यानुष्ठानं तेनान्यतरस्य श्रेष्ठस्यानुष्ठेयत्वे तद्बुभुत्सया प्रश्नोपपत्तिरित्युपसंहरति इत्येवमिति। नायं प्रष्टुरभिप्रायः कर्मसंन्यासकर्मयोगयोर्भिन्नपुरुषानुष्ठेयत्वस्योक्तत्वादेकस्मिन् पुरुषे प्राप्त्यभावादिति शङ्कते नन्विति। चोद्यमङ्गीकृत्य परिहरति सत्यमेवमिति। कीदृशस्तर्हि प्रष्टुरभिप्रायो येन प्रश्नोपपत्तिरिति पृच्छति कथमिति। एकस्मिन् पुरुषे कर्मतत्त्यागयोरस्ति प्राप्तिरिति प्रष्टुरभिप्रायं प्रतिनिर्देष्टुं प्रारभते पूर्वोदाहृतैरिति। यथा स्वर्गकामो यजेतेति स्वर्गकामोद्देशेन यागो विधी-

संन्यासकर्मयोगौ निःश्रेयसकरौ तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते इति प्रतिवचनमेतन्निरूप्यं किमनेनात्मवित्कर्तृकयोः संन्यासकर्मयोगयोर्निःश्रेयसकरत्वं प्रयोजनमुक्त्वा तयोरेव कुतश्चिद्विशेषात् कर्मसन्न्यासात् कर्मयोगस्य विशिष्टत्वमुच्यते आहोस्विदनात्मवित्कर्तृकयोः संन्यासकर्मयोगयोः तदुभयमुच्यत इति किञ्चातो यथात्मवित्कर्तृकयोः कर्मसन्न्यासकर्मयोगयोर्निःश्रेयसकरत्वं तयोस्तु कर्मसन्न्यासात् कर्मयोगस्य विशिष्टत्व मुच्यते यदि

---

यते न तु तस्यैवाधिकारो नान्यस्येत्यपि प्रतिपाद्यते वाक्यभेदप्रसङ्गात्तथानात्मवित्कर्तृ संन्यासपक्षे प्राप्तोऽनूद्यते नचात्मवित्कर्तृकत्वमेव संन्यासविधिदर्शनात् तस्मात् कर्मतत्त्यागयोरविद्वत्कर्तृकत्वमस्तीति मन्वानस्यार्जुनस्य प्रश्नः सम्भवतीति भावः। भवतु संन्यासस्य कर्तव्यत्वविवक्षा तथापि कथं प्रशस्ततरबुभुत्सया प्रश्नप्रवृत्तिरित्याशङ्क्याह प्राधान्यमिति। तथापि कथमेकस्मिन् पुरुषे तयोरप्राप्तावुक्ताभिप्रायेण प्रश्नवचनं प्रकल्प्यते तत्राह अनात्मविदिति। आत्मविदो विद्यासामर्थ्यात् कर्मत्यागध्रौव्यवदितरस्यापि सति वैराग्ये तत्त्यागस्यावश्यकत्वात् तत्र कर्मासौ प्राप्तोऽस्त्यानूद्यते तथा च कर्मतत्त्यागयोरेकस्मिन् विदुष्यपि प्राप्तेर्व्यक्तत्वादुक्ताभिप्रायेण प्रश्नप्रवृत्तिरविरुद्धेत्यर्थः। संन्यासस्यात्मवित्कर्तृकत्वमेवात्र विवक्षितं किं न स्यादित्याशङ्क्य कर्त्रन्तरपर्युदासः संन्यासविधिस्थेत्यर्थभेदे वाक्यभेदप्रसङ्गान्नैवमित्याह न पुनरिति। इतिशब्दो वाक्यभेदप्रसङ्गहेतुद्योतनार्थः। ततः किमित्याशङ्क्य फलितमाह एवमिति। कर्मानुष्ठानकर्मसंन्यासयोरविद्वत्कर्तृकत्वमप्यस्तीत्येवं मन्वानस्यार्जुनस्य प्रशस्ततरविविदिषया प्रश्नो नानुपपन्न इति सम्बन्धः। तयोः समुच्चित्यानुष्ठानसम्भवे कथं प्रशस्ततरविविदिषेत्याशङ्क्याह पूर्वोक्तेनेति। उभयोश्चेत्यादावुक्तप्रकारेण कर्मतत्त्यागयोर्मिथोविरोधान्न समु-

वानात्मवित्कर्तृकयोः सन्न्यासकर्म्मयोगयोस्तदुभयमुच्यत इति अतोच्यते आत्मवित्कर्तृकयोः सन्न्यासकर्म्मयोगयोरसम्भवात्तयोर्निःश्रेयसकरत्ववचनं तदीयाच्च कर्म्मसन्न्यासात् कर्म्मयोगस्य विशिष्टत्वाभिधानमित्येतदुभयमनुपपन्नं यद्यनात्मविदः कर्म्मसन्न्यासः तत्प्रतिकूलश्च कर्म्मानुष्ठानलक्षणः कर्म्मयोगः सम्भवेतां तदा तयोर्निःश्रेयसकरत्वोक्तिः कर्म्मयोगस्य च कर्म्मसन्न्यासाद्विशिष्टत्वाभिधानमित्येतदुभयमुपपद्येत आत्मविदस्तु सन्न्यासकर्म्मयोगयोरसम्भवात्तयोर्निःश्रेयसकरत्वाभिधानं कर्म्मसन्न्यासाच्च कर्म्मयोगो विशिष्यत इति चानुपपन्नमतोह किमात्मविदः सन्न्यासकर्म्मयोगयोरप्यसम्भव आहो-

---

श्चित्यानुष्ठानं सावकाशमित्यर्थः । भवतु तर्हि यस्य कस्यचिदन्यतरस्यानुष्ठेयत्वमिति कुतो यथोक्ताभिप्रायेण प्रश्नप्रवृत्तिरित्याशङ्क्याह अन्यतरस्येति । उभयप्राप्तौ समुच्चयानुपपत्तावन्यतरपरिग्रहे विशेषस्यान्वेष्यत्वादुक्ताभिप्रायेण प्रश्नोपपत्तिरित्यर्थः । इतश्चाविद्वत्कर्तृकयोः संन्यासकर्म्मयोगयोः कतरः श्रेयानिति प्रष्टुरभिप्रायो भातीत्याह प्रतिवचनेनेति । किं तत् प्रतिवचनं कथं वा तन्निरूपणमिति पृच्छति कथमिति । तत्र प्रतिवचनं दर्शयति संन्यासेति । तन्निरूपणं कथयति एतदिति । तदुभयं निःश्रेयसकरत्वं कर्म्मयोगस्य श्रेष्ठत्वञ्चेत्यर्थः । गुणदोषविभागविवेकार्थं पृच्छति किञ्चेति । अतोऽस्मिन्नाद्ये पक्षे किं दूषणं अस्मिन् वा द्वितीये पक्षे किं फलमिति प्रश्नार्थः । तत्र सिद्धान्ती प्रथमपक्षे दोषमादर्शयति अत्रेत्यादिना । तदेवानुपपन्नत्वं व्यतिरेकद्वारा विवृणोति यदीत्यादिना । निःश्रेयसकरत्वोक्तिरित्यत्र पारम्पर्य्येणेति द्रष्टव्यं. विशिष्टत्वाभिधानमिति प्रतियोगिनोऽसहायत्वादस्य च शुद्धिद्वारा ज्ञानार्थत्वादित्यर्थः । आत्मज्ञस्य कर्म्मसंन्यासकर्म्मयोगयोरसम्भवे दर्शिते चोदयति अत्राहेति । चोदयिता निर्द्धारणार्थं विमृशति किमि-

स्विदन्यतरस्यासम्भवः यदा चान्यतरस्यासम्भवस्तदा किं कर्म्मसन्न्यासस्योत कर्म्मयोगस्येत्यसम्भवे कारणञ्च वक्तव्यमिति. अत्रोच्यते आत्मविदो निवृत्तमिथ्याज्ञानत्वाद्विपर्य्ययज्ञानमूलस्य कर्म्मयोगस्यासम्भवः स्याज्जन्मादिसर्वविक्रियारहितत्वेन निष्क्रियमात्मानमात्मत्वेन यो वेत्ति तस्यात्मविदः सम्यग्दर्शनेनापास्तमिथ्याज्ञानस्य निष्क्रियात्मस्वरूपावस्थानलक्षणं सर्वकर्म्मसन्न्यासमुक्त्वा तद्विपरीतस्य मिथ्याज्ञानमूलककर्तृत्वाभिमानपुरःसरस्य सक्रियात्मस्वरूपावस्थानरूपस्य कर्म्मयोगस्येह शास्त्रे तत्र तत्रात्मस्वरूपनिरूपणप्रदेशेषु सम्यग्ज्ञानमिथ्याज्ञानतत्कार्य्यविरोधादभावः

---

त्यादिना। अन्यतरासम्भवेऽपि सन्देहात् प्रश्नोऽवतरतीत्याह यदा चेति। यस्य कस्यचिदन्यतरस्यासम्भवो भविष्यतीत्याशङ्क्य कारणमन्तरेणासम्भवो भवन्नतिप्रसङ्गः स्यादिति मन्वानः सन्नाह असम्भव इति। आत्मविदः सकारणं कर्म्मयोगासम्भवं सिद्धान्ती दर्शयति अत्रेति। संग्रहवाक्यं विवृण्वन्नात्मवित्त्वं विवृणोति जन्मादीति। तस्य यदुक्तं निवृत्तमिथ्याज्ञानत्वं तदिदानीं व्यनक्ति सम्यगिति। विपर्य्ययज्ञानमूलस्येत्यादिनोक्तं प्रपञ्चयति निष्क्रियेति। यथोक्तसंन्यासमुक्त्वा ततो विपरीतस्य कर्म्मयोगस्याभावः प्रतिपाद्यत इति सम्बन्धः। वैपरीत्यं स्फोरयन् कर्म्मयोगमेव विशिनष्टि मिथ्याज्ञानेति। मिथ्या च तदज्ञानञ्चेत्यनाद्यनिर्वाच्यमज्ञानं तन्मूलोऽहं कर्त्तेत्यात्मनि कर्तृत्वाभिमानस्तज्जन्यस्तस्येति यावत्। यथोक्तं संन्यासमुक्त्वा यथोक्तकर्म्मयोगस्यासम्भवप्रतिपादने हेतुमाह सम्यग्ज्ञानेति। कुत्र तदभावप्रतिपादनं तदाह इहेति। उक्तं हेतुं कृत्वात्मज्ञस्य कर्म्मयोगसम्भवे फलितमाह यस्मादिति। इह शास्त्रे। तत्र तत्रेत्यादावुक्तमेव व्यक्तीकर्त्तुं पृच्छति केषु केष्विति। तानेव प्रदेशान् दर्शयति आत्मेति। आत्मस्वरूपनिरूपणप्रदेशेषु संन्यास-

प्रतिपाद्यते यस्मात्तस्मादात्मविदो निवृत्तमिथ्याज्ञानस्य विपर्य्ययज्ञानमूलः कर्म्मयोगो न सम्भवतीति युक्तमुक्तं स्यात् केषु केषु पुनरात्मस्वरूपनिरूपणप्रदेशेष्वात्मविदः कर्म्माभावः प्रतिपाद्यत इत्यत्रोच्यते अविनाशि तु तद्विति प्रकृत्य य एनं वेत्ति हन्तारं वेदाविनाशिनं नित्यमित्यादौ तत्र तत्रात्मविदः कर्माभाव उच्यते ननु च कर्म्मयोगोऽप्यात्मस्वरूपनिरूपणप्रदेशेषु तत्र तत्र प्रतिपाद्यत एव तद्यथा तस्माद्युद्धस्व भारत। स्वधर्म्ममपि चावेक्ष्य कर्मण्येवाधिकारस्ते इत्यादावतश्च कथमात्मविदः कर्म्मयोगस्यासम्भवः स्यादिति, अत्रोच्यते सम्यग्ज्ञानमिथ्याज्ञानतत्कार्य्यविरोधात् ज्ञानयोगेन सांख्यानामित्यनेन सांख्यानामात्मतत्त्वविदामनात्मवित्कर्त्तृककर्मयोगनिष्ठातो निष्क्रियात्मस्वरूपावस्थानलक्षणाया ज्ञानयोगनिष्ठायाः पृथक्करणात् कृतकृत्यत्वेना-

---

प्रतिपादनादात्मविदः सन्यासो विवक्षितश्चेत्तर्हि कर्म्मयोगोऽपि तस्य कस्मान्न भवति प्रकरणाविशेषादिति शङ्कते ननु चेति। आत्मविद्याप्रकरणे कर्म्मयोगप्रतिपादनमुदाहरति तद्यथेति। प्रकरणादात्मविदोऽपि कर्मयोगस्य सम्भवे फलितमाह अतश्चेति। आत्मज्ञानोपायत्वेनापि प्रकरणपाठसिद्धौ ज्ञानादूर्द्धं न्यायविरुद्धं कर्म्म कल्पयितुमशक्यमिति परिहरति अत्रोच्यत इति। सम्यग्ज्ञानमिथ्याज्ञानयोस्तत्कार्य्ययोश्च भ्रमनिवृत्तिभ्रमसद्भावयोर्मिथोविरोधात् कर्त्तृत्वादिभ्रममूलं कर्म्म सम्यग्ज्ञानादूर्द्धं न सम्भवतीत्यर्थः। आत्मज्ञस्य कर्म्मयोगासम्भवे हेत्वन्तरमाह ज्ञानयोगेनेति। इतश्चात्मविदो ज्ञानादूर्द्धं कर्मयोगो न युक्तिमानित्याह कृतकृत्यत्वेनेति। ज्ञानवतो नास्ति कर्म्मेत्यत्र कारणान्तरमाह नस्येति। तर्हि ज्ञानवता कर्म्मयोगस्य हेयत्वमभिज्ञाहुनापि तस्य त्याज्यत्वं ज्ञानप्राप्त्या तस्यापि पुरुषार्थसिद्धेरित्याशङ्क्य विशेषोऽस्ति कर्म-

त्मविदः प्रयोजनान्तराभावात् तस्य कार्य्यं न विद्यत इति कर्त्तव्यान्तराभाववचनाच्च न कर्म्मणामनारम्भात् सन्न्यासस्तु महाबाहो ! दुःखमाप्तुमयोगतः इत्यादिवचनाच्चात्मज्ञानाङ्गत्वेन कर्म्मयोगस्य विधानात् योगारूढस्य तस्यैव शमः कारणमुच्यत इत्यनेन चोत्पन्नसम्यग्दर्शनस्य कर्म्मयोगाभाववचनात् शारीरं केवलं कर्म्म कुर्व्वन्नाप्नोति किल्विषमिति च शरीरस्थितिकारणातिरिक्तस्य कर्म्मणो वारणात् नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्वविदित्यनेन च शरीरस्थितिमात्रप्रयुक्तेष्वपि दर्शनश्रवणादिकर्म्मस्वात्मयाथात्म्यविदः करोमीति प्रत्ययस्य समाहितचेतस्तया सदा कर्त्तव्यत्वोपदेशादात्मतत्त्वविदः सम्यग्दर्शनेन

---

योगापेक्षा इत्यत आह न कर्म्मणामिति। स्वरूपोपकार्य्यङ्गमन्तरेणाङ्गिस्वरूपानिष्पत्तेर्ज्ञानार्थिना कर्म्मयोगस्य शुद्ध्यादिद्वारा ज्ञानहेतोरादेयत्वमित्यर्थः। तर्हि ज्ञानवतोऽपि ज्ञानफलोपकारित्वेन कर्म्मयोगो मृग्यतामित्याशङ्क्याह योगारूढस्येति। उत्पन्नसम्यग्ज्ञानस्य कर्म्माभावे शरीरस्थितिहेतोरपि कर्म्मणोऽसम्भवाच्च तस्य शरीरस्थितिस्तदस्थितौ च कुतो जीवन्मुक्तिस्तदभावे च कस्योपदेष्टृत्वं उपदेशाभावे च कुतो ज्ञानोदयः स्यादित्याशङ्क्याह शारीरमिति। विदुषोऽपि शरीरस्थितिरास्थिता चेत्तन्मात्रप्रयुक्तेषु दर्शनश्रवणादिषु कर्त्तृत्वाभिमानोऽपि तस्य स्यादित्याशङ्क्याह नैवेति। तत्त्वविदित्यनेन च समाहितचेतस्तया करोमीति प्रत्ययस्य सदैवाकर्त्तव्यत्वोपदेशादिति सम्बन्धः। यत्तु विदुषः शरीरस्थितिनिमित्तकर्म्मस्वनुष्ठाने तस्मिन् कर्त्तृत्वाभिमानोऽपि स्यादिति तत्राह शरीरेति। आत्मयाथात्म्यविदः तेष्वपि नाहङ्करोमीति प्रत्ययस्य नैव किञ्चित् करोमीत्यादावकर्त्तृत्वोपदेशाच्च कर्त्तृत्वाभिमानसम्भावनेत्यर्थः। यथोक्तोपदेशानुसन्धानाभावे विदुषोऽपि करोमीति स्वाभाविकप्रत्ययद्वारा

विरुद्धो मिथ्याज्ञानहेतुकः कर्मयोगः स्वप्नेऽपि न सम्भावयितुं शक्यते यस्मात्तस्मादनात्मवित्कर्तृकयोरेव सन्न्यासकर्मयोगयोर्निःश्रेयसकरत्ववचनं तदीयाच्च कर्मसन्न्यासात् पूर्वोक्तात्मविल्कर्तृकसर्वकर्मसन्न्यासविलक्षणात् सत्ये कर्तृत्वविज्ञाने कर्मैकदेशविषयत्वात् यमनियमादिसहितत्वेन च दुरनुष्ठेयत्वात् सुकरत्वेन च कर्मयोगस्य विशिष्टत्वाभिधानमित्येवं प्रतिवचनवाक्यार्थनिरूपणेनापि पूर्वोक्तः प्रष्टुरभिप्रायो निश्चीयते इति स्थितं ज्यायसी चेत् कर्मणस्ते इत्यत्र ज्ञानकर्मणोः सहासम्भवे यच्छ्रेय एतयोस्तन्मे ब्रूहि इत्येवं पृष्टोऽर्जुनेन भगवान् ज्ञानयोगेन सांख्यानां निष्ठा पुनः कर्मयोगेन योगिनां निष्ठा प्रोक्तेति निर्णयञ्चकार न

---

कर्मयोगः स्यादित्याशङ्क्याह आत्मतत्त्वेति । यद्यपि विद्वान् यथोक्तमुपदेशं कदाचिन्नानुसन्धत्ते तथापि तत्त्वविद्याविरोधान्मिथ्याज्ञानं तन्निमित्तं कर्म वा तस्य सम्भावयितुमशक्यमित्यर्थः । आत्मवित्कर्तृकयोः संन्यासकर्मयोगयोरयोगात्तयोर्निःश्रेयसकरत्वमन्यतरस्य विशिष्टत्वमित्येतदयुक्तमिति सिद्धत्वाद्द्वितीयं पक्षमङ्गीकरोति यस्मादित्यादिना । तदीयाच्च कर्मसंन्यासात् कर्मयोगस्य विशिष्टत्वाभिधानमिति सम्बन्धः । ननु कर्मयोगेन शुद्धबुद्धेः संन्यासो जायमानस्तस्मादुत्कृष्यते कथं तस्मात् कर्मयोगस्योत्कृष्टत्ववाचो युक्तियुक्तेति तत्राह पूर्वोक्तेति । वैलक्षण्यमेव स्फुटयति सत्येवेति । स्वाश्रमविहितश्रवणादौ कर्तृत्वविज्ञाने सत्येव पूर्वाश्रमोपात्तकर्मैकदेशविषयसंन्यासात् कर्मयोगस्य श्रेयस्त्ववचनं नैतादृशं ब्राह्मणस्यास्ति वित्तमित्यादिस्मृतिविरुद्धमित्याशङ्क्याह यमनियमादिति । आनृशंस्यं क्षमा सत्यमहिंसा दम आर्जवम् । प्रीतिः प्रसादो माधुर्यमक्रोधश्च यमा दश ॥ दानमिज्या तपो ध्यानं स्वाध्यायोपस्थनिग्रहौ । व्रतोपवासौ मौनञ्च स्नानञ्च नियमा दश ॥ इत्युक्तैर्यमनियमैरन्यैश्चाश्रमधर्मैर्विशिष्टत्वेनानुष्ठातुमशक्यत्वादुक्तसंन्यासात् कर्मयो-

च सन्न्यसनादेव केवलात् सिद्धिं समधिगच्छतीति वचनात् ज्ञानसहितस्य तस्य सिद्धिसाधनत्वमिष्टं कर्मयोगस्य च विधानात् ज्ञानरहितस्य सन्न्यासः श्रेयान् किंवा कर्मयोगः श्रेयानित्येतयोर्विशेषबुभुत्सया अर्जुन उवाच, सन्न्यासं परित्यागं कर्मणां शास्त्रीयाणां अनुष्ठानविशेषाणां शंससि प्रशंससि कथयसीत्येतत् पुनर्योगञ्च तेषामेवानुष्ठानमवश्यं कर्त्तव्यं शंससी मे कतरत् श्रेय इति संशयः किं कर्मानुष्ठानं श्रेयः किंवा तत्त्यागमिति प्रशस्यतरञ्चानुष्ठेयमतश्च यच्छ्रेयः प्रशस्यतरमेतयोः कर्मसन्न्यासकर्मानुष्ठानयोर्यदनुष्ठानात् श्रेयोऽवाप्तिर्मम स्यादिति मन्यसे तदेकमन्यतरत् सहैकपुरुषानुष्ठेयत्वासम्भवान्मे ब्रूहि सुनिश्चितमभिप्रेतं तवेति ॥ १ ॥

गस्य विशिष्टत्वोक्तिर्युक्तेत्यर्थः। न हि कश्चिदिति न्यायेन कर्म्मयोगस्येतरापेक्षया सुकरत्वाच्च तस्य विशिष्टत्ववचनं शिष्टमित्याह सुकरत्वेन चेति। प्रतिवचनवाक्यार्थालोचनात् सिद्धमर्थमुपसंहरति इत्येवमिति। संन्यासकर्म्मयोगयोर्मिथोविरुद्धयोः समुच्चित्यानुष्ठातुमशक्ययोरन्यतरस्य कर्त्तव्यत्वे प्रशस्यतरस्य तद्भावाभावस्य चानिर्द्धारितत्वात्तन्निर्द्धारयिषया प्रश्नः स्यादिति प्रश्नवाक्यार्थपर्य्यालोचनया प्रष्टुरभिप्रायो यथापूर्वमुपदिष्टस्तथा प्रतिवचनार्थनिरूपणेनापि तस्य निश्चितत्वात् प्रश्नोपपत्तिः सिद्धेत्यर्थः। ननु तृतीये यथोक्तप्रश्नस्य भगवता निर्णीतत्वाद्यात् प्रश्नप्रतिवचनयोः सावकाशत्वमित्याशङ्क्य विस्तरेणोक्तमेव सम्बन्धं पुनः संक्षेपतो दर्शयति ज्यायसी चेदिति। सांख्ययोगयोर्भिन्नपुरुषानुष्ठेयत्वेन निर्णीतत्वाच्च पुनः प्रश्नयोग्यत्वमित्यर्थः। इतोऽपि न तयोः प्रश्नविषयत्वमित्याह न चेति। एवकारविशेषणज्ञानसहितसंन्यासस्य सिद्धसाधनत्वं भगवतोऽभिमतं छित्त्वैनं संशयं योगमातिष्ठेति च कर्म्मयोगस्य विधानात्तस्यापि सिद्धसाधनत्वमिष्टं ततश्च निर्णीतत्वाच्च प्रश्नस्तद्विषयः सिद्धतीत्यर्थः।

केनाभिप्रायेण तर्हि प्रश्नः स्यादित्याशङ्क्य ज्ञानरहितसंन्यासात् कर्म्म-योगस्य प्रशस्यतरत्वबुभुत्सयेत्याह ज्ञानरहित इति । प्रष्टुरभिप्रायमेवं प्रदर्श्य प्रश्नोपपत्तिमुक्त्वा प्रश्नमुत्थापयति संन्यासमिति । तर्हि द्वयं त्वयानुष्ठेयमित्याशङ्क्य तदशक्तेरुक्तत्वात् प्रशस्यतरस्यानुष्ठानार्थं तदिद-मिति निश्चित्य वक्तव्यमित्याह यच्छ्रेय इति । काम्यानां प्रतिषिद्धानाञ्च कर्म्मणां परित्यागो मयोच्यते न सर्वेषामित्याशङ्क्य कर्म्मण्यकर्म्मेत्यादौ विशेषदर्शनान्मैवमित्याह शास्त्रीयाणामिति । अस्तु तर्हि शास्त्रीया-शास्त्रीययोरशेषयोरपि कर्मणोस्त्यागो नेत्याह पुनरिति । तर्हि कर्म्मत्या-गस्तद्योगश्चेत्युभयमादर्त्तव्यमित्याशङ्क्य विरोधान्मैवमित्यभिप्रेत्याह अत इति । द्वयोरेकेनानुष्ठानायोगस्योक्तत्वात् कर्त्तव्यत्वोक्तेश्च संशयो जायते तमेव संशयं विघटयति किं कर्म्मेति । प्रशस्यतरबुभुत्सया किम-र्थेत्याशङ्क्याह प्रशस्यतरञ्चेति । तस्यैवानुष्ठेयत्वे प्रश्नसावकाशत्वमाह अतश्चेति । तदेव प्रशस्यतरं विशिनष्टि यदनुष्ठानादिति । तदेकमन्य-तरमस्मै ब्रूहीति सम्बन्धः । उभयोरुक्तत्वे सति किमित्येकं वक्तव्यमिति नियुज्यते तत्राह सहेति । कर्म्मतत्त्यागयोर्मिथो विरोधादित्यर्थः ॥ १ ॥

स्वा॰ टी॰ । निवार्य्य संशयं जिष्णोः कर्मसंन्यासयोगयोः । जिते-न्द्रियस्य च यतेः पञ्चमे मुक्तिमब्रवीत् । अज्ञानसंभूतं संशयं ज्ञानासिना छित्त्वा कर्मयोगमातिष्ठेत्युक्तं तत्र पूर्वापरविरोधं मन्वानोऽर्जुन उवाच संन्यासमिति । ब्रह्मण्याधाय कर्माणीत्यादिना सर्वं कर्माखिलं पार्थे-त्यादिना च ज्ञानिनः कर्मसंन्यासं कथयसि ज्ञानिना संशयं छित्त्वा योगमातिष्ठेति पुनर्योगञ्च कथयसि, न च कर्मसंन्यासः कर्मयोगश्चैक-स्यैतदेव सम्भवतो विरुद्धस्वरूपत्वात् तस्मादेतयोर्मध्ये एकस्मिन्ननुष्ठातव्ये सति मम यच्छ्रेयः सुनिश्चितं तदेकं ब्रूहि ॥ १ ॥

## श्रीभगवानुवाच ।

**संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।**
**तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते ॥२॥**

स्वाभिप्रायमावेदयन् निर्णयाय श्रीभगवानुवाच

सन्न्यास इति। सन्न्यासः कर्मणां परित्यागः कर्मयोगश्च तेषामनुष्ठानं तावुभावऽपि निःश्रेयसकरौ निःश्रेयसं मोक्षं कुर्वाते ज्ञानोत्पत्तिहेतुत्वेन उभौ यद्यपि निःश्रेयसकरौ तथापि तयोस्तु निःश्रेयसहेत्वोः कर्म्मसन्न्यासात् केवलात् कर्म्मयोगो विशिष्यते इति कर्म्मयोगं स्तौति ॥ २ ॥

आ० टी०। प्रश्नमेवमुत्थाप्य प्रतिवचनमुत्थापयति स्वाभिप्राय-मिति। निर्णयाय तद्द्वारेण परस्य संशयनिवृत्त्यर्थमित्यर्थः। एवं प्रश्ने प्रवृत्ते कर्म्मयोगस्य सौकर्य्यमभिप्रेत्य प्रशस्ततरत्वमभिधित्सुर्भगवान् प्रतिवचनं किमुक्तवानित्याशङ्क्याह संन्यास इति। उभयोरपि तुल्यत्व शङ्कां वारयति तयोस्त्विति। कथं तर्हि ज्ञानस्यैव मोक्षोपायत्वं निव-क्ष्यते तत्राह ज्ञानोत्पत्तीति। तर्हि द्वयोरपि प्रशस्तत्वमप्रशस्तत्वं वा तुल्यमित्याशङ्क्याह उभाविति। ज्ञानकृतायस्य कर्म्मसंन्यासस्य कर्म्म-योगापेक्षया विशिष्टत्वविवक्षया विशिनष्टि केवलादिति ॥ २ ॥

स्वा० टी०। यत्नोत्तरं श्रीभगवानुवाच सन्न्यास इति। अयं भावः, न हि वेदान्तवेद्यात्मतत्त्वज्ञं प्रति कर्मयोगमहं ब्रवीमि यत पूर्वोक्तेन सन्न्यासेन विरोधः स्यात् अपि तु देहात्माभिमानिनं त्वां बन्धुवधादिनिमित्तशोकमोहादिकृतमेनं संशयं देहात्मविवेकज्ञानासिना छित्त्वा परमात्मज्ञानोपायभूतं कर्मयोगमातिष्ठेति ब्रवीमि, कर्मयोगेन शुद्धचित्तस्यात्मतत्त्वज्ञाने जाते सति तत्परिपाकार्थं ज्ञाननिष्ठाङ्गत्वेन सन्न्यासः पूर्वमुक्तः, एवञ्च सम्यङ्गप्रधानयोर्विकल्पायोगात् सन्न्यासः कर्म-योगश्चेत्येतावुभावपि भूमिकाभेदेन समुच्चितावेव निःश्रेयसं साधयतः, तथापि तयोर्मध्ये कर्मसन्न्यासात् सकाशात् कर्मयोगो विशिष्टो भव-तीति ॥ २ ॥

ज्ञेयः स नित्यः संन्यासी यो न द्वेष्टि न काङ्क्षति।
निर्द्वन्द्वो हि महाबाहो! सुखं बन्धात् प्रमुच्यते ॥३॥

कस्मादित्याह ज्ञेयो ज्ञातव्यः स कर्म्मयोगी नित्यसन्न्या-

सीति यो न द्वेष्टि किञ्चिन्न काङ्क्षति दुःखसुखे तत्साधने चैवंविधो यः कर्म्मणि वर्त्तमानोऽपि स नित्यसन्न्यासीति ज्ञातव्य इत्यर्थः. निर्द्वन्द्वो द्वन्द्ववर्जितो हि यस्मान्महाबाहो! सुखं बन्धादनायासेन प्रमुच्यते ॥ ३ ॥

व्या० टी० । कर्म्म हि बन्धकारणं प्रसिद्धं तत् कथं निःश्रेयसकरं स्यादिति शङ्कते कस्मादिति । अकर्त्रात्मविज्ञानात् प्रागपि सर्वदासौ संन्यासी ज्ञेयो यो रागद्वेषौ क्वचिदपि न करोतीत्याह इत्याहेति । यथाननुष्ठीयमानानि कर्म्माणि सन्न्यासिनं न निबध्नन्ति कृतानि च वैराग्येन्द्रियसंयमादीनि फलाभिसन्धिरहितानि तथैवानभिसंहितफलानि नित्यनैमित्तिकानि योगिनमपि न निबध्नन्ति निवर्त्तयन्ति च सञ्चितं दुरितमित्यभिप्रेत्याह निर्द्वन्द्वो हीति । कर्म्मयोगिनो नित्यसंन्यासित्वज्ञानमन्यथाज्ञानत्वान्मिथ्याज्ञानमित्याशङ्क्याह एवंविध इति । कर्म्मिणोऽपि रागद्वेषाभावेन संन्यासित्वं ज्ञातुमुचितमित्यर्थः । रागद्वेषरहितस्यानायासेन बन्धप्रध्वंससिद्धेश्च युक्तं तस्य संन्यासित्वमित्याह निर्द्वन्द्व इति ॥ २ ॥

स्वा० टी० । कुत इत्यपेक्षायां सन्न्यासित्वेन कर्मयोगिनं स्तुवंस्तस्य श्रेष्ठत्वं दर्शयति ज्ञेय इति । रागद्वेषादिराहित्येन परमेश्वरार्थं कर्माणि योऽनुतिष्ठति स नित्यं कर्म्मानुष्ठानकालेऽपि सन्न्यासीत्येव ज्ञेयः । तत्र हेतुः निर्द्वन्द्वो रागद्वेषादिद्वन्द्वशून्यो हि शुद्धचित्तो ज्ञानद्वारा सुखमनायासेनैव संसारात् प्रमुच्यते ॥ २ ॥

**सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।**
**एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥ ४ ॥**

ननु सन्न्यासकर्मयोगयोर्भिन्नपुरुषानुष्ठेययोर्विरुद्धयोः फलेऽपि विरोधो युक्तो न तूभयोर्निःश्रेयसकरत्वमेवेति प्राप्त इदमुच्यते सांख्ययोगाविति । सांख्ययोगौ पृथक् विरु-

इभिन्नफलौ बालाः प्रवदन्ति न पण्डिताः पण्डिताश्च ज्ञानिन एकं फलमविरुद्धमिच्छन्ति कथमेकमपि सांख्ययोगयोः सम्यगास्थितः सम्यगनुष्ठितवानित्यर्थः, उभयोर्विन्दते फलमुभयोस्तदेव हि निःश्रेयसं फलमतो न फले विरोधोऽस्ति ननु सन्न्यासकर्मयोगशब्देन प्रस्तुत्य सांख्ययोगशब्दयोः फलैकत्वं कथमिहाप्रकृतं ब्रवीति नैष दोषः यद्यप्यर्जुनेन सन्न्यासं कर्मयोगञ्च केवलमभिप्रेत्य प्रश्नः कृतो भगवांस्तु तदपरित्यागेनैव स्वाभिप्रेतञ्च विशेषं संयोज्य शब्दान्तरवाच्यतया प्रतिवचनं ददौ सांख्ययोगाविति तावेव सन्न्यासकर्मयोगौ ज्ञानतदुपायसमबुद्धित्वादिसंयुक्तौ सांख्ययोगशब्दवाच्याविति भगवतो मतमतो नाप्रकृतप्रक्रियेति ॥ ४ ॥

व्या० टी०। यदुक्तं संन्यासकर्म्मयोगयोः निःश्रेयसकरत्वं तदाक्षिपति ननु संन्यासेति। तत्रोत्तरत्वेनोत्तरश्लोकमवतारयति इति प्राप्त इति। विवेकिनस्तर्हि कथं वदन्तीतप्राकाङ्क्षायामाह एकमिति। सम्यग्ख्यात्मसमीचाम्कैतीति सांख्यं सन्न्यासो योगस्तु कर्म्मयोगस्तावुभावपि पृथगितप्रस्यार्थमाह विरुद्धेति। शास्त्रार्थविवेकशून्यत्वं बाल्यत्वम्। उत्तरार्द्धमवतारयितुं भूमिकां करोति पण्डितास्त्विति। ज्ञानिनो योगिनश्चेति शेषः। द्वयोरविरुद्धफलत्वमेव प्रश्नपूर्वकं प्रकटयति कथमित्यादिना। एकं साधनमनुष्ठितवतो द्वयोरपि फलं भवतीति विरुद्धमित्याशङ्क्याह उभयोरिति। सांख्ययोगयोः संन्यासकर्म्मानुष्ठानयोस्तत्त्वज्ञानद्वारा निःश्रेयसफलत्वान्न विरुद्धफलत्वशङ्का इत्यर्थः। सांख्ययोगयोरेकफलत्ववचनं प्रकरणाननुगुणमिति शङ्कते नन्विति। अप्रकृतत्वमसिद्धमिति परिहरति नैष दोष इति। संन्यासं कर्म्मणामित्यादिना संन्यासं कर्म्मयोगञ्चाङ्गीकृत्य प्रश्ने संन्यासः कर्म्मयोगश्चेत्यादिना तथैव प्रतिवचने च कथं सांख्ययोगयोरेकफलत्वमप्रकृतं न भवतीत्युच्यते

तत्राह यद्यपीति । प्रतिवचनमपि तदनुरूपमेव भगवता निरूपित-मिति विशेषानुपपत्तिरित्याशङ्क्याह भगवांस्त्विति । तदपरित्यागेनेत्यत्र तत्पदेन प्रश्न प्रतिनिर्दिष्टौ कर्मसंन्यासकर्मयोगावुच्येते, सांख्ययोगाविति शब्दान्तरवाच्यतया तयोरेव संन्यासकर्मयोगयोरत्यागेन स्वाभिप्रेतञ्च विशेषं संयोज्य भगवान् प्रतिवचनं ददाविति योजना। यदुक्तं स्वाभिप्रेतञ्च विशेषं संयोज्येति तदेव व्यक्तीकरोति तावेवेति । सम-बुद्धित्वादीत्यादिशब्देन ज्ञानोपायभूतं शमादिरादीयते । प्रकृतयोरेव संन्यासकर्मयोगयोरुपादाने फलितमाह अत इति । सांख्ययोगा-वित्यादिश्लोकव्याख्यानसमाप्तिरिति शब्दार्थः ॥ ४ ॥

स्वा० टी० । यस्मादेवमङ्गप्रधानत्वेनोभयोरवस्थाभेदेन क्रमसमु-च्चयोऽतो विकल्पमङ्गीकृत्योभयोः कः श्रेष्ठ इति प्रश्नोऽज्ञानामेवोचितः न विवेकिनामित्याह सांख्ययोगाविति । सांख्यशब्देन ज्ञाननिष्ठावाचिना तदङ्गं सन्न्यासं लक्षयति सन्न्यासकर्मयोगावेकफलौ सन्तौ पृथक् स्वतन्त्राविति बाला अज्ञा एव प्रवदन्ति न तु पण्डिताः । तत्र हेतुः अनयोरेकमपि सम्यगास्थित आश्रितवानुभयोः फलमाप्नोति । तथा हि कर्मयोगं सम्यगनुतिष्ठन् शुद्धचित्तः सन् ज्ञानद्वारा यदुभयोः फलं कैवल्यं तद्विन्दतीति सन्न्यासं सम्यगास्थितोऽपि पूर्वमनुष्ठितस्य कर्मयोग-स्यापि परम्परया यत् फलं कैवल्यं तद्विन्दतीति न पृथक्फलत्वमनयो-रित्यर्थः ॥ ४ ॥

**यत् सांख्यैः प्राप्यते स्थानं यद्योगैरपि गम्यते ।**
**एकं सांख्यञ्च योगञ्च यः पश्यति स पश्यति ॥५॥**

एकस्यापि सम्यगनुष्ठानात् कथमुभयोः फलं विन्दत इत्युच्यते यदिति । यत् सांख्यैर्ज्ञाननिष्ठैः संन्यासिभि प्राप्यते स्थानं मोक्षाख्यं तद्योगैरपि ज्ञानप्राप्त्युपायत्वेनेश्वरे समर्प्य कर्माणि आत्मनः फलमनभिसन्धायानुतिष्ठन्ति ये ते योगिनः तैरपि परमार्थज्ञानसंन्यासप्राप्तिद्वारेण गम्यत

इत्यभिप्रायोऽत एकं सांख्यञ्च योगञ्च यः पश्यति स पश्यति फलैकत्वात् सम्यक् पश्यतीत्यर्थः ॥ ५ ॥

व्या० टी० । प्रश्नपूर्वकं श्लोकान्तरमवतारयति एकस्यापीति । केचिदेव तयोरेकफलत्वं पश्यन्तीत्याशङ्क्य तेषामेव सम्यग्दर्शित्वं नेतरेषामित्याह एकमिति । तिष्ठत्यस्मिन्न च्यवते पुनरिति व्युत्पत्तिमाश्रित्याह मोक्षाख्यमिति । योगशब्दार्थमाह ज्ञानप्राप्तीति । ये हि जिज्ञासवः सर्व्वाणि कर्म्माणि भगवत्प्रीत्यर्थत्वेन तेषां फलाभिलाषमकृत्वा ज्ञानप्राप्तौ बुद्धिशुद्धिद्वारेणोपायत्वेनानुतिष्ठन्ति तेऽत्र योगा विवक्ष्यन्ते । अच्प्रत्ययस्य मत्वर्थत्वं गृहीत्वोक्तं योगिन इति । सर्वोऽपि द्वैतप्रपञ्चो न वस्तुभूतो मायाविलसितत्वादात्मा त्वविक्रियोऽद्वितीयो वस्त्विति प्रयोजकज्ञानं परमार्थज्ञानं तत्पूर्वकसंन्यासद्वारेण कर्म्मिभिरपि तदेव स्थानं प्राप्यमित्येकफलत्वं संन्यासकर्म्मयोगयोरविरुद्धमित्याह तैरपीति । फलैकत्वे फलितमाह अत इति ॥ ५ ॥

स्वा० टी० । एतदेव स्फुटयति यत् सांख्यैरिति सांख्यैर्ज्ञाननिष्ठैः संन्यासिभिर्यत् स्थानं मोक्षाख्यं प्रकर्षेण साक्षादवाप्यते, योगैरिति अर्श आदित्वान्मत्वर्थीयोऽच्प्रत्ययो दृष्टव्यस्तेन कर्म्मयोगिभिरपि तदेव ज्ञानद्वारेण गम्यतेऽवाप्यत इत्यर्थः, अतः सांख्यञ्च योगञ्चैकफलत्वेनैकं यः पश्यति स एव सम्यक् पश्यति ॥ ५ ॥

**संन्यासस्तु महाबाहो ! दुःखमाप्तुमयोगतः ।**
**योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥६॥**

एवं तर्हि योगात् संन्यास एव विशिष्यते, कथं तर्हि एवमुक्तं तयोस्तु कर्म्मसंन्यासात् कर्म्मयोगो विशिष्यते इति, शृणु तत्र कारणन्त्वया पृष्टं केवलं कर्म्मसंन्यासं कर्म्मयोगञ्चाभिप्रेत्य तयोरन्यतरः कः श्रेयानिति तदनुरूपं प्रतिवचनं मयोक्तं कर्म्मसंन्यासात् कर्म्मयोगो

विशिष्यत इति ज्ञानमनपेक्ष्य ज्ञानापेक्षस्तु संन्यासः सांख्यमिति मयाभिप्रेतः परमार्थयोगस्तु स एव यस्तु कर्मयोगो वैदिकः स च तादर्थ्याद्योगः संन्यास इति चोपचर्यते कथं तादर्थ्यमित्युच्यते संन्यास इति । संन्यासस्तु पारमार्थिको हे महाबाहो ! दुःखमाप्तुं प्राप्तुमयोगतः योगेन विना योगयुक्तो वैदिकेन कर्मयोगेन ईश्वरसमर्पितरूपेण फलनिरपेक्षेण तेन युक्तो मुनिर्मननादीश्वररूपस्य मुनिर्ब्रह्म परमात्मज्ञाननिष्ठालक्षणत्वात् प्रकृतः संन्यासो ब्रह्मोच्यते न्यास इति ब्रह्म ब्रह्मा हि पर इति श्रुतेः ब्रह्म परमार्थसंन्यासं परमात्मज्ञाननिष्ठालक्षणं न चिरेण क्षिप्रमेवाधिगच्छति प्राप्नोत्यतो मयोक्तं कर्मयोगो विशिष्यत इति ॥ ६ ॥

व्या० टी० । यदि यथोक्तज्ञानपूर्वकसंन्यासद्वारा कर्मिणामपि श्रेयोऽवाप्तिरिष्टा तर्हि संन्यासस्यैव श्रेयस्त्वं प्राप्तमिति चोदयति एवं तर्हीति । संन्यासस्य श्रेष्ठत्वे कर्मयोगस्य प्रशस्यत्ववचनमनुचितमित्याह कथं तर्हीति । पूर्वोक्तमेवाभिप्रायं स्मारयन् परिहरति शृण्विति । कर्मयोगस्य विशिष्टत्ववचनं तत्रेति परामृष्टम् । तदेव कारणं कथयति त्वयेत्यादिना । केवलं विज्ञानरहितमिति यावत्, तयोरन्यतरः कः श्रेयानिति इतिशब्दोऽध्याहर्त्तव्यः । त्वदीयं प्रश्नमनुसृत्य तदनुगुणं प्रतिवचनं ज्ञानमनपेक्ष्य तद्रहितात् केवलादेव संन्यासात् योगस्य विशिष्टत्वमिति यथोक्तमित्याह तदनुरूपमिति । ज्ञानापेक्षः संन्यासस्तर्हि कीदृगित्याशङ्क्याह ज्ञानेति । तर्हि कर्मयोगे कथं योगशब्दः संन्यासशब्दो वा प्रयुज्यते तत्राह यस्त्विति । तादर्थ्यात् परमार्थज्ञानशेषत्वादिति यावत् । तदेव तादर्थ्यं प्रश्नपूर्वकं प्रसाधयति कथमित्यादिना । कर्मानुष्ठानाभावे बुद्धिशुद्ध्यभावात् परमार्थसंन्यासस्य

सम्यग्ज्ञानात्मनो न प्राप्तिरिति व्यतिरेकमुपन्यस्यान्वयमुपन्यस्यति योगेति। पारमार्थिकः सम्यग्ज्ञानात्मकः सामग्र्याभावे कार्य्यप्राप्तिरयुक्तेति मत्वाह दुःखमिति। योगयुक्तत्वं व्याचष्टे वैदिकेनेति। ईश्वरस्वरूपस्य सविशेषस्येति शेषः। ब्रह्मेति व्याख्येयं पदमुपादाय व्याचष्टे प्रकृत इति। तत्र ब्रह्मशब्दप्रयोगे हेतुमाह परमात्मेति। लक्षणशब्दो गमकविषयः। सन्न्यासे ब्रह्मशब्दप्रयोगे तैत्तिरीयकश्रुतिं प्रमाणयति न्यास इति। कथं सन्न्यासे हिरण्यगर्भवाची ब्रह्मशब्दः प्रयुज्यते द्वयोरपि परत्वाविशेषादित्याह ब्रह्म हीति। ब्रह्मशब्दस्य सन्न्यासविषयत्वे फलितं वाक्यार्थमाह ब्रह्मेत्यादिना। नद्याः स्रोतांसीव निम्नप्रवणानि कर्मभिरतितरां परिपक्वकषायस्य करणानि सर्वतो व्यावृत्तानि निरस्ताशेषकूटस्थप्रत्यगात्मान्वेषणप्रवणानि भवन्तीति। कर्मयोगस्य परमार्थसन्न्यासप्राप्त्युपायत्वे फलितमाह अत इति ॥ ६ ॥

स्वा॰ टी॰। यदि कर्मयोगिनोऽप्यन्ततः सन्न्यासेनैव ज्ञाननिष्ठा तर्हि आदित एव सन्न्यासः कर्त्तुं युक्त इति मन्यमानं प्रत्याह सन्न्यासस्त्विति। अयोगतः कर्मयोगं विना सन्न्यासः प्राप्तुं दुःखं दुःखहेतुरशक्य इत्यर्थः चित्तशुद्ध्यभावेन ज्ञाननिष्ठाया असम्भवात्, योगयुक्तस्तु शुद्धचित्ततया मुनिः सन्न्यासी भूत्वा अचिरेण ब्रह्माधिगच्छति अपरोक्षं जानाति। अतश्चित्तशुद्धेः प्राक् कर्मयोग एव सन्न्यासाद्विशिष्यत इति पूर्वोक्तं सिद्धं, तदुक्तं वार्त्तिककृद्भिः, प्रमादिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः। सन्न्यासिनोऽपि दृश्यन्ते दैवसंदूषिताशया इति ॥ ६ ॥

**योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः।**
**सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ ७ ॥**

यदा पुनरयं सम्यग्दर्शनप्राप्त्युपायत्वेन योगेति। योगेन युक्तो विशुद्धात्मा विशुद्धचित्तो विजितात्मा विजितदेहो जितेन्द्रियश्च सर्वभूतात्मभूतात्मा सर्वेषां ब्रह्मादीनां

स्तम्बपर्य्यन्तानां भूतानामात्मभूत आत्मा प्रत्यक् चेतनो यस्य स सर्वभूतात्मभूतात्मा सम्यग्दर्शीत्यर्थः, स तत्रैव वर्त्तमानो लोकसंग्रहाय कर्म कुर्वन्नपि न लिप्यते योगयुक्तो न कर्मभिर्वध्यत इत्यर्थः ॥ ७ ॥

आ॰ टी॰। ननु पारिव्राज्यं परिगृह्य श्रवणादिसाधनमवष्टभ्य दनुतिष्ठतो लब्धसम्यग्बोधस्यापि यथापूर्वं कर्माण्युपलभन्ते तानि च बन्धहेतूनि भविष्यन्तीत्याशङ्क्य श्लोकान्तरमवतारयति यदा पुनरिति। सम्यग्दर्शनप्राप्त्युपायत्वेन यदा पुनरयं पुरुषो योगयुक्तत्वादिविशेषणः सम्यग्दर्शी सम्पद्यते तदा प्रातिभासिकीं प्रवृत्तिमनुसृत्य कुर्वन्नपि न लिप्यत इति योजना, योगेन नित्यनैमित्तिककर्म्मानुष्ठानेनेति यावत्। आदौ नित्याद्यनुष्ठानवतो रजस्तमोमलाभ्यामकलुषितं सत्त्वं सिद्ध्यती-त्याह विशुद्धेति। बुद्धिशुद्धौ कार्य्यकरणसङ्घातस्यापि स्वाधीनत्वं भवतीत्याह विजितेति। तस्य यथोक्तविशेषणवतो जायते सम्यग्दर्शित्व-मित्याह सर्वभूतेति। सम्यग्दर्शिनस्तर्हि कर्म्मानुष्ठानं कर्त्तव्यं तदनुष्ठाने वा कर्त्ता बन्धविश्लेषसिद्धिरित्याशङ्क्याह स तत्रेति। सम्यग्दर्शनं सम्प्रस्यर्थः ॥ ७ ॥

स्वा॰ टी॰। कर्मयोगादिक्रमेण ब्रह्माधिगमे सत्यपि तदुपरितनेन कर्मणा बन्धः स्यादेवेत्याशङ्क्याह योगयुक्त इति। योगेन युक्तः अतएव विशुद्ध आत्मा चित्तं यस्य अतएव विजित आत्मा शरीरं येन अतएव विजितानीन्द्रियाणि येन ततश्च सर्वेषां भूतानामात्मभूत आत्मा यस्य स लोकसंग्रहार्थं स्वाभाविकं वा कर्म्म कुर्वन्नपि न लिप्यते ॥ ७ ॥

**नैव किञ्चित् करोमीति**
**युक्तो मन्येत तत्त्ववित्।**
**पश्यन् शृण्वन् स्पृशन् जिघ्र-**
**न्नश्नन् गच्छन् स्वपन् श्वसन् ॥ ८ ॥**

न ह्यसौ परमार्थतः करोतीत्येतन्नैव किञ्चित् करोमीति । युक्तः समाहितः सन् मन्येत चिन्तयेत तत्त्ववित्-आत्मनो याथात्म्यं तत्त्वं वेत्तीति तत्त्ववित् परमार्थदर्शी-त्यर्थः । कदा कथं वा तत्त्वमवधारयन् मन्येतेत्युच्यते पश्य-न्निति । मन्येतेति पूर्वेण सम्बन्धः ॥ ८ ॥

आ० टी० । कर्माण्यङ्गीकृत्य तैरस्य विदुषो बन्धो नास्तीत्युक्त-मिदानीं वस्तुतस्तस्य कर्माण्येव न सन्तीत्याह न चेति । लोकदृष्ट्या विदुषोऽपि कर्माणि सन्तीत्याशङ्क्य स्वदृष्ट्या तदभावमभिप्रेत्याह नैवेति । साङ्ख्यं समनन्तरश्लोकमाकाङ्क्षापूर्वकमुत्थापयति कदेत्यादिना । चक्षुरादि-ज्ञानेन्द्रियैर्वागादिकर्मेन्द्रियैः प्राणादिवायुभेदैरन्तःकरणचतुष्टयेन च तत्त-च्चेष्टानिर्वर्त्तनावस्थायां दृश्यदर्शेषु सर्वा प्रवृत्तिरिन्द्रियाणामेवेत्यनुसन्द-धानो नैव किञ्चित् करोमीति विद्वान् प्रतिपद्यते इत्यर्थः ॥ ८ ॥

स्वा० टी० । कर्म कुर्वन्नपि न लिप्यत इत्येतद्विवृत्तमित्याशङ्क्य कर्तृत्वाभिमानाभावाच्चेत्याह नैवेति द्वाभ्याम् । कर्मयोगेन युक्तः क्रमेण तत्त्वविद्भूत्वा दर्शनश्रवणादीनि कुर्वन्नपीन्द्रियाणीन्द्रियार्थेषु वर्त्तन्त इति धारयन् बुद्ध्या निश्चिन्वन् किञ्चिदप्यहं न करोमीति मन्यते, तत्र दर्शनश्रवणस्पर्शनाघ्राणाशनानि चक्षुरादिज्ञानेन्द्रियव्यापाराः, गतिः पादयोः स्वापो बुद्धेः श्वासः प्राणस्य प्रलपनं वागिन्द्रियस्य विसर्गः पायूपस्थयोः ग्रहणं हस्तयोः उन्मेषनिमेषणे कूर्म्माख्यप्राणस्येति विवेकः एतानि सर्वाणि कुर्वन्नपि अनभिमानात् ब्रह्मवित् न लिप्यते तथा च पारमर्षं सूत्रं तदधिगमे उत्तरपूर्वार्द्धयोरश्लेषविनाशौ तद्व्यपदेशा-दिति ॥ ८ ॥

**प्रलपन् विसृजन् गृह्णन्नुन्मिषन्निमिषन्नपि ।**
**इन्द्रियाणीन्द्रियार्थेषु वर्त्तन्त इति धारयन् ॥ ८ ॥**

यस्यैवं तत्त्वविदः सर्वकार्य्यकरणचेष्टासु कर्मसु अक-र्मैव पश्यतः सम्यग्दर्शिनस्तस्य सर्वकर्मसंन्यास एवाधि-

कारः कर्मणो भावदर्शनाच हि मृगतृष्णिकायामुदकबुद्ध्या पानाय प्रवृत्त उदकाभावज्ञानेऽपि तत्रैव पानप्रयोजनाय प्रवर्त्तते ॥ ८ ॥

आ॰ टी॰ । यथोक्तस्य विदुषो विध्यभावेऽपि विद्यासामर्थ्यात् प्रतिपत्तिकर्मभूतं कर्मसन्न्यासं फलात्मकमभिलपति यस्येति । अतस्यैव विदुषोऽपि कर्मसु प्रवृत्तिसम्भवात् कुतः सन्न्यासेऽधिकारः स्यादित्याशङ्क्याह न हीति ॥ ८ ॥

**ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।**
**लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ ९ ॥**

यस्तु पुनरतत्त्ववित् प्रवृत्तश्च कर्मयोगे ब्रह्मणीति । ब्रह्मणीश्वरे आधाय निक्षिप्य तदर्थं करोमीति भृत्य इव स्वाम्यर्थं सर्वाणि कर्माणि मोक्षेऽपि फले सङ्गं त्यक्त्वा करोति यः सर्वकर्माणि लिप्यते न स पापेन संबध्यते पद्मपत्रमिवाम्भसोदकेन ॥ ९ ॥

आ॰ टी॰ । तर्हि विद्यावानिवाविद्यावानपि कर्मणि न प्रवर्त्तेत पापोपहतिसम्भवादित्याशङ्क्याह यस्त्विति । यथा भृत्यः स्वाम्यर्थं कर्माणि करोति न स्वफलमपेक्षते तथैव यो विद्वान् मोक्षेऽपि सङ्गं त्यक्त्वा भगवदर्थमेव सर्वाणि करोति न स्वकर्मणा बध्यते न हि पद्मपत्रमम्भसा सम्बध्यते तद्वदित्यर्थः ॥ ९ ॥

स्वा॰ टी॰ । तर्हि यस्य करोमीत्यभिमानोऽस्ति तस्य कर्मलेपो दुर्वारः तथा अविशुद्धचित्तत्वात् सन्न्यासोऽपि नास्तीति महत् सङ्कटमापन्नमित्याशङ्क्याह ब्रह्मणीति । ब्रह्मण्याध्याय परमेश्वरे समर्प्य तत्फले च सङ्गं त्यक्त्वा यः कर्माणि करोति असौ पापेन बन्धहेतुतया पापिष्ठेन पुण्यपापात्मकेन कर्मणा न लिप्यते यथा पद्मपत्रमम्भसि स्थितमपि तेनाम्भसा न लिप्यते तद्वत् ॥ ९ ॥

**कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि।**
**योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये॥१०॥**

केवलं सत्त्वशुद्धिमात्रफलमेव तस्यैव कर्म्मणः स्यात् यस्मात् कायेनेति। कायेन देहेन मनसा बुद्ध्या च केवलैरिन्द्रियैर्म्ममत्ववर्जितैरपि ईश्वरायैव कर्म्म करोमीति न फलायेति ममत्वबुद्धिशून्यैरिन्द्रियैरपि केवलशब्दः कायादिभिरपि प्रत्येकं सम्बध्यते सर्वव्यापारेषु ममतावर्जनाय योगिनः कर्म्मिणः कर्म्म कुर्वन्ति सङ्गं त्यक्त्वा फलविषयमात्मशुद्धये सत्त्वशुद्धय इत्यर्थः॥ १०॥

आ॰ टी॰। अविदुषस्तर्हि कृतेन कर्मणा किं स्यादित्याशङ्क्याह केवलमिति। अयस्येश्वरार्पणबुद्ध्यानुष्ठितं कर्म बुद्धिशुद्धिफलमित्यत्रैव हेतुमाह यस्मादिति। केवलशब्दस्य प्रत्येकं सम्बन्धे प्रयोजनमाह सर्वव्यापारेष्विति॥ १०॥

स्वा॰ टी॰। बन्धकत्वाभावसङ्क्त्वा मोक्षहेतुत्वं सदाचारेण दर्शयति कायेनेति। कायेन स्नानादि मनसा ध्यानादि बुद्ध्या तत्त्वनिश्चयादि, केवलैः कर्म्माभिनिवेशरहितैरिन्द्रियैः श्रवणकीर्त्तनादिलक्षणं कर्मफलासङ्गं त्यक्त्वा चित्तशुद्धये कर्मयोगिनः कुर्वन्ति॥ १०॥

**युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम्।**
**अयुक्तः कामकारेण फले सक्तो निबध्यते॥ ११॥**

तस्मात्तत्रैव तवाधिकार इति कुरु कर्मैव यस्माच्च युक्त इति। युक्त ईश्वराय कर्माणि करोमि न मम फलायेति एवं समाहितः सन् कर्मफलं त्यक्त्वा परित्यज्य शान्तिं मोक्षाख्यामाप्नोति नैष्ठिकीं निष्ठायाम्भवां सत्त्वशुद्धिज्ञानप्राप्तिसर्वकर्मसंन्यासज्ञाननिष्ठाक्रमेणेति वाक्य-

शेषः यस्तु पुनरयुक्तोऽसमाहितः कामकारेण करणं कारः कामस्य कारः कामकारस्तेन कामकारेण कामप्रेरितत-येत्यर्थः मम लाभायेदं करोमि कर्मत्येवं फले सक्तो निब-ध्यते अतस्त्वं युक्तो भव इत्यर्थः॥ ११॥

श्रा० टी०। कर्मणश्चित्तशुद्धिफलत्वे तादर्थ्येन कर्मानुष्ठानमेव तव कर्त्तव्यमिति यस्मादित्यस्यापेक्षितं वदन् फलितमाह तस्मादिति। एतच्च सङ्गं त्यक्त्वा कर्मानुष्ठानं त्वया कर्त्तव्यमित्याह यस्मादेति। युक्तः सन् फलं त्यक्त्वा कर्म कुर्वन् मोक्षाख्यां शान्तिं यस्मादाप्नोति तस्मात्त्वया सङ्गं त्यक्त्वा कर्म कर्त्तव्यमिति योजना विपक्षे दोषमाह अयुक्त इति। युक्तत्वं व्याकरोति ईश्वरायेति। फलं परित्यज्य कर्म कुर्वन्निति शेषः। नैष्ठिकी शान्तिरित्येतदेव विवृणोति सत्त्वेति। द्वितीयमर्द्धं विभजते यस्त्विति। असमाधाने दोषादर्जुनस्य नियोगं दर्शयति अतस्त्वमिति॥ ११॥

श्रा० टी०। ननु कथं तेनैव कर्मणा कश्चिन्मुच्यते कश्चिद्बध्यत इति व्यवस्था अत आह युक्त इति। युक्तः परमेश्वरैकनिष्ठः सन् कर्मणां फलं त्यक्त्वा कर्माणि कुर्वन्नात्यन्तिकीं शान्तिं मोक्षं प्राप्नोति, अयुक्तस्तु बहिर्मुखः कामकारेण कामतः प्रवृत्त्या फले आसक्तो नितरां बन्धं प्राप्नोति॥ ११॥

**सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी।**
**नवद्वारे पुरे देही नैव कुर्वन् न कारयन्॥१२॥**

यस्तु परमार्थदर्शी स सर्वेति। सर्वाणि कर्माणि सर्व-कर्माणि संन्यस्य परित्यज्य नित्यं नैमित्तिकं काम्यं प्रति-षिद्धञ्च तानि सर्वाणि कर्माणि मनसा विवेकबुद्ध्या कर्मादौ अकर्मसन्दर्शनेन संत्यज्येत्यर्थः, आस्ते तिष्ठति सुखं त्यक्तवान् मनःकायचेष्टो यतिः निरायासः प्रसन्नचित्तः

आत्मनोऽन्यत्र निवृत्तबाह्यसर्वप्रयोजन इति सुखमास्त इत्युच्यते वशी जितेन्द्रिय इत्यर्थः क्वास्त इत्याह नवद्वारे पुरे सप्तशीर्षण्यान्यात्मन उपलब्धिद्वाराण्यर्वाग्द्वे मूत्रपुरीषविसर्गार्थे तैर्द्वारैर्नवद्वारं पुरमुच्यते, शरीरं पुरमिव पुरमात्मैकस्वामिकं तदर्थप्रयोजनैश्चेन्द्रियमनोबुद्धिविषयैरनेकफलविज्ञानस्योत्पादकैः पौरैरिवाधिष्ठितं तस्मिन्नवद्वारे पुरे देही सर्वं कर्म संन्यस्यास्त इति किं विशेषणेन सर्वो हि देही संन्यस्य संन्यासीव देह एवास्ते तत्रानर्थकं विशेषणमुच्यते, यस्त्वज्ञो देही देहेन्द्रियसंघातमात्रात्मदर्शी स सर्वोऽपि गेहे भूमावासने वास इति मन्यते न हि देहमात्रात्मदर्शिनो देह इव देह आस इति प्रत्ययः सम्भवति देहादिसङ्घातव्यतिरिक्तात्मदर्शिनस्तु देह आस इति प्रत्यय उपपद्यते परकर्मणाञ्च परस्मिन्ना-

---

व्या० टी० । तर्हि फले सक्तिं त्यक्त्वा सर्वैरपि कर्त्तव्यमिति कर्मसन्न्यासस्य निरवकाशत्वमित्याशङ्काविदुषः सकाशाद्विदुषो विशेषं दर्शयति यस्त्विति । सर्वकर्मपरित्यागे प्राप्तं मरणं व्यावर्त्तयति आस्त इति । वृत्तिं लभमानोऽपि शरीरतापेनाध्यात्मिकादिना तप्यमानस्तिष्ठतीति चेन्नेत्याह सुखमिति । कार्य्यकरणसङ्घातपारवश्यं पर्य्युदस्यति वशीति । आसनस्यापेक्षितमधिकरणं निर्दिशति नवेति । देहसम्बन्धाभिमानाभावमाह देहीति । मनसा सर्वकर्मसंन्यासेऽपि लोकसंग्रहार्थं वहिः सर्वं कर्म कर्त्तव्यमिति प्राप्तं प्रत्याह नैवेति । तान्येव सर्वाणि कर्माणि परित्यज्यान्यदवशिष्टमित्यमिति । तेषां परित्यागे हेतुमाह नासीति । वशीत्वं सुखमास्त इति तदुपपादयति वशीति । जितेन्द्रियत्वे ... पञ्चकं, द्वे श्रोत्रे द्वे चक्षुषी द्वे

अन्यविद्ययाध्यारोपितानां विद्यया विवेकज्ञानेन मनसा संन्यास उपपद्यते उत्पन्नविवेकविज्ञानस्य सर्वकर्मसंन्यासिनोऽपि गेह इव देह एव नवद्वारे पुरे आसनं प्रारब्धफलकर्मसंस्कारशेषानुवृत्त्या देह एव विशेषविज्ञानोत्पत्तेः देह एवास्त इत्यस्त्येव विशेषणफलं विद्वदविद्वत्प्रत्ययभेदापेक्षत्वात् यद्यपि कार्यकरणकर्माण्यविद्ययात्मन्यध्यारोपितानि संन्यस्यास्ते इत्युक्तं तथाप्यात्मसमवायि तु कर्तृत्वं कारयितृत्वञ्च स्यादित्याशङ्क्याह नैव कुर्वन् स्वयं

---

नासिके वागेकेति सप्तशीर्षण्यानि शिरोगतानि शब्दाद्युपलब्धिद्वाराणि । तथापि कथं नवद्वारत्वमधोगताभ्यां पायूपस्थाभ्यां सहेत्याह अर्वागिति । शरीरस्य पुरसाम्यं स्वामिना पौरैश्चाधिष्ठितत्वेन दर्शयति आत्मेत्यादिना । यद्यपि देहे जीवनत्वहेतुसम्बन्धाभिमानाभावमानवतिष्ठते तथापि प्रवासीव परगेहे तत्पूजापरिभवादिभिरप्रहृष्यन्नविषीदन् व्यामोहादिरहितश्च तिष्ठतीति मत्वाह तस्मिन्निति । विशेषणमाक्षिपति किमिति । तदनुपपत्तिं स्पष्टयति सर्वो हीति । सर्वसाधारणे देहावस्थाने संन्यस्य देहे तिष्ठति विद्वानिति विशेषणमकिञ्चित्करमिति फलितमाह तत्रेति । विशेषणफलं दर्शयन्नुत्तरमाह उच्यत इति । किं अविवेकिनं प्रति विशेषणानर्थक्यं चोद्यते किं वा विवेकिनं प्रतीति विकल्पाद्यमङ्गीकरोति यद्यपीति । अज्ञत्वं देहित्वे हेतुः । तदेव देहित्वं स्फुटयति देहेति । सङ्घातात्मदर्शिनोऽपि देहे स्थितिप्रतिभासः स्यादिति चेन्नेत्याह न हीति । द्वितीयं दूषयति देहादीति । देहादिषु देहस्यावस्थानेनात्मावस्थानभ्रममव्याहृत्यर्थं देहे विद्वानास्त इति विशेषणमुपपद्यते. विवेकवतो देहेऽवस्थानप्रतिभाससम्भवादित्यर्थः। ननु विवेकिनो देहावस्थानप्रतिभानेऽपि वाङ्मनोदेहव्यापारात्मनां कर्मणां तस्मिन् प्रसङ्गाभावात् तत्त्यागेन कुतस्तस्य देहेऽवस्थानमुच्यते तत्राह परकर्मणा-

न च कार्य्यकरणानि कारयन् क्रियासु प्रवर्त्तयन् किं यत् तत् कर्त्तृत्वं कारयितृत्वञ्च देहिनः स्वात्मसमवायि सत् संन्यासान्न सम्भवति यथा गच्छतो गतिः गमनव्यापारपरित्यागे न स्यात्तद्वत् किं वा स्वत एवात्मनो नास्तीत्युच्यते नास्त्यात्मनः स्वतः कर्त्तृत्वं कारयितृत्वञ्चोक्तं ह्यविकार्य्योऽयमुच्यते शरीरस्थोऽपि कौन्तेय ! न करोति न लिप्यत इति ध्यायतीव लेलायतीवेति श्रुतेः॥ १२॥

---

ह्येति। ननु विवेकिनो दिगाद्यनवच्छिन्नबाह्याभ्यन्तराविक्रियब्रह्मात्मतामन्यमानस्य कुतो देहेऽवस्थानमास्थातुं शक्यते तत्राह वसन्नेति। तत्र हेतुमाह प्रारब्धेति। यदि प्रारब्धफलं धर्म्माधर्म्मात्मकं कर्म तस्योपभुक्तस्य शेषादनुपभुक्ताद्देहादिसंस्कारोऽनुवर्त्तते तदनुवृत्त्या च तत्रैव देहे विशेषविज्ञानमवस्थानविषयमुपपद्यते अतो विवेकवतः संन्यासिनो देहेऽवस्थानव्यपदेशः सम्भवतीत्यर्थः। अविद्वत्प्रत्ययापेक्षया विशेषणासम्भवेऽपि विद्वत्प्रत्ययापेक्षया विशेषणमर्थवदित्युपसंहरति देह एवेति। देहेऽवस्थानविषयो विद्वत्प्रत्ययस्तद्विषयश्चाविद्वत्प्रत्ययस्तयोरेवं भेदे विद्वत्प्रत्ययापेक्षयाविशेषणमर्थवदित्युपसंहरन्नेव हेतुं विशदयति विद्वदिति। आरोपितकर्त्तृत्वाद्यभावेऽपि स्वगतकर्त्तृत्वादिदुर्वारमित्याशङ्कामनूद्य दूषयति यद्यपीत्यादिना। क्रियासु प्रवर्त्तयन्नास्त इति पूर्व्वेण सम्बन्धः पूर्व्वस्यापि शास्त्रेवमेव सम्बन्धः। कर्त्तृत्वं कारयितृत्वञ्चात्मनो नेत्यत्र विचारयति किमिति। यत् कर्त्तृत्वं कारयितृत्वञ्च तत् किं देहिनः स्वात्मसमवायि सदेव संन्यासान्न भवतीत्युच्यते यथा गच्छतो देवदत्तस्य गमनैव गतिः तत्क्रियाया त्यागान्न भवति अथवा स्वारस्येन कर्त्तृत्वं कारयितृत्वञ्चात्मनो नास्तीति पक्षद्वयमाद्ये सक्रियत्वं द्वितीये कूटस्थत्वमित्यर्थः। द्वितीयं पक्षमाश्रित्योत्तरमाह नास्तीति। उक्तेऽर्थे वाक्योपक्रममनुकूलयति उक्तं हीति। तत्रैव वाक्यशेषमपि संवादयति शरीर-

स्योऽपीति। इत्युक्तेऽर्थे श्रुतिमपि दर्शयति ध्यायतीवेति। उपाधिगतैव सर्वा विक्रिया नात्मनि स्वतोऽस्तीत्यर्थः॥ १२॥

स्वा॰ टी॰। एवं तावत् चित्तशुद्धिशून्यस्य संन्यासात् कर्मयोगो विशिष्यत इत्येतत् प्रपञ्चितं इदानीं शुद्धचित्तस्य संन्यासः श्रेष्ठ इत्याह सर्वकर्म्माणीति। वशी जितचित्तः सर्वकर्म्माणि विक्षेपकाणि मनसा विवेकयुक्तेन संन्यस्य सुखं यथा भवत्येवं ज्ञाननिष्ठः सन्नास्ते, क्कास्त इत्यत आह नवद्वारे नेत्रे नासिके कर्णौ मुखञ्चेति सप्तशिरोगतानि अधोगते द्वे पायूपस्थरूपे इत्येवं नवद्वाराणि यस्मिन् पुरे पुरवदहङ्कार-शून्ये देहे देही अवतिष्ठते अहङ्काराभावादेव स्वयं तेन देहेन नैव कुर्वन् ममकाराभावात् न कारयन्निति अशुद्धचित्ताद्व्यावृत्तिरुक्ता, अशुद्धचित्तो हि संन्यस्य पुनः करोति कारयति च न स्वयं तथा अतः सुख-मास्त इत्यर्थः॥ १२॥

# न कर्तृत्वं न कर्म्माणि लोकस्य सृजति प्रभुः।
# न कर्मफलसंयोगं स्वभावस्तु प्रवर्त्तते॥ १३॥

किञ्च न कर्तृत्वमिति। न कर्तृत्वं स्वतः कुर्विति नाऽपि कर्माणि रथघटप्रासादादीनि ईप्सिततमानि लोकस्य सृजत्युत्पादयति प्रभुरात्मा नापि रथादिकृतवतस्तत्फलेन संयोग न कर्मफलसंयोगं यदि किञ्चिदपि स्वतो न करोति न कारयति च देही कस्तर्हि कुर्वन् कारयंश्च प्रवर्त्तत इत्युच्यते स्वभावस्तु स्वोभावः स्वभावोऽविद्यालक्षणा प्रकृतिः माया प्रवर्त्तते दैवी ह्येत्यादीति वक्ष्यमाणा॥ १३॥

स्वा॰टी॰। आत्मनो यदुक्तं कारयितृत्वं नास्तीति तत् प्रपञ्चयति नेत्यादिना। यद्यपि लोकस्य कर्तृत्वं न सृजतीति नास्तीति कारयितृत्वं तथापि रथशकटादीनि कुर्वन् भवति कर्त्तेत्याशङ्क्याह न कर्म्माणीति। तथापि भोजयितृत्वेन विक्रियावत्त्वं दुष्परिहारमित्याशङ्क्याह न चेति।

कस्य तर्हि प्रवर्त्तकत्वं तदाह स्वभावस्त्विति। कुर्विति कर्तृत्वं लोकस्य न सृजत्यात्मेति सम्बन्धः। रथादीनां कर्मत्वं साधयति ईप्सिततेति। आत्मनो देहादिस्वामित्वेन प्रभुत्वं रथादिकृतस्ततो लोकस्य रथादिफलेन सम्बन्धमपि न सृजत्यात्मेत्यात्मनो भोजयितृत्वं प्रत्याचष्टे नापीति। चतुर्थपादं शङ्कोत्तरत्वेनावतारयति। स्वभाववादस्तर्हीत्याशङ्क्य व्याकरोति अविद्यालक्षणेति। प्रकृतेर्विद्याभावत्वं व्युदसितुं मायेत्युक्तं सा च सप्तमे वक्ष्यते तेन प्रधानविलक्षणेत्याह दैवी ह्येति॥ १३॥

स्वा० टी। ननु एष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते एष एवासाधु कर्म कारयति तं यमेभ्यो लोकेभ्योऽधो निनीषत इत्यादिश्रुतेः परमेश्वरेणैव शुभाशुभफलेषु कर्मसु कर्तृत्वेन प्रयुज्यमानोऽस्वतन्त्रः पुरुषः कथं तानि कर्माणि त्यजेत् ईश्वरेणैव ज्ञानमार्गे प्रयुज्यमानः शुभान्यशुभानि च त्यक्ष्यतीति चेत् एवं सति वैषम्यनैर्घृण्याभ्यामीश्वरस्यापि प्रयोजककर्तृत्वात् पुण्यपापसम्बन्धः स्यादित्याशङ्क्याह न कर्तृत्वमिति द्वाभ्याम्। प्रभुरीश्वरो जीवलोकस्य कर्तृत्वादिकं न सृजति किन्तु जीवस्य स्वभावोऽविद्यैव कर्तृत्वादिरूपेण प्रवर्त्तते अनाद्यविद्याकामवशात् प्रवृत्तिस्वभावमेव लोकमीश्वरः कर्मसु नियुङ्क्ते न तु स्वयमेव कर्तृत्वादिकमुत्पादयतीत्यर्थः॥ १३॥

**नादत्ते कस्यचित् पापं नचैव सुकृतं विभुः।**
**अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः॥१४॥**

परमार्थतस्तु नेति। नादत्ते न च गृह्णाति भक्तस्यापि कस्यचित् पापं न चैवादत्ते सुकृतं विभुः भक्तैः प्रयुक्तं विभुः किमर्थं तर्हि भक्तैः पूजादिलक्षणं यागदानहोमादिकञ्च सुकृतं प्रयुज्यत इत्याह अज्ञानेनावृतं ज्ञानं विवेकविज्ञानं तेन मुह्यन्ति करोमि कारयामि भोक्ष्ये भोजयामीत्येवं मोहं गच्छन्त्यविवेकिनः संसारिणो जन्तवः॥१४॥

व्या० टी०। कर्तृत्वभोक्तृत्वैश्वर्य्याण्यात्मनोऽविद्याकृतानीत्युक्त-

मिदानीमीश्वरे संन्यस्तसमस्तव्यापारस्य तदेकशरणस्य दुरितं सुकृतं वा तदनुग्रहार्थं भगवानादत्ते मदेकशरणो मत्प्रीत्यर्थं कर्म कुर्वाणो दुष्कृताद्यनुमोदनेनानुग्राह्यो मयेति। प्रत्ययभाक्त्वादित्याशङ्क्य सोऽपि परमार्थतो नास्त्यात्मविक्रियादित्याह परमार्थतस्त्विति। कथं तर्हि भक्तानामनुग्राह्यत्वमीश्वरस्यानुग्राहकत्वमिति प्रसिद्धत्वमाह अज्ञानेनेति। पूर्वार्द्धगताक्षराणि व्याख्याय आकाङ्क्षापूर्वकमुत्तरार्द्धमवताय्य व्याचष्टे किमर्थमित्यादिना ॥ १४ ॥

स्वा॰ टी॰। यस्मादेवं तस्मात् नादत्त इति। प्रयोजकोऽपि सन् प्रभुः कस्यचित् पापं सुकृतञ्च नैवादत्ते न भजते तत्र हेतुः विभुः परिपूर्णः आप्तकाम इत्यर्थः, यदि हि स्वार्थकामनया कारयेत्तर्हि तथा स्यात्, न त्वेतदस्ति आप्तकामस्यैवाचिन्त्यनिजमायया तत्तत्पूर्वकर्मानुसारेण प्रवर्त्तकत्वात्। ननु भक्ताननुगृह्णतोऽभक्तान्निगृह्णतश्च वैषम्योपलम्भात् कथमाप्तकामत्वमित्यत आह अज्ञानेनेति। निग्रहोऽपि दण्डरूपोऽनुग्रह एवेत्येवमज्ञानेन सर्वत्र समः परमेश्वर इत्येवम्भूतं ज्ञानमावृतं तेन हेतुना जन्तवो जीवा मुह्यन्ति भगवति वैषम्यं मन्यन्त इत्यर्थः ॥ १४ ॥

**ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः।**
**तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥ १५ ॥**

ज्ञानेन इति। ज्ञानेन तु येन अज्ञानेनावृत्ता मुह्यन्ति जन्तवः तदज्ञानं येषां जन्तूनां विवेकज्ञानेनात्मविषयेण नाशितमात्मनो भवति तेषां जन्तूनामादित्यवत् यथादित्यः समस्तं रूपजातं अवभासयति तद्वत् ज्ञानं ज्ञेयञ्च वस्तु सर्वं प्रकाशयति तत् परमार्थतत्त्वम् ॥ १५ ॥

आ॰ टी॰। तर्हि सर्वेषामनाद्यज्ञानावृतज्ञानत्वात् व्यामोहाभावाच्च कुतः संसारनिवृत्तिरिति तत्राह ज्ञानेनेति। सर्वमिति पूर्वस्य॰

उच्यते, ज्ञेयस्यैव वस्तुनस्तत्परमिति विशेषणम् । तद्व्याचष्टे परमार्थतत्त्वमिति ॥ १५ ॥

व्या॰टी॰। ज्ञानिनस्तु न मुह्यन्तीत्याह ज्ञानेनेति । आत्मनो भगवतो ज्ञानेन येषां तद्वैषम्योपलम्भकमज्ञानं नाशितं तज्ज्ञानं तेषामज्ञानं नाशयित्वा तत् परं परिपूर्णमीश्वरस्वरूपं प्रकाशयति यथादित्यस्तमो निरस्य समस्तं वस्तुजातं प्रकाशयति तद्वत् ॥ १५ ॥

**तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।**
**गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥१६॥**

यत् परं ज्ञानं प्रकाशितं तद्बुद्धय इति । तस्मिन् गता बुद्धिर्येषां ते तद्बुद्धयः तदात्मानस्तदेव परं ब्रह्म आत्मा येषां ते तदात्मानः तन्निष्ठा इति तन्निष्ठा निष्ठाभिनिवेशस्तात्पर्य्यं सर्वाणि कर्माणि संन्यस्य ब्रह्मण्येवावस्थानं येषां ते तन्निष्ठास्तत्परायणाश्च तदेव परमयनं परा गतिर्येषां भवति ते तत्परायणाः केवलात्मरतय इत्यर्थः ते गच्छन्त्येवंविधा अपुनरावृत्तिं अपुनर्देहसम्बन्धं न गच्छन्ति ज्ञाननिर्धूतकल्मषाः यथोक्तेन ज्ञानेन निर्धूतो निरस्तो नाशितः कल्मषः पापादिसंसारकारणदोषो येषां ते ज्ञाननिर्धूतकल्मषाः यतय इत्यर्थः ॥ १६ ॥

व्या॰ टी॰ । विदुषां विविदिषूणामन्तरङ्गाणि विद्यापरिपाकसाधनानि इत्युपदिदिक्षुरुत्तरश्लोकस्यापेक्षितं पूरयति यत् परमिति । तस्मिन् परमार्थतत्त्वे परस्मिन् ब्रह्मणि बाह्यं विषयमपोह्य गता प्रवृत्ता श्रवणमनननिदिध्यासनैरसकृदनुष्ठितैर्बुद्धिः साक्षात्कारलक्षणा येषां ते तथेति । प्रथमविशेषणं विभजते तस्मिन्निति । तर्हि बोद्धा जीवो बोद्धव्यं ब्रह्मेति जीवब्रह्मभेदाभ्युपगमो नेत्याह तदात्मान इति । कल्पितं बोद्धृबोद्धव्यत्वं वस्तुतस्तु न भेदोऽस्तीत्यङ्गीकृत्य व्याचष्टे तदे-

शैति । ननु देहादावात्माभिमानमपनीय ब्रह्मण्येवाहमस्मीत्यवस्थानं सञ्चदनुष्ठीयमानकर्मप्रतिबन्धात्र सिध्यतीत्याशङ्क्य विशेषणान्तरमादत्ते, तन्निष्ठा इति । तत्र निष्ठाशब्दार्थं दर्शयन् विवक्षितमर्थमाह निष्ठे-त्यादिना । तथापि पुरुषार्थान्तरापेक्षाप्रतिबन्धात् कथं यथोक्ते ब्रह्म-ण्येवावस्थानं सेद्धुं पारयति तत्राह तत्परायणाश्चेति । यथोक्तानाम-धिकारिणां परमपुरुषार्थस्योक्तब्रह्मज्ञानातिरेकाभावादन्यत्रासक्तिरिति तात्-पर्यार्थमाह केवलेति । ननु यथोक्तविशेषणवतां वर्त्तमानदेहपातेऽपि देहान्तरपरिग्रहव्यपतया कुतो यथोक्ते ब्रह्मण्यवस्थानमास्थातुं शक्यते तत्राह ते गच्छन्तीति । सति संसारकारणे दुरितादौ संसारप्रसरस्य दुर्वारत्वान्नापुनरावृत्तिसिद्धिरित्याशङ्क्याह ज्ञानेति । उक्तविशेषणसम्पत्त्या दर्शितफलशालित्वमाश्रमान्तरेष्वसम्भावितमिति मन्वानो विशिनष्टि यतय इति ॥ १६ ॥

स्वा० टी० । एवं भूतेश्वरोपासकानां फलमाह तदिति । तस्मिन्नेव बुद्धिर्निश्चयात्मिका येषां, तस्मिन्नेव आत्मा प्रयत्नो येषां, तस्मिन्नेव निष्ठा तात्पर्यं येषां, तदेव परमयनमाश्रयो येषां, ततश्च तत्प्रसादलब्धेना-त्मज्ञानेन निर्धूतं निरस्तं कल्मषं येषां तेऽपुनरावृत्तिं मुक्तिं यान्ति ॥ १६ ॥

**विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।**
**शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥१७॥**

येषां ज्ञानेन नाशितमात्मनोऽज्ञानं ते पण्डिताः कथं तत्त्वं पश्यन्तीत्युच्यते विद्येति । विद्याविनयसम्पन्ने विद्या च विनयश्च विद्याविनयौ विद्यात्मनो बोधो विनयश्च उप-शमः ताभ्यां विद्याविनयाभ्यां सम्पन्नो विद्याविनयसम्पन्नो विद्वान् विनीतश्च यो ब्राह्मणस्तस्मिन् ब्राह्मणे गवि हस्तिनि शुनि चैव श्वपाके च पण्डिताः समदर्शिनो विद्याविनय-सम्पन्ने उत्तमसंस्कारवति ब्राह्मणे सात्त्विके मध्यमायाश्च

राजस्यां गवि संस्कारहीनायामत्यन्तमेव केवलतामसे श्वस्वादौ च सत्त्वादिगुणैस्तज्जैश्च संस्कारैस्तथा राजसैस्तथा तामसैश्च संस्कारैरत्यन्तमेवास्पृष्टं सममेकमविक्रियं ब्रह्मद्रष्टुं शीलं येषां ते पण्डिताः समदर्शिनः॥ १७॥

आ॰ टी॰। यदपुनरावृत्तिसाधनं तत्त्वज्ञानं तदेव प्रश्नद्वारेण विवृणोति येषामित्यादिना। विद्या वेदार्थविज्ञानमित्यङ्गीकृत्य विनयं व्याचष्टे विनय इति। उपशमे निरहङ्कारत्वमनौद्धत्यं पदार्थमेवमुक्त्वा वाक्यार्थं दर्शयति विद्वानिति। गवीत्याद्यनूद्य वाक्यार्थं कथयति विद्येति। श्वस्वादौ पण्डिताः समदर्शिन इत्युत्तरत्र सम्बन्धः। तत्र तत्र प्राणिभेदेषु तत्तद्गुणैस्तत्तन्निमित्तसंस्कारैश्च संस्पृष्टत्वसम्भवाच्च ब्रह्मणः समत्वमित्याशङ्क्याह सत्त्वादीति। तज्जैश्चेत्यत्र तच्छब्देन सत्त्वमेव गृह्यते सात्त्विकसंस्कारैरिव राजससंस्कारैरपि सर्वथैवासंस्पृष्टं ब्रह्मेत्याह तथेति। राजसैरिवतामसैरपि संस्कारैर्ब्रह्मात्यन्तमेवास्पृष्टमित्याह तथा तामसैरिति। ब्रह्मणोऽद्वितीयत्वं कूटस्थत्वमसङ्गत्वञ्चोक्तेऽर्थे हेतुरिति मत्वा समशब्दार्थमाह सममिति। समदर्शित्वमेव पाण्डित्यं तद्व्याचष्टे ब्रह्मेति॥ १७॥

स्वा॰ टी॰। कीदृशास्ते ज्ञानिनो ये पुनरावृत्तिं मुक्तिं गच्छन्तीत्यपेक्षायामाह विद्येति। विषमेष्वपि समं ब्रह्मैव द्रष्टुं शीलं येषां ते पण्डिता ज्ञानिन इत्यर्थः। तत्र विद्याविनयाभ्यां युक्ते ब्राह्मणे च शुनोः यः पचति तस्मिंश्चेति कर्मणो वैषम्यं, गवि हस्तिनि शुनि चेति जातितो वैषम्यं दर्शितम्॥ १७॥

**इहैव तैर्जितः स्वर्गो येषां साम्ये स्थितं मनः।**
**निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः॥१८**

नन्वभोज्यान्नास्ते दोषवन्तः समासमाभ्यां विषमे समे पूजात इति स्मृतेर्न ते दोषवन्तः कथं इहेति।

इहैव जीवद्भिरेव तैः समदर्शिभिः पण्डितैर्जितो वशीकृतः स्वर्गो जन्म येषां साम्ये सर्वभूतेषु ब्रह्मणि समभावे स्थितं निश्चलीभूतं मनोऽन्तःकरणं निर्दोषं यद्यपि दोषवत्सु श्वपाकादिषु मूढैस्तद्दोषैर्दोषवदिव विभासते तथापि तद्दोषैरसंस्पृष्टमिति निर्दोषं हि दोषवर्जितं हि यस्मान्नापि स्वगुणभेदभिन्नं निर्गुणत्वाच्चैतन्यस्य वक्ष्यति च भगवानिच्छादीनां क्षेत्रधर्मत्वमनादित्वान्निर्गुणत्वा-दिति च नाप्यन्त्यादिविशेषा आत्मनो भेदकाः सन्ति

व्या० टी०। सात्त्विकेषु राजसेषु तामसेषु चासमत्वेषु समत्वदर्शन-मनुचितमिति शङ्कते नन्विति। सर्वत्र समदर्शिनः तच्छब्देन परामृ-श्यन्ते तेषां दोषवत्त्वादभोज्यान्नत्वमित्यत्र प्रमाणमाह समासमाभ्या-मिति। समानामध्ययनादिभिः समानधर्मकाणां वस्त्रालङ्कारादिपूजया विषमे प्रतिपत्तिविशेषे क्रियमाणे सत्यसमानाञ्चासमानधर्मकाणां कस्य-चिदेकवेदत्वमपरस्य द्विवेदत्वमित्यादिधर्मवतां प्रागुक्ततया पूजया समे प्रतिपत्तिविशेषे पूजयिता पुरुषविशेषं ज्ञात्वा प्रतिपत्तिमकुर्वन् धनाद्धर्माच्च हीयते तेन सात्त्विके राजसतामसयोश्च समबुद्धिं कुर्वन् प्रत्यवैतीत्यर्थः। उत्तरत्वेनोत्तरश्लोकमवतारयति न ते दोषवन्त इति। स्मृत्यवष्टम्भेन सर्व-सत्त्वेषु समत्वदर्शिना दोषवत्त्वमुक्तं कथं नास्तीति प्रतिज्ञामात्रेण सिध्य-तीति शङ्कते कथमिति। स्मृतेर्गतिमप्रे वदिष्यन् निर्दोषत्वं समत्वदर्शिनां विशदयति इहैवेति। सर्वेषां चेतनानां साम्ये प्रवणमनसां ब्रह्मलोक-गमनमन्तरेण तस्मिन्नेव देहे परिभूतजन्मनामशेषदोषराहित्ये हेतुमाह निर्दोषं हीति। वर्त्तमानो देहः सप्तम्या परिगृह्यते। तामेव सम-दर्शिनो विशिनष्टि येषामिति। ननु ब्रह्मणो निर्दोषत्वमसिद्धं दोषवत्सु श्वपाकादिषु तद्दोषैर्दोषवत्त्वोपलम्भसम्भवात्तत्राह यद्यपीति। यस्मात् तन्निर्दोषं तस्मात्तस्मिन् ब्रह्मणि स्थितैर्निर्दोषैः सर्गो जित इति सम्बन्धः। ब्रह्मणो गुणभूयस्त्वादल्पीयान् दोषोऽपि स्यादित्याशङ्क्याह नापीति।

प्रतिशरीरं तेषां सत्त्वे प्रामाण्यनुपपत्तेरतः सर्वं ब्रह्मैकञ्च तस्माद्ब्रह्मण्येव ते स्थिताः तस्मान्न दोषगन्धमात्रमपि तान् स्पृशति देहादिसङ्घातात्मदर्शनाभिमानाभावात् तेषां देहादिसङ्घातात्मदर्शनाभिमानवद्विषयन्तु तत् सूत्रं समासमाभ्यां विषमसमे पूजात इति पूजाविषयत्वविशेषणात् दृश्यते हि ब्रह्मवित् षड़ङ्गवित् चतुर्वेदवित् इति पूजादानादौ गुणविशेषसम्बन्धः कारणं ब्रह्म तु सर्वगुणदोषसम्बन्धवर्जितमित्यतो ब्रह्मणि ते स्थिता इति युक्तम् ॥ १८ ॥

---

चेतनस्य गुणविशेषे विशिष्टत्वमनिष्टं निर्गुणत्वश्रवणादित्ययुक्तं बुद्धिसुखादीनां परिशेषादात्मधर्मत्वस्य कैश्चिन्निश्चितत्वादित्याशङ्क्याह वक्ष्यति चेति। आत्मनो निर्गुणत्वे वाक्यशेषं प्रमाणयति अनादित्वादिति। चकारो वक्ष्यतीत्यनेन सम्बन्धार्थः। गुणदोषवशादात्मनो भेदाभावेऽपि भेदोऽन्यविशेषेभ्यो भविष्यतीति प्रसङ्गादाशङ्क्य दूषयति नापीति। प्रतिशरीरमात्मभेदसिद्धौ तद्धेतुत्वेन तेषां सत्त्वं तेषाञ्च सत्त्वे प्रतिशरीरमात्मनो भेदसिद्धिरिति परस्पराश्रयत्वमभिप्रेत्य हेतुमाह प्रतिशरीरमिति। आत्मनो भेदस्याभावे फलितमाह अत इति। समत्वमेव व्याकरोति एकञ्चेति। ब्रह्मणो निर्विशेषत्वेनैकत्वाज्जीवानाञ्च भेदकाभावेनैकत्वस्योक्तत्वादेकलक्षणत्वादेकत्वं जीवब्रह्मणोरैक्यमित्याह तस्मादिति। जीवब्रह्मणोरैकत्वे जीवानां ब्रह्मवन्निर्दोषत्वं सिध्यतीत्याह तस्माच्चेति। तच्छब्दार्थमेव स्फोरयति देहादीति। यदि सर्वसत्त्वेषु समत्वदर्शनमदुष्टमिष्टं तर्हि कथं गौतमसूत्रमित्याशङ्क्याह देहादिसङ्घातेति। सूत्रस्य यथोक्ताभिमानवद्विषयत्वे गमकमाह पूजेति। यदि चतुर्वेदानामेव सतां पूजया वैषम्यं यदि वा चतुर्वेदानां षड़ङ्गविदां ब्रह्मविदाञ्च पूजया साम्यं तदा तेषामुक्तपूजाविषयाणां श्रेयाञ्छिन्नमनोविकार-

सम्भवे कर्त्ता प्रत्ययैतीत्यविद्वद्विषयत्वं स्वतस्य प्रतिभातीत्यर्थः। तत्रैव चानुभवमनुकूलत्वेनोदाहरति इह्यते हीति। देहादिसङ्घाताभिमानवतां गुणदोषसम्बन्धसम्भवात्तद्विषयं स्वतमित्युक्तमिदानीं ब्रह्मात्मदर्शनाभिमानवतां गुणदोषासम्बन्धाच्च तद्विषयं स्वतमित्यभिप्रेत्याह ब्रह्म त्विति ॥१८॥

स्वा० टी०। ननु विषमेषु समदर्शनं निषिद्धं कुर्वन्तोऽपि कथं ते पण्डिताः, यथाह गोतमः, समासमाभ्यां विषमे समे पूजात इति, अस्यार्थः समाय पूजायां विषमे प्रकारे क्रते सति विषमाय च समे प्रकारे क्रते सति स पूजक इह लोकात् परलोकाच्च हीयत इति। तत्राह इहैवेति। इहैव जीवद्भिरेव तैः स्वज्यत इति सर्गः संसारो जितो निरस्तः कैः येषां मनः साम्ये समत्वे स्थितं, तत्र हेतुः हि यस्मात् ब्रह्म सम निर्द्दोषञ्च तस्मात्ते समदर्शिनो ब्रह्मण्येव स्थिता ब्रह्मभावं प्राप्ता इत्यर्थः। गोतमोक्तस्तु दोषो ब्रह्मभावप्राप्तेः पूर्वमेव पूजात इति पूजकावस्थाश्रवणात् ॥ १८ ॥

**न प्रहृष्येत् प्रियं प्राप्य नोद्विजेत् प्राप्य चाप्रियम्।**
**स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥१९॥**

कर्मविषयञ्च समासमाभ्यामित्यादि इदन्तु सर्वकर्मसंन्यासिविषयं प्रस्तुतं सर्वकर्माणि मनसेत्यारभ्याध्यायपरिसमाप्तेः यस्मान्निर्दोषं समं ब्रह्मात्मा तस्मात् नेति। न प्रहृष्येत् न हर्षं कुर्य्यात् प्रियमिष्टं प्राप्य लब्ध्वा नोद्विजेत् प्राप्यैव चाप्रियमनिष्टं लब्ध्वा देहमात्रात्मदर्शिनां हि प्रियाप्रियप्राप्ती हर्षविषादौ कुर्वाते न केवलात्मदर्शिनः तस्य प्रियाप्रियप्राप्त्यसम्भवात् किञ्च सर्वभूतेष्वेकः समो निर्दोष आत्मेति स्थिरा निर्विचिकित्सा बुद्धिर्यस्य स स्थिरबुद्धिरसंमूढः संमोहवर्जितश्च स्याद्यथोक्तब्रह्मवित् ब्रह्मणि स्थितोऽकर्मकृत् सर्वकर्मसंन्यासीत्यर्थः ॥ १९ ॥

आ॰ टी॰। इतश्च नेदं स्थलं ब्रह्मविद्विषयमित्याह कर्म्मीति। तत्रैव पूजापरिभवसम्भवादित्यर्थः। ननु यत्र समत्वदर्शनं तत्रैव त्विदं स्थलं न तु कर्मिण्यकर्मिणि वेति विभागोऽस्ति तत्राह इदं त्विति। समत्वदर्शनस्य संन्यासिविषयत्वेन प्रस्तुतत्वे हेतुमाह सर्वकर्म्माणीति। अध्यायपरिसमाप्तेः सर्वकर्म्माणीत्यारभ्य तत्र तत्र सर्वकर्मसंन्यासाभिधानात् तद्विषयमिदं समत्वदर्शनं गम्यते तत्र च निरहङ्कारे निरवकाशं स्थलमित्यर्थः। ननु इष्टानिष्टप्राप्तिभ्यां हर्षविषादौ विद्वानपि कुर्वन्निर्दोषे ब्रह्मणि कथं स्थितिं लभेतेत्याशङ्क्याकाङ्क्षितं पूरयन्नुत्तरश्लोकमुत्थापयति यस्मादिति। आत्मज्ञाननिष्ठावतो विदुषो हर्षविषादनिमित्ताभावाच्च तावुचिताविल्याह स्थिरबुद्धिरिति। ननु हर्षविषादनिमित्तत्वं प्रियाप्रिययोः सिद्धमिति कथं तत्प्राप्त्या हर्षोद्वेगौ न कर्त्तव्याविति नियुज्यते तत्राह देहेति। विदुषोऽपि प्रियाप्रियप्राप्तिसामर्थ्यादेव हर्षविषादौ दुर्व्वाराविल्याशङ्क्याह न केवलेति। अद्वितीयदर्शनशीलस्य व्यतिरिक्तप्रियाप्रियप्राप्त्ययोगाच्च तन्निमित्तौ हर्षविषादावित्यर्थः। इत्यपि विदुषो हर्षविषादावसम्भावितावित्याह किञ्चेति। निर्द्दोषे ब्रह्मणि प्रागुक्ते दृढप्रतिपत्तिः सम्मोहेन हर्षादिहेतुना रहितो यथोक्ते सर्वदोषरहिते ब्रह्मण्यहमस्मीति विद्यावानशेषदोषशून्ये तस्मिन्नेव ब्रह्मणि स्थितस्तदनुरोधात् कर्म्माण्यसंन्यस्यमानो नैव हर्षविषादभागी भवितुमलमित्यर्थः॥ १९॥

स्वा॰ टी॰। ब्रह्मप्राप्तस्य लक्षणमाह न प्रहृष्येदिति। ब्रह्मविद्भूत्वा ब्रह्मण्येव यः स्थितं स्वप्रियं प्राप्य न प्रहृष्येत् न प्रहृष्टो हर्षवान् स्यात् अप्रियं प्राप्य च नोद्विजेत् न विषीदतीत्यर्थः, यतः स्थिरबुद्धिः स्थिरा निश्चला बुद्धिर्यस्य तत् कुतः यतोऽसंमूढः निवृत्तमोहः॥१९॥

**बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत् सुखम्।**
**स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते॥ २०॥**

किञ्च ब्रह्मणि स्थितः बाह्येति। बाह्यस्पर्शेषु बाह्याश्च ते स्पर्शाश्च बाह्यस्पर्शाः स्पृश्यन्त इति स्पर्शाः शब्दादयो विषयास्तेषु बाह्यस्पर्शेषु असक्त आत्मान्तःकरणं यस्य सोऽयमसक्तात्मा विषयेषु प्रीतिवर्जितः स विन्दति लभते आत्मनि यत् सुखं तद्विन्दतीत्येतत् स ब्रह्मयोगयुक्तात्मा ब्रह्मणि योग. समाधिर्ब्रह्मयोगस्तेन ब्रह्मयोगेन युक्तः समाहितस्तस्मिन् व्यापृत आत्मान्तःकरणं यस्य स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते प्राप्नोति तस्माद्बाह्यविषयप्रीतिः क्षणिकाया इन्द्रियाणि निवर्त्तयेदात्मन्यक्षयसुखार्थीत्यर्थः ॥ २० ॥

आ० टी०। शब्दादिविषयप्रीतिप्रतिबन्धान्न कस्यचिदपि ब्रह्मणि स्थितिः सिध्येदित्याशङ्क्याह किञ्चेति। न केवलं पूर्वोक्तरीत्या ब्रह्मणि स्थितो हर्षविषादरहितः किन्तु विद्यान्तरेणापीत्यर्थः। यावद्यावद्विषयेषु रागरूपमावरणं निवर्त्तते तावत्तावदात्मस्वरूपसुखमभिव्यक्तं भवतीत्याह बाह्येति। न केवलमसक्तात्मा शमवशादेव सुखं विन्दते किन्तु ब्रह्मसमाधिना समाहितान्तःकरणः सुखमनन्तं व्याप्नोतीत्याह स ब्रह्मेति। तत्र पूर्वार्द्धं व्याचष्टे बाह्याश्चेति। समाधानाद्धीसम्यग्ज्ञानद्वारा निरतिशयसुखप्राप्तिमुत्तरार्द्धव्याख्यानेन कथयति ब्रह्मणीत्यादिना। शब्दादिविषयाविसुखस्यानन्तसुखाप्तिसम्भवात्तदर्थिना प्रयत्नेन विषयवैमुख्यं कर्त्तव्यमिति शिष्यशिक्षार्थमाह तस्मादिति ॥ २० ॥

स्वा० टी०। मोहनिवृत्त्या बुद्धिस्थैर्ये हेतुमाह बाह्येति। इन्द्रियैः स्पृश्यन्त इति स्पर्शा विषयाः बाह्येन्द्रियविषयेष्वसक्तात्मा अनासक्तचित्तः आत्मन्यन्तःकरणे यदुपशमात्मकं सात्त्विकं सुखं तद्विन्दति लभते स चोपशमसुखं लब्ध्वा ब्रह्मणि योगेन समाधिना युक्तस्तदैक्यं प्राप्त आत्मा यस्य सोऽक्षयं सुखमश्नुते प्राप्नोति ॥ २० ॥

**ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।**
**आद्यन्तवन्तः कौन्तेय ! न तेषु रमते बुधः ॥२१॥**

इतश्च निवर्त्तयेत् ये हीति । ये हि यस्मात् संस्पर्शजा विषयेन्द्रियसंस्पर्शेभ्यो जाता भोगा भुक्तयो दुःखयोनय एव तेऽविद्याकृतत्वात् दृश्यन्ते ह्याध्यात्मिकादीनि दुःखानि तन्निमित्तान्येव यथेह लोके तथा परलोकेऽपीति गम्यते एवशब्दान्न संसारे सुखस्य गन्धमात्रमप्यस्तीति बुद्धा विषयमृगतृष्णिकायां इन्द्रियाणि निवर्त्तयेन्न केवलं दुःखयोनय आद्यन्तवन्तश्च आदिर्विषयेन्द्रियसंयोगो भोगानामन्तश्च तद्वियोग एवात आद्यन्तवन्तोऽनित्यामध्यक्षणभावित्वादित्यर्थः, कौन्तेय ! न तेषु रमते बुधो भोगेषु विवेकी अवगतपरमार्थतत्त्वोऽत्यन्तमूढानामेव हि विषयेषु रतिर्दृश्यते यथा पशुप्रभृतीनाम् ॥ २१ ॥

व्या० टी० । तत्रैव हेत्वन्तरपरत्वेनोत्तरश्लोकमुदाहरति इतश्चेति । विषयेभ्यः सकाशादिन्द्रियाणीति शेषः । वैराग्यार्थमेव वैषयिकाणि सुखानि दूषयति ये हीति । ननु विषयेन्द्रियसंप्रयोगसम्भूतेषु भोगेषु जन्तूनामभिरुचिदर्शनात् कुतस्तेषां दुःखयोनित्वमित्याशङ्क्याविवेकिनां तेष्वासङ्गेऽपि न विवेकिनामित्याह आद्यन्तवन्त इति । यस्मादाधिव्याधिजरामरणादिसहितेभ्यः समागमनादिक्लेशबहुभागिभ्यश्च विषयेन्द्रियसम्बन्धेभ्यो भोगाः सुखलवानुभवा जायन्ते तस्मात्ते दुःखहेतवो भवन्तीति योजना । अविद्याकार्य्यत्वाद्दुःखानां कुतो भोगजन्यत्वमित्याशङ्क्य भोगानामविद्याप्रयुक्तत्वात्तन्निबन्धनत्वं दुःखानां युक्तमित्यभिप्रेत्याह अविद्येति । भोगानां दुःखयोनित्वे मानवमनुभवमुपन्यस्यति दृश्यन्ते हीति । ऐहिकानां भोगानां दुःखनिमित्तत्वेऽपि नामुष्मिकाणां तथात्वमनुभवाभावादित्याशङ्क्यावधारणसामर्थ्यसिद्धमर्थमाह यथेति । पूर्वार्द्ध-

ख्याक्षरार्थमुक्त्वा तात्पर्य्यार्थमाह नेत्यादिना। इतश्च विषयेभ्यः श्रोत्रादीन्द्रियाणि निवर्त्तयितव्यानीत्याह न केवलमिति। आद्यन्तवत्त्वे मध्यक्षणवर्त्तित्वेन क्षणभङ्गुरत्वादुपेक्षणीयत्वं भोगानां सिध्यति। क्षणिकत्वं हि तेषां क्षणभङ्गुरत्वं क्षणिकविषयाकारमनोवृत्तिव्यङ्ग्यत्वादिति मन्वानः सन्नाह अत इति। बुद्धिपूर्वकारिणां विवेकवतां भोगेषूपेक्षोपलब्धेश्च तेषामाभासत्वं प्रतिभातीत्याह न तेष्विति। प्रतीकोपादानमाद्यमिदं पुनर्व्याख्यानमिति न पुनरुक्तिः। ननु केषाञ्चिद्भोगेष्वभिरुचिरुपलभ्यते तत्राह अत्यन्तेति ॥ २१ ॥

स्वा॰ टी॰। ननु प्रियविषयभोगानामपि निवृत्तेः कथं मोक्षः पुरुषार्थः स्यात्तत्राह ये हीति। संस्पृश्यन्त इति संस्पर्शा विषयास्तेभ्यो जाता ये भोगाः सुखानि ते हि वर्त्तमानकालेऽपि स्पर्द्धासूयादिव्याप्तत्वाद्दुःखस्यैव योनयः कारणभूता तथादिमन्तोऽन्तवन्तश्च अतो विवेकी तेषु न रमते ॥ २१ ॥

**शक्नोतीहैव यः सोढुं प्राक् शरीरविमोक्षणात्।**
**कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥२२॥**

अयञ्च श्रेयोमार्गप्रतिपक्षी कष्टतमो दोषः सर्वानर्थप्राप्तिहेतुर्दुर्निवार्य्यश्चेति तत्परिहारे यत्नाधिक्यं कर्त्तव्यमित्याह भगवान् शक्नोतीति। शक्नोत्युत्सहते इहैव जीवन्नेव यः सोढुं प्रसहितुं प्राक् पूर्वं शरीरविमोक्षणात् आमरणात् इत्यर्थः, मरणसीमाकरणं जीवतोऽवश्यभावी हि कामक्रोधोद्भवो वेग अनन्तनिमित्तवान् हि स इति यावन्मरणं तावन्न विश्रम्भणीय इत्यर्थः काम इन्द्रियगोचरप्राप्ते इष्टे विषये श्रूयमाणे स्मर्य्यमाणे वानुभूते सुखहेतौ या गर्धिः तृष्णा स कामः क्रोधश्चात्मनः प्रतिकूलेषु दुःखहेतुषु दृश्यमानेषु श्रूयमाणेषु स्मर्य्य-

माणेषु वा यो द्वेषः स क्रोधस्तौ कामक्रोधौ उद्भवो यस्य वेगस्य स कामक्रोधोद्भवो वेगः रोमाञ्चनहृष्टनेत्रवदनादिलिङ्गोऽन्तःकरणप्रक्षोभरूपः कामोद्भवो वेगः गात्रप्रकम्पप्रस्वेदसन्दष्टोष्ठपुटरक्तनेत्रादिलिङ्गः क्रोधोद्भवो वेगस्तं कामक्रोधोद्भवं वेगं य उत्सहते सोढुं सहितुं शक्तः स युक्तो योगी सुखी चेह लोके नरः ॥ २२ ॥

व्या॰ टी॰। उत्तरश्लोकस्य तात्पर्य्यमाह श्रेयश्चेति। श्रेयोमार्गप्रतिपन्नत्वं कष्टतमत्वे हेतुत्वमेव हेत्वन्तरमाह सर्वेति। प्रयत्नाधिक्यस्य कर्त्तव्यत्वे हेतुं सूचयति दुर्निवार्य्य इति। प्रसिद्धं हि कामक्रोधोद्भवस्य वेगस्य दुर्निवारत्वं येन मातरमपि चाधिरोहति पितरमपि हन्ति तमवश्यं परिहर्त्तव्यं दर्शयति शक्नोतीति। यथोक्तं वेगं बहिरनर्थरूपेण परिणामात् प्रागेव देहान्तरत्याग यः सोढुं क्षमते तं स्तौति स युक्त इति। मरणसीमाकरणस्य तात्पर्य्यमाह मरणेति। प्रसिद्धो हि शब्दः। तत्र हेतुमाह अनन्तेति। व्याध्युपहतानां ह्रद्वानाञ्च कामादिवेगेन भवतीत्याशङ्क्याह इति यावदिति। कामक्रोधोद्भवं वेगं व्याख्यातुमादौ कामं मनोविकारविशेषत्वेन व्याचष्टे काम इति। कथमस्य मनोविकारविशेषत्वं तदाह इन्द्रियेति। कामो ऽभिलाष तृष्णेति पर्य्यायाः सन्तः शब्दा मनोविकारविशेषे पर्य्यवस्यन्तीत्यर्थः। क्रोधश्च मनोविकारविशेषस्तद्वदित्याह क्रोधश्चेति। तमेव क्रोधं स्पष्टयति आत्मन इति। एवं कामक्रोधौ व्याख्याय तयोरुत्कटत्वावस्थात्मनो वेगस्य ताभ्यामुत्पत्तिमुपन्यस्यति ताविति। यथोक्तवेगावगमोपायमुपदिशति रोमाञ्चनहृष्टनेत्रेत्यादिना। उभयविधवेगं यो जीवन्नेव सोढुं शक्नोति तं पुरुषधौरेयत्वेन स्तौति तमित्यादिना ॥ २२ ॥

व्या॰ टी॰। तस्मान्मोक्ष एव परमः पुरुषार्थस्तस्य च कामक्रोधवेगोऽतिप्रतिपक्षोऽतस्तत्सहनसमर्थ एव मोक्षभागित्याह शक्नोतीहैवेति। कामात् क्रोधाच्चोद्भवति यो वेगः मनोनेत्रादिक्षोभलक्षणस्तमिहैव तदुद्भव-

समय एव यो नरः सोढुं प्रतिरोद्धुं शक्नोति तदपि न क्षणमात्रं किन्तु शरीरविमोक्षणात् प्रागदेहपातादित्यर्थः य एवंभूतः स एव युक्तः समाहितः सुखी च भवति नान्यः। यद्वा मरणादूर्द्धं विलपन्तीभिर्युवतिभिरालिङ्ग्यमानोऽपि पुत्रादिभिर्दह्यमानोऽपि यथा प्राणशून्यः कामक्रोधवेगं सहते तथा मरणात् प्रागपि जीवन्नेव यः सहते स एव युक्तः, सुखी चेत्यर्थः, तदुक्तं वशिष्ठेन, प्राणे गते यथा देहः सुखदुःखे न विन्दति। तथा चेत् प्राणयुक्तोऽपि स कैवल्याश्रमे वसेदिति॥ २२॥

**योऽन्तःसुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः।**
**स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति॥२३॥**

कथंभूतश्च ब्रह्मणि स्थितो ब्रह्म प्राप्नोतीत्याह भगवान् य इति। योऽन्तरात्मनि सुखं यस्य सोऽन्तःसुखस्तथान्तरेवात्मन्याराम: क्रीड़ा यस्य सोऽन्तरारामस्तथैवान्तरात्मैव ज्योतिः प्रकाशो यस्य सोऽन्तर्ज्योतिरेव य ईदृशः स योगी ब्रह्मनिर्वाणं ब्रह्मणि निर्वृतिं मोक्षमिह जीवन्नेव ब्रह्मभूतः समधिगच्छति प्राप्नोति॥ २३॥

स्वा० टी०। ज्ञानस्याभ्यन्तरमात्ममात्मनिष्ठत्वं दर्शयन् प्रकृतं ब्रह्मविदमेव विशिनष्टि कथम्भूतश्चेति। यथान्तरेव सुखं न बाह्यैर्विषयैस्तथान्तरेव ज्योतिर्न श्रोत्रादिभिरतो विषयान्तरविज्ञानरहित इत्याह तथेति। यथोक्तविशेषणसमाधिमान् जीवन्नेव मुक्तिमधिगच्छतीत्याह स योगीति। आत्मन्यन्तरेव सुखमिति बाह्यविषयनिरपेक्षत्वं विवक्षितमन्तरारामत्वञ्च इन्द्रियादिविषयापेक्षामन्तरेण क्रीड़ाप्रयुक्तफलभाक्त्वमभिमतमिन्द्रियादिजन्यप्रकाशशून्यत्वमात्मज्योतिष्ट्वमिष्टं यथोक्तविशेषणसम्पन्नः समाहितश्च जीवन्नेव ब्रह्मभावं प्राप्नोति ब्रह्मणि परिपूर्णे निर्वृतिं

सर्वानर्थनिवृत्त्युपलक्षितां स्थितिमनतिशयानन्दाविर्भावलक्षणां प्राप्नोतीत्याह य इति॥ २३॥

स्वा॰ टी॰। न केवलं कामक्रोधवेगसंवरणमात्रेण मोक्षं प्राप्नोति अपि तु योऽन्तरिति। अन्तरात्मन्येव सुखं यस्य न तु विषयेषु, अन्तरेवारामः क्रीडा यस्य न बहिः, अन्तरेव ज्योतिर्दृष्टिर्यस्य स गीतनृत्यादिषु स एवं ब्रह्मणि भूतः स्थितः सन् ब्रह्मनिर्वाणं ब्रह्मणि लयमधिगच्छति प्राप्नोति॥ २३॥

**लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः।**
**छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः॥२४॥**

किञ्च लभन्त इति। लभन्ते ब्रह्मनिर्वाणं मोक्षं ऋषयः सम्यग्दर्शिनः संन्यासिनः क्षीणकल्मषाः क्षीणपापादिदोषाः छिन्नद्वैधाः छिन्नसंशयाः यतात्मानः संयतेन्द्रियाः सर्वभूतहिते रताः सर्वेषां भूतानां हिते आनुकूल्ये रता अहिंसका इत्यर्थः॥ २४॥

आ॰ टी॰। मुक्तिहेतोर्ज्ञानस्य साधनान्तरमाह किञ्चेति। यज्ञादिनित्यकर्मानुष्ठानात् पापादिलक्षणं कल्मषं क्षीयते ततश्च श्रवणाद्यावृत्तेः सम्यक् दर्शनं जायते ततो मुक्तिरप्रयत्नेन भवतीत्याह लभन्त इति। ज्ञानप्राप्त्युपायान्तरं दर्शयति छिन्नेति। श्रवणादिना संशयनिरसनं कार्य्यकारणनियमनञ्च दयालुत्वेनाहिंसकत्वमित्येतदपि सम्यक्ज्ञानप्राप्तौ कारणमित्यर्थः। अक्षरव्याख्यानं स्पष्टत्वान्न व्याख्यायते॥ २४॥

स्वा॰ टी॰। किञ्च लभन्त इति। ऋषयः सम्यग्दर्शिनः क्षीणं कल्मषं येषां छिन्नं द्वैधं संशयो येषां यतः संयत आत्मा चित्तं येषां सर्वेषां भूतानां हिते रताः ये तथाभूतास्ते ब्रह्मनिर्वाणं मोक्षं लभन्ते॥ २४॥

**कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।**
**अभितो ब्रह्मनिर्वाणं वर्त्तते विदितात्मनाम् ॥२५॥**

किञ्च कामेति । कामक्रोधवियुक्तानां कामश्च क्रोधश्च कामक्रोधौ ताभ्यां वियुक्तानां यतीनां संन्यासिनां यतचेतसां संयतान्तःकरणानां अभित उभयतो जीवतां मृतानाञ्च ब्रह्मनिर्वाणं मोक्षो वर्त्तते विदितात्मनां विदितो ज्ञात आत्मा येषां ते विदितात्मानस्तेषां विदितात्मनां सम्यग्दर्शिनामित्यर्थः ॥ २५ ॥

व्या०टी० । पूर्वं कामक्रोधयोर्वेगः सोढ़व्यो दर्शितः सम्प्रति तावेव त्याज्यावित्याह किञ्चेति । ननु दर्शितविशेषवतां मृतानामेव मोक्षो न तु जीवतामिति चेत्तत्राह अभित इति । अस्मदादीनामपि तर्हि प्रभूतकामादिप्रभावविधुराणां किमिति मोक्षो न भवतीत्याशङ्क्य सम्यग्ज्ञानवैशेष्याभावादित्याह विदितेति । उक्तेऽर्थे श्लोकाक्षराणामन्वयमाचष्टे कामक्रोधेत्यादिना ॥ २५ ॥

स्वा० टी० । किञ्च कामेत्यादि । कामक्रोधाभ्यां वियुक्तानां यतीनां संन्यासिनां संयतचित्तानां ज्ञातात्मतत्त्वानामभित उभयतो जीवतां मृतानाञ्च न देहान्त एव तेषां ब्रह्मणि लयोऽपि तु जीवतामपि वर्त्तत इत्यर्थः ॥ २५ ॥

**स्पर्शान् कृत्वा वहिर्वाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।**
**प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥२६॥**

सम्यग्दर्शननिष्ठानां संन्यासिनां सद्योमुक्तिरुक्ता कर्मयोगस्य ईश्वरार्पितसर्वभावेनेश्वरे ब्रह्मण्याधाय क्रियमाणः सत्त्वशुद्धिज्ञानप्राप्तिसर्वकर्मसंन्यासक्रमेण मोक्षायेति भगवान् पदे पदेऽब्रवीद्वक्ष्यति च अथ इदानीं ध्यान-

योगं सम्यग्दर्शनस्यान्तरङ्गं विस्तरेण वक्ष्यामीति तस्य सूत्रस्थानीयान् श्लोकानुपदिशति स्म भगवान् वासुदेवः स्पर्शानिति। स्पर्शान् शब्दादीन् कृत्वा बहिर्बाह्यान् श्रोत्रादिद्वारेणान्तर्बुद्धौ प्रवेशिताः शब्दादयो विषयास्तानचिन्तयतः शब्दादयो बाह्या बहिरेव कृता भवन्ति तानेवं बहिः कृत्वा चक्षुश्चैवान्तरे भ्रुवोः कृत्वेत्यनुषज्यते तथा प्राणापानौ नासाभ्यन्तरचारिणौ समौ कृत्वा ॥ २६ ॥

आ॰ टी॰। इत्तमनूद्योत्तरश्लोकत्रयस्य तात्पर्य्यार्थमाह सम्यग्दर्शनेति। ईश्वरार्पितसर्वभावेनेति भगवति परस्मिन्नीश्वरे समर्पितः सर्वेषां देहेन्द्रियमनसां भावश्चेष्टाविशेषो न कश्चिदपि बहिरङ्गेषां व्यापारस्तेनेत्यर्थः। कर्मयोगस्य तत्फलस्य चाभिधानानन्तरमित्यथशब्दार्थः। अतो बाह्यानां विषयाणां कुतो बहिष्करणमित्याशङ्क्याह श्रोत्रादीति। तेषां बहिष्करणं कीदृगित्याशङ्क्याह तानिति ॥ २६ ॥

स्वा॰ टी॰। स योगी ब्रह्मनिर्वाणमित्यादिषु योगी मोक्षमवाप्नोतीत्युक्तं तमेव योगं सङ्क्षेपेणाह स्पर्शानिति द्वाभ्याम्। बाह्या एव स्पर्शा रूपरसादयो विषयाश्चिन्तिताः सन्तोऽन्तः प्रविशन्ति तांस्तच्चिन्तात्यागेन बहिरेव कृत्वा अत्यन्तं नेत्रयोर्निमीलने निद्रया मनो लीयते उन्मीलने च बहिः प्रसरति तदुभयदोषपरिहारार्थमर्द्धनिमीलने भ्रूमध्ये दृष्टिं निधायेत्यर्थः, उच्छ्वासनिश्वासरूपेण नासिकयोरभ्यन्तरे चरन्तौ प्राणापानावूर्द्ध्वाधोगतिरोधेन समौ कृत्वा कुम्भकं कृत्वेत्यर्थः। यद्वा प्राणोऽयं यथा न बहिर्निर्याति यथा चाऽपानोऽन्तर्न प्रविशति किन्तु नासामध्य एव द्वावपि यथा चरतस्तथा मन्दाभ्यामुच्छ्वासनिश्वासाभ्यां समौ कृत्वेति ॥ २६ ॥

**यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः।**
**विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः॥२८॥**

यतेन्द्रिय इति । यतेन्द्रियमनोबुद्धिर्यतानि संयतानि इन्द्रियाणि मनोबुद्धिश्च यस्य स यतेन्द्रियमनोबुद्धिर्म्मननात मुनिः संन्यासी मोक्षपरायणः एवं देहसंस्थानो मोक्षपरायणो मोक्ष एव परमयनं परा गतिर्यस्य सोऽयं मोक्षपरायणो मुनिर्भवेत्, विगतेच्छाभयक्रोध इच्छा च भयञ्च क्रोधश्च इच्छाभयक्रोधास्ते विगता यस्मात् स विगतेच्छाभयक्रोधः य एवं वर्त्तते सदा संन्यासी मुक्त एव सन् तस्य मोक्षेऽन्यः कर्त्तव्योऽस्ति ॥ २७ ॥

आ० टी० । विषयप्रावण्यं परित्यजन् चक्षुरपि भ्रुवोर्मध्ये विक्षेपपरिहारार्थं कृत्वा प्राणापानौ नासाभ्यन्तरचरणशीलौ समौ न्यूनाधिकरवर्जितौ कुम्भकेन निरुद्धौ कृत्वा करणानि सर्वाण्येवं संयम्य प्राणायामपरो भूत्वा किं कुर्य्यादित्यपेक्ष याह यतेन्द्रियेति । इन्द्रियादिसंयमं कृत्वा मोक्षमेवापेक्षमाणो मननशीलः स्यादित्यर्थः । ज्ञानातिशयनिष्ठस्य सर्वेच्छादिशून्यस्य संन्यासिनो मुक्तेरनायाससिद्धत्वान्न तस्य किञ्चिदपि कर्त्तव्यमस्तीत्याह विगतेति । पूर्वार्द्धाक्षराणि व्याकरोति यतेत्यादिना । द्वितीयार्द्धाक्षराणि व्याचष्टे विगतेत्यादिना ॥ २७ ॥

स्वा० टी० । यत इति । अनेनोपायेन यताः संयता इन्द्रियमनोबुद्धयो यस्य, मोक्ष एव परमयनं प्राप्यं यस्य, अतएव विगताइच्छाभयक्रोधा यस्य एवंभूतो यो मुनिः स सदा जीवन्नपि मुक्त एवेत्यर्थः ॥ २७ ॥

**भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।**
**सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति॥२८**

**इति श्रीमहाभारते शतसाहस्र्यां संहितायां**
**वैयासिक्यां भीष्मपर्वणि श्रीभगवद्गीता**

## सूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसम्वादे सन्न्यासयोगो नाम पञ्चमोऽध्यायः।

---

एवं समाहितचित्तेन किं विज्ञेयमिति चोद्यते भोक्तारमिति। भोक्तारं यज्ञानां तपसाञ्च कर्त्तृरूपेण देवतारूपेण च सर्वलोकमहेश्वरं सर्वेषां लोकानां महान्तं ईश्वरं सर्वलोकमहेश्वरं सुहृदं सर्वभूतानां सर्वप्राणिनां प्रत्युपकारनिरपेक्षतयोपकारिणं सर्वभूतानां हृदयेशयं सर्वकर्मफलाध्यक्षं सर्वप्रत्ययसाक्षिणं मां नारायणं ज्ञात्वा शान्तिं सर्वसंसारोपरतिमृच्छति प्राप्नोति ॥ २८ ॥

इति श्रीभगवद्गीताभाष्ये पञ्चमोऽध्यायः।

आ॰ टी॰। अधिकारिणो यथोक्तस्य कर्त्तव्याभावे ज्ञातव्यमपि नास्तीत्याशङ्क्य परिहरति एवमित्यादिना। प्रसिद्धं भोक्तारं व्यवच्छिनत्ति सर्वलोकेति। ततो ह्यस्य बन्धविपर्ययाविति न्यायेन सर्वफलदातृत्वं दर्शयति सुहृदमिति। उक्तेश्वरज्ञाने फलं कथयति ज्ञात्वेति। यज्ञेषु तपःसु च द्विधा भोक्तृत्वं व्यनक्ति कर्त्तृरूपेणेति। हिरण्यगर्भादिव्यवच्छेदार्थं विशिनष्टि महान्तमिति। स्वपरिकरोपकारिणां राज्ञां व्यावर्त्तयति प्रत्युपकारेति। ईश्वरस्य तादर्थ्यं व्युदस्यति सर्वभूतानामिति। तर्हि तत्र तत्र व्यवस्थितकर्मतत्फलसंसर्गित्वं स्यादित्याशङ्क्याह सर्वकर्मेति। न च तस्य बुद्धितद्वृत्तिसम्बन्धोऽपि वस्तुतोऽस्तीत्याह सर्वप्रत्ययेति। यथोक्तेश्वरपरिज्ञानफलमभिदधाति मां नारा-

यत्वमिति । तदेवं कर्मयोगस्यात्मस्वरूपसंन्यासापेक्षया प्रशस्तत्वेऽपि ततो मुख्यसत्यागस्याधिक्यात्तद्वतो बुद्धियुक्तत्यादियुक्तस्य कामक्रोधोद्भवं वेगमिहैव सोढुं शक्तस्य शमदमादिमतो योगाधिकृतस्य त्वं पदार्थाभिन्नस्य परमात्मानं प्रत्यक्त्वेन जानतो मुक्तिरिति सिद्धम् ॥ २८ ॥

इति पञ्चमोऽध्यायः ।

स्वा॰ टी॰ । नन्वेवमिन्द्रियादिसंयममात्रेण कथं मुक्तिः स्यात् तावन्मात्रेण किन्तु ज्ञानद्वारेणेत्याह भोक्तारमिति । यज्ञानां तपसाञ्चैव मम भक्तैः समर्पितानां यदृच्छया भोक्तारं पालकमिति या सर्वेषां लोकानां महान्तमीश्वरं सर्वभूतानां सुहृदं निरपेक्ष्योपकारिणमन्तर्यामिनं मां ज्ञात्वा मत्प्रसादेन शान्तिं मोक्षमृच्छति प्राप्नोति । विकल्पशङ्कापोहेन येनैवं योगसांख्ययोः । समुच्चयः क्रमेणोक्तः सर्वज्ञं नौमि तं गुरुम् ॥ २८ ॥

इति पञ्चमोऽध्यायः ।

---

# षष्ठोऽध्यायः ।

---

## श्रीभगवानुवाच ।

**अनाश्रितः कर्मफलं कार्य्यं कर्म करोति यः ।**
**स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥ १**

अतीतानन्तराध्यायान्ते ध्यानयोगस्य सम्यग्दर्शनं प्रत्यन्तरङ्गस्य सूत्रभूताः श्लोकाः सर्वान् कृत्वा वहिरित्या-

दय उपदिष्टास्तेषां वृत्तिस्थानीयोऽयं षष्ठोऽध्यायः आरभ्यते, अत्र ध्यानयोगस्य वहिरङ्गं कर्मेति यावद्ध्यानयोगारोहणासमर्थस्तावद्गृहस्थेनाधिकृतेन कर्त्तव्यं कर्मेति अतस्तत् स्तौति अनाश्रित इति। ननु किमर्थं ध्यानयोगारोहणसीमाकरणं यावतानुष्ठेयमेव विहितं कर्म यावज्जीवं नारुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यत इति विशेषणादारूढस्य च शमेनैव सम्बन्धकरणादारुरुक्षोरारूढस्य च शमः कर्म चोभयं कर्त्तव्यत्वेनाभिप्रेतञ्चेत् स्यात्त-

व्या॰ टी। ध्यानयोगप्रस्तावानन्तरं तद्‌योग्यताहेतुकर्मणः स्तुतिं भगवानुक्तवानित्याह श्रीभगवानिति। पूर्वोत्तराध्याययोः सङ्गतिमभिदधानो वृत्तमनूद्याध्यायान्तरमवतारयति अतीतेति। सम्यग्दर्शनप्रकरणे ध्यानयोगस्य प्रसङ्गाभावं व्युदस्यति सम्यगिति। संग्रहविवरणयोरतीतानन्तराध्याययोर्युक्तं हेतुहेतुमत्त्वमिति भावः। अध्यायसम्बन्धमभिधायानाश्रितः कर्मफलमित्यादिश्लोकद्वयस्य तात्पर्यमाह तत्रेति। कर्मयोगस्य संन्यासहेतोर्मर्यादां दर्शयितुं साङ्गञ्च योगं विचारयितुमध्याये प्रवृत्ते सतीति सप्तम्यर्थः। संन्यासिना कर्त्तव्यं कर्मैवेति प्रतिभासं व्युदस्यति गृहस्थेनेति। कर्त्तव्यत्वं स्तुतियोग्यत्वमतःशब्दार्थः सत्तद्वयवादी। सीमाकरणमाक्षिपति नन्विति। यावज्जीवश्रुतिवशात् ध्यानारोहणसामर्थ्ये सत्यपि कर्मानुष्ठानस्य दुर्वारत्वादिति हेतुमाह यावतेति। भार्यावियोगादिप्रतिबन्धाद्‌यावज्जीवश्रुतिचोदितकर्मानुष्ठानवत् वैराग्यप्रतिबन्धादपि तदनुष्ठानसम्भवाद्भगवतो विशेषवचनाच्च न यावज्जीवं कर्मानुष्ठानप्रसक्तिरिति परिहरति नारुरुक्षोरिति। उक्तमेवार्थं व्यतिरेकद्वारेण विवृणोति आरुरुक्षोरित्यादिना। आरोढुमिच्छतीत्यारुरुक्षुरित्यत्रारोहणेच्छाविशेषणमारोहणं कृतवानित्यत्र पुनरिच्छाविषयभूतमारोहणं विशेषणमेव शमकर्मविषयवोर्भेदेन विशेषणं मर्यादाकरणानङ्गीकारे विरुद्धमापद्येत, तयोरेव विभागकरणस्य भाग-

दारुरुक्षोरारूढस्येति शमकर्मविषयभेदेन विशेषणं विभाग-
करणञ्चानर्थकं स्यात्, तत्राश्रमिणां कश्चित् योगमारुरु-
क्षुर्भवत्यारूढश्च कश्चिदन्ये नारुरुक्षवो न चारूढास्तान-
पेक्ष्यारुरुक्षोरारूढस्य चेति विशेषणं विभागकरणञ्चो-
पपद्यत एवेति चेन्न तस्यैवेति वचनात् पुनर्योगग्रहणाच्च
योगारूढस्येति य आसीत् पूर्वं योगमारुरुक्षुस्तस्यैवारू-
ढस्य शम एव कर्त्तव्यं कारणं योगफलं प्रत्युच्यत इत्यतो
न यावज्जीवं कर्त्तव्यत्वप्राप्तिः कस्यचिदपि कर्मणः,
योगविभ्रष्टवचनाच्च गृहस्थस्य चेत् कर्मणो योगो विहितः
षष्ठेऽध्याये स योगविभ्रष्टोऽपि कर्मगतिं कर्मफलं प्राप्नो-

---

यतस्सीमानङ्गीकारेण युज्यतेत्यर्थः । विशेषणविभागकरणयोरन्यथोप-
पत्तिमाशङ्कते तत्रेति । व्यवहारभूमिः सप्तम्यर्थः, षष्ठी निर्द्धारणे ।
भवत्वधिकारिणां त्रैविध्यं तथापि प्रकृते विशेषणादौ किमायातमित्या-
शङ्क्य तृतीयापेक्षया तदुपपत्तिरित्याह तानपेक्ष्येति । आरुरुक्षो-
रारूढस्य च भेदे तस्यैवेति प्रकृतपरामर्शानुपपत्तिरिति दूषयति न तस्येति ।
यद्यनारुरुक्षुं पुरुषमपेक्ष्यारुरुक्षोरिति विशेषणं तस्य च कर्मारोहण-
कारणमनारूढञ्च पुरुषमपेक्ष्यारूढस्येति विशेषणं तस्य च शमः संन्यासो
योगफलप्राप्तौ कारणमिति विशेषणविभागकरणयोरुपपत्तिस्तदारुरुक्षो-
रारूढस्य च भिन्नत्वात् प्रकृतपरामर्शिनः तच्छब्दस्यानुपपत्तेर्न युक्तमिदं
विशेषणाद्युपपादनमित्यर्थः । किञ्च योगमारुरुक्षोस्तदारोहणे कारणं
कर्मेत्युक्त्वा पुनर्योगारूढस्येति योगशब्दप्रयोगात् यो योगं पूर्वमारुरुक्षु-
रासीत्तस्यैवापेक्षितं योगमारूढस्य तत्फलप्राप्तौ कर्मसंन्यासः शमशब्द-
वाच्यो हेतुत्वेन कर्त्तव्य इति वचनादारुरुक्षोरारूढस्य चाभिन्नत्वप्रत्य-
भिज्ञानाच्च तयोर्भिन्नत्वं शङ्कितुं शक्यमित्याह पुनरिति । यत्तु याव-
ज्जीवश्रुतिविरोधात् योगारोहणसीमाकरणं कर्मणोऽनुचितमिति तत्राह

तीति तस्य नाशाशङ्कानुपपन्ना स्यादवश्यं हि कृतं कर्म काम्यं नित्यं वा मोक्षस्य नित्यत्वादनारभ्यत्वेऽपि स्वं फलमारभत एव नित्यस्य च कर्म्मणो वेदप्रमाणावबुद्धत्वात् फलेन भवितव्यमित्यवोचामान्यथा वेदस्यानर्थक्यप्रसङ्गादिति न च कर्म्मणि सत्युभयविभ्रष्टवचनमर्थवत् कर्म्मिणो विभ्रंशकारणानुपपत्तेः कर्म्मकृतमीश्वरे संन्यस्येत्यतः कर्त्तारि कर्म्मफलं नारभत इति चेन्नेश्वरे संन्यासस्याधिकतरफलहेतुत्वोपपत्तेर्मोक्षायैवेति चेत्

---

उच्यत इति । पूर्वोक्तरीत्या कर्मतत्त्यागयोर्विभागोपपत्तौ श्रुतेरन्यविषयत्वात् योगमारूढस्य मुमुक्षोर्जिज्ञासमानस्य नित्यनैमित्तिककर्मस्वपि परित्यागसिद्धिरित्यर्थः । इतश्च यावज्जीवं कर्म कर्त्तव्यं न भवतीत्याह योगेति । सन्न्यासिनो योगभ्रष्टस्य विनाशाशङ्कावचनाच्च यावज्जीवं कर्म कर्त्तव्यं प्रतिभातीत्यर्थः । ननु योगभ्रष्टशब्देन गृहस्थस्यैवाभिधानात्तस्यैवास्मिन्नध्याये योगविधानाद्योगारोहणयोग्यत्वे सत्यपि यावज्जीवं कर्म कर्त्तव्यमिति नेत्याह गृहस्थस्येति । तेनापि मुमुक्षुणा कृतस्य कर्मणो मोक्षातिरिक्तफलानारम्भकत्वाद्योगभ्रष्टोऽसौ छिन्नाभ्रमिव नश्यतीति शङ्का सावकाशेत्याशङ्क्याह अवश्यं हीति । अपौरुषेयात्त्विदोषाद्वेदात् फलदायिनी कर्मणः स्वाभाविकी शक्तिरवरा अनुभावस्य च स्वतःसिद्धत्वाच्च कर्मफलवत्त्वमतो मोक्षातिरिक्तस्यैव फलस्य कर्मारम्भकमिति कर्मिणि योगभ्रष्टेऽपि कर्मगतिं गच्छतीति निरवकाशाशङ्केत्यर्थः । ननु मुमुक्षुणा काम्यप्रतिषिद्धयोरकरणात् कृतयोश्च नित्यनैमित्तिकयोरफलत्वात् कथं तदीयस्य कर्मणो नियमेन फलारम्भकत्वं तत्राह नित्यस्य चेति । चकारेण नैमित्तिकं कर्मानुकृष्यते । वेदप्रमाणकत्वेऽपि नित्यनैमित्तिकयोरफलत्वे दोषमाह अन्यथेति । कर्मणोऽनुष्ठितस्य फलारम्भकत्वध्रौव्यात् गृहस्थो योगभ्रष्टोऽपि कर्मगतिं गच्छतीति न तस्य

स्वकर्म्मणां कृतानामीश्वरे न्यासो मोक्षायैव न फलान्तराय योगसहितः योगाच्च विभ्रष्ट इत्यतस्तं प्रति नाशाशङ्का युक्तैवेति चेन्नैकाकी यतचित्तात्मा निराशीरपरिग्रहो ब्रह्मचारिव्रते स्थित इति कर्मसंन्यासविधानात्, न चात्र ध्यानकाले स्त्रीसहायत्वाशङ्का येनैकाकित्वं विधीयते न च गृहस्थस्य निराशीरपरिग्रह इत्यादिवचनमनुकूलं उभयभ्रष्टप्रश्नानुपपत्तेश्च अनाश्रित इत्यनेन कर्मिण एव संन्यासित्वं योगित्वञ्चोक्तं प्रतिषिद्धञ्च निरग्नेरक्रियस्य च संन्यासित्वं योगित्वञ्चेति चेन्न ध्यानयोगं प्रति बहिरङ्गस्य सतः कर्मणः फलाकाङ्क्षा संन्यासस्तुतिपरत्वात् केवलं निरग्निरक्रिय एव संन्यासी योगी

---

नाशाशङ्केति शेषः । इतोऽपि गृहस्थो योगभ्रष्टशब्दवाच्यो न भवतीत्याह न चेति । ध्यानं कर्म चेत्युभयं ततो भ्रष्टोऽयं नश्यतीति वचनं गृहस्थे कर्मिणि सति नार्थवद्भवितुमर्हं तस्य कर्मनिष्ठस्य कर्मणो विभ्रंशे हेत्वभावात् तत्फलस्यावश्यकत्वादित्यर्थः । कृतस्य कर्मणो मुमुक्षुणा भगवति समर्पणात् कर्त्तरि फलानारम्भकत्वादस्ति विभ्रंशकारणमिति शङ्कते कर्मेति । राजाराधनबुद्ध्या धनधान्यादिसमर्पणस्याधिकफलहेतुत्वोपलम्भादीश्वरे समर्पणं न भ्रंशकारणमिति दूषयति नेत्यादिना । अधिकफलहेतुत्वेऽपि मोक्षहेतुत्वमिष्यतामिति शङ्कते मोक्षायेति । तदेव चोद्यं विवृणोति स्वकर्म्मणामिति । सहकारिसामर्थ्यात्तस्य फलान्तरं प्रत्युपायत्वासिद्धिरिति हेतुं सूचयति योगेति । ध्यानसहितस्य समर्पणस्य मोक्षौपयिकत्वे कुतो योगभ्रष्टमधिकृत्य नाशाशङ्केत्याशङ्क्याह योगाच्चेति । सहकार्य्यभावे सामग्र्यभावात् फलानुपपत्तेर्युक्ता नाशाशङ्केत्यर्थः । ध्यानसहितमीश्वरे कर्मसमर्पणं मोक्षायेत्यत्र प्रमाणाभावात् गृहस्थो योगभ्रष्टशब्दवाच्यो न भवतीति दूषयति नेति । गृहस्थस्य

च किं तर्हि अग्न्यपि कर्मफलासङ्गं संन्यस्य कर्मयोगमनुतिष्ठन् सत्त्वशुद्ध्यर्थं संन्यासी योगी च भवतीति स्तूयते न चैकेन वाक्येन कर्मफलासङ्गसंन्यासस्तुतिश्चतुर्थाश्रमप्रतिषेधश्चोपपद्यते, न च प्रसिद्धं निरग्नेरक्रियस्य परमार्थसंन्यासिनः श्रुतिस्मृतिपुराणेतिहासयोगशास्त्रेषु विहितं संन्यासित्वं योगित्वञ्च प्रतिषेधति भगवान् स्ववचनविरोधाच्च, सर्वकर्माणि मनसा संन्यस्य नैव कुर्वन्न कारयन्नास्ते मौनी सन्तुष्टो येन केनचिदनिकेतः स्थिरमतिर्विहाय कामान् यः सर्वान् पुमांश्चरति निस्पृहः सर्वारम्भपरित्यागीति च तत्र तत्र भगवता स्ववचनानि दर्शितानि तैर्विरुध्येत चतुर्थाश्रमविप्रतिषेधस्तस्मात् मुनेर्योगमारुरुक्षोः प्रतिपन्नगार्हस्थ्यस्याग्निहोत्रादि-

---

योगभ्रष्टशब्दवाच्यत्वाभावे हेत्वन्तरमाह एकाकीति न खल्वेतानि विशेषणानि गृहस्थसमवायिनि सम्भवन्ति तेन तस्य ध्यानयोगविध्यभावात् न तं प्रति योगभ्रष्टशब्दवचनमुचितमित्यर्थः। एकाकित्ववचनं गृहस्थस्यापि ध्यानकाले स्त्रीसहायत्वाभावाभिप्रायेण भविष्यतीत्याशङ्क्य अग्निहोत्रादिवद्ध्यानस्य पत्नीसाधनत्वाभावादप्राप्तप्रतिषेधप्रसङ्गान्नैवमित्याह न चाग्नेति। विशेषणान्तरपर्य्यालोचनयापि नायमेकाकिशब्दो गृहस्थपरो भवितुमर्हतीत्याह न चेति। किञ्च गृहस्थस्यैवैकाकित्वादि विवक्षित्वा ध्यानयोगविधौ तं प्रत्युभयभ्रष्टप्रश्नो नोपपद्यत इत्याह उभयेति। न हि गृहस्थं प्रति उभयथानुष्ठानात् कर्मणश्च विभ्रष्टत्वमुपेत्य प्रष्टुं युज्यते तस्य ध्यानाद्भ्रंशेऽपि कर्मणस्तदभावादनुष्ठीयमानकर्मभ्रंशेऽपि प्रागनुष्ठितकर्मवशात् फलप्रतिलम्भादतो यथोक्तप्रश्नालोचनया न गृहस्थं प्रति ध्यानविधानोपपत्तिरित्यर्थः। ननु भगवता चतुर्थाश्रमस्य प्रतिषिद्धत्वाद्गृहस्थस्यैव योगविधानात्तस्यैव योगभ्रष्टशब्दवाच्यत्वमिति शङ्कते अनाश्रित इत्यनेनेति भगवद्वाक्यं न प्रतिषेधपरमिति परिहरति न

कर्मफलनिरपेक्षमनुष्ठीयमानं ध्यानयोगारोहणसाधनत्वं बुद्धिशुद्धिद्वारेण प्रतिपद्यत इति स संन्यासी च योगी चेति स्तूयते अनाश्रित इति। अनाश्रितो न आश्रितोऽनाश्रितः किं कर्मफलं कर्मणः फलं कर्मफलं यत्तदनाश्रितः कर्मफलतृष्णारहित इत्यर्थः यो हि कर्मफले तृष्णावान् स कर्मफलमाश्रितो भवति, अयन्तु तद्विपरीतोऽतो नाश्रितः कर्मफलं एवम्भूतः सन् कार्य्यं कर्त्तव्यं नित्यं काम्यविपरीतमग्निहोत्रादिकं करोति निर्वर्त्तयति यः कश्चित्, य ईदृशः कर्म्मी स कर्म्यन्तरेभ्यो विशिष्यत इत्येवमर्थमाह स संन्यासी च योगी चेति, संन्यासः परित्यागः स यस्यास्ति स संन्यासी च योगी च योगश्चित्तसमाधानं स यस्यास्ति स योगी चेत्येवं गुणसम्पन्नोऽयं मन्तव्यो न

---

ध्यानेति । स्तुतिपरत्वमेव स्फोरयति न केवलमिति । सत्त्वशुद्ध्यर्थमनुतिष्ठतीति सम्बन्धः । वाक्यस्योभयपरत्वमाशङ्क्य वाक्यभेदप्रसङ्गान्मैवमित्याह न चेति । इतोऽपि भगवतः सन्न्यासाश्रमप्रतिषेधोऽभिप्रेतो न भवतीत्याह न च प्रसिद्धमिति । तस्य प्रसिद्धं सन्न्यासित्वं योगित्वञ्चेति सम्बन्धः । प्रसिद्धत्वमेव व्याकरोति श्रुतीति । इतोऽपि सन्न्यासाश्रमं भगवान्न प्रतिषेधतीत्याह स्ववचनेति । विरोधमेव साधयति सर्वकर्म्माणीत्यादिना । अनाश्रित इत्यादिवाक्यस्य यथाश्रुतार्थत्वानुपपत्तेः स्तुतिपरत्वमुपपादितमुपसंहरति तस्मादिति । कर्मफलसन्न्यासित्वमत्र सन्निशब्दार्थः । स्तुतिपरं वाक्यमक्षरयोजनार्थमुदाहरति अनाश्रित इति । कर्मफलेऽभिलाषी नास्तीत्येतावता कथं तदनाश्रितत्ववाचोयुक्तिरित्याशङ्क्य व्यतिरेकमुखेन विशदयति यो हीति । कार्य्यमित्यादि व्याकरोति एवंभूतः सन्निति । कथं कर्म्मिणः

केवलं निरग्निरक्रिय एव संन्यासी योगी चेति मन्तव्यः निर्गता अग्नयः कर्माङ्गभूता यस्मात् स निरग्निरक्रियश्च अनग्निसाधना अप्यविद्यमानाः क्रियास्तपोदानादिका यस्यासावक्रियः, ननु च निरग्नेरक्रियस्यैव श्रुतिस्मृतियोगशास्त्रेषु संन्यासित्वं योगित्वञ्च प्रसिद्धं कथमिह साग्नेः सक्रियस्य संन्यासित्वं योगित्वञ्चाप्रसिद्धमुच्यते इति, नैष दोषः, कयाचिद्गुणवृत्त्योभयस्य सम्पिपादयिषितत्वात् तत् कथं कर्मफलसंकल्पसंन्यासात् संन्यासित्वं योगाङ्गत्वेन च कर्मानुष्ठानात् कर्मफलसंकल्पस्य वा चित्तविक्षेपहेतोः परित्यागद्योगित्वञ्चेति ॥ १ ॥

सन्न्यासित्वं योगित्वञ्च कर्म्मित्वविरोधादित्याशङ्क्याह य इत्थ इति। श्रुतेरन्न विवक्षितत्वान्नानुपपत्तिश्चोदनीयेति मन्वानः सन्नाह इत्येवमिति। न निरग्निरित्यादेरर्थमाह न केवलमिति। अग्नयो गार्हपत्याहवनीयान्वाहार्य्यपचनप्रभृतयः। नन्वनग्नित्वे सिद्धमक्रियत्वमग्निसाध्यत्वात्क्रियाणां तथा च न निरग्निरित्येतावतैवापेक्षितसिद्धेर्न चाक्रिय इत्यनर्थकमर्थपुनरुक्तेरिति तत्राह अनग्नीति। उत्तरश्लोकस्य तात्पर्य्यं दर्शयितुं व्यावर्त्त्यामाशङ्कां दर्शयति ननु चेति। प्रसिद्धं परित्यजन्नप्रसिद्धमुपादीयमाना प्रसिद्धिविरुद्धेति चोद्यं दूषयति नैष दोष इति। उभयस्य साग्नौ सक्रिये च संन्यासित्वस्य योगित्वस्य चेत्यर्थः। गुणवृत्त्योभयसम्पादनं प्रश्नपूर्वकं प्रकटयति तत् कथमित्यादिना ॥ १ ॥

सा॰ टी॰। चित्ते शुद्धेऽपि न ध्यानं विना सन्न्यासमात्रतः। मुक्तिः स्यादिति षष्ठेऽस्मिन् ध्यानयोगो वितन्यते। पूर्व्वाध्यायान्ते संक्षेपेणोक्तं योगं प्रपञ्चयितुं षष्ठाध्यायारम्भस्तत्र तावत् सर्व्वकर्माणि मनसा सन्न्यस्येत्यारभ्य सन्न्यासपूर्व्विकाया ज्ञाननिष्ठायास्तात्पर्य्येणाभि-

ध्यानादृदुःखरूपत्वाच्च कर्मणः सहसा सन्न्यासातिप्रसङ्गं प्राप्तं वारयितुं सन्न्यासादपि श्रेष्ठत्वेन कर्मयोगं स्तौति अनाश्रित इति द्वाभ्याम्। कर्मफलमनाश्रितोऽनपेक्षमाणः सन्नवश्यं कार्य्यतया विहितं कर्म यः करोति स एव सन्न्यासी योगी च, न तु निरग्निरग्निसाध्येष्टयादिकर्मत्यागी न चाक्रियोऽग्निसाध्ये पूर्त्ताख्यकर्मत्यागी च ॥ १ ॥

**यं सन्न्यासमिति प्राहुर्योगं तं विद्धि पाण्डव।**
**न ह्यसंन्यस्तसङ्कल्पो योगी भवति कश्चन ॥ २ ॥**

गौणमुभयं न पुनर्मुख्यसंन्यासित्वं योगित्वञ्चाभिमतमित्येतमर्थं दर्शयितुमाह यं संन्यासमिति। यं सर्वकर्मतत्फलपरित्यागलक्षणं परमार्थसंन्यासं संन्यासमिति प्राहुः श्रुतिस्मृतिविदो योगं कर्मानुष्ठानलक्षणं तं परमार्थसंन्यासं विद्धि जानीहि हे पाण्डव। कर्मयोगस्य प्रवृत्तिलक्षणस्य तद्विपरीतेन निवृत्तिलक्षणेन परमार्थसंन्यासेन कीदृशं सामान्यमङ्गीकृत्य तद्भाव उच्यत इत्यपेक्षायामिदमुच्यते अस्ति परमार्थसंन्यासेन सादृश्यं कर्त्तृद्वारकं कर्मयोगस्य यो हि परमार्थसन्न्यासी स त्यक्तसर्वकर्मसाधनतया सर्वकर्मतत्फलविषयं सङ्कल्पं प्रवृत्तिहेतुकामकारणं सन्न्यस्यति, अयमपि कर्मयोगी कर्म कुर्वाण एव फलविषयं सङ्कल्पं सन्न्यस्यतीत्येतमर्थं दर्शयन्नाह न हि यस्मादसन्न्यस्तसङ्कल्पोऽसन्न्यस्तोऽपरित्यक्तः फलविषयसङ्कल्पोऽभिसन्धिर्येन सोऽसन्न्यस्तसङ्कल्पः कश्चन कश्चिदपि कर्मी योगी समाधानवान् भवति न सम्भवतीत्यर्थः फलसङ्कल्पस्य चित्तविक्षेपहेतुत्वात्तस्माद्यः कश्चन योगी कर्मसन्न्यस्तफलसङ्कल्पो

भवेत् स योगी समाधानवान् भवति न विक्षिप्तचित्तो भवति चित्तविक्षेपहेतोः फलसङ्कल्पस्य सन्न्यस्तत्वात् इत्यभिप्रायः योगाङ्गत्वेन कर्मानुष्ठानात् कर्मफलसङ्कल्पस्य वा चित्तविक्षेपहेतोः परित्यागाद्योगित्वञ्चेति सन्न्यासित्वञ्चेत्यभिप्रेतमुच्यते, एवं परमार्थसन्न्यासकर्मयोगयोः कर्तृद्वारकं सन्न्याससामान्यमपेक्ष्य यं सन्न्यासमिति प्राहुर्योगं तं विद्धि पाण्डवेति कर्मयोगस्य स्तुत्यर्थं सन्न्यासत्वमुक्तम्॥ २॥

व्या० टी०। सम्प्रति मुख्ये संन्यासित्वादौ किमिति गौणमुभयमभीष्टमित्याशङ्क्य मुख्यस्य कर्मगतस्याभावाद्गौणमेव स्तुतिसिद्ध्यर्थं तदिष्टमित्यभिप्रेत्याह न पुनरिति। चित्तव्याकुलत्वहेतुकामनात्यागाच्चित्तसमाधानसिद्धेर्योगित्वं कर्मिणोऽपि युक्तं सन्न्यासित्वं तु तस्य विरुद्धमिति शङ्कमानं प्रत्युक्तेऽर्थे श्लोकमवतारयति इत्येतमिति। परमार्थसंन्यासं प्राहुरिति सम्बन्धः, इतोत्थं सन्न्यासस्य प्रामाणिकाभ्युपगतत्वादितीति शब्दो येऽजेया योगं फलतृष्णा परित्यज्य समाहितचेतस्तयेति शेषः। यदुक्तं सन्न्यासित्वं योगित्वञ्च कर्मिणस्य गौणमिति तदुत्तरार्द्धयोजनया प्रकटयितुमुत्तरार्द्धं व्याख्यापयति कर्मयोगस्येति। कर्मयोगस्य परमार्थसंन्यासेन कर्तृद्वारकं साम्ययुक्तं व्यक्तं करोति यो हीति। त्यक्तानि सर्वाणि कर्माणि साधनानि च येन स तथोक्तस्तस्य भावस्तत्ता तया सर्वकर्मविषयं तत्फलविषयञ्च संकल्पं त्यजतीत्यर्थः। संकल्पत्यागे तत्कार्यकामत्यागः तत्त्यागे तज्जन्यप्रवृत्तित्यागश्च सिध्यतीत्यभिसन्धाय विशिनष्टि प्रवृत्तीति। कर्मिण्यपि यथोक्तसंकल्पसंन्यासित्वमस्तीत्याह व्ययमपीति। तदपरित्यागे व्याकुलचेतस्तया कर्मानुष्ठानस्यैव दुःशकत्वादित्यर्थः। उक्तमेव साम्यं व्यक्तीकर्तुं व्यतिरेकं दर्शयति इत्येतमिति। फलसङ्कल्पापरित्यागे किमिति समाधानवत्त्वाभावस्तत्राह फलेति। व्यतिरेकमुखेनोक्तमर्थमन्वयमुखेनोपसंहरति तस्मा-

दिति । हिशब्दार्थस्य यस्मादित्युक्तस्य तस्मादित्यनेन सम्बन्धः । कर्मिणं प्रति यथोक्तविधौ हेतुत्वेनमनुष्ठानं प्रेत्य द्वितीयवचौ हेतुमाह चित्तविक्षेपेति । पूर्वश्लोके पूर्वोत्तरार्द्धाभ्यामुक्तमनुवदति एवमिति ॥ २ ॥

स्वा० टी० । कुत इत्यपेक्षायां कर्मयोगस्यैव सन्न्यासत्वं प्रतिपादयन्नाह यमिति । यं सन्न्यासं प्राहुः प्रकर्षेण श्रेष्ठत्वेनाहुः सन्न्यास एवात्यरेचयदित्यादिश्रुतय इति केवलात् फलसन्न्यासाद्धेतो योगमेव तं जानीहि, कुत इत्यपेक्षायामितिशब्दोक्तो हेतुर्योगेऽप्युक्तोऽत्याह न हीति, न सन्न्यस्तः फलसङ्कल्पो येन स कर्मनिष्ठो ज्ञाननिष्ठो वा कश्चिदपि योगी न हि भवति अतः फलसङ्कल्पत्यागादेव चित्तविक्षेपाभावात् योगी च भवत्येव स इत्यर्थः ॥ २ ॥

**आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।**
**योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ ३ ॥**

ध्यानयोगस्य फलनिरपेक्षः कर्मयोगो बहिरङ्गसाधनमिति तं सन्न्यासत्वेन स्तुत्वाधुना कर्मयोगस्य ध्यानयोगसाधनत्वं दर्शयति आरुरुक्षोरिति । आरुरुक्षोरारोढुमिच्छतः अनारूढस्य ध्यानयोगेऽवस्थातुमशक्तस्यैवेत्यर्थः कस्य तस्यारुरुक्षोर्मुनेः कर्मफलसन्न्यासिन इत्यर्थः किमारुरुक्षोर्योगं कर्मकारणं साधनमुच्यते, योगारूढस्य पुनस्तस्यैव शम उपशमः सर्वकर्मभ्यो निवृत्तिः कारणं योगारूढत्वस्य साधनमुच्यत इत्यर्थः यावद्यावत् कर्मभ्य उपरमते तावत्तावन्निरायासस्य जितेन्द्रियस्य चित्तं समाधीयते तथा सति स झटिति योगारूढो भवति, तथा चोक्तं व्यासेन, नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यता च । शीलं स्थितिर्दण्डनिधानमार्जवं ततस्ततश्चोपरमः क्रियाभ्य इति ॥ ३ ॥

आ० टी०। परमार्थसन्न्यासस्य कर्मयोगान्तर्भावे कर्मयोगस्यैव सदा कर्त्तव्यत्वमापद्येत तेनेतरस्यापि कृतत्वसिद्धेरित्याशङ्क्योक्तानुवादपूर्वकमुत्तरश्लोकतात्पर्य्यमाह ध्यानयोगस्येति। भाविन्या वृत्त्या मुनेर्योगमारोढुमिच्छोरिष्यमाणस्य योगारोहणस्य कर्म हेतुश्चेदपेक्षितं योगमारूढस्यापि तत्फलप्राप्तौ तदेव कारणं भविष्यति तस्य कारणत्वे क्लृप्तशक्तित्वादित्याशङ्क्याह योगारूढस्येति। अनारूढस्येत्येतस्यैवार्थं स्फुटयति ध्यानेति। मुनित्वं कर्मफलसन्न्यासित्वौपचारिकमित्याह कर्मफलेति। साधनं चित्तशुद्धिद्वारा ध्यानयोगप्राप्तीच्छायामिति शेषः, तस्येति प्रकृतस्य कर्मिणो ग्रहणं, एवकारोऽभिन्नक्रमः शमशब्देन सम्बध्यते। कस्मात्ययोगव्यवच्छेदेन शमो हेतुरिति तत्राह योगारूढत्वस्येति। सर्वव्यापारो परमरूपोपशमस्य योगारूढत्वे कारणत्वं विवृणोति यावद्यावदिति। सर्वकर्मनिवृत्तावायासाभावाद्वशीकृतस्येन्द्रियग्रामस्य चित्तसमाधाने योगारूढत्वं सिध्यतीत्यर्थः। सर्वकर्म्मोपरमस्य पुरुषार्थसाधनत्वे पौराणिकीं सम्मतिमाह तथा चेति। एकता सर्वेषु भूतेषु वस्तुनो द्वैताभावोपलक्षितत्वमिति प्रतिपत्तिः शमता तेष्वेवौपाधिकविशेषेऽपि स्वतो निर्विशेषत्वधीः सत्यता तेषामेव हितवचनं शीलं स्वभावसम्पत्तिः स्थितिः स्थैर्य्यं दण्डनिधानमहिंसनं आर्जवमवक्रत्वं क्रियाभ्यः सर्व्वाभ्यः सकाशादुपरतिस्त्वेतदुक्तं सर्वं यथा यादृशमेतादृशं नान्यद्ब्राह्मणस्य वित्तं पुमर्थसाधनमस्ति तस्मादेतदेवास्य निरतिशयं पुरुषार्थसाधनमित्यर्थः॥ ३॥

स्वा० टी०। तर्हि यावज्जीवं कर्मयोग एव प्राप्त इत्याशङ्क्य तस्यावधिमाह आरुरुक्षोरिति। ज्ञानयोगमारोढुं प्राप्तुमिच्छोः पुंसस्तदारोहे कारणं कर्मोच्यते चित्तशुद्धिकरत्वात् ज्ञानयोगमारूढस्य तु तस्यैव ज्ञाननिष्ठस्य शमो विक्षेपककर्म्मोपरमो ज्ञानपरिपाके कारणमुच्यते॥ ३॥

**यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते।**
**सर्वसङ्कल्पसंन्यासी योगारूढस्तदोच्यते॥ ४॥**

अथेदानीं कदा योगारूढो भवतीत्युच्यते यदेति। यदा समाधीयमानचित्तो भवति योगी हीन्द्रियार्थेषु इन्द्रियाणामर्थाः शब्दादयस्तेष्विन्द्रियार्थेषु कर्मसु च नित्यनैमित्तिककाम्यप्रतिषिद्धेषु प्रयोजनाभावबुद्ध्या नानुषज्जते अनुषङ्गं कर्तव्यताबुद्धिं न करोतीत्यर्थः सर्वसङ्कल्पसंन्यासी सर्वान् सङ्कल्पानिहामुत्रार्थकामहेतून् सन्न्यसितुं शीलं अस्येति स सर्वसङ्कल्पसन्न्यासी योगारूढः प्राप्तयोग इत्येतत्तदा तस्मिन् काले योगारूढ उच्यते सर्वसङ्कल्पसन्न्यासीति वचनात् सर्वांश्च कामान् कामात्मकान् सर्वाणि च कर्माणि सन्न्यसेदित्यर्थः सङ्कल्पमूला हि सर्वे कामाः सङ्कल्पमूलः कामो वै यज्ञाः सङ्कल्पसम्भवाः काम जानामि ते मूलं सङ्कल्पात्त्वं हि जायसे। न त्वां सङ्कल्पयिष्यामि तेन मे न भविष्यसि, इत्यादिस्मृतेः सर्वकामपरित्यागे च सर्वकर्मसन्न्यासः सिद्धो भवति स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत् कर्म्म कुरुते इत्यादिश्रुतिभ्यो यद्यद्धि कुरुते कर्म्म तत्तत् कामस्य चेष्टितमित्यादिस्मृतिभ्यश्च न्यायाच्च न हि सर्वसङ्कल्पसन्न्यासे कश्चित् स्पन्दितुमपि शक्तस्तस्मात् सर्वसङ्कल्पसन्न्यासीति वचनात् सर्वान् कामान् सर्वाणि कर्माणि च त्याजयति भगवान् ॥ ४ ॥

व्या० टी०। योगप्राप्तौ कारणकथनानन्तरं तत्प्राप्तिकालं दर्शयितुं श्लोकान्तरमवतारयति अथेति। समाधानावस्था यदेत्युच्यते, अतएवोक्तं समाधीयमानचित्तो योगीति शब्दादिषु कर्मसु चानुषङ्गस्य योगारोहणप्रतिबन्धकत्वात्तदभावस्य तदुपायत्वं प्रसिद्धमिति द्योतयितुं

ष्टीत्युक्तम्। सर्वेषामपि सङ्कल्पानां योगारोहणप्रतिबन्धकत्वमभिप्रेत्य सर्वसङ्कल्पसन्न्यासीत्यत्र विवक्षितमर्थमाह सर्व्वानिति। सर्वसङ्कल्पसन्न्यासेऽपि सर्वेषां कामानां कर्मणाञ्च प्रतिबन्धकत्वसम्भवे कुतो योगप्राप्तिरित्याशङ्क्याह सर्वेति। सर्वसङ्कल्पपरित्यागे यथोक्तविधत्रुत्थानमप्रस्तसिद्धमिति मन्वानः सन्नाह सङ्कल्पेति। मूलोन्मूलने च तत्कार्य्यनिवृत्तिरयत्नसुलभेति भावः। तत्र प्रमाणमाह संकल्पमूल इति। तत्रान्वयव्यतिरेकावभिप्रेत्योक्तमुपपादयन्त कामेति। सर्वसङ्कल्पाभावे कामाभाववत् कर्म्माभावस्य सिद्धत्वेऽपि कर्मणां कामकार्य्यत्वान्निवृत्तिप्रयुक्तामपि निवृत्तिमुपन्यस्यति सर्वकामेति। यदुक्तं कर्मणां कामकार्य्यत्वं तत्र श्रुतिस्मृती प्रमाणयति स यथेति। स पुरुषः स्वरूपमजानन् यतफलकामो भवति तत्साधननुष्ठेयतया बुद्धौ धारयतीति तत्क्रतुर्भवति यच्चानुष्ठेयतया गृह्णाति तदेव कर्म बहिरपि करोतीति कामाधीनं कर्मोक्तमिति श्रुत्यर्थः। कामजन्यं कर्मेत्यन्वयव्यतिरेकसिद्धमिति द्योतयितुं स्मृतौ हिशब्दः। न्यायमेव दर्शयति न हि स संकल्पेति। स्वापादावदर्शनादित्यर्थः। नित्यनैमित्तिककर्मानुष्ठानं दूरनिरस्तमिति वक्तुमपिशब्दः। श्रुतिस्मृतिन्यायसिद्धमर्थमुपसंहरति तस्मादिति ॥४॥

स्वा० टी०। कीदृशोऽयं योगारूढो यस्य शमः कारणमुच्यत इत्यत्राह तदेति। इन्द्रियार्थेष्विन्द्रियभोगेषु तत्साधनेषु च कर्मसु यदा नानुषज्जते आसक्तिं न करोति, तत्र हेतुः आसक्तिमूलभूतान् सर्व्वान् भोगविषयान् कर्मविषयांश्च सङ्कल्पान् सन्न्यसितुं त्यक्तुं शीलं यस्य स तदा योगारूढ़ उच्यते ॥ ४ ॥

**उद्धरेदात्मनात्मानं नात्मानमवसादयेत्।**
**आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः॥ ५ ॥**

यदैवं योगारूढस्तदा तेनात्मा नोद्धृतो भवति संसारादनर्थव्रातादतः उद्धरेदिति। उद्धरेत् संसारसागरे निमग्नमात्मनात्मानं तत उत् ऊर्द्ध्वं हरेत् उद्धरेत् योगा-

रूढतामापादयेदित्यर्थः, नात्मानमवसादयेन्नाधोनयेत् नाधोगमयेत् आत्मैव हि यस्मादात्मनो बन्धुर्न ह्यन्यः कश्चिद्बन्धुर्यः संसारमुक्तये भवति, बन्धुरपि तावन्मोक्षं प्रति प्रतिकूल एव स्नेहादिबन्धनायतनत्वात्तस्माद्युक्तमवधारणमात्मैव ह्यात्मनो बन्धुरिति आत्मैव रिपुः शत्रुर्योऽन्योऽपकारी बाह्यः शत्रुः सोऽप्यात्मप्रयुक्त एवेति युक्तमेवावधारणमात्मैव रिपुरात्मन इति ॥ ५ ॥

आ० टी० । योगारूढस्य किं स्यादित्याशङ्क्याह यदैवमिति । योगारोहस्य दृष्टादृष्टोपायैरवश्यकर्त्तव्यतायै भक्तिहेतुत्वं तद्विपर्ययस्याधःपतनहेतुत्वञ्च दर्शयति अत इति । तत्र हेतुमाह आत्मैव हीति । उद्धरणापेक्षामात्मनः सूचयति मग्नमिति । संसारादुद्धरणं कीदृगित्याशङ्क्याह योगारूढतामिति । योगप्राप्त्यनास्था तु न कर्त्तव्येत्याह नात्मानमिति । योगप्राप्त्युपायश्चेन्नानुष्ठीयते तदा योगाभावे संसारपरिहारासम्भवादात्माधोनीतः स्यादित्यर्थः । नन्वात्मानं संसारे निमग्नं तदा यो बन्धुस्तस्मादुद्धरिष्यति नेत्याह आत्मैव हीति । कथमवधारणमन्यस्यापि प्रसिद्धस्य बन्धोः सम्भवात्तत्राह न हीति । अन्यो बन्धुः सन्नपि संसारमुक्तये न भवतीत्येतदुपपादयति बन्धुरपीति । स्नेहादीत्यादिशब्दात्तदनुगुणप्रवृत्तिविषयत्वं गृह्यते । आत्मातिरिक्तस्यापि शत्रोरपकारिणः सुप्रसिद्धत्वादवधारणमनुचितमित्याशङ्क्याह योऽन्य इति ॥ ५ ॥

स्वा० टी० । अतो विषयासक्तित्यागे मोक्षं तदासक्तौ च बन्धं पर्यालोच्य रागादिस्वभावं त्यजेदित्याह उद्धरेदिति । आत्मना विवेकयुक्तेनात्मानं संसारादुद्धरेत् न त्ववसादयेदधोनयेत्, हि यत आत्मैव मनःसङ्गाद्युपरत आत्मनः स्वस्य बन्धुरुपकारकः रिपुरपकारकः ॥ ५ ॥

**बन्धुरात्मात्मनस्तस्य येनैवात्मात्मना जितः ।**
**अनात्मनस्तु शत्रुत्वे वर्त्तेतात्मैव शत्रुवत् ॥ ६ ॥**

आत्मैव आत्मनो बन्धुरात्मैव रिपुरात्मन इत्युक्तं तत्र किंलक्षण आत्मा आत्मनो बन्धुः किंलक्षणो वा आत्मात्मनो रिपुरित्युच्यते बन्धुरिति। बन्धुरात्मात्मनस्तस्य तस्यात्मनः स आत्मा बन्धुर्येनात्मनात्मैव जितः आत्मा कार्य्यकारणसङ्घातो येन जितो वशीकृतो जितेन्द्रिय इत्यर्थः, अनात्मनस्तु अजितात्मनस्तु शत्रुत्वे शत्रुभावे वर्त्तेत आत्मैव शत्रुवद्यथानात्मा शत्रुरात्मनोऽपकारी तथात्मात्मनोऽपकारे वर्त्तेत इत्यर्थः ॥ ६ ॥

आ० टी०। उक्तमनूद्य प्रश्नपूर्वकं श्लोकान्तरमवतारयति आत्मैवेत्यादिना। एकस्यैवात्मनो मिथोविरुद्धं बन्धुत्वं रिपुत्वञ्च लक्षणभेदमन्तरेणायुक्तमिति चोदिते वशीकृतसङ्घातस्यात्मानं प्रति बन्धुत्वमितरस्य शत्रुत्वमित्यविरोधं दर्शयति बन्धुरित्यादिना। वशीकृतसङ्घातस्य विक्षेपाभावादात्मनि समाधानसम्भवादुपपन्नमात्मानं प्रति बन्धुत्वमिति साधयति तस्येति। अवशीकृतसङ्घातस्य पुनर्विक्षेपोपपत्तेरात्मनि समाधानायोगादात्मानं प्रति शत्रुभावे प्रसिद्धशत्रुवत् आत्मैव शत्रुत्वेन वर्त्ततेत्युत्तरार्द्धं व्याकरोति अनात्मन इति। दृष्टान्तं व्याचष्टे यथेति। उक्तदृष्टान्तवशादवशीकृतसङ्घातः स्वस्य हितानाचरणादात्मानं प्रति शत्रुरेवेति दार्ष्टान्तिकमाह तथेति ॥ ६ ॥

स्वा० टी०। कथम्भूतस्यात्मैव बन्धुः कथं भूतस्य चात्मैव रिपुरित्यपेक्षायामाह बन्धुरिति। येनात्मनैवात्मा कार्य्यकरणसङ्घातरूपो जितो वशीकृतस्तस्य तथाभूतस्यात्मन आत्मैव बन्धुः अनात्मनोऽजितात्मनस्तु आत्मैवात्मनः शत्रुत्वे शत्रुवदपकारित्वे वर्त्तेत ॥ ६ ॥

**जितात्मनः प्रशान्तस्य परमात्मा समाहितः।**
**शीतोष्णसुखदुःखेषु तथा मानावमानयोः ॥७॥**

जितात्मन इति। जितात्मनः कार्य्यकरणादिसंघात

आत्मा जितो येन स जितात्मा तस्य जितात्मनः प्रशान्तस्य परमात्मा समाहितः साक्षादात्मभावेन वर्त्तते इत्यर्थः, किञ्च शीतोष्णसुखदुःखेषु तथा मानेऽवमाने च मानावमानयोः पूजापरिभवयोः समः स्यात् इत्यध्याहारः ॥ ७ ॥

श्रा० टी०। कथं संयतकार्य्यकरणस्य बन्धुरात्मेति तत्राह जितात्मन इति। जितकार्य्यकरणसङ्घातस्य प्रकर्षेणोपरतबाह्याभ्यन्तरकरणस्य परमात्मा विक्षेपेण पुनः पुनरनभिभूयमानो निरन्तरं चित्ते प्रथत इत्यर्थः। जितात्मानं संन्यस्तसमस्तकर्म्माणमधिकारिणं प्रदर्श्य योगाङ्गानि दर्शयति शीतेति। समः स्यादित्यध्याहारः। पूर्वार्द्धं व्याचष्टे जितेत्यादिना। न केवलं तस्य परमात्मा साक्षादात्मभावेन वर्त्तते किन्तु शीतोष्णादिभिरपि नासौ चाल्यते तत्त्वज्ञानादित्युत्तरार्द्धं विभजते किञ्चेति। तेषु समः स्या इति सम्बन्धः॥ ७॥

स्वा० टी०। जितात्मनः स्वस्मिन् बन्धुत्वं स्पष्टयति जितात्मन इति। जित आत्मा येन तस्य प्रशान्तस्य रागादिरहितस्यैव परं केवलमात्मा शीतोष्णादिषु सत्स्वपि समाहितः आत्मनिष्ठो भवति नान्यस्य यद्वा तस्य हृदि परमात्मा समाहितः स्थितो भवति॥ ७॥

ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः।
युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः॥८॥

ज्ञानेति। ज्ञानविज्ञानतृप्तात्मा ज्ञानं शास्त्रोक्तपदार्थानां परिज्ञानं विज्ञानन्तु शास्त्रतो ज्ञातानां तथैव स्वानुभवकरणं ताभ्यां ज्ञानविज्ञानाभ्यां तृप्तः सञ्जातालंप्रत्यय आत्मान्तःकरणं यस्य स ज्ञानविज्ञानतृप्तात्मा कूटस्थोऽप्रकम्प्यो भवति इत्यर्थः, विजितेन्द्रियश्च य ईदृशो युक्तः समाहित इति स उच्यते कथ्यते, स योगी समलो-

ष्टाश्मकाञ्चनः लोष्टाश्मकाञ्चनानि समानि यस्य सः समलोष्टाश्मकाञ्चनः॥ ८॥

स्वा॰ टी॰। चित्तसमाधानमेव बिंशष्टफलहेतुरिदं तर्हि कथम्भूतः समाहितो व्यवह्रियते तत्राह ज्ञानेति। परोक्षापरोक्षाभ्यां ज्ञानविज्ञानाभ्यां सञ्जातोऽलंप्रत्ययोऽक्रियो हर्षविषादकामक्रोधादिरहितो योगी युक्तः समाहित इति व्यवहारभागी भवतीति पादत्रयव्याख्यानेन दर्शयति ज्ञानमित्यादिना। स च योगी परमहंसपरिव्राजकःसर्वत्रोपेक्षाबुद्धिरनतिशयवैराग्यभागीति कथयति स योगीति॥८॥

स्वा॰ टी॰। योगारूढस्य लक्षणं श्रेष्ठ्यं चोक्तमुपसंहरति ज्ञानेति। ज्ञानमौपदेशिकं विज्ञानमपरोक्षानुभवस्ताभ्यां तृप्तो निराकाङ्क्ष आत्मा चित्तं यस्य, अत कूटस्थो निर्विकारः, अत एव विजितानीन्द्रियाणि येन अतएव समानि लोष्टादीनि यस्य मृत्खण्डपाषाणसुवर्णेषु हेयोपादेयबुद्धिशून्यः स युक्तो योगारूढ इत्युच्यते॥ ८॥

**सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु।**
**साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते॥ ९॥**

किञ्च सुहृदिति। सुहृदित्यादिश्लोकाङ्गमेकपदं सुहृदिति प्रत्युपकारमनपेक्ष्योपकर्त्ता, मित्रं स्नेहवान् अरिः शत्रुः, उदासीनो न कस्यचित् पक्षं भजते, मध्यस्थो यो विरुद्धयोरुभयोर्हितैषी द्वेष्यः आत्मनो प्रियः बन्धुः सम्बन्धीत्येतेषु साधुषु शास्त्रानुवर्त्तिष्वपि च पापेषु प्रतिषिद्धकारिषु सर्वेष्वेतेषु समबुद्धिः कः किं कर्मेत्यव्यापृतबुद्धिरित्यर्थः विशिष्यते, विमुच्यत इति वा पाठान्तरं योगारूढानां सर्वेषामयमुत्तम इत्यर्थः॥ ९॥

स्वा॰ टी॰। योगारूढस्य प्रशस्तत्वमभ्युपेत्य श्लोकान्तरं दर्शयति किञ्चेति। पदच्छेदः पदार्थोक्तिरिति व्याख्यानाङ्गं सम्पादयति

सुहृदितीति । अरिर्नाम परोक्षमपकारकः प्रत्यक्षमप्रियो द्वेष्य इति विभागः । समबुद्धिरिति व्याचष्टे कः किमिति । प्रथमो हि प्रश्नो जातिगोत्रादिविषयः द्वितीयो व्यापारविषयः । उक्तप्रकारेष्वाव्यापृतबुद्धित्वं सर्वोत्कर्षो वा सर्वोपायविमोक्षो वा सिध्यतीत्याह विशिष्यत इति । पाठद्वयेऽपि सिद्धमर्थं सङ्गृह्य कथयति योगारूढ़ानामिति ॥ ९ ॥

आ० टी० । सुहृन्मित्रादिषु समबुद्धियुक्तस्तु ततोऽपि श्रेष्ठ इत्याह सुहृदिति । सुहृत् स्वभावेनैव हिताशंसी, मित्रं स्नेहवशेनोपकारकः, अरिर्घातुकः, उदासीनो विवदमानयोरुभयोरप्युपेक्षकः, मध्यस्थो विवदमानयोरुभयोरपि हिताशंसी, द्वेष्यो द्वेषविषयः, बन्धुः सम्बन्धी, साधवः सदाचाराः,पापा दुराचाराः एतेषु समा रागद्वेषशून्या बुद्धिर्यस्य स तु विशिष्टः ॥ ९ ॥

**योगी युञ्जीत सततमात्मानं रहसि स्थितः ।**
**एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥१०॥**

अतएव मुत्तमफलप्राप्तये योगीति । योगी ध्यायी युञ्जीत समादध्यात् सततं सर्वदात्मानमन्तःकरणं रहस्येकान्ते योगी गिरिगुहादौ स्थितः सन्नेकाकी असहायो रहसि स्थित एकाकी चेति विशेषणात् सन्न्यासं कृत्वेत्यर्थः, यतचित्तात्मा चित्तमन्तःकरणमात्मा देहश्च संयतौ यस्य स यतचित्तात्मा निराशीर्वितृष्णोऽपरिग्रहश्च परिग्रहरहित इत्यर्थः, सन्न्यासित्वेऽपि सति त्यक्तसर्वपरिग्रहः सन् युञ्जीतेत्यर्थः ॥ १० ॥

आ० टी० । यथोक्तविशेषणवतो येन दृढं दृष्टमत्वे योगानुष्ठाने प्रयतितव्यमित्यङ्गाभिधानानन्तरं प्रधानमभिदधाति अतएवेति । आदरनैरन्तर्यं दीर्घकालत्वं विशेषणत्रयं गम्य कृचयन्त सततमिति । तत्रैव पश्चाद्विनाभ्युपन्यस्ति रहसीत्यादिना । सर्वदेत्यादि दीर्घकालयोरुपलक्षणम् । प्रत्यगात्मानं व्यावर्त्तयति अन्तःकरणमिति । गिरिगुहादा-

विघ्नादिशब्देन योगप्रतिबन्धकदुःखदर्शनादिविधुरो देशो गृह्यते। विशेषणद्वयस्य तात्पर्यमाह रहसीति। योगं युञ्जानस्य सन्न्यासिनो विशेषणान्तराणि दर्शयति यतेति। सति सन्न्यासित्वे किमित्यपरिग्रहत्वमर्थपुनरुक्तेरित्याशङ्क्य कौपीनाच्छादनादिष्वपि शक्तिनिवृत्त्यर्थमित्याह सन्न्यासित्वेऽपीति॥ १०॥

स्वा॰ टी॰। एवं योगारूढस्य लक्षणमुक्त्वेदानीं तस्य साङ्गं योगं विधत्ते योगीत्यादिना स योगी परमो मत इत्यन्तेन ग्रन्थेन। योगी योगारूढ आत्मानं मनो युञ्जीत समाहितं कुर्यात्, सततं निरन्तरं रहसि एकान्ते स्थितः सन्, एकाकी सङ्गशून्यः, यतं संयतं चित्तमात्मा देहश्च यस्य, निराशीर्निराकाङ्क्षः, अपरिग्रहः परिग्रहशून्यश्च॥ १०॥

**शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः।**
**नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम्॥११॥**

अथेदानीं योगं युञ्जत आसनाहारविहारादीनां योगसाधनत्वेन नियमा वक्तव्याः, प्राप्तयोगस्य लक्षणं तत्फलादि चेत्यत आरभ्यते, तत्रासनमेव तावत् प्रथममुच्यते शुचाविति। शुचौ शुद्धे विविक्ते स्वभावतः संस्कारतो वा देशे स्थाने प्रतिष्ठाप्य स्थिरमचलमात्मन आसनं नात्युच्छ्रितं नातीवोच्छ्रितं नाप्यतिनीचं तच्च चैलाजिनकुशोत्तरं चैलमजिनं कुशाश्च उत्तरे यस्मिन्नासने तदासनं चैलाजिनकुशोत्तरं पाठक्रमात् विपरीतोऽत्र अनुक्रमश्चैलादीनाम्॥ ११॥

आ॰ टी॰। योगं योगाङ्गानि चोपदिश्योत्तरसन्दर्भस्य तात्पर्यमाह अथेति। योगस्वरूपप्रतिपत्तदङ्गप्रदर्शनानन्तर्यमथशब्दार्थः विहारादीनामित्यादिशब्देन यथोक्तासनादिगतावान्तरभेदग्रहणं, तत्फलादि चेत्यादिशब्देन योगफलं सम्यग्ज्ञानञ्च तत्फलं कैवल्यं ततो अवस्था-

निष्काविनष्टत्वमित्यादि वक्ष्यते। एवं सम्प्रदायतात्पर्य्ये दर्शिते किमा-सीनः शयानस्तिष्ठन् गच्छन् कुर्वन् वा युञ्जीतेत्यपेक्षायामनन्तरश्लोकतात्-पर्य्यमाह तत्रेति। निर्द्धारणे सप्तमी प्रथमं योगानुष्ठानस्य प्रधान-मासीनः सम्भवादिति न्यायादिति यावत्। विविक्तत्वं द्वेधा विभजते स्वभावत इति। आसनस्यास्थैर्य्ये तत्रोपविश्य योगमनुतिष्ठतः समा-धानायोगात् योगासिद्धिरित्यभिसन्धाय विशिनष्टि अचलनमिति। आस्तेऽस्मिन्निति व्युत्पत्तिमनुस्मृत्याह आसनमिति। आत्मन इति परकीयासनव्युदासार्थं, पतनभयपरिहारार्थं नात्युच्छ्रितमुक्तं, नात्यति-नीचमिति भूतलपाषाणादिसंश्लेषे वातक्षोभाग्निमान्द्यादिसम्भावितदोष-निरासार्थं, चेलं वस्त्रमजिनं चर्म पशूनां तच्च मृगस्य कुशा दर्भास्ते चोत्तरे यस्मिन्नुपरिष्टादारभ्य तत्तथोक्तम्। प्रथमं चेलं ततोऽजिनं ततश्च कुशा इति प्रतिपन्नक्रमसमापादकं क्रममतिक्रम्यादौ कुशास्ततो-ऽजिनं ततश्चेलमिति क्रमं विवक्षित्वाह विपरीतोऽस्येति॥ ११॥

स्वा० टी०। आसननियमं दर्शयन्नाह शुचाविति द्वाभ्याम्। शुद्धे स्थाने आत्मनः स्वस्यासनं स्थापयित्वा, कीदृशं स्थिरमचञ्चलं नात्युच्छ्रितं न चातिनीचं चेलं वस्त्रं अजिनं व्याघ्रादिचर्म्म चेला-जिने कुशेभ्य उत्तरे यस्य कुशानामुपरि चर्म्म तदुपरि वस्त्रमास्तीर्य्ये-त्यर्थः॥ ११॥

**तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः।**
**उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये॥१२॥**

प्रतिष्ठाप्य किं तत्रेति। तत्र तस्मिन्नासने उपविश्य योगं युञ्ज्यात कथं सर्वविषयेभ्य उपसंहृत्यैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः चित्तञ्च इन्द्रियाणि च चित्ते-न्द्रियाणि तेषां क्रिया संयता यस्य स यतचित्तेन्द्रियक्रियः स किमर्थं योगं युञ्ज्यादित्याह आत्मविशुद्धये अन्तःकरणस्य शुद्ध्यर्थमित्येतत्॥ १२॥

श्री० टी०। यथोक्तमासनं सम्पाद्य किं कर्त्तव्यमिति प्रश्नपूर्वकं कर्त्तव्यं तन्निर्दिशति प्रतितिष्ठेति योगं युञ्ज्यादिति कर्त्तव्यताकलापं पृच्छन् कथमिति। सर्वेभ्यो विषयेभ्यः सकाशात् प्रत्याहृत्य मनसो यदेकस्मिन्नेव ध्येये विषये समाधानं, यच्चित्तस्येन्द्रियाणाञ्च वाह्यक्रियाणां संयमनं तदुभयं कृत्वा योगमनुतिष्ठेदित्याह सर्वेति। आसने यथोक्ते स्थित्वा यथोक्तया रीत्या योगानुष्ठानस्य प्रश्नपूर्वकं फलमाह स किमर्थमित्यादिना॥ १२॥

स्वा० टी०। तत्र तस्मिन्नासने उपविश्य एकाग्रं विक्षेपरहितं मनः कृत्वा योगं युञ्ज्यादभ्यसेत्, यता संयता चित्तस्येन्द्रियाणाञ्च क्रिया यस्य, आत्मनो मनसो विशुद्धये उपशान्तये॥ १२॥

## समं कायशिरोग्रीवं धारयन्नचलं स्थिरः।
## सम्प्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन्॥१३॥

वाह्यमाधनमासनमुक्तं अधुना शरीरस्य धारणं कथमित्युच्यते समभिति। समं कायशिरोग्रीवं कायश्च शिरश्च ग्रीवा च कायशिरोग्रीवं तत् समं धारयन् अचलञ्च समं धारयतश्चलनं न सम्भवत्यतो विशिनष्टि अचलमिति, स्थिरः स्थिरो भूत्वेत्यर्थः स्वं नासिकाग्रं संप्रेक्ष्य सम्यक् प्रेक्षणं दर्शनं कृत्वेवेतीवशब्दो लुप्तो द्रष्टव्यो न हि स्वनासिकाग्रसंप्रेक्षणमिह विधित्सितं किं तर्हि चक्षुषोर्दृष्टिसन्निपातः स चान्तःकरणसमाधानापेक्षो विवक्षितः स्वनासिकाग्रसम्प्रेक्षणमेव चेद्विवक्षितं मनस्तत्रैव समाधीयत नात्मनि आत्मनि हि मनसः समाधानं वक्ष्यत्यात्मसंस्थं मनः कृत्वेति तस्मादिवशब्दलोपेनाक्ष्णो र्दृष्टिसन्निपात एव सम्प्रेक्षेत्युच्यते दिशश्चानवलो-

कथम् दिशाञ्चावलोकनमकुर्वन्नित्येवमन्तरा कुर्वन्नित्येतत् ॥ १३ ॥

आ॰ टी॰ । उक्तमनूद्यानन्तरश्लोकस्यापुनरुक्तमर्थमाह बाह्येति । समत्वमृजुत्वं कायः शरीरमध्यम् । अचलमिति विशेषणमपार्थं तस्य तात्पर्य्यमाह सममिति । कार्य्यकरणयोर्विषयपारवश्यप्रयुक्तत्वमचलत्वं स्थैर्य्यम् । किमितीवशब्दलोपोऽत्र कल्प्यते स्वनासिकाग्रसंप्रेक्षणमेव योगाङ्गत्वेनात्र विधित्सितं किं न स्यादित्याशङ्क्याह न हीति । तर्हि किमत्र विवक्षितमिति प्रश्नपूर्वकमाह किं तर्हीति । दृष्टिसंपातो दृष्टेश्चक्षुषो रूपादिविषयप्रवृत्तिरित्यर्थः । कथमेतावतायासेन सिध्यति तत्राह स चेति । समाधानस्य प्राधान्येनात्र विवक्षितत्वाद्दृष्टेर्बहिर्विषयत्वेन तद्भङ्गप्रसङ्गात्तस्या विषयेभ्यो व्यावृत्त्यान्तरं च सन्निपातो विवक्षितो भवतीत्यर्थः । तथापि कथं स्वनासिकाग्रसंप्रेक्षणमत्र श्रुतमविवक्षितमित्याशङ्क्याह स्वनासिकेति । तत्रैव मनःसमाधाने का हानिरित्याशङ्क्य वाक्यशेषविरोधान्मैवमित्याह आत्मनि हीति । किं तर्हि संप्रेक्ष्येत्यादौ विवक्षितमित्याशङ्क्याह तस्मादिति । दक्षिणोत्तरचक्षुषोर्या दृष्टिस्तस्या बाह्याद्विषयाद्व्युत्थानान्तरेण सन्निपतनमत्र स्वकीयं नासिकाग्रं नासिकान्तं संप्रेक्ष्येति विवक्षितमित्यर्थः । तत्रैवोत्तरमपि विशेषणमनुकूलमित्याह दिशश्चेति । अनवलोकयन्नासीतेत्युत्तरत्र सम्बन्धः, अन्तरा दिशामवलोकनमपि योगप्रतिबन्धकमिति तत्प्रतिषेधः ॥ १३ ॥

स्वा॰ टी॰ । चित्तैकाग्र्योपयोगिनीं देहादिधारणां दर्शयन्नाह सममिति द्वाभ्याम् । काय इति देहस्य मध्यभागो विवक्षितः कायश्च शिरश्च ग्रीवा च कायशिरोग्रीवं मूलाधारादारभ्य मूर्द्धान्तपर्य्यन्तं सममवक्रं निश्चलं धारयन् स्थिरो दृढप्रयत्नो भूत्वेत्यर्थः, स्वीयं नासिकाग्रं संप्रेक्ष्य चार्द्धनिमीलितनेत्र इत्यर्थः, इतस्ततो दिशश्चानवलोकयन्नासीतेत्युत्तरेणान्वयः ॥ १३ ॥

**प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।**

**मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥१४॥**

किञ्च प्रशान्तेति । प्रशान्तात्मा प्रकर्षेण शान्त आत्मान्तःकरणं यस्य सोऽयं प्रशान्तात्मा विगतभीर्विगतभयः ब्रह्मचारिव्रते स्थितः ब्रह्मचारिणो व्रतं ब्रह्मचारिव्रतं ब्रह्मचर्य्यं गुरुशुश्रूषाभिक्षाभुक्त्यादि तस्मिन् स्थितस्तदनुष्ठाता भवेदित्यर्थः, किञ्च मनः संयम्य मनसो वृत्तीरुपसंहृत्येतत् मच्चित्तो मयि परमेश्वरे चित्तं यस्य सोऽयं मच्चित्तो युक्तः समाहितः सन्नासीतोपविशेत् मत्परोऽहं परो यस्य सोऽयं मत्परो भवति कश्चित् रागी स्त्रीचित्तो न तु स्त्रियमेव परत्वेन गृह्णाति, किं तर्हि राजानं महादेवं वा अयन्तु मच्चित्तो मत्परश्च ॥ १४ ॥

आ॰ टी॰ । योगं युञ्जानस्य विशेषणान्तराणि दर्शयति किञ्चेति । अन्तःकरणस्य प्रशान्तिः रागद्वेषादिदोषराहित्यं, तस्याश्च प्रकर्षो रागादिहेतोरपि निवृत्तिः, विगतभयत्वं सर्वकर्मपरित्यागे शास्त्रीयनिश्चयवशादिः सन्दिग्धबुद्धित्वं, भिक्षाभक्त्यादीत्यादिशब्देन त्रिषवणस्नानशौचाचमनादि गृह्यते । विशेषणान्तरमाह किञ्चेति । उपसंहृत्य योगनिष्ठो भवेदिति शेषः । मनोवृत्त्युपसंहारे ध्यानमपि न सिध्येत्तस्य तद्वृत्त्यात्मकत्वादित्याशङ्क्याह मच्चित्त इति । विषयान्तरविषयमनोवृत्त्युपसंहारेणात्मन्येव तन्नियमनाच्च ध्यानानुपपत्तिरित्यर्थः । मच्चित्तत्वेनैव मत्परत्वसिद्धत्वात् मत्पर इति पृथक् विशेषणमनर्थकमित्याशङ्क्याह भवतीति । अन्तःकरणशुद्धिर्योगस्यावान्तरफलम् ॥ १४ ॥

स्वा॰ टी॰ । प्रशान्तेति । प्रशान्त आत्मा चित्तं यस्य विगता भीर्भयं यस्य ब्रह्मचारिव्रते ब्रह्मचर्य्ये स्थितः सन् मनः संयम्य प्रत्याहृत्य मय्येव चित्तं यस्य, अहमेव परः पुरुषार्थो यस्य स मत्परः एवं युक्तो भूत्वा तिष्ठेत् ॥ १४ ॥

**युञ्जन्नेवं सदात्मानं योगी नियतमानसः ।**
**शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥१५॥**

अथेदानीं योगफलमुच्यते युञ्जन्निति । युञ्जन् समाधानं कुर्वन्नेवं यथोक्तेन विधानेन सदा योगी नियतमानसः नियतं संयतं मानसं मनो यस्य सोऽयं नियतमानसः स शान्तिमुपरतिं निर्वाणपरमां निर्वाणं मोक्षस्तत्परमा निष्ठा यस्याः शान्तेः सा निर्वाणपरमा तां निर्वाणपरमां मत्संस्थां मदधीनतामधिगच्छति प्राप्नोति ॥ १५ ॥

आ० टी० । सम्प्रति परमफलकथनपरत्वेनानन्तरश्लोकमादत्ते युञ्जन्निति । योगस्वरूपं तदङ्गमासनमपि तत्कर्त्तृविशेषणमित्यस्यार्थस्य प्रकथनानन्तरमित्यर्थः शब्दार्थः, क आत्मानं युञ्जन्निति सम्बन्धः, आत्मशब्दो मनोविषयः, यथोक्तो विधिरासनादिः, उक्तविशेषणत्वद्योतनार्थं सदेत्युक्तं, योगी ध्यायी संन्यासीत्यर्थः । मनःसंयमस्य योगं प्रत्यसाधारणत्वं दर्शयति नियतेति । शान्तिशब्देनोपरतेः सर्वसंसारनिवृत्तिपर्य्यवसायित्वं मत्वा विशिनष्टि निर्व्वाणेति । यथोक्तायाः शान्तेः स्वरूपावस्थानादनर्थान्तरत्वमाह मत्संस्थामिति । मदधीनां मदात्मिकामित्यर्थः ॥ १५ ॥

स्वा० टी० । योगाभ्यासफलमाह युञ्जन्नेवमिति । एवमुक्तप्रकारेण सदा आत्मानं मनो युञ्जन् समाहितं कुर्वन् नियतं निरुद्धं मानसं चित्तं यस्य स शान्तिं संसारोपरमं प्राप्नोति, कथंभूतां निर्वाणं परं प्राप्यं यस्यां तां मत्संस्थां मद्रूपेणावस्थितिम् ॥ १५ ॥

**नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः ।**
**न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥१६॥**

इदानीं योगिन आहारादिनियम उच्यते नात्यश्नत इति । न अत्यश्नत आत्मसंमितमन्नपरिमाणमतीत्याश्नतः अत्यश्नतो न योगोऽस्ति न च एकान्तमनश्नतो योगोऽस्ति यदु ह वा आत्मसंमितमन्नं तदवति तन्न हिनस्ति, यद्भूयो हिनस्ति तद्यत् कणीयो न तदवतीति श्रुतेः तस्मात् योगी नात्मसंमितादन्नादधिकं न्यूनं वाश्नीयादथ वा योगिनो योगशास्त्रे परिपठितादन्नपरिमाणादतिमात्रम-श्नतो योगो नास्ति उक्तं हि अर्द्धमशनस्य सव्यञ्जनस्य तृतीयमुदकस्य तु वायोः सञ्चरणार्थन्तु चतुर्थमवशेषयेदि-त्यादिपरिमाणं तथा न चातिस्वप्नशीलस्य योगो भवति नैव चातिमात्रं जाग्रतो योगो भवति चार्जुन ! ॥ १६ ॥

व्या० टी० । आहारादीत्यादिशब्देन विहारजागरणादि चोच्यते, आत्मसंमितमन्नपरिमाणमश्नामादि आहारनियमे शतपथ-श्रुतिं प्रमाणयति यदिति । तदन्नं भुज्यमानं यदु ह वा इति प्रसिद्धा श्रुत्यानूदितमवत्यनुष्ठानयोग्यतामापाद्यानुष्ठानद्वारेण भोक्तारं रक्षति न पुनस्तदन्नमस्यानर्थाय भवतीत्यर्थः, यत् पुनरात्मसंमितात् भूयोऽधिकतरं शास्त्रमतिक्रम्य भुज्यते तदात्मानं हिनस्ति भोक्तुरनर्थाय भवति यच्चान्नं कणीयोऽल्पतरं शास्त्रनिश्चयाभावाद्यते तदन्नमनुष्ठानयोग्यतादिद्वारा न रक्षितुं क्षमते तस्मादत्यधिकमत्यल्पञ्चान्नं योगमारुरुक्षता त्याज्य-मित्यर्थः । श्रुतिसिद्धमर्थं निगमयति तस्मादिति । नेत्यादेर्व्याख्याना-न्तरमाह अथ वेति । किं तदन्नपरिमाणं योगशास्त्रोक्तं यदधिकं न्यूनं वाभिव्यवहरतो योगानुपपत्तिरित्याशङ्क्याह उक्तं हीति । पूरयेदशने-नार्द्धं तृतीयमुदकेन तु । वायोः सञ्चरणार्थाय चतुर्थमवशेषयेदिति वाक्यमादिशब्दार्थः । यथा नात्यन्तमश्नतोऽनश्नतश्च योगो न सम्भवति तथा अत्यन्तस्वपतो जाग्रतश्च न योगः सम्भवतीत्याह नचेति ॥ १६ ॥

स्वा॰ टी॰ । योगाभ्यासनिष्ठस्याहारादिनियममाह नात्यश्नत इति द्वाभ्यां अत्यन्तमधिकं भुञ्जानस्य एकान्तमत्यन्तमभुञ्जानस्यापि योगः समाधिर्न भवति, तथातिनिद्राशीलस्यातिजाग्रतश्च योगो नैवास्ति ॥ १६ ॥

**युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।**
**युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥१७॥**

कथं पुनर्योगो भवतीत्युच्यते युक्तेति । युक्ताहारविहारस्य युक्तचेष्टस्य आह्रियत इत्याहारोऽन्नं विहरणं विहारः पादक्रमस्तौ युक्तौ नियतपरिमाणौ यस्य स युक्ताहारविहारस्तस्य युक्तचेष्टस्य तथान्या च युक्ता नियता चेष्टा यस्य कर्मसु तथा युक्तस्वप्नावबोधस्य युक्तौ स्वप्नश्चावबोधश्च तौ नियतकालौ यस्य तस्य युक्ताहारविहारस्य कर्मसु युक्तस्वप्नावबोधस्य योगिनो योगो भवति दुःखहा दुःखानि सर्वाणि हन्तीति दुःखहा सर्वसंसारदुःखक्षयकृद्योगो भवति इत्यर्थः ॥ १७ ॥

आ॰ टी॰ । आहारनिद्रादिनियमविरहिणो योगव्यतिरेकमुक्त्वा तन्नियमवतो योगान्वयं व्याचष्टे कथं पुनरित्यादिना । अन्नस्य नियतत्वमर्द्धमशनस्येत्यादि, विहारस्य नियतत्वं योजनान्नपरं गच्छेदित्यादि, कर्मसु चेष्टाया नियतत्वं वाङ्नियमादि, रात्रौ प्रथमतो दशघटिकापरिमिते काले जागरणं, मध्यतः स्वपनं, पुनरपि दशघटिकापरिमिते जागरणमिति स्वप्नावबोधयोर्नियतकालत्वमेवं प्रयतमानस्य योगिनो भवति । योगस्य फलमाह दुःखहेति । सर्वाणीत्याध्यात्मिकादिभेदभिन्नानीत्यर्थः । यथोक्तयोगमन्तरेणापि स्वप्नादौ दुःखनिवृत्तिरस्तीति विशिनष्टि सर्वेति । विशुद्धविज्ञानद्वारेति शेषः ॥ १७ ॥

स्वा॰टी॰। तर्हि कथम्भूतस्य योगो भवतीत्यत आह युक्ताहारेति ।

युक्तो नियत आहारो विहारश्च गतिर्यस्य, कर्मसु कार्येषु युक्ता नियता चेष्टा यस्य, युक्तौ नियतौ स्वप्नावबोधौ निद्राजागरौ यस्य तस्य दुःखनिवर्त्तको योगो भवति सिध्यति ॥ १७ ॥

**यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।**
**निस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥१८॥**

अथाधुना कदा युक्तो भवतीत्युच्यते यदेति । यदा विनियतं विशेषेण नियतं संयतमेकाग्रतामापन्नं चित्तं हित्वा बाह्य[illegible] स्वात्मनि स्थितिं लभत इत्यर्थः । [illegible] निर्गता दृष्टादृष्टविषयेभ्यः स्पृहा [illegible] यस्य योगिनः स युक्तः समाहित इत्युच्यते [illegible] ॥ १८ ॥

व्या० टी० । [illegible] यदा हीत्यादानुक्तकालानुवादेन युक्तं [illegible] दर्शयति अथाधुनेति । विशेषेण संयतत्वं [illegible] । आत्मन्येवेत्येवकारार्थं कथयति [illegible] । तस्यात्मस्थितिं विवृणोति स्वात्मनीति । [illegible] कल्पितस्यात्मैव तत्त्वं तत् पुनरन्यतः सर्वतो निवारितं [illegible] निमग्नं तिष्ठतीति भावः । तस्यामवस्थायां सर्वेभ्यो विषयेभ्यो व्यावृत्त[illegible] युक्तो व्यपदिश्यत इत्याह निस्पृह इति ॥ १८ ॥

ख्या० टी० । कदा निष्पन्नयोगः पुरुषो भवतीत्यपेक्षायामाह यदेति । विनियतं विशेषेण निरुद्धं सच्चित्तमात्मन्येव यदा निश्चलं तिष्ठति तदा प्राप्तयोग इत्युच्यते ॥ १८ ॥

**यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।**
**योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥१९॥**

योगिनः समाहितं यच्चित्तं तस्योपमोच्यते यथेति। यथा दीपः प्रदीपो निवातस्थो निवाते वातवर्जिते स्थाने स्थितो नेङ्गते नैजति न चलति सा उपमा उपमीयतेऽनयेत्युपमा योगज्ञैश्चित्तप्रचारदर्शिभिः स्मृता चिन्तिता योगिनो यतचित्तस्य संयतान्तःकरणस्य युञ्जतो योगमनुतिष्ठत आत्मनः समाधिमनुतिष्ठत इत्यर्थः॥ १९॥

आ॰ टी॰। उपमा योगिनश्चित्तस्थैर्य्यस्योदाहरणमित्यर्थः। उपमाशब्दस्य प्रदीपविषयत्वसिद्ध्यर्थं करणव्युत्पत्तिं दर्शयति उपमीयत इति। योगिनो यथोक्तविशेषणवतश्चित्तस्थैर्य्यस्येति शेषः॥ १९॥

स्वा॰ टी॰। आत्मैकाकारतयावस्थितस्य चित्तस्योपमानमाह यथेति। वातशून्ये देशे स्थितो दीपो यथा नेङ्गते न चलति सा उपमा दृष्टान्तः, कस्य आत्मविषयं योगं युञ्जतोऽभ्यसतो योगिनो यतं नियतं चित्तं यस्य निष्कम्पतया प्रकाशकतया चाचञ्चलं तच्चित्तं तद्वत्तिष्ठतीत्यर्थः॥१९॥

**यत्रोपरमते चित्तं निरुद्धं योगसेवया।**
**यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति॥२०॥**

एवं योगाभ्यासबलादेकाग्रीभूतं निवातप्रदीपकल्पं सत् यत्रेति। यत्र यस्मिन् काले उपरमते चित्तं उपरतिं गच्छति निरुद्धं सर्वतो निवारितप्रचारं योगसेवया योगानुष्ठानेन यत्र चैव यस्मिंश्च काले आत्मना समाधिपरिशुद्धेनान्तःकरणेन आत्मानं परं चैतन्यं सर्वतो ज्योतिःस्वरूपं पश्यन्नुपलभमानः स्वे एवात्मनि तुष्यति तुष्टिं भजते॥ २०॥

आ॰ टी॰। द्विविधः समाधिः सम्प्रज्ञातोऽसंप्रज्ञातश्च ध्येयैकाकारस्पन्दवृत्तिभेदेन कथञ्चिद् ज्ञायमानः सम्प्रज्ञातः समाधिः कथमपि

स्वरूपमात्रमात्मा सैव सम्यक्चिरसंप्रज्ञातः समाधिस्तत्र सामान्येन समाधिलक्षणमभिधायासंप्रज्ञातस्य समाधेरधुना लक्षणं विवक्षुराह यत्रेति । काले समाध्युपलक्षिते, एवकारस्तुष्यतीत्यनेन सम्बध्यते । चकारस्य सम्बन्धमाह यस्मिंश्चेति । कालस्तु पूर्ववत् । कर्मकारकत्वेन निर्दिष्टमात्मानं तत्पदार्थत्वेन व्याचष्टे परमिति । आत्मनीत्यस्य त्वं पदार्थविषयत्वमाह स्व एवेति । परमात्मानं प्रतीच्येव तद्भावेनापरोक्षी कुर्वन्न तुष्टिहेत्वभावात्तुष्यत्येवेत्यर्थः, तस्मिन् काले योगसिद्धिर्भवतीति शेषः ॥ २० ॥

भा० टी० । यं सन्न्यासमिति प्राहुर्योगं तं विद्धि पाण्डवेत्यादौ कर्मैव योगशब्देनोक्तं नात्यश्नतस्तु योगोऽस्तीत्यादौ तु समाधिर्योगशब्देनोक्तस्तत्र मुख्यो योगः क इत्यपेक्षायां समाधिमेव स्वरूपतः फलतश्च लक्षयन् स एव मुख्यो योग इत्याह यत्रेति सार्द्धैस्त्रिभिः । यत्र यस्मिन्नवस्थाविशेषे योगाभ्यासेन निरुद्धं चित्तमुपरतं भवतीति योगस्य स्वरूपलक्षणमुक्तं तथा च पातञ्जलसूत्रं योगश्चित्तवृत्तिनिरोध इति, इष्टप्राप्तिलक्षणेन फलेन तमेव लक्षयति यत्र च यस्मिन्नवस्थाविशेषे आत्मना शुद्धेन मनसा आत्मानमेव पश्यति न तु देहादि, पश्यंश्चात्मन्येव तुष्यति न तु विषयेषु यत्रेत्यादीनां यच्छब्दानां तं योगसंज्ञितं विद्यादिति चतुर्थेनान्वयः ॥ २० ॥

**सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ।**
**वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥२१॥**

किञ्च सुखमिति । सुखमात्यन्तिकमत्यन्तमेव भवतीत्यात्यन्तिकं अनन्तमित्यर्थः, यत्तद्बुद्धिग्राह्यं बुद्ध्यैवेन्द्रियनिरपेक्षया गृह्यत इति बुद्धिग्राह्यमतीन्द्रियमिन्द्रियगोचरातीतमविषयजनितमित्यर्थः, वेत्ति तदीदृशं सुखमनुभवति यत्र यस्मिन् काले न च एव अयं विद्वानात्मस्वरूपे

स्थितस्तस्मान्नैव चलति तत्त्वतः तत्त्वस्वरूपान्न प्रच्यवत इत्यर्थः॥ २१॥

व्या॰ टी॰। योगसिद्धिकालं प्रकारान्तरेण प्रकटयति किञ्चेति। बुद्धिग्राह्यः स्वानुभवविषयः। इन्द्रियनिरपेक्षस्वानुभवगम्यत्वोक्तेरतो न्द्रियमिति पुनरुक्तमित्याशङ्क्याह अविषय इति। पदच्छेदः न चेत्यादि अपेक्षितपूरणं आत्मस्वरूप इति, तस्मात्तत्त्वत इति सम्बन्धः, नैवेत्येवकारसम्बन्धोक्तिः, चकारः सप्तम्या सम्बन्धनीयः यत्रेति पूर्ववत् सम्बन्धः॥ २१॥

व्या॰टी॰। आत्मन्येव तोषे हेतुमाह सुखमिति। यत्र यस्मिन्नवस्था-विशेषे यत्तत् किमपि निरतिशयमात्यन्तिकं नित्यं सुखं वेत्ति, ननु तदा विषयेन्द्रियसम्बन्धाभावात् कुतः सुखं स्यात्तत्राह अतीन्द्रियं विषयेन्द्रिय-सम्बन्धातीतं केवलं बुद्ध्यैवात्माकारया ग्राह्यं, अतएव च यत्र स्थितः संस्तत्त्वत आत्मस्वरूपान्नैव चलति॥ २१॥

यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः।
यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते॥ २२

किञ्च यं लब्ध्वेति। यं लब्ध्वा यमात्मलाभं लब्ध्वा प्राप्य च अपरमन्यल्लाभान्तरं ततोऽधिकमस्तीति न मन्यते न चिन्तयति, किञ्च यस्मिन्नात्मतत्त्वे स्थितो दुःखेन शस्त्रनिपातादिलक्षणेन गुरुणा महतापि न विचाल्यते॥२२॥

व्या॰ टी॰। प्रकारान्तरेण प्रकृतं योगं विशिनष्टि किञ्चेति। आत्मलाभात्परं विद्यते इति स्मृत्या व्याचष्टे यमात्मलाभमिति। लाभान्तरं पुरुषार्थभूतं, ततस्तस्मादात्मलाभादिति यावत्, तं विद्यादित्युत्तरत्र सम्बन्धः। यस्मिन् इत्याद्यवतारयति किञ्चेति। अपरिपक्वयोगो यथा दुर्धितेन दुःखेन प्रच्याव्यते न चैवं विचाल्यते यस्मिन् स्थितो योगी तं योगं विद्यादिति पूर्ववत्॥ २२॥

व्या० टी० । अचलत्वमेवोपपादयति यमिति । यतो यमात्मस्वरूपं लब्ध्वा ततोऽधिकं लाभं न मन्यते तस्यैव निरतिशयसुखत्वात्, यस्मिंश्च स्थितो महतापि शीतोष्णादिदुःखेन न विचाल्यते नाभिभूयते, एतेनानिष्टनिवृत्तिफलेनापि योगस्य लक्षणमुक्तं द्रष्टव्यम् ॥ २२ ॥

**तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ।**
**स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥२३॥**

यत्रोपरमते इत्याद्यारभ्य यावद्भिर्विशेषणैर्विशिष्ट आत्मावस्थाविशेषो योग उक्तः, तमिति । तं विद्यात् विजानीयात् दुःखसंयोगवियोगं दुःखैः संयोगो दुःखसंयोगस्तेन वियोगो दुःखसंयोगवियोगस्तं दुःखसंयोगवियोगं योग इत्येवंसंज्ञितं विपरीतलक्षणेन विद्यात् विजानीयादित्यर्थः । योगफलमुपसंहृत्य पुनरन्वयारम्भेण योगस्य कर्त्तव्यतोच्यते, निश्चयानिर्वेदयोर्योगस्य साधनत्वविधानार्थं स यथोक्तफलो योगो निश्चयेनाध्यवसायेन योक्तव्योऽनिर्विण्णचेतसा न निर्विण्णं अनिर्विण्णं तच्चेतस्तेन निर्वेदरहितेन चेतसा चित्तेनेत्यर्थः ॥ २३ ॥

व्या० टी० । तं विद्यादित्याद्यपेक्षितं पूरयन्नवतारयति यत्रेति । तमित्यात्मावस्थाविशेषं परामृशति दुःखसंयोगस्य वियोगो वियोगसंज्ञितो युज्यते स कथं योगसंज्ञितः स्यादित्याशङ्क्याह विपरीतेति । इयं हि योगावस्था समुत्खातनिखिलदुःखभेदेति दुःखसंयोगाभावो योगसंज्ञामर्हतीत्यर्थः । उपसंहृतयोगफले किमिति पुनर्योगस्य कर्त्तव्यत्वमुच्यते तत्राह योगफलमिति । प्रकारान्तरेण योगस्य कर्त्तव्यत्वोपदेशारम्भोऽभ्यारम्भः योगं युञ्जानस्तत्क्षणादुक्तां संसिद्धिमलभमानः संशयानो विरमेतेति तन्निवृत्त्यर्थं पुनः कर्त्तव्योपदेशोऽर्थवानिति मत्वाह निश्च-

मेति । तयोः साधनत्वविधानमेवाक्षरयोजनया साधयति स यथेति । इह जन्मनि जन्मान्तरे वा सेत्स्यतीत्यध्यवसायेन योक्तव्यः कर्त्तव्यः ॥२३॥

व्या० टी० । तमिति य एवंभूतोऽवस्थाविशेषस्तं दुःखसंयोगवियोगं योगसंज्ञितं विद्यात्; दुःखशब्देन दुःखमिश्रितं वैषयिकं सुखमपि गृह्यते दुःखस्य संयोगेन संस्पर्शमात्रेणापि वियोगो यस्मिंस्तमवस्थाविशेषं योगसंज्ञितं योगशब्दवाच्यं जानीयात्, परमात्मनि चेतसस्य योजनं योगः यद्वा दुःखस्य संयोगेन वियोग एव शूरे कातरशब्दवद्विरुद्धलक्षणया योग उच्यते, कर्म्मणि तु योगशब्दस्तदुपायत्वादौपचारिक इति भावः यस्मादेवं महाफलो योगस्तस्मात् स एव यत्नतोऽभ्यसनीय इत्याह स इति सार्द्धेन । स योगो निश्चयेन शास्त्राचार्य्योपदेशजनितेन योक्तव्योऽभ्यसनीयः, यद्यपि शीघ्रं न सिध्यति तथाप्यनिर्विण्णेन निर्वेदरहितेन चेतसा योक्तव्यः, दुःखबुद्ध्या प्रयत्नशैथिल्यं निर्वेदः ॥ २३ ॥

**सङ्कल्पप्रभवान् कामांस्त्यक्त्वा सर्वानशेषतः ।**
**मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥ २४ ॥**

किञ्च संकल्पेति । संकल्पप्रभवान् संकल्पः प्रभवो येषां कामानां ते सङ्कल्पप्रभवाः कामास्तान् कामांस्त्यक्त्वा परित्यज्य सर्वानशेषतो निर्लेपेन किञ्च मनसैव विवेकयुक्तेन इन्द्रियग्राममिन्द्रियसमुदायं विनियम्य नियमनं कृत्वा समन्ततः समन्तात् ॥ २४ ॥

व्या० टी० । इतश्च योगस्य कर्त्तव्यत्वमिति प्रतिजानीते किञ्चेति । केन क्रमेण कर्त्तव्यत्वमित्यपेक्षायामाह संकल्पेति । सङ्कल्पः शोभनाध्यासः । सर्वानित्युक्त्वा पुनरशेषत इति पुनरुक्तिरित्याशङ्क्याह निर्लेपेनेति यथा शेषो न भवति तथा सर्वेषां कामानां शोभनाध्यासाधीनानां त्यागस्य योगानुष्ठानशेषत्वमद्विवेकयुक्तेन मनसा करणसमुदायस्य सर्वतो नियमनमपि तत्र शेषत्वेन कर्त्तव्यमित्याह किञ्चेति ॥ २४ ॥

व्या० टी०। किञ्च सङ्कल्पेति। सङ्कल्पात् प्रभवो येषां तान् योग-प्रतिकूलान् सर्वान् कामानशेषतः स वासनांस्त्यक्त्वा मनसैव विषयदोष-दर्शिना सर्वतः प्रसरन्तमिन्द्रियसमूहं विशेषेण नियम्य योक्तव्य इति पूर्वेणान्वयः॥ २४॥

**शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया।**
**आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत्॥२५॥**

शनैरिति। शनैः शनैः न सहसा उपरमेत् उपरतिं कुर्य्यात् कया बुद्ध्या किं विशिष्टया धृतिगृहीतया धृत्या धैर्य्येण गृहीतया धैर्य्येण युक्तयेत्यर्थः आत्मनि संस्थितं आत्मैव सर्वं न ततोऽन्यत् किञ्चिदस्तीत्येवमात्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् एष योगस्य परमो विधिः तच्चैवमात्मसंस्थं मनः कर्त्तुं प्रवृत्तो योगी॥ २५॥

व्या० टी०। कामत्यागद्वारेणेन्द्रियाणि प्रत्याहृत्य किं कुर्य्यादिति शङ्कितारं प्रत्याह शनैः शनैरिति। सहसा विषयेभ्यः सकाशादुपरमे मनसो न स्वास्थ्यं सम्भवतीत्यभिप्रेत्याह न सहसेति। तत्र साधनं धैर्य्ययुक्ता बुद्धिरित्याह कया इत्यादिना। भूम्यादीरव्याकृतपर्य्यन्ताः प्रकृतीरष्ट पूर्वत्र पूर्वत्र धारणां कृत्वोत्तरोत्तरक्रमेण प्रविलापयेदिति भावः। अव्यक्तमात्मनि प्रविलाप्य आत्ममात्रनिष्ठं मनो विधाय चिन्तयितव्या-भावादतिस्वस्थो भवेदित्याह आत्मेति। तत्र संस्थितिमेव मनसो विश-दयति आत्मैवेति। योगविधिमुपक्रम्य किमिदमुक्तमित्याशङ्क्याह एष इति। यन्मनसो नैश्चल्यमिति शेषः। ननु मनसः शब्दादिनिमित्तानु-रोधेन रागद्वेषवशादत्यन्तचञ्चलस्यास्थिरस्य तत्र तत्र स्वभावेन प्रवृत्तस्य कुतो नैश्चल्यं नैश्चिन्त्यञ्चेति तत्राह तत्रेति। योगप्रारम्भः सप्तम्यर्थः, एवंशब्देन मनसैवेत्यादिः उक्तप्रकारो गृह्यते॥ २५॥

व्या० टी०। यदि तु प्राक्तनकर्म्मसंस्कारेण मनो विषयेषु...

धारणया स्थिरीकुर्य्यादित्याह शनैरिति । धृतिधैर्य्यं तया गृहीतया यथोक्तया बुद्ध्या आत्मसंस्थमात्मन्येव सम्यक् स्थितं निश्चलं मनः कृत्वा उपरमेत् तत्तु शनैः शनैरभ्यासक्रमेण न तु सहसा उपरमस्वरूपमाह न किञ्चिदपि चिन्तयेत् निश्चले मनसि स्वयमेव प्रकाशमानपरमानन्दनिमग्नो भूत्वा आत्मध्यानादपि न निवर्त्तेत इत्यर्थः ॥ २५ ॥

**यतो यतो निश्चलति मनश्चञ्चलमस्थिरम् ।**
**ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥२६॥**

यत इति । यतो यतो यस्माद्यस्मान्निमित्ताच्छब्दादेर्निश्चलति निर्गच्छति स्वभावदोषान्मनश्चञ्चलमत्यर्थं चलमत एवास्थिरं ततस्ततस्तस्मात्तस्माच्छब्दादेर्निमित्तान्नियम्य तत्तन्निमित्तं याथात्म्यनिरूपणेनाभासीकृत्य वैराग्यभावनया चैतन्मन आत्मन्येव वशं नयेत् आत्मवश्यतामापादयेत् ॥ २६ ॥

आ० टी० । स्वाभाविको दोषो मिथ्याज्ञानाधीनो रागादिः शब्दादेर्मनसो नियमनं कथमित्याशङ्क्याह तत्तन्निमित्तमिति । याथात्म्यनिरूपणं क्षयिष्णुत्वदुःखसंमिश्रत्वाद्यालोचनं तेन तत्र तत्र वैराग्यभावनया तत्तदाभासीकृत्य ततस्ततो नियम्यैतन्मन इति सम्बन्धः ॥ २६ ॥

स्वा० टी० । एवमपि रजोगुणवशाद्यदि मनः प्रचलेत्तर्हि पुनः प्रत्याहारेण वशीकुर्य्यादित्याह यतो यत इति । स्वभावतश्चञ्चलं धार्य्यमाणमप्यस्थिरं मनो यं यं विषयं प्रति निर्गच्छति ततस्ततः प्रत्याहृत्य आत्मन्येव स्थिरं कुर्य्यात् ॥२६ ॥

**प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।**
**उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥२७॥**

एवं योगाभ्यासबलाद्योगिन आत्मन्येव प्रशाम्यति

मनः प्रशान्तेति। प्रशान्तमनसं प्रकर्षेण शान्तं मनो यस्य स प्रशान्तमनास्तं प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमं निरतिशयमुपैति उपगच्छति शान्तरजसं प्रक्षीणमोहादिक्लेशरजसमित्यर्थः, ब्रह्मभूतं जीवन्मुक्तं ब्रह्मैव सर्वं इत्येवं निश्चयवन्तं ब्रह्मभूतमकल्मषं धर्माधर्मादिवर्जितम् ॥ २७ ॥

श्रा॰ टी॰। मनसो वशीकरणेनोपशमे किं स्यादित्याह एवमिति। योगाभ्यासो विषयविवेकद्वारा मनोनिग्रहाद्याद्यर्थितः, प्रशान्तमात्मन्येव प्रलीनमिति यावत्, मनस्तद्वृत्त्योरभावे स्वरूपभूतसुखाविर्भावस्य स्वापादौ प्रसिद्धिं द्योतयितुं हिशब्दः। मोहादिक्लेशप्रतिबन्धाद्योगिनि यथोक्तसुखाप्राप्तिमाशङ्क्य मनोविलयमुपेत्य परिहरति प्रशान्तेति। तस्याज्ञानादिविलक्षणत्वमाह ब्रह्मभूतमिति। अज्ञानादेरपि सतो ब्रह्मभूतत्वेन तुल्यं जीवन्मुक्तत्वमित्याशङ्क्याह ब्रह्मैवेति। धर्माधर्मप्रतिबन्धादयुक्ता यथोक्तसुखप्राप्तिरित्याशङ्क्योक्तं अकल्मषमिति ॥२७॥

स्वा॰ टी॰। एवं प्रत्याहारादिभिः पुनः पुनर्मनो वशीकुर्वन्तं रजोगुणक्षये सति योगसुखं प्राप्नोतीत्याह प्रशान्तेति। एवमुक्तप्रकारेण शान्तं रजो यस्य तं अतएव प्रशान्तं मनो यस्य तमेमं निष्कल्मषं ब्रह्मत्वं प्राप्तं योगिनमुत्तमं सुखं समाधिसुखं स्वयमेवोपैति प्राप्नोति ॥ २७ ॥

**युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः।**
**सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥ २८ ॥**

युञ्जन्निति। युञ्जन्नेवं यथोक्तेन क्रमेण योगी योगान्तराय वर्जितः सदा सर्वदात्मानं युञ्जन् विगतकल्मषो विगतपापः सुखेनानायासेन ब्रह्मसंस्पर्शं ब्रह्मणा परेण संस्पर्शो यस्य तद्ब्रह्मसंस्पर्शं सुखमत्यन्तमुत्कृष्टं सुखं निरतिशयं सुखमश्नुते व्याप्नोति ॥ २८ ॥

व्या० टी०। उत्तमं सुखं योगिनो भवतीत्युक्तं तदेव स्फुटयति युञ्जन्निति। क्रमो यथोक्तो मनश्चेन्द्रियग्राममित्यादि योगान्तरायो रागद्वेषादि सदात्मानं युञ्जन्निति सम्बन्धः ॥ २८ ॥

स्वा० टी०। ततश्च कृतार्थो भवतीत्याह युञ्जन्निति। एवमनेन प्रकारेण सर्वदा आत्मानं मनो युञ्जन् वशीकुर्वन् विशेषेण सर्वात्मना विगतं कल्मषं यस्य स योगी सुखेनानायासेन ब्रह्मणः संस्पर्शोऽविद्यानिवर्त्तकः साक्षात्कारस्तदेवात्यन्तं सर्वोत्तमं सुखमश्नुते जीवन्मुक्तो भवतीत्यर्थः ॥ २८ ॥

**सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि।**
**ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ २९ ॥**

इदानीं योगस्य यत् फलं ब्रह्मैकत्वदर्शनं सर्वसंसारविच्छेदकारणं तत् प्रदर्श्यते सर्वेति। सर्वभूतस्थं सर्वेषु भूतेषु स्थितं स्वमात्मानं सर्वभूतानि चात्मनि ब्रह्मादीनि स्तम्बपर्य्यन्तानि च सर्वभूतान्यात्मन्येकतां गतानि ईक्षते पश्यति योगयुक्तात्मा समाहितान्तःकरणः सर्वत्र समदर्शनः सर्वेषु ब्रह्मादिस्थावरान्तेषु विषमेषु सर्वभूतेषु समं निर्विशेषं विक्रियारहितं ब्रह्मात्मैकत्वविषयं दर्शनं ज्ञानं यस्य स सर्वत्र समदर्शनः ॥ २९ ॥

व्या० टी०। पापपदमुपलक्षणं पुण्यस्यापि संस्पर्शस्तादात्म्यमेकरसं उत्कर्षो विषयासंस्पर्शो योगमनुतिष्ठतो ब्रह्मभूतस्य सर्वानर्थनिवृत्तिनिरतिशयसुखप्राप्तिलक्षणो द्विविधो मोक्षो हेतुना केन स्यादिति पृच्छन्तं प्रत्याह इदानीमिति। स्वमात्मानमीक्षत इति सम्बन्धः। सर्वभूतान्यपि तद्विशेषणत्वेन पश्यति चेत् शुद्धवस्तुज्ञानमिति नाविद्यानिवृत्तिरित्याशङ्क्याह सर्वभूतानीति। उक्ते दर्शने चित्तसमाधानमुपायं दर्शयति

योगेति । विषमेषूपाधिषु तदनुरोधाद्विषममेव दर्शनं उपदर्शितदर्शनप्रतिबन्धकं प्रत्युदस्यति सर्वत्रेति ॥ २९ ॥

व्या० टी० । ब्रह्मसाक्षात्कारमेव दर्शयति सर्वभूतस्थमिति । योगेनाभ्यस्यमानेन युक्तात्मा समाहितचित्तः सर्वत्र समं ब्रह्मैव पश्यतीति तथा स स्वमात्मानमविद्याकृतदेहादिपरिच्छेदशून्यं सर्वभूतेषु ब्रह्मादिस्थावरान्तेष्ववस्थितं पश्यति तानि च आत्मन्यभेदेन पश्यति ॥ २९ ॥

**यो मां पश्यति सर्वत्र सर्वञ्च मयि पश्यति ।**
**तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥३०॥**

एतस्यात्मैकत्वदर्शनस्य फलमुच्यते यो मामिति । यो मां पश्यति वासुदेवं सर्वस्यात्मानं सर्वत्र सर्वेषु भूतेषु पश्यति सर्वञ्च ब्रह्मादिभूतजातं मयि सर्वात्मनि पश्यति तस्यैवमात्मैकत्वदर्शिनः अहमीश्वरो न प्रणश्यामि न परोक्षतां गमिष्यामि स च मे न प्रणश्यति स च विद्वान् मे मम वासुदेवस्य न प्रणश्यति न परोक्षो भवति तस्य च मम चैकात्मकत्वात् स्वात्मा हि नामात्मनः प्रिय एव भवति ॥३०॥

व्या० टी० । उक्तस्यैकत्वज्ञानस्य फलविकल्पत्वशङ्कां शिथिलयति एतस्येति । तत्रैकत्वदर्शनमनुवदति यो मामिति । तत्फलमिदानीमुपन्यस्यति तस्येति । ज्ञानानुवादभागं विभजते यो मामिति । तत्फलोक्तिभागं व्याचष्टे तस्यैवमिति । अनेकत्वदर्शिनोऽपीश्वरो नित्यत्वान्न प्रणश्यतीत्याशङ्क्याह नेति । अहं परमानन्दो न तं प्रति परोक्षो भवामीत्यर्थः । स चेत्यादि व्याचष्टे विद्वानिति । विद्वानिवाविद्वानपीश्वरस्य न नश्यतीत्याशङ्क्योक्तं नेत्यादिना । अविदुषश्च स्वरूपेण सतोऽपि व्यवहितत्वादविद्यया नष्टप्रायतेत्यर्थः । ईश्वरस्य विदुषश्च परस्परमपरोक्षत्वे हेतुमाह तस्य चेति । आत्मैकत्वेऽपि कथं मिथोऽपरोक्षत्वं तत्राह स्वात्मेति ॥ ३० ॥

स्वा॰ टी॰ । एवंभूतात्मज्ञाने च सर्वभूतात्मतया मदुपासनं मुख्यं कारणमित्याह यो मामिति । मां परमेश्वरं सर्वत्र भूतमात्रे यः पश्यति सर्वं च प्राणिमात्रं मयि यः पश्यति तस्याहं न प्रणश्यामि अदृश्यो न भवामि स च ममादृश्यो न भवति प्रत्यक्षो भूत्वा कृपादृष्ट्या तं विलो-क्यानुगृह्णामीत्यर्थः ॥ ३० ॥

**सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।**
**सर्वथा वर्त्तमानोऽपि स योगी मयि वर्त्तते ॥३१॥**

यस्मादहमेव स सर्वात्मैकत्वदर्शी इत्येतत् पूर्वश्लोकार्थं सम्यग्दर्शनमनूद्य तत्फलं मोक्षोऽभिधीयते सर्वेति। सर्वथा सर्वप्रकारैर्वर्त्तमानोऽपि सम्यग्दर्शी योगी मयि वैष्णवे परमे पदे वर्त्तते नित्यमुक्त एव सः न मोक्षं प्रति केनचित् प्रतिबध्य इत्यर्थः ॥ ३१ ॥

व्या॰ टी॰ । विद्वदीश्वरयोरेकत्वानुवादेन विद्याफलं विवृणोति यस्मादिति । तस्मादेकत्वदर्शनार्थं प्रयतितव्यमिति शेषः । पूर्वार्द्धेनानूद्योत्तरार्द्धेन फलविधिरिति मत्वाह इत्येतदिति । रागादिरहितस्य यमनियमादिसंस्कारवतः स्वैरचेष्टत्वसम्भवेऽपि तामङ्गीकृत्य ज्ञानं स्तौति सर्वथेति । प्रतिभासतोऽपि यथेष्टचेष्टाङ्गीकारे कुतो ज्ञानवतो नित्यमुक्तत्वं प्रातीतिकदुराचारप्रतिबन्धादित्याशङ्क्याह न मोक्ष-मिति ॥ २१ ॥

स्वा॰ टी॰ । न चैवं भूतो विधिकिङ्करः स्यादित्याह सर्वभूतस्थित-मिति । सर्वभूतेषु स्थितं मामभेदमास्थित आश्रितो यो भजति स योगी ज्ञानी सन् सर्वथा कर्मपरित्यागेनापि वर्त्तमानो मय्येव वर्त्तते मुच्यते न तु भ्रश्यतीत्यर्थः ॥ २१ ॥

**आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।**
**सुखं वा यदि वा दुःखं स योगी परमो मतः ॥३२॥**

किञ्चान्यत् आत्मेति। आत्मौपम्येन आत्मा स्वयमेव उपमीयत इति उपमा तस्याः उपमायाः भाव औपम्यं तेन आत्मौपम्येन सर्वत्र सर्वभूतेषु समं तुल्यं पश्यति योऽर्जुन! स च किं समं पश्यतीत्युच्यते यथा मम सुख-मिष्टं तथा सर्वप्राणिनां सुखमनुकूलं वा शब्दश्चार्थे यदि वा यच्च दुःखं मम प्रतिकूलमनिष्टं यथा तथा सर्वप्राणिनां दुःखमनिष्टं प्रतिकूलमित्येवम् आत्मौपम्येन सुखदुःखे अनु-कूलप्रतिकूले तुल्यतया सर्वभूतेषु समं पश्यति न कस्यचित् प्रतिकूलमाचरत्यहिंसक इत्यर्थः, य एवमहिंसकः सम्यग्-दर्शननिष्ठः स योगी परम उत्कृष्टो मतोऽभिप्रेतः सर्व-योगिनां मध्ये ॥ ३२ ॥

आ० टी०। स्वैराचरणस्याप्रतिबन्धकत्वकथनात् परपीडनस्य योगिनः सम्यग्दर्शनं प्रत्यप्रतिबन्धकत्वप्रसक्तावुक्तं किञ्चेति। अन्यदपि किञ्चिदुच्यते, परमयोगिनो निर्देशद्वारा योगमाहात्म्यमित्यर्थः। उप-मैवौपम्यमात्मा च तदौपम्यञ्च तेन सर्वभूतेषु यः समं पश्यतीत्युक्तं तदेव समदर्शनं प्रश्नपूर्वकं विवृणोति किमित्यादिना। विकल्पार्थत्वं वारयति वाशब्द इति। उपदर्शितसमदर्शनफलमभिलपति न कस्यचिदिति। किमपेक्षया तस्य परमत्वं तत्राह सर्वेति ॥ ३२ ॥

श्रा० टी०। एवञ्च मां भजतां योगिनां मध्ये सर्वभूतानुकम्पी श्रेष्ठ इत्याह आत्मौपम्येनेति। आत्मौपम्येन स्वसादृश्येन यथा मम सुखं प्रियं दुःखञ्चाप्रियं तथान्येषामपीति सर्वत्र समं पश्यन् सुखमेव सर्वेषां यो वाञ्छति न तु कस्यापि दुःखं स योगी श्रेष्ठो ममाभिमत इत्यर्थः ॥ ३२ ॥

अर्जुन उवाच।

योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन।

**एतस्याहं न पश्यामि चञ्चलत्वात् स्थितिं स्थिराम् ३३**

एतस्य यथोक्तस्य सम्यग्दर्शनलक्षणस्य योगस्य दुःसम्पाद्यतामालक्ष्य शुश्रूषुः ध्रुवं तत्प्राप्त्युपायमर्जुन उवाच योऽयमिति । योऽयं योगस्त्वया प्रोक्तः साम्येन समत्वेन हे मधुसूदन ! एतस्य योगस्याहं न पश्यामि नोपलभे चञ्चलत्वान्मनसः किं स्थिरामचलां स्थितिं प्रसिद्धमेतत् ॥ ३३ ॥

आ॰ टी॰ । मनश्चञ्चलमस्थिरमित्युपश्रुत्य निर्विशेषे चित्तस्थैर्यं दुःशकमिति मन्वानस्तदुपायबुभुत्सया पृच्छतीति प्रश्नमुत्थापयति एतस्येति । तत्प्राप्त्युपायं शुश्रूषुरिति मन्वानः मनश्चञ्चलत्वेऽपि तन्निग्रहद्वारा योगस्थैर्यं सम्पाद्यतामित्याशङ्क्याह एतस्येति । प्रसिद्धमिति सम्बन्धः ॥ ३३ ॥

स्वा॰ टी॰ । उक्तलक्षणस्य योगस्यासम्भवं मन्वानोऽर्जुन उवाच योऽयमिति । साम्येन मनसो लयविक्षेपशून्यतया केवलात्माकारावस्थानेन योऽयं योगस्त्वया प्रोक्त एतस्य योगस्य स्थिरां दीर्घकालां स्थितिं न पश्यामि मनसश्चञ्चलत्वात् ॥ ३३ ॥

**चञ्चलं हि मनः कृष्ण ! प्रमाथि बलवद्दृढम् ।**
**तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥३४॥**

चञ्चलमिति । चञ्चलं हि मनः कृष्ण इति कृषतेर्विलेखनार्थस्य रूपं भक्तजनपापादिदोषाकर्षणात् कृष्ण, हि यस्मान्मनः चञ्चलं न केवलमत्यर्थं चञ्चलं प्रमाथि च प्रमथनशीलं प्रमथ्नाति शरीरमिन्द्रियाणि च विक्षिपति परवशीकरोति किञ्च बलवत् प्रबलं न केनचिन्नियन्तुं शक्यं दुर्निवारत्वात् किञ्च दृढं तन्तुनागवदच्छेद्यं तस्यैवंभूतस्य मनसोऽहं निग्रहं रोधं मन्ये वायोरिव यथा वायोर्दुष्करो निग्रहस्ततोऽपि मनसो दुष्करं मन्य इत्यभिप्रायः ॥ ३४ ॥

आ॰ टी॰ । मनसश्चञ्चलत्वेऽपि तस्य परिनिष्पत्तिप्रकारं सूचयति तस्य इतीति । कथं कर्षकत्वमाग्रकामस्य मनसः सञ्चयतीत्याशङ्क्याह भक्तेति । ऐहिकामुष्मिकसर्वसम्पदामाकर्षणशीलत्वात्कृष्णेति कृष्णम् । प्रमथ्नाति क्षोभयति । तदेव क्षोभकत्वं प्रकटयति विक्षिपतीति । दुर्निवारत्वमभिप्रेताद्विषयादाक्रष्टुमशक्यत्वं विशेषणान्तरमाह किञ्चेति । अच्छेद्यत्वं विशेषणान्तरमाह किञ्च दृढमिति । तन्तुनागोवरुणपाशपरिवृतो जलचारी पदार्थोऽत्यन्तदृढतया छेत्तुमशक्यत्वेन प्रसिद्धो विवक्षितः । वायोरित्युक्तं व्यनक्ति यथेति ॥ ३४ ॥

स्वा॰ टी॰ । एतत् स्फुटयति चञ्चलमिति । चञ्चलं स्वभावेनैव चपलं किञ्च प्रमाथि प्रमथनशीलं देहेन्द्रियक्षोभकरमित्यर्थः, किञ्च बलवद्विचारेणापि जेतुमशक्यं किञ्च दृढं विषयवासनानुबन्धतया दुर्भेद्यं अतो यथाकाशे दोधूयमानस्य वायोः कुम्भादिषु निरोधनमशक्यं तथाहं तस्य मनसो निग्रहं निरोधं सुदुष्करं सर्वथा कर्त्तुमशक्यं मन्ये ॥ ३४ ॥

## श्रीभगवानुवाच ।

**असंशयं महाबाहो ! मनो दुर्निग्रहं चलम् ।**
**अभ्यासेन तु कौन्तेय ! वैराग्येण च गृह्यते॥३५॥**

श्रीभगवानुवाच एवमेतद् यथा ब्रवीषि असंशयं नास्ति संशयो मनोदुर्निग्रहं चञ्चलमित्यत्र हे महाबाहो ! किन्तु अभ्यासेन तु अभ्यासो नाम चित्तभूमौ कस्याञ्चित् समानप्रत्ययावृत्तिश्चित्तस्य वैराग्येन च गृह्यते वैराग्यं नाम दृष्टादृष्टेषु भोगेषु दोषदर्शनाभ्यासात् वैतृष्ण्यं विषयेषु वितृष्णां वैराग्यं तेन च वैराग्येण गृह्यते, विक्षेपरूपः प्रचारश्चित्तस्यैवं तन्मनो गृह्यते निगृह्यते निरुध्यत इत्यर्थः ॥ ३५ ॥

आ॰ टी॰ । मनोनिग्रहस्य प्रतिपन्नमशक्यत्वमापत्ति श्रीभगवानिति ।

कृत संशयराहित्यं तत्राह मन इति । कथं तर्हि मनोनिरोधो भवति तत्राह किन्त्विति । अभ्यासस्वरूपं सामान्येन निर्दिशति अभ्यासो नामेति । कस्याञ्चिच्चित्तभूमाविति विशेषितोऽध्येयो विषयो निर्दिश्यते, समानप्रत्ययावृत्तिर्विजातीयप्रत्ययानन्तरितेति शेषः, चित्तस्येति षष्ठीप्रत्ययस्य तद्विकारत्वद्योतनार्थम् । वैराग्यस्वरूपं निरूपयति वैराग्यमिति । तेषु वैतृष्ण्यं वैराग्यं नामेति सम्बन्धः । तत्र हेतुं सूचयति दोषेति । विषयेषु वितृष्णा विषयेषु दोषदर्शनमभ्यस्यते तेन वैतृष्ण्यं जायते तेन निगृह्यमाणम् । निगृह्यमाणं निर्दिशति विक्षेपेति । तस्मिन् गृहीते निरुद्धे मनोनिरोधेऽस्य किं स्यादित्यपेक्षायामाह एवमिति । अभ्यासहेतुकवैराग्यद्वारा चित्तप्रचारनिरोधे निरुद्धवृत्तिकं मनोविषयविमुखमन्तर्निष्ठं भवतीत्यर्थः ॥ ३५ ॥

स्वा० टी० । तदुक्तं चञ्चलादिकमङ्गीकृत्यैव मनो निग्रहोपायं श्रीभगवानुवाच असंशयमिति । चञ्चलत्वादिना मनो निरोद्धुमशक्यमिति यद्वदसि एतन्निःसंशयमेव तथापि तु अभ्यासेन परमात्माकारया वृत्त्या विषयवैतृष्ण्येन च गृह्यते, अभ्यासेन लयप्रतिबन्धाद्वैराग्येण च विक्षेपप्रतिबन्धादुपरतवृत्तिकं सत् परमात्माकारेण परिणत तिष्ठतीत्यर्थः, तदुक्तं योगशास्त्रे, मनसो वृत्तिशून्यस्य ब्रह्माकारतया स्थितिः । या संप्रज्ञातनामासौ समाधिरभिधीयत इति ॥ ३५ ॥

**असंयतात्मना योगो दुष्प्राप इति मे मतिः ।**
**वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥३६॥**

यः पुनरसंयतात्मा तेन असंयतेति । असंयतात्मना अभ्यासवैराग्याभ्यां असंयत आत्मा अन्तःकरणं यस्य सोऽयमसंयतात्मा तेनासंयतात्मना योगो दुष्प्रापो दुष्प्राप्य इति मे मतिः यस्तु पुनर्वश्यात्मा अभ्यासवैराग्याभ्यां वश्यत्वमापादित आत्मा मनो यस्य सोऽयं वश्यात्मा तेन वश्या-

त्मना तु यतता भूयोऽपि प्रयत्नं कुर्वता शक्यो वाप्तुं योग उपायतो यथोक्तादुपायात् ॥ ३६ ॥

श्रा० टी० । संयतात्मनो योगप्राप्तिः सुलभेत्युक्त्वा व्यतिरेकं दर्शयति यः पुनरिति । व्यतिरेकोपन्यासपरं पूर्वार्द्धमनूद्य व्याकरोति असंयतेति । पूर्वोक्तान्वयव्याख्यानपरमुत्तरार्द्धं व्याचष्टे यस्त्वित्यादिना । अन्तःकरणस्य स्ववशत्वे सिद्धेऽपि वैराग्यादावास्थावता भवितव्यमित्याह यततेति । उपायो वैराग्यादिपूर्वको मनोनिरोधः ॥ ३६ ॥

स्वा० टी० । एतावांस्तिह निश्चय इत्याह असंयतेति । उक्तप्रकारेणाभ्यासवैराग्याभ्यामसंयत आत्मा चित्तं यस्य तेन योगो दुष्प्रापः प्राप्तुमशक्यः अभ्यासवैराग्याभ्यां वश्यो वशवर्त्ती आत्मा चित्तं यस्य तेन पुरुषेण पुनस्तानेनैवोपायेन प्रयत्नं कुर्वता योगः प्राप्तुं शक्यः ॥ ३६ ॥

## अर्जुन उवाच ।

**अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ।**
**अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति॥३७**

तत्र योगाभ्यासाङ्गीकरणेन परलोकेहलोकप्राप्तिनिमित्तानि कर्माणि संन्यस्तानि योगसिद्धिफलञ्च मोक्षसाधनं सम्यग्दर्शनं न प्राप्तमिति योगी योगमार्गान्मरणकाले चलितचित्त इति तस्य नाशमाशङ्क्यार्जुन उवाच अयतिरिति । अयतिरप्रयत्नवान् योगमार्गे श्रद्धयास्तिक्यबुद्ध्या योगतो योगादन्तकालेऽपि चलितं मानसं मनो यस्य स चलितमानसो भ्रष्टस्मृतिः सोऽप्राप्य योगसंसिद्धिं योगफलं सम्यग्दर्शनं कां गतिं हे कृष्ण ! गच्छति ॥ ३७ ॥

श्रा० टी० । प्रश्नान्तरमुत्थापयति तत्रेत्यादिना । मनोनिरोधस्य दुःखसाध्यत्वमाशङ्क्य परिहृते सति प्रश्नं पुनरवकाशं प्रतिलभ्योवाचेति

सम्बन्धः । लोकद्वयप्रापककर्मसंन्यासे कुतो योगिनो नाशाशङ्केत्याशङ्क्याह योगाभ्यासेति । तथापि योगानुष्ठानपरिपाकपरिप्राप्तसम्यग्दर्शनसामर्थ्या-न्मोक्षोपपत्तौ कुतस्तस्य नाशाशङ्केति चेन्मैवमनेकान्तरायवत्त्वाद्योगस्येह जन्मनि प्रायेण संसिद्धेरसिद्धिरित्यभिसन्धायाह योगसिद्धीति । अभ्युदय-निःश्रेयसयोर्भावो नाशो योगमार्गे तत्फलस्य सम्यग्दर्शनस्यादर्शना-दिति शेषः । तर्हि ततो वहिर्मुखत्वमेवात्यन्तिकं संवृत्तमित्याशङ्क्याह श्रद्धयेति । तर्हि योगमार्गमाश्रयते नेत्याह योगादिति । मरणकाले व्याकुलेन्द्रियस्य ज्ञानसाधनानुष्ठानावकाशाभावाद्युक्तं ततश्चलितमानसत्व-मित्याशङ्क्याह भ्रष्टेति । गम्यत इति गतिः पुरुषार्थः, सामान्यप्रश्नमन्त-र्भाव्य विशेषप्रश्नो द्रष्टव्यः ॥ ३७ ॥

श्री० टी० । अभ्यासवैराग्याभावेन कथञ्चिदप्राप्तसम्यग्ज्ञानः किं फलं प्राप्नोतीत्यर्जुन उवाच अयतिरिति । प्रथमं श्रद्धयोपेत एव योगे प्रवृत्तो न तु मिथ्याचारतया ततः परन्त्वयतिः सम्यक् न यतते शिथिला-भ्यास इत्यर्थः तथा योगाच्चलितं मानसं विषयप्रवणं चित्तं यस्य मन्द-वैराग्य इत्यर्थः एवमभ्यासवैराग्यशैथिल्याद्योगस्य संसिद्धिं फलं ज्ञान-मप्राप्य कां गतिं प्राप्नोति ॥ ३७ ॥

**कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।**
**अप्रतिष्ठो महाबाहो ! विमूढो ब्रह्मणः पथि॥३८॥**

कच्चिदिति । कच्चित् किं नोभयविभ्रष्टः कर्ममार्गात् योगमार्गाच्च विभ्रष्टः सन् छिन्नाभ्रमिव नश्यति किं वा न नश्यति अप्रतिष्ठो निराश्रयो हे महाबाहो ! विमूढः सन् ब्रह्मप्राप्तिमार्गे ॥ ३८ ॥

आ० टी० । प्रश्नमेव विवृणोति कच्चिदिति । प्रश्नप्रश्नार्थत्वं कच्चिदित्यस्याङ्गीकृत्य व्याचष्टे किमिति । उभयविभ्रष्टत्वं स्फुटयति कर्मेत्यादिना । वायुना छिन्नं पिण्डीभूतमभ्रं यथा नश्यति तद्वदित्याह छिन्नेति । नाशाशङ्कानिमित्तमाह निराश्रय इति । कर्ममार्गरूपाव-

स्वर्गाभावेऽपि ज्ञानमार्गोऽवस्थस्य भविष्यतीत्याशङ्क्याह विमूढः पथीति । न हि कर्मिणां प्रतीयमानस्य मुक्ताभिलाषं त्यक्त्वेश्वरे समर्प्यो-यात् कर्मानुतिष्ठतो निरुपचारेण तदुक्तं ग्रवचनाश्रयात् सर्वकर्मसन्न्या-सिनस्तु विहितानां त्यागात् ज्ञानोपायाञ्चाविच्छु तेरवर्थप्राप्तिशङ्कायुक्तेति भावः ॥ ३८ ॥

स्वा० टी० । प्रश्नाभिप्रायं विवृणोति कच्चिदिति । कर्मणामीश्वरे-ऽर्पितत्वादननुष्ठानाच्च तावत् कर्मफलं स्वर्गादिकं न प्राप्नोति योगानिष्प-त्तेश्च मोक्षं न प्राप्नोति एवमुभयस्मादुभ्रष्टः अप्रतिष्ठो निराश्रयः अतएव ब्रह्मप्राप्त्युपाये पथि मार्गे विमूढः सन् कच्चित् किं न नश्यति किं वा नश्यतीत्यर्थः, नाशे दृष्टान्तः यथा छिन्नमभ्रं पूर्वस्मादभ्राद्विश्लिष्टमभ्रा-न्तरमप्राप्तं सन्मध्य एव विलीयते तद्वदित्यर्थः ॥ ३८ ॥

**एतन्मे संशयं कृष्ण ! छेत्तुमर्हस्यशेषतः ।**
**त्वदन्यः संशयस्यास्य छेत्ता न ह्युपपद्यते ॥३९॥**

एतदिति । एतन्मे मम संशयं कृष्ण ! छेत्तुमपनेतुम-र्हसि अशेषतः त्वदन्यः त्वत्तोऽन्यः ऋषिर्देवो वा छेत्ता नाशयिता संशयस्यास्य न हि यस्मादुपपद्यते न सम्भवति अतस्त्वमेव छेत्तुमर्हसीत्यर्थः ॥ ३९ ॥

व्या० टी० । यथोपदर्शितसंशयापाकरणार्थमर्जुनो भगवन्तं प्रेरयन्नाह एतदिति । मत्तोऽन्यः कश्चिदृषिर्वा देवो वा त्वदीयं संशयं छेत्स्यतीत्याशङ्क्याह त्वदन्य इति । अन्यस्य संशयच्छेत्तुरभावे फलितमाह अत इति ॥ ३९ ॥

स्वा० टी० । त्वयैव सर्वज्ञेनायं मम सन्देहो निरसनीयः त्वत्तो-ऽन्यस्तु एतत्सन्देहनिवर्त्तको नास्तीत्याह एतदिति । एतत् एतं छेत्ता निवर्त्तकः स्पष्टमन्यत् ॥ ३९ ॥

**श्रीभगवानुवाच ।**

**पार्थ ! नैवेह नामुत्र विनाशस्तस्य विद्यते ।**

**न हि कल्याणकृत् कश्चिद् दुर्गतिं तात ! गच्छति ४०**

पार्थेति । हे पार्थ ! नैव इह लोके नामुत्र परस्मिन् वा लोके विनाशस्तस्य विद्यते नास्ति नाशो नाम पूर्वस्मात् हीनजन्मप्राप्तिः स तस्य योगभ्रष्टस्य नास्ति, न हि यस्मात् कारणात् कल्याणकृत् शुभकृत् कश्चिद्दुर्गतिं कुत्सितां गतिं हे तात ! तनोत्यात्मानं पुत्त्ररूपेणेति पिता तात उच्यते पितैव पुत्त्र इति पुत्त्रोऽपि तात उच्यते शिष्योऽपि पुत्त्रतुल्य उच्यते, यतो न गच्छति ॥ ४० ॥

व्या० टी० । योगिनो नाशाशङ्कां परिहरन्नुत्तरमाह भगवानिति । यदुक्तमुभयभ्रष्टो योगी नश्यतीति तत्राह पार्थेति । तत्र हेतुमाह न हीति । योगिनो मार्गद्वयाद्भ्रष्टस्यैहिको नाशः शिष्टगर्हणीयत्वं च भवतीति श्रद्धादेः सद्भावात्तथापि कथमामुष्मिकनाशमुक्तत्वा... तद्रूपनिरूपणपूर्वकं तदभावं प्रतिजानीते नाशो नामेति । तत्र हेतुं विभजते न हीत्यादिना । उभयभ्रष्टस्यापि श्रद्धेन्द्रियसंयमादेः सात्त्विकत्वाच्छ्रवणादेश्च भागादुपपन्नं शुभकृत्त्वम् । तातेति कथं पुत्त्रस्थानीयः शिष्यः सम्बोध्यते पितुरेव तातशब्दत्वादित्याशङ्क्याह तनोतीति । तेन पुत्त्रस्थानीयस्य शिष्यस्य तातेति सम्बोधनमविरुद्धमित्यर्थः । न गच्छति कुत्सितां गतिं कल्याणकरत्वादिति नाशाभावः ॥ ४० ॥

व्या० टी० । तत्रोत्तरं श्रीभगवानुवाच पार्थेति सार्द्धैस्त्रिभिः । इह लोके नाश उभयभ्रंशात् पातित्यं अमुत्र परलोके नाशो नरकप्राप्तिस्तदुभयं तस्य नास्त्येव यतः कल्याणकृत् शुभकारी कश्चिदपि दुर्गतिं न गच्छति अयञ्च शुभकारी श्रद्धया योगे प्रवृत्तत्वात्, तातेति लोकरीत्या उपलालयन् सम्बोधयति ॥ ४० ॥

**प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः ।**
**शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥४१॥**

• किमसौ भवति प्राप्येति । योगमार्गेषु प्रवृत्तः सन्यासी सामर्थ्यात् प्राप्य गत्वा पुण्यकृतामश्वमेधादियाजिनां लोकांस्तत्र च उषित्वा वासमनुभूय शाश्वतीर्नित्याः समाः संवत्सरान् तद्भोगक्षये शुचीनां यथोक्तकारिणां श्रीमतां विभूतिमतां गेहे गृहे योगभ्रष्टोऽभिजायते ॥ ४१ ॥

व्या०टी० । योगभ्रष्टस्य लोकद्वयेऽपि नाशाभावे किं भवतीति पृच्छति किं त्विति । तत्र श्लोकेनोत्तरमाह प्राप्येति । कथं सन्न्यासीति विशेष्यते तत्राह सामर्थ्यादिति । कर्मणि व्यापृतस्य कर्मिणो योगमार्गप्रवृत्त्यनुपपत्तिस्तत्प्रवृत्तावपि फलाभिलाषविकलस्येश्वरे समर्पितसर्वकर्मणस्तद्भ्रंशाशङ्कानवकाशादित्यर्थः समानां नित्यत्वं नानुपलम्भाविलक्षणत्वं, वैराग्याभावविवक्षया वि.तिमतां गृहे जन्मेति विशिष्यते ॥ ४१ ॥

स्वा० टी० । तर्हि किमसौ प्राप्नोतीत्यपेक्षायामाह प्राप्येति । पुण्यकारिणामश्वमेधादियाजिनां लोकान् प्राप्य तत्र शाश्वतीः समा बहून् संवत्सरानुषित्वा वाससुखमनुभूय शुचीनां सदाचाराणां श्रीमतां धनिनां गेहे स योगभ्रष्टो जन्म प्राप्नोति ॥ ४१ ॥

अथवा योगिनामेव कुले भवति धीमताम् ।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥ ४२ ॥

तथेति । अथवा श्रीमतां कुलादन्यस्मिन् योगिनामेव दरिद्राणां कुले भवति जायते धीमतां बुद्धिमतां एतद्धि जन्म यद्दरिद्राणां योगिनां कुले दुर्लभतरं दुःखेन लभ्यतरं पूर्वमपेक्ष्य लोके जन्म यदीदृशं यथोक्तविशेषणे कुले यस्मात् ॥ ४२ ॥

व्या० टी० । मन्दवैराग्यादिविषयत्वाभिधानं पश्चान्तरमाह अथवेति । योगिनामिति कर्मिणां मध्ये नाभूदिति विशिनष्टि धीमतामिति । ब्रह्मविद्यावतां शुचीनां दरिद्राणां कुले जन्म दुर्लभं प्रमादकार-

निषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे विज्ञान-
योगो नाम सप्तमो-
ऽध्यायः।

साधीति। साधिभूताधिदैवं अधिभूतं चाधिदैवञ्च अधिभूताधिदैवं तेन सह अधिभूताधिदैवेन वर्त्तते इति साधिभूताधिदैवं मां ये विदुः साधियज्ञञ्च सह अधियज्ञेन साधियज्ञं ये विदुः प्रयाणकाले मरणकालेऽपि च ते मां विदुः युक्तचेतसः समाहितचित्ता इति ॥ ३० ॥

इति श्रीभगवद्गीताभाष्ये सप्तमोऽध्यायः।

श्रा० टी०। न केवलं भगवन्निष्ठानां सर्व्वाध्यात्मककर्म्मात्मकब्रह्मविच्चमेव किन्त्वधिभूतादिसहितं तद्वेदित्वमपि सिद्ध्यतीत्याह साधिभूतेति। अध्यात्मं कर्म्माधिभूतमधिदैवमधियज्ञश्चेति पञ्चकं कर्म तद्ब्रह्म ये विदुस्तेषां यथोक्तज्ञानवतां समाहितचेतसामापदवस्थायामपि भगवत्तत्त्वज्ञानमप्रतिहतं तिष्ठतीत्याह प्रयाणेति। अपिचेति निपाताभ्यां तस्यामवस्थायां करणग्रामस्य व्यग्रतया ज्ञानासम्भवेऽपि मयि समाहितचित्तानामुक्तज्ञानवतां भगवत्तत्त्वज्ञानमयत्नलभ्यमिति द्योत्यते तदनेन सप्तमेनोत्तममधिकारिणं प्रतिज्ञेयं निरूपयता तदर्थमेव सर्व्वात्मकत्वादिकमुपदिशता प्रकृतिद्वयद्वारेण सर्व्वकारणत्वादिति च वदता तत्पदवाच्यं तत्त्वमस्त्रीमेधितम् ॥ ३० ॥

इति सप्तमोऽध्यायः।

स्वा० टी०। न चैवंभूतानां योगभ्रंशशङ्कापीत्याह साधिभूतेति। अधिभूतादिशब्दानामर्थं श्रीभगवानेवोत्तराध्याये व्याख्यास्यति, अधिभूतेनाधिदैवेन च सह अधियज्ञेन च सह मां ये जानन्ति ते युक्तचेतसो

मय्यासक्तमनसः प्रयाणकालेऽपि मरणसमयेऽपि मां विदुर्जानन्ति न तु तदापि व्याकुलीभूय मां विस्मरन्ति अतो मद्भक्तानां न योगभ्रंशः स्यादिति भावः। कथ्यभक्त्यैव यत्नेन ब्रह्मज्ञानमवाप्यते। इति विज्ञानयोगाख्ये सप्तमे सम्प्रकाशितम्॥ ३०॥

इति सप्तमोऽध्यायः।

---

# अष्टमोऽध्यायः।

---

## अर्जुन उवाच।

**किन्तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम॥**
**अधिभूतञ्च किं प्रोक्तमधिदैवं किमुच्यते॥ १॥**

ते ब्रह्म तद्विदुः कृत्स्नमित्यादिना भगवतार्जुनस्य प्रश्नबीजानि उपदिष्टानि अतस्तत्प्रश्नार्थं अर्जुन उवाच।

व्या० टी०। सप्तमाध्यायान्ते येषामन्तगतं पापमित्यादिना येषां ब्रह्मादीनामनुसन्धानमुक्तं यच्च प्रयाणकाले भगवतः स्मरणं दर्शितं तदिदं जिज्ञासमानः सन् पृच्छतीति प्रश्नसमुदायमवतारयति ते ब्रह्मेति। प्रश्नबीजानि तद्विषयभूतानि ब्रह्मादीनि वस्तूनीति यावत्। बुभुत्सित-विषयप्रतिलम्भानन्तरं तेषां प्रश्नद्वारा निर्णयार्थमाह अत इति। यदुक्तं ते ब्रह्म तद्विदुरिति तत् किं सोपाधिकं निरुपाधिकं वा ब्रह्मशब्दस्यो-भयत्रापि सम्भवादिति मत्वाह किं तदिति। यच्चोक्तं कृत्स्नमध्यात्म-मिति तत्रात्मानं देहमधिकृत्य तस्मिन्नधिष्ठाने तिष्ठतीत्यध्यात्मशब्देन श्रोत्रादिकरणग्रामो वा प्रत्यग्भूतं ब्रह्मैव वा विवक्षितमित्याह किम-

ध्यात्ममिति। विज्ञानं यज्ञं तनुते कर्म्माणि तनुतेऽपि चेति श्रुतौ कर्मणो हेतुत्वनिर्द्धारणात् कर्म चाखिलमित्यत्र को न कर्म गृहीतमिति पृच्छति किमिति। चराचराभ्यां कार्य्यकारणाभ्यां कर्त्तारमस्य भगवतो न किञ्चिदन्यदस्तीति भवति रक्षोकमिति। साधिभूताधिदैवमित्यत्राधिभूतशब्देन पृथिव्यादिषु भूतेषु वर्त्तमानं किञ्चिदेव गृह्यते किं वा समस्तमेव कार्य्यमिति निर्द्धारयिषया पृच्छति अधिभूतमिति। अधिदैवमिति च दैवतविषयमनुध्यानं वा दैवतादित्यमण्डलादिषु वर्त्तमानं चैतन्यं वा किंच तदिति प्रश्नान्तरं प्रस्तौति अधिदैवमिति ॥ १ ॥

स्वा० टी०। ब्रह्मकर्माधिभूतादिविदः कृष्णैकचेतसः। इत्युक्तं ब्रह्मकर्मादि स्पष्टमष्टम उच्यते। पूर्वाध्यायान्ते भगवतोपक्षिप्तानां ब्रह्माध्यात्मादिसप्तपदार्थानां तत्त्वं जिज्ञासुरर्जुन उवाच किं तद्ब्रह्मेति द्वाभ्याम्। स्पष्टोऽर्थः ॥ १ ॥

**अधियज्ञः कथं कोऽत्र देहेऽस्मिन् मधुसूदन।**
**प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः॥२॥**

आ० टी०। साधियज्ञञ्चेत्यत्राधियज्ञशब्देन यज्ञमधिगतो विज्ञानात्मा वा परदेवता वेति प्रश्नान्तरं प्रतिकरोति अधियज्ञ इति। स च कथं केन प्रकारेण ब्रह्मत्वेन चिन्तनीयः किं तादात्म्येन किं वात्यन्ताभेदेनेत्याह कथमिति। सर्वथापि स किमस्मिन् देहे वर्त्तते ततो वहिर्वा, देहे चेत् स कोऽत्र बुद्ध्यादिस्तद्व्यतिरिक्तो वेति जिज्ञासया ब्रूते कोऽत्रेति। अधियज्ञः कथं कोऽत्रेति न प्रश्नभेदकः कथमिति किन्तु प्रकारभेदविवक्षयेति द्रष्टव्यम्। यत्तु समाहितचित्तानामुत्क्रमणकालेऽपि भगवदनुसन्धानं सिध्यतीति तदयुक्तमुत्क्रमणदशायां करणग्रामवैयग्र्याच्चित्तसमाधानानुपपत्तिरित्यभिप्रेत्याह प्रयाणेति ॥ २ ॥

स्वा० टी०। किञ्च अधियज्ञ इति। अत्र देहे यो यज्ञो वर्त्तते तस्मिन् कोऽधियज्ञोऽधिष्ठाता प्रयोजकः फलदाता च क इत्यर्थः, स्वरूपं पृष्ट्वाधिष्ठानप्रकारं पृच्छति कथं केन प्रकारेण असावस्मिन् देहे स्थितः

यज्ञमधितिष्ठतीत्यर्थः, यज्ञग्रहणं सर्वकर्मणामुपलक्षणार्थं, अन्तकाले च नियतचित्तैः पुरुषैः कथं केनोपायेन ज्ञेयोऽसि ॥ २ ॥

श्रीभगवानुवाच।

**अक्षरं परमं ब्रह्म स्वभावोऽध्यात्ममुच्यते।**
**भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ ३ ॥**

एषां प्रश्नानां यथाक्रमं निर्णयाय अक्षरमिति। अक्षरं न क्षरतीति परमात्मा एतस्य वा अक्षरस्य प्रशासने गार्गीति श्रुतेः ओंकारस्य चोमित्येकाक्षरं ब्रह्मेति परेण विशेषणात्तद्ग्रहणं परममिति च निरतिशये ब्रह्मण्यक्षरे उपपन्नतरं विशेषणं तस्यैव परस्य ब्रह्मणः प्रतिदेहं प्रत्यगात्मभावः स्वभाव इति स्वो भावः स्वभावोऽध्यात्मं उच्यते आत्मानं देहमधिकृत्य प्रत्यगात्मतया प्रवृत्तं परमार्थब्रह्मावसानं वस्तुस्वभावोऽध्यात्ममुच्यते आध्यात्मशब्देनाभिधीयते भूतभावोद्भवकरः भूतानां भावो भूतभावस्तस्योद्भवो भूतभावोद्भवस्तं करोतीति भूतभावोद्भवकरो भूतवस्तूत्पत्तिकर इत्यर्थः विसर्गो विसर्जनं देवतोद्देशेन चरुपुरोडाशादेः स्वस्य द्रव्यस्य वितरणं परित्यागः स एष विसर्गलक्षणो यज्ञः कर्मसंज्ञितः कर्मशब्दित इत्यर्थः इत्येतस्माद्बीजभूतात् वृष्ट्यादिक्रमेण स्थावरजङ्गमानि भूतानि उद्भवन्ति ॥ ३ ॥

का० टी०। व्याख्यातप्रश्नसप्तकस्य प्रतिवचनं भगवतमवतारयति एषामिति। क्रमेण कृतानां प्रश्नानां क्रमेणैव प्रतिवचने प्रष्टुरभीष्टं प्रतिपत्तिसौकर्यञ्च सिध्यतीति बुध्यमानो विशिनष्टि यथाक्रममिति।

तत्र प्रश्नत्रयं निर्णेतुं भगवद्वचनमुदाहरति अक्षरमिति । किं तद्ब्रह्मेति प्रश्नस्य प्रतिवचनमक्षरं ब्रह्मपरममिति । तत्राक्षरशब्दस्य निरुपाधिके परस्मिन्नात्मन्यविनाशित्वव्याप्तिमत्त्वसम्बन्धात् प्रवृत्तिं व्युत्पादयति अक्षरमित्यादिना । कथं पुनरक्षरशब्दस्य यथोक्ते परमात्मनि वृद्धप्रयोगमन्तरेण व्युत्पत्त्या प्रवृत्तिराश्रीयते व्युत्पत्तेरर्थान्तरेऽपि सम्भवादित्याशङ्क्य द्यावापृथिव्यादिविषयनिरङ्कुशप्रशासनस्य परस्मादन्यस्मिन्नसम्भवात्तथाविधप्रशासनकर्तृत्वेन श्रुतमक्षरं ब्रह्मैवेत्याह एतस्येति । रूढ़िर्योगमपहरतीति न्यायादोङ्कारे वर्णसमुदायात्मन्यक्षरशब्दस्य रूढ़्या प्रवृत्तिराश्रयितुमुचितेत्याशङ्क्याह ओङ्कारस्येति । प्रतिवचनोपक्रमे प्रक्रान्तमोङ्काराख्यमक्षरमेवोत्तरत्र विशेषितं भविष्यतीत्याशङ्क्य परमविशेषणविरोधात् न तस्य प्रक्रमः सम्भवतीत्याह परममिति चेति । किमध्यात्ममिति प्रश्नस्योत्तरं स्वभावोऽध्यात्ममित्यादि तद्व्याचष्टे तस्यैवेति । स्वकीयो भावः स्वभावः श्रोत्रादिकरणग्रामः स चात्मनि देहेऽहं प्रत्ययवेद्यो वर्त्तत इति वस्तु प्रतिभासं व्यावर्त्त्य स्वभावपदं गृह्णाति स्वो भाव इति । एवं विग्रहपरिग्रहे स्वभावोऽध्यात्ममुच्यते इत्यस्यायमर्थो निष्पन्नो भवतीत्यनुवादपूर्वकं कथयति स्वभाव इति । तस्यैव परस्येत्यादिनोक्तं न विस्मर्त्तव्यमिति विशिनष्टि परमार्थेति । परमेव हि ब्रह्म देहादौ प्रविश्य प्रत्यगात्मभावमनुभवति तत् सृष्ट्वा तदेवानुप्राविशदिति श्रुतेरित्यर्थः । किं कर्मेति प्रश्नस्योत्तरमुपादत्ते भूतेति । भूतान्येव भावास्तेषामुद्भवः समुत्पत्तिस्तां करोतीति व्युत्पत्तिं सिद्धवत्कृत्य विधान्तरेण व्युत्पादयति भूतानामिति । भावः सद्भावो वस्तुभावोऽतएव भूतवस्तूत्पत्तिकर इति वक्ष्यति वैदिकं कर्म्मोक्तविशेषणं कर्मशब्दितमिति । विसर्गशब्दार्थं दर्शयन् विशदयति विसर्ग इत्यादिना । कथं पुनर्यथोक्तस्य यज्ञस्य सर्वेषु भूतेषु सृष्टिस्थितिलयहेतुत्वेन तदुद्भवकरत्वमित्याशङ्क्याग्नौ प्रास्ताहुतिरित्यादिस्मृतिमनुसृत्याह एतस्माद्धीति ॥ ३ ॥

स्वा॰ टी । प्रश्नक्रमेणैवोत्तरं श्रीभगवानुवाच अक्षरमिति त्रिभिः । न क्षरति न चलतीत्यक्षरं, ननु जीवोऽप्यक्षरस्तत्राह परमं यदक्षरं जगतां मूलकारणं तद्ब्रह्म, एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्तीति

श्रुतेः, तस्यैव ब्रह्मण एवांशतया जीवरूपेण भवनं स्वभावः स एवात्मानं देहमधिकृत्य भोक्तृत्वेन वर्त्तमानोऽध्यात्मशब्देनोच्यत इत्यर्थः, भूतानां जरायुजादीनां भावः सत्ता उत्पत्तिः उद्भवश्च आदित्याज्जायते वृष्टिरिति क्रमेण वृद्धिरुत्कृष्टत्वेन भवनमुद्भवः तौ भूतभावोद्भवौ करोति यो विसर्गदेवतोद्देशेन द्रव्यत्यागरूपो यज्ञः सर्वकर्मणामुपलक्षणमेतत् स च कर्मशब्दवाच्यः ॥ ३ ॥

**अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम्।**
**अधियज्ञोऽहमेवात्र देहे देहभृतां वर!॥ ४॥**

अधिभूतमिति। अधिभूतं प्राणिजातमधिकृत्य भवतीति कोऽसौ क्षरः क्षरतीति क्षरो विनाशी भावो यत्किञ्चिज्जनिमद्वस्त्वित्यर्थः पुरुषः पूर्णमनेन सर्वमिति पुरि शयनाद्वा पुरुषः आदित्यान्तर्गतो हिरण्यगर्भः सर्वप्राणिकरणानामनुग्राहकः सोऽधिदैवतं अधियज्ञः सर्वयज्ञाभिमानिनी देवता विष्ण्वाख्या यज्ञो वै विष्णुरिति श्रुतेः स हि विष्णुरहमेवात्रास्मिन् देहे यो यज्ञस्तस्याहमधियज्ञः यज्ञो हि देहनिर्वर्त्त्यत्वेन देहसमवायीति देहाधिकरणो भवति देहभृतां वर!॥ ४॥

व्या॰ टी॰। सम्प्रति प्रश्नत्रयस्योत्तरमाह अधिभूतमिति। अधिभूतञ्च किं प्रोक्तमित्यस्य प्रतिवचनमधिभूतं क्षरोभाव इति। तत्राधिभूतपदमनूद्य वाच्यमर्थं कथयति अधिभूतमित्यादिना। तस्य निर्देशमन्तरेण निर्णेतुमशक्यत्वात् प्रश्नद्वारा तन्निर्दिशति कोऽसाविति। कार्य्यमात्रमत्र संगृहीतमिति वक्तुमुक्तमेव व्यनक्ति यत् किञ्चिदिति। अधिदैवं किमिति प्रश्ने पुरुषश्चेत्यादिप्रतिवचनं तत्र पुरुषशब्दमनूद्य तदर्थं तस्योपन्यस्यति पुरुष इति। तस्यैव सम्भावितमर्थान्तरमाह पुरिशयनाद्वेति। वैराजं देहमासाद्य आदित्यमण्डलादिषु दैवत्येषु योऽन्तरवस्थितो

लिङ्गात्मा व्यष्टिकरणानुग्राहकोऽत्र पुरुषशब्दार्थः स चाधिदैवतमिति स्फुटयति आदित्येति। अधियज्ञः कथमित्यादि प्रश्नं परिहरन्नधियज्ञशब्दार्थमाह अधियज्ञ इति। कथमुक्तायां देवतायामधियज्ञशब्दः स्यादित्याशङ्क्य श्रुतिमनुसरन्नाह यज्ञो वै इति। परैव देवताधियज्ञशब्देनोच्यते सा च ब्रह्मणः सकाशादत्यन्ताभेदेन प्रतिपत्तव्येत्याह स हि विष्णुरिति। शास्त्रीयव्यवहारभूमिरत्रेत्युक्ता। देहसामानाधिकरण्याद्वात्रेत्यस्य व्याख्यानं अस्मिन्निति। किमधियज्ञो वहिरन्तर्वा देहादिति सन्देहो मा भूदित्याह देह इति। ननु यज्ञस्य देहाधिकरणत्वाभावात् कथं तथाविधयज्ञाभिमानिदेवतात्वं भगवतो विवक्ष्यते तत्राह यज्ञो हीति। एतेन तस्य बुद्ध्यादिव्यतिरिक्तत्वमुक्तमवधेयं न हि परा देवता दर्शितरीत्याधियज्ञशब्दिता बुद्ध्यादिष्वन्तर्भावमनुभावयितुमलं देहान् बिभ्रतीति देहभृतः सर्वे प्राणिनस्तेषामेव वरः श्रेष्ठः युक्तं हि भगवता साक्षादेव प्रतिक्षणं सवाद् विदधानस्यार्जुनस्य सर्वेभ्यः श्रैष्ठ्यम् ॥४॥

स्वा॰ टी॰। किञ्च अधिभूतमिति। क्षरो विनश्वरो भावः देहादिपदार्थः, भूतः प्राणिमात्रमधिकृत्य भवतीत्यधिभूतमुच्यते, पुरुषो वैराजः सूर्य्यमण्डलवर्त्ती स्वांशभूतसर्वदेवतानामधिपतिरधिदैवतमुच्यते, अधिदैवतमधिष्ठात्री देवता, स वै शरीरी प्रथमः स वै पुरुष उच्यते। आदिकर्त्ता स भूतानां ब्रह्माग्रे समवर्त्तत इति श्रुतेः, अत्रास्मिन् देहे स्थितोऽहमेवाधियज्ञो यज्ञस्याधिष्ठात्री देवता यज्ञादिकर्मप्रवर्त्तकस्तत्फलदाता च कथमित्यस्याप्युत्तरमनेनैवोक्तं द्रष्टव्यं अन्तर्यामिनोऽसत्त्वादिभिर्गुणैर्जीववैलक्षण्येन देहान्तर्वर्त्तित्वस्य प्रसिद्धत्वात् तथा च श्रुतिः द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति। देहभृतां मध्ये श्रेष्ठ इति सम्बोधयन् त्वमप्येवं भूतमन्तर्यामिनं पराधीनस्वप्रवृत्तिनिवृत्त्यन्वयव्यतिरेकाभ्यां बोद्धुमर्हसीति सूचयति ॥ ४ ॥

**अन्तकाले च मामेव स्मरन् मुक्त्वा कलेवरम्।**
**यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः॥५॥**

अन्तकाल इति। अन्तकाले च मरणकाले मामेव परमेश्वरं विष्णुं स्मरन् मुक्त्वा परित्यज्य कलेवरं शरीरं यः प्रयाति गच्छति स मद्भावं वैष्णवं तत्त्वं याति नास्ति न विद्यते अत्रास्मिन्नर्थे संशयो याति वा न वेति॥ ५॥

आ॰ टी॰। यत्तु प्रयाणकाले चेत्यादि चोदितं तत्राह अन्तकाले चेति। मामेवेत्यवधारणेन अध्यात्मादिविशिष्टत्वेन स्मरणं व्यावर्त्तते विशिष्टस्मरणे हि चित्तविक्षेपात् प्रधानस्मरणमपि स्यान्न च मरणकाले कार्य्यकरणपारवश्याद्भगवदनुस्मरणासिद्धिः सर्वदैव नैरन्तर्य्येण आदरधिया भगवति समर्पितचेतसः तत्कालेऽपि कार्य्यकरणजातमगणयतो भगवदनुसन्धानसिद्धेः शरीरे तस्मिन्नहं ममाभिमानाभावादिति यावत्, प्रयातीत्यत्र प्रकृतशरीरमपादानम्। ब्रह्म वेद ब्रह्मैव भवतीत्यादिश्रुतिमाश्रित्याह मामेतीति। व्यासिध्यं संशयमेवाभिनयति याति वेति॥ ५॥

स्वा॰ टी॰। प्रयाणकाले च कथं ज्ञेयोऽसीत्यनेन पृष्टमन्तकाले ज्ञानोपायं तत्फलञ्च दर्शयति अन्तकाल इति। मामेवोक्तलक्षणमन्तर्य्यामिरूपं परमेश्वरं स्मरन् देहं त्यक्त्वा यः प्रकर्षेण अर्चिरादिमार्गेण उत्तरायणपथा याति स मद्भावं मद्रूपतां याति अत्र संशयो नास्ति, स्मरणं ज्ञानोपायो मद्भावापत्तिश्च फलमित्यर्थः॥ ५॥

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्।
तं तमेवैति कौन्तेय! सदा तद्भावभावितः॥६॥

न मद्विषय एवायं नियमः किं तर्हि यं यमिति। यं यं वापि यं यं भावं देवताविशेषं स्मरंश्चिन्तयन् त्यजति परित्यजति अन्ते प्राणवियोगकाले कलेवरं तं तमेव स्मृतं भावमेवैति नान्यं कौन्तेय। सदा सर्वदा तद्भावभावितस्तस्मिन् भावस्तद्भावः स भावितः स्मर्य्यमाणतयाभ्यस्तो येन स तद्भावभावितः सन्॥ ६॥

आ० टी०। अन्तकाले भगवन्तमनुध्यायतो भगवत्प्राप्तिनियमवदन्यमपि तत्काले देवादिविशेषं ध्यायतो देहं त्यजतस्तत्प्राप्तिरवश्यम्भाविनीति दर्शयति नेत्यादिना। कथं पुनरन्तकाले परवशस्य नियतविषयस्मृतिर्भवितुमर्हति तत्राह सदेति। देवादिविशेषस्मृतिर्भवतीति सम्बन्धार्थः, भावो भावना वासना स भावो भावितः सम्पादितो येन पुंसा स तथाविधः सन् यं यं भावं स्मरति तन्तमेव देहत्यागादूर्द्धं गच्छतीति सम्बन्धः॥ ६॥

स्वा० टी०। न केवलं मां स्मरन् मद्भावं प्राप्नोतीति नियमः किं तर्हि यं यमिति। यं यं भावं देवतान्तरं वा अन्यमपि वा अन्तकाले स्मरन् देहं त्यजति तं तमेव स्मर्य्यमाणं भावं प्राप्नोति, अन्तकाले भावविशेषस्मरणे हेतुः सदा तद्भावभावित इति सर्वदा तस्य भावो भावनानुचिन्तनं तेन भावितो वासितचित्तः॥ ६॥

# तस्मात् सर्वेषु कालेषु मामनुस्मर युध्य च। मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः॥ ७॥

यस्मादेवमन्त्या भावना देहान्तरप्राप्तौ कारणं तस्मादिति। तस्मात् सर्वेषु कालेषु मामनुस्मर यथाशास्त्रं युध्य च युध्यस्व स्वधर्मं कुरु मयि वासुदेवेऽर्पिते मनो बुद्धी यस्य तव स त्वं मय्यर्पितमनोबुद्धिः सन् मामेव यथास्मृतमेष्यसि आगमिष्यसि असंशयो न संशयोऽत्र विद्यते॥ ७॥

आ० टी०। सततं भावना प्रतिनियतफलप्राप्तिनिमित्तान्यप्रत्ययहेतुरित्यङ्गीकृत्यानन्तरश्लोकमवतारयति यस्मादिति। विशेषणमयवतो भगवदनुस्मरणस्य भगवत्प्राप्तिहेतुत्वं भाति तस्मादित्युच्यते सर्वेषु कालेष्वादरनैरन्तर्याभ्यां सहेति यावत्, भगवदनुस्मरणे विशेषणमयवाहित्य यथाशास्त्रमिति द्योत्यते। भगवदनुसन्धानं कर्त्तव्यमुक्ता तेन सह स्वधर्म-

अपि कुरु युद्धमित्युपदिशता भगवता, स्वरूपयो र्ध्यानकर्मणोरङ्गीकृतो भातीत्याशङ्क्याह मय्यीति । मनो बुद्धिगोचरं क्रियाकारकफलजात सकलमपि ब्रह्मैवेति भावयन् युद्धस्वेति ब्रुवता क्रियादिकत्वापन्न ब्रह्मा-तिरिक्तस्याभावाभिलापाद्वात्र स्वरूपयो विवक्षित इत्यर्थः । उक्तरीत्या स्वधर्ममनुवर्त्तमानस्य प्रयोजनमाह मामेवेति । उक्तसाधनवशात् फल-प्राप्तौ प्रतिबन्धाभावं सूचयति असंशय इति ॥ ७ ॥

स्वा॰ टी॰। तस्मादिति यस्मात् पूर्ववासनैवान्तकाले स्मृतिहेतुर्न तु तदा विवशस्य स्मरणोद्यमः सम्भवति अस्मात् सर्वदा मामनुस्मर अनु-चिन्तय, सन्ततस्मरणं हि चित्तशुद्धिं विना न भवति अतो युध्य च युध्यस्व चित्तशुद्ध्यर्थं युद्धादिकं स्वधर्ममनुतिष्ठेत्यर्थः एवं मय्यर्पितं मनः सङ्कल्पात्मकं बुद्धिश्च व्यवसायात्मिका येन त्वया सत्वमनायासेन मामेव प्राप्स्यसि असंशयः संशयोऽत्र नास्ति ॥ ७ ॥

**अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ।**
**परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ ८ ॥**

किञ्च अभ्यसेति । अभ्यासयोगयुक्तेन मयि चित्तस-मर्पणविषयभूते एकस्मिन् तुल्यप्रत्ययावृत्तिलक्षणो विलक्षण-प्रत्ययान्तरितोऽभ्यासः स चासौ योगस्तेन युक्तं तत्रैव व्यापृतं प्रवृत्तं योगिनश्चेतस्तेन चेतसा नान्यगामिना नान्यत्र विषयान्तरे गन्तुं शीलमस्येति नान्यगामि तेन नान्यगामिना परमं निरतिशयं पुरुषं दिव्यं दिवि सूर्य्य-मण्डले भवं दिव्यं याति गच्छति हे पार्थ ! अनुचिन्तयन् शास्त्राचार्य्योपदेशमनुध्यायन्नित्येतत् ॥ ८ ॥

आ॰ टी॰ । इतश्च पूर्वश्लोकोक्तार्थानुष्ठायी भगवन्तमन्तकाले प्राप्नो-तीत्याह किञ्चेति । अभ्यासं विभजते मयीति । न हि चित्तसमर्पणस्य विषयभूतं भगवतोऽर्थान्तरं वस्तु सदस्तीति मन्वानो विशिनष्टि विलक्षेति ।

अन्तरालकालेऽपि विजातीयप्रत्ययेषु विच्छिद्य विच्छिद्य जायमानेष्वपि सजातीयप्रत्ययावृत्तियोगिनोऽपि स्यादित्याशङ्क्याह विशिनष्टीति। अभ्यासाख्येन योगेन युक्तत्वं चेतसो विशिनष्टीति तत्रैवेति। ततोऽपरा पराकृष्टोऽभ्यासयोगः सम्यग्यपि पराक्रमते। ननु प्राकृतानां चेतसश्चेत्याशङ्क्य विशिनष्टि योगिन इति। तस्ये चेतोविषयान्तरं पराकृष्टेन तर्हि परमपुरुषार्थप्राप्तिहेतुः स्यादित्याशङ्क्याह नान्यगामिनेति। प्रामादिकं विषयान्तरपारवश्यमभ्युपगमाल्लौकिकप्रत्ययान्तेन तात्पर्यादपराकृष्टार्थान्तरेण परमपुरुषनिष्ठेनेत्यर्थः। तदेव पुरुषस्य निरतिशयत्वं यदपराकृष्टाखिलानर्थत्वमनतिशयानन्दत्वं तच्च प्रागेव व्याख्यातं नेह व्याख्यानमपेक्षते। यश्चासावादित्ये इत्यादिश्रुतिमनुसृत्याह दिव्यमिति। तत्र विशेषतोऽभिव्यक्तिरेव भवनं, पूर्वोक्तेन चेतसा यथोक्तं पुरुषमनुचिन्तयन् याति तमेवेति सम्बन्धः। अनुचिन्तयन्नित्यस्यानुशब्दार्थं व्याचष्टे शास्त्रेति। चिन्तयन्निति व्याकरोति ध्यायन्निति ॥ ८ ॥

स्वा॰ टी॰। सन्ततस्मरणस्य चाभ्यासोऽन्तरङ्गसाधनमिति दर्शयन्नाह अभ्यासयोगेति। अभ्यासः सजातीयप्रत्ययप्रवाहः स एव योग उपायस्तेन युक्तेनैकाग्रेण अतएव नान्यं विषयं गन्तुं शीलं यस्य तेन चेतसा दिव्यं द्योतनात्मकं परमेश्वरमनुचिन्तयन् हे पार्थ ! तमेव यातीति ॥ ८ ॥

कविं पुराणमनुशासितार-
मणोरणीयांसमनुस्मरेद्यः।
सर्वस्य धातारमचिन्त्यरूप-
मादित्यवर्णं तमसः परस्तात् ॥ ९ ॥

किं विशिष्टञ्च पुरुषं यातीत्युच्यते कविमिति। कविं क्रान्तदर्शिनं सर्वज्ञं पुराणं चिरन्तनमनुशासितारं सर्वस्य जगतः प्रशासितारं अणोः सूक्ष्मादप्यणीयांसं

सूक्ष्मतरमनुस्मरेदनुचिन्तयेत् यः कश्चित् सर्वस्य कर्मफलजातस्य धातारं विचित्रतया प्राणिभ्यो विभक्तारं विभज्य दातारमचिन्त्यरूपं नास्य रूपं नियतंविद्यमानमपि केनचित् चिन्तयितुं शक्यते इत्यचिन्त्यरूपस्तं आदित्यवर्णमादित्यस्येव नित्यचैतन्यप्रकाशो वर्णो यस्य तमादित्यवर्णं तमसः परस्तादज्ञानलक्षणान्मोहान्धकारात् परं तमनुचिन्तयन् यातीति पूर्वेणैव सम्बन्धः॥ ९॥

व्या० टी०। किं विशिष्टं पुरुषमनुचिन्तयन्निति सम्बन्धः, चकारात् कथं वा नाड्योत्क्रमणमित्यनुकृष्यते, तत्र ध्यानद्वारा प्राप्यस्य पुरुषस्य विशेषणानि दर्शयति उच्यत इति। क्रान्तदर्शित्वमतीतादेरशेषस्य वस्तुनो दर्शनशालित्वम्। तेन निष्पन्नमर्थमाह सर्वज्ञमिति। चिरन्तनमादिमतः सर्वस्य कारणत्वादनादिमित्यर्थः, सूक्ष्ममाकाशादि ततः सूक्ष्मतरं तदुपादानत्वादित्यर्थः, यो यथोक्तमनुचिन्तयेत् स तमेवानुचिन्तयन् यातीति पूर्वेणैव सम्बन्ध इति योजना। ननु विशिष्टजात्यादिमतो यथोक्तमनुचिन्तनं फलवद्भवति न त्वस्मदादीनामित्याशङ्क्याह यः कश्चिदिति। फलमत उपपत्तेरिति न्यायेनाह सर्वस्येति। एतदप्रमेयं ध्रुवमिति श्रुतिमाश्रित्याह अचिन्त्यरूपमिति। न हि परस्य किञ्चिदपि रूपादि वस्तुतोऽस्ति अरूपवदेव हीति न्यायात् कल्पितमपि नाकाशादिभिः शक्यते चिन्तयितुमित्याह नास्येति। मूलकारणादज्ञानात्तत्कार्याच्च पुरस्तादुपरिष्टादवस्थितं परमार्थतो ज्ञानतत्कार्यास्पृष्टमित्याह तमस इति॥ ९॥

व्या० टी०। पुनरप्यनुचिन्तनीयं पुरुषं विशिनष्टि कविमिति द्वाभ्याम्। कविं सर्वज्ञं सर्वविद्यानिर्मातारं, पुराणमनादिसिद्धं, अनुशासितारं नियन्तारं, अणोः सूक्ष्मादप्यणीयांसमतिसूक्ष्मं आकाशकालदिगभ्योऽप्यतिसूक्ष्मतरं, सर्वस्य धातारं पोषकं, अपरिच्छिन्नमहिमत्वादचिन्त्यरूपं मनोमयोर्मनोबुद्ध्योरगोचरं, आदित्यवत् स्वरूपप्रकाशात्मको

वर्णः स्वरूपं यस्य तं तमसः प्रकृतेः परस्तादस्त्रमानं, वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तादिति श्रुतेः ॥ ६ ॥

प्रयाणकाले मनसाचलेन
भक्त्या युक्तो योगबलेन चैव ।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक्
स तं परं पुरुषमुपैति दिव्यम् ॥ १० ॥

किञ्च प्रयाणकाल इति । प्रयाणकाले मरणकाले मनसाचलेन प्रचलनवर्जितेन भक्त्या युक्तो भजनं भक्तिः तया युक्तो योगबलेन चैव योगस्य बलं योगबलं तेन समाधिजसंस्कारप्रचयजनितं स्वचित्तस्थैर्य्यलक्षणं योगबलं तेन च युक्त इत्यर्थः पूर्वं हृदयपुण्डरीके वशीकृत्य चित्तं तत ऊर्द्ध्वगामिन्या नाड्या भूमिजयक्रमेण भ्रुवोर्मध्ये प्राणमावेश्य स्थापयित्वा सम्यगप्रमत्तः सन् स एवं विद्वान् योगी कविं पुराणमित्यादिलक्षणं तं परं पुरुषमुपैति प्रपद्यते दिव्यं द्योतनात्मकम् ॥ १० ॥

आ० टी० । इतश्च भगवदनुस्मरणं सफलत्वादनुष्ठेयमित्याह किञ्चेति । कदा तदनुस्मरणे प्रयत्नातिरेकोऽभ्यर्थ्यते तत्राह प्रयाणकाल इति । कथं तदनुस्मरणमित्युपकरणकलापमपेक्ष्यमाणं प्रत्याह मनसेति । योऽनुस्मरेत् स किमुपैति तत्राह स तमिति । मरणकाले क्लेशवाकुल्येऽपि प्राचीनाभ्यासप्रसादासादितबुद्धिवैभवो भगवन्तमनुस्मरन् यथास्मृतमेव देहाभिमानविगमानन्तरमुपागच्छतीत्यर्थः । भगवदनुस्मरणस्य साधनं मनसैवानुद्रष्टव्यमिति श्रुत्युपदिष्टमाचष्टे मनसेति । तस्य चञ्चलत्वात् स्थैर्यमीश्वरे सिध्यति तत् कथं तेन तदनुस्मरणमित्याशङ्क्याह अचलेनेति । ईश्वरानुस्मरणे प्रयत्नेन प्रवर्त्तितं विषयविमुखं तस्मिन्नेवानुस्मरणा-

योऽप्यपौनःपुन्येन प्रकर्षा निश्चलीकृतं तच्चलनविकलं तेनेति व्याचष्टे प्रचलनेति । स्मरत्यनुस्मरणाधिकारित्वं विशिनष्टि भक्त्येति । परमेश्वर परेषु प्रेम्णा सहितो विषयान्तरविमुखोऽनुस्मर्त्तव्य इत्यर्थः । योगबलमेव स्फोरयति समाधिजेति । योगः समाधिः चित्तस्य विषयान्तरवृत्ति-निरोधेन परस्मिन्नेव स्थापनं तस्य बलं संस्कारप्रचयोऽध्येयैकाग्र्यकरणं तेन तत्रैव स्थैर्य्यमित्यर्थः । चकारस्तूचितमन्वयमन्वाचष्टे तेन चेति । यत्तु कया नाड्योत्क्रामणयातीति तत्राह पूर्वमिति । चित्तं हि स्वभावतो विषयेषु व्यापृतं तेभ्यो विमुखीकृत्य हृदये पुण्डरीकाकारे परमात्म-स्थाने यत्नतः स्थापनीयम् । अथ यदिदमस्मिन् ब्रह्मपुरे इत्यादिश्रुतेस्तत्र चित्तं वशीकृत्य आदावनन्तरं कर्त्तव्यमुपदिशति तत इति । इडा पिङ्गले दक्षिणोत्तरे नाड्यौ हृदयान्निःसृते निरुध्य तस्मादेव हृदयाग्रादूर्द्ध्वगमन-शीलया सुषुम्नया नाड्या हार्दं प्राणमानीय कण्ठावलम्बितं स्तनसदृशं मांसखण्डं प्राप्य तेनाध्वना भ्रुवोर्मध्ये तमावेश्य अप्रमादवान् ब्रह्म-रन्ध्राद्विनिःक्रम्य कविं पुराणमित्यादिविशेषणं परमपुरुषमुपगच्छतीत्यर्थः । भूमिजयक्रमेणेत्यत्र भूम्यादीनां पञ्चानां भूतानां जयो वशीकरणं तस्य तस्य भूतस्य स्वाधीनचेष्टावैशिष्ट्यं तद्द्वारेणेत्येतदुच्यते । स तमित्यादि व्याचष्टे स एवमिति ॥ १० ॥

स्वा० टी० । स प्रपञ्चात्कर्मिं भित्त्वा यस्तिष्ठति एवंभूतं पुरुषं अन्त-काले भक्तियुक्तो निश्चलेन विक्षेपरहितेन मनसा योऽनुस्मरेत्, मनो-नैश्चल्ये हेतुः योगबलेन सम्यक् सुषुम्नामार्गेण भ्रुवोर्मध्ये प्राणमावेश्य इति सतं परं पुरुषं परमात्मस्वरूपं दिव्यं द्योतनात्मकं प्राप्नोति ॥ १०॥

यदक्षरं वेदविदो वदन्ति
विशन्ति यद्यतयोवीतरागाः ।
यदिच्छन्तो ब्रह्मचर्य्यं चरन्ति
तत्ते पदं संग्रहेण प्रवक्ष्ये ॥ ११ ॥

योगमार्गानुगमनेनैव ब्रह्मविद्यामन्तरेणापि ब्रह्माप्यत इत्येवं प्राप्त इदमुच्यते, पुनरपि वक्ष्यमाणेनोपायेन प्रतिपित्सितस्य ब्रह्मणो वेदविद्वदनादिविशेषणविशेष्यस्याभिधानं करोति भगवान् यदक्षरमिति। यदक्षरं न क्षरतीति अक्षरं अविनाशि वेदविदो वेदार्थज्ञा वदन्ति तद्वा एतदक्षरं गार्गि ब्राह्मणा अभिवदन्तीति श्रुतेः, सर्वविशेषनिवर्त्तकत्वेनाभिवदन्त्यस्थूलमनण्वित्यादि, किञ्च विशन्ति प्रविशन्ति सम्यग्दर्शनप्राप्तौ सत्यां यद्यतयो यतनशीलाः सन्न्यासिनो वीतरागाः विगतो रागो येभ्यस्ते वीतरागाः यच्चाक्षरमिच्छन्तो ज्ञातुमिति वाक्यशेषः, ब्रह्मचर्य्यं गुरौ चरन्तीति तत्ते पदं यदक्षराख्यं ब्रह्माख्यं

---

व्या० टी०। येन केनचिन्मन्त्रादिना ध्यानकाले भगवदनुस्मरणे प्राप्ते सत्यभिधानत्वे नियन्तुं कर्त्तव्यत्वेन प्रकृतपरमपुरुषस्य त्रैविद्यवृद्धप्रसिद्ध्या प्रामाणिकत्वमाह पुनरपीति। उपायो वक्ष्यमाण ओङ्कारः। अविषये प्रतीचि ब्रह्मणि वेदार्थविदामपि कथं वचनमित्याशङ्काविषयत्वमसत्यत्वैवेति मत्वा श्रुतिमुदाहरति तद्वेति। तथापि तस्मिन्नविषये सर्वविशेषशून्ये वचनमनुचितमित्याशङ्क्याह सर्वेति। न केवलं विद्वदनुभवसिद्धं यथोक्तं ब्रह्म किन्तु मुक्तोपसृप्यतया मुक्तानामपि प्रसिद्धमित्याह किञ्चेति। केषां पुनः संन्यासित्वं तदाह वीतरागा इति। ज्ञानार्थं ब्रह्मचर्य्यविधानादपि ब्रह्म ज्ञेयत्वेन प्रसिद्धमित्याह यदिति। कथं तर्हि यथोक्तं ब्रह्म मम ज्ञातुं शक्यमित्याकुलितचेतसमर्जुनं प्रत्याह तत्ते पदमिति। वक्ष्यमाणेनोपायेनेत्युक्तं व्यक्तीकुर्वन्नोङ्कारद्वारा ब्रह्मोपासनं श्रुत्युक्तमनुक्रामति स यो हेति। सत्यकामेनाभिध्यानफलं जिज्ञासुना भगवन्निति पिप्पलादः सम्बोध्याभिमुखीक्रियते, निपातौ तु प्रसिद्धमर्थमवद्योतयन्तावभिध्यानस्य फलत्वेन कर्त्तव्यत्वमावेदयतः, मनु-

यद् पदनीयं ते तुभ्यं संग्रहेण संग्रहः संक्षेपः तेन संक्षेपेण प्रवक्ष्ये कथयिष्यामि स यो ह तद्भगवन् मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत कतमं वाव स तेन लोकं जयतीति तस्मै स होवाच एतद्वै सत्यकाम परञ्चापरञ्च ब्रह्म यदोङ्कार इत्युपक्रम्य यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेदित्यादिना वचनेन अन्यत्र धर्मादन्यत्राधर्मादिति चोपक्रम्य सर्वे वेदा यत् पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति यदिच्छन्तो ब्रह्मचर्य्यं चरन्ति तत्ते पदं

---

येषु मध्ये स योऽधिकृतो मनुष्यस्तत्प्रसङ्गमभिध्यानं यथा सिध्यति तथा सर्ववेदसारभूतमोङ्कारमाभिमुख्येन ध्यायीत तच्चाभिध्यानमाप्रायणादिति न्यायेन मरणान्तमनुष्ठेयं स चैवमनुतिष्ठन् प्रकृतेनाभिध्यानेन लोकानां जेतव्यानां बहुत्वात् कतमं लोकं जयतीति प्रश्ने पृष्टवते सत्यकामाय पिप्पलादनामा किलाचार्य्यः प्रतिवचनं प्रोवाच । तत्र प्रथमं अभिध्येयमोङ्कारं परापरब्रह्मत्वेन मङ्गीकरोति एतद्वा इति । त्रिमात्रेणाकारोकारमकारात्मकेनेति यावत् योऽभिध्यायीत तमेव यथाभिध्यातं पुरुषमधिगच्छतीत्यादिवचनेनोपासनमोङ्कारस्योक्तमित्यर्थः । प्रश्नश्रुतिवत् कठवल्लौ च तत्रैवार्थे प्रवृत्तेत्याह अन्यत्रेति । अव्यवधानेनोपनिषदां व्यवधानेन च कर्मश्रुतीनां परस्मिन्नात्मनि पर्य्यवसानं दर्शयति सर्वे इति । तपसामपि सर्वेषां चित्तशुद्धिद्वारा तत्रैव पर्य्यवसानमित्याह तपांसीति । तस्यैव च ज्ञानार्थमष्टाङ्गं ब्रह्मचर्य्यं तत्र तत्र विहितमित्याह यदिच्छन्त इति । तस्य पदनीयस्य ब्रह्मणः संक्षेपेण कथमोङ्कारद्वारकमिति कथयति ओमित्येतदिति । ओमित्येतदिति उदाहृतवचनानां तात्पर्य्यं दर्शयति परस्येति । तस्य वाचकरूपेण वा तस्यैव

संग्रहेण ब्रवीम्योमित्येतदित्यादिभिश्च वचनैः परस्य ब्रह्मणो वाचकरूपेण प्रतीमावत् प्रतीकरूपेण च परब्रह्मप्रतिपत्ति-साधनत्वेन मन्दमध्यमबुद्धीनां विवक्षितस्योङ्कारस्योपासनं कालान्तरे मुक्तिफलमुक्तं यत्तदिहापि अधिकृतं कविं पुराणमनुशासितारं यदक्षरं वेदविदो वदन्तीति चोपन्यस्तस्य च परस्य ब्रह्मणः पूर्वोक्तरूपेण प्रतिपत्त्युपायभूतस्योङ्कारस्य कालान्तरमुक्तिफलमुपासनं योगधारणासहितं वक्तव्यम् ॥ ११ ॥

प्रतीकरूपेण वा विवक्षितस्योङ्कारस्योपासनं यथोक्तैर्वचनैरुक्तमिति सम्बन्धः। ननु परस्मिन् ब्रह्मणि तत्त्वमस्यादिवाक्यादेव प्रतिपत्तिरधिकारिणो भविष्यति किमित्युपासनमोङ्कारस्योपन्यस्यते तत्राह परेति। यद्यपि विशिष्टस्याधिकारिणो विनैवोपासनमुपनिषद्भ्यो ब्रह्मणि प्रतिपत्तिरुत्पद्यते तथापि मन्दानां मध्यमानाञ्च तद्धि हेतुत्वेनोङ्कारो विवक्षितः तच्चोपासनं बहुदृष्ट्या श्रुतिभिरुपदिष्टमित्यर्थः। तस्य क्रममुक्तिफलत्वादनुष्ठेयत्वं सूचयति कालान्तरेति। भवत्येवं श्रुतीनां प्रवृत्तिस्तावता प्रकृते किमायातमित्याशङ्क्याह उक्तं यदिति। तदेवेहापि वक्तव्यमित्युत्तरेण सम्बन्धः। उपासनमेवोपास्योपन्यासद्वारा स्फोरयति कविमित्यादिना। पूर्वोक्तरूपेणेत्यभिधानत्वेन प्रतीकत्वेन चेत्यर्थः। श्रौतस्योपासनस्यानूद्यमानस्य सोपस्करत्वं संगिरते योगेति ॥ ११ ॥

स्वा० टी०। केवलाभ्यासयोगादपि प्रणवाभ्यासमन्तरङ्गं विधित्सुः प्रतिजानीते यदक्षरमिति। यदक्षरं वेदार्थज्ञा वदन्ति, एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत इति श्रुतेः, वीतो रागो येभ्यस्ते वीतरागा यतयः प्रयत्नवन्तो यद्विशन्ति, यच्च ज्ञातुमिच्छन्तो गुरुकुले ब्रह्मचर्यं चरन्ति तत्ते तुभ्यं पदं पद्यते गम्यत इति पदं प्राप्यं संग्रहेण संक्षेपेण प्रवक्ष्ये तत्प्राप्त्युपायं कथयिष्यामीत्यर्थः ॥ ११ ॥

**सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।**
**मूर्द्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥१२**

प्रसङ्गानुप्रसङ्गञ्च यत्किञ्चिदित्येवमर्थं उत्तरो ग्रन्थ आरभ्यते सर्वेति । सर्वद्वाराणि सर्वाणि च तानि द्वाराणि च सर्वद्वाराणि उपलब्धौ तानि सर्वाणि संयम्य संयमनं कृत्वा मनो हृदि हृदयपुण्डरीके निरुध्य निरोधं कृत्वा निःप्रचारतामापाद्य तत्र वशीकृतेन मनसा हृदयादूर्द्ध्वगामिन्या नाड्या ऊर्द्ध्वमारुह्य मूर्द्धन्याधायात्मनः प्राणमास्थितः प्रवृत्तो योगधारणां धारयितुम् ॥ १२ ॥

व्या० टी० । तर्हि कथमनन्यचेताः सततमित्यादि वक्ष्यते तत्राह प्रसङ्गेति । ओङ्कारोपासनं ।सङ्गं तदनन्तरं तत्फलमनुप्रसङ्गं तद्वारा चापुनरावृत्त्यादि वक्तव्यकोटिनिविष्टमित्यर्थः । उक्तोऽर्थे समनन्तरग्रन्थमुत्थापयति इत्येयमर्थ इति । श्रोत्रादीनां कुत्र द्वारवत्त्वं तत्राह उपलब्धाविति । तेषां संयमनं विषयेषु प्रवृत्तानां दोषदर्शनद्वारा तेभ्यो वैमुख्यापादनम् । कोऽयं मनसो हृदये निरोधस्तत्राह निःप्रचारमिति । मनसो विषयाकारवृत्तिं निरुध्य हृदि वशीकृतस्य कार्य्यं दर्शयति तत्रेति । ऊर्द्ध्वमित्यत्रापि हृदयादिति सम्बध्यते सर्वाण्युपलब्धिद्वाराणि श्रोत्रादीनि संनिरुध्य वायुमपि सर्वेभ्यो निगृह्य हृदयमानीय ततो निर्गतया सुषुम्णया कण्ठभ्रूमध्यललाटक्रमेण प्राणं मूर्द्धन्याधाय योगधारणामारूढो ब्रह्म व्याहरन् माञ्च तदर्थमनुस्मरन् परमां गतिं यातीति सम्बन्धः ॥ १२ ॥

व्या० टी० । प्रतिज्ञातमुपायं साक्रमाह सर्वेति द्वाभ्याम् । सर्वाणीन्द्रियद्वाराणि संयम्य प्रत्याहृत्य चक्षुरादिभिर्बाह्यविषयग्रह-णमकुर्वन्नित्यर्थः, मनश्च हृदि निरुध्य बाह्यविषयस्मरणमप्यकुर्वन्नित्यर्थः

मूर्ध्नि भ्रुवोर्मध्ये प्राणमाधाय योगस्य धारणां स्थैर्यमास्थित आस्थितवान् सन् ॥ १२ ॥

**ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् ।**
**यः प्रयाति त्यजन् देहं स याति परमां गतिम्॥१३॥**

तत्रैवं च धारयन् ओमिति । ओमित्येकाक्षरं ब्रह्म ब्रह्मणोऽभिधानभूतमोङ्कारं व्याहरन्नुच्चरंस्तदर्थभूतं मामीश्वरमनुस्मरन्ननुचिन्तयन् यः प्रयाति म्रियते स त्यजन् परित्यजन् देहं शरीरं त्यजन् देहमिति प्रयाणविशेषणार्थं देहत्यागेन प्रयाणमात्मनो न स्वरूपनाशेनेत्यर्थः स एवं त्यजन् प्रयाति गच्छति परमां प्रकृष्टां गतिम् ॥१३॥

व्या॰ टी॰ । यथोक्तयोगधारणार्थं प्रवृत्तो मूर्द्ध्नि प्राणमाधाय धारयन् किं कुर्य्यादित्याशङ्क्यानन्तरश्लोकमवतारयति तत्रैवेति । एकञ्च तदक्षरं चेति एकाक्षरमोमित्येवं रूपं तत् कथं ब्रह्मेति विशिष्यते तत्राह ब्रह्मण इति । यः प्रयातीति मरणमुक्त्वा त्यजन् देहमिति ब्रुवता पुनरुक्तिराश्रिता स्यादित्याशङ्क्य विशेषणार्थं विवृणोति देहेति । एवमोङ्कारमुच्चारयन्नर्थं चाभिध्यायन् ध्याननिष्ठः स पुमानित्यर्थः, परमामिति गतिविशेषणं क्रममुक्तिविवक्षया द्रष्टव्यम् ॥ १२ ॥

स्वा॰ टी॰ । ओमिति । ओमित्येकं यदक्षरं तदेव ब्रह्मवाचकत्वात् ब्रह्मप्रतिमादिवद्ब्रह्मप्रतीकत्वाद्वा ब्रह्म तद्व्याहरन्नुच्चारयन् तद्वाच्यञ्च मामनुस्मरन्नेवं देहं त्यजन् यः प्रकर्षेण याति अर्चिरादिमार्गेण स परमां श्रेष्ठां सद्गतिं प्राप्नोति ॥ १२ ॥

**अनन्यचेताः सततं यो मां स्मरति नित्यशः ।**
**तस्याहं सुलभः पार्थ ! नित्ययुक्तस्य योगिनः ॥१४॥**

किञ्च अनन्येति । अनन्यचेता नान्यविषये चेतो यस्य

सोऽयमनन्यचेता योगी सततं सर्वदा यो मां परमेश्वरं स्मरति नित्यशः सततमिति नैरन्तर्य्यमुच्यते नित्यश इति दीर्घकालत्वमुच्यते न षण्मासं संवत्सरं वा किं तर्हि यावज्जीवं नैरन्तर्य्येण यो मां स्मरतीत्यर्थः तस्य योगिनोऽहं सुलभः सुखेन लभ्यः पार्थ! नित्ययुक्तस्य सदा समाहितस्य योगिनः यत एवमतोऽनन्यचेताः सन् मयि सदा समाहितो भवेत् ॥ १४ ॥

आ० टी०। ननु वायुनिरोधविधुराणां उदीरितया रीत्या स्वेच्छाप्रयुक्तोत्क्रमणासम्भवाद्दुर्लभा परमा गतिरापतेदिति तत्राह अनन्येति। इतश्च भगवदनुस्मरणे प्रयतितव्यमित्यर्थः। सततं नित्यश इति विशेषणयोरपुनरुक्तत्वमाह सततमित्यादिना। उक्तमेवापौनरुक्त्यं व्यक्तीकरोति नेत्यादिना। जितासुरिच्छया देहं त्यजति तदितरस्तु कर्म्मक्षयेणैवेति विशेषं निवच्चयन्नाह यत इति ॥ १४ ॥

स्वा० टी०। एवम्भूतान्तकाले धारणया मत्प्राप्तिर्नित्याभ्यासवशत एव भवति नान्यस्येति पूर्व्वोक्तमेवानुस्मारयति अनन्येति। नास्त्यन्यस्मिन् चेतो यस्य तथाभूतः सन् यो मां सततं निरन्तरं नित्यशः प्रतिदिनं स्मरति तस्य नित्ययुक्तस्य समाहितस्याहं सुखेन लभ्योऽस्मि नान्यस्येति ॥ १४ ॥

**मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम्।**
**नाप्नुवन्ति महात्मानः संसिद्धिं परमाङ्गताः ॥ १५ ॥**

तव सौलभ्येन किं स्यादित्युच्यते शृणु तन्मम सौलभ्येन यद्भवति मामुपेत्येति। मामुपेत्य मामीश्वरमुपेत्य मद्भावमापद्य पुनर्जन्म पुनरुत्पत्तिं न प्राप्नुवन्ति किं विशिष्टं पुनर्जन्म न प्राप्नुवन्ति तद्विशेषणमाह दुःखालयं दुःखानामाध्यात्मिकादीनामालयमाश्रयं आलीयन्ते यस्मिन्

दुःखानि तत् दुःखालयं जन्म न केवलं दुःखालयमशाश्वतमनवस्थितस्वरूपञ्च नाप्नुवन्तीदृशं पुनर्जन्म महात्मानो यतयः संसिद्धिं मोक्षाख्यां परमां प्रकृष्टां गताः प्राप्ताः ॥ १५ ॥

श्रा० टी० । अनन्यचेतसं समाहितचेतसं प्रतीश्वरस्य सौलभ्यमेवमित्युच्यते किं तां प्राप्तास्तत्रैवावतिष्ठन्ते किं वा पुनरावर्त्तन्ते चन्द्रलोकादिवेति सन्देहात् पृच्छति तवेति । तत्रोत्तरश्लोकेन निश्चयं दर्शयति उच्यत इति । ईश्वरोपगमनं न सामीप्यमात्रमिति व्याचष्टे मद्भावमिति । पुनर्जन्मनोऽनिष्टत्वं प्रश्नद्वारा स्फुटयति किमित्यादिना । महात्मत्वं प्रकृष्टसत्त्ववैशिष्ट्यं यतयस्त्विश्वरे सततृपत्वसम्यग्दर्शिनो भूत्वेति शेषः ॥ १५ ॥

स्वा० टी० । यद्येवं त्वं सुलभोऽसि ततः किमत आह मामिति । उत्तमयथा महात्मानो मद्भक्ता मां प्राप्य पुनर्दुःखाश्रयमनित्यञ्च जन्म न प्राप्नुवन्ति यतस्ते परमां सिद्धिं मोक्षमेव प्राप्ताः पुनर्जन्मनो दुःखानामालयं स्थानं मामुपेत्य न प्राप्नुवन्तीति ॥ १५ ॥

**आब्रह्मभुवनाल्लोकाः पुनरावर्त्तिनोऽर्जुन ! ।**
**मामुपेत्य तु कौन्तेय ! पुनर्जन्म न विद्यते ॥१६॥**

ये पुनर्मां न प्राप्नुवन्ति ते पुनरावर्त्तन्ते के पुनस्त्वत्तोऽन्यत् प्राप्ताः पुनरावर्त्तन्त इत्युच्यते आब्रह्मेति । आब्रह्मभुवनाद्भवन्ति यस्मिन् भूतानीति भुवनं ब्रह्मभुवनं ब्रह्मलोक इत्यर्थः आब्रह्मभुवनात् सह ब्रह्मभुवनेन लोकाः सर्वे पुनरावर्त्तिनः पुनरावर्त्तनस्वभावाः हे अर्जुन ! मामेकमुपेत्य तु कौन्तेय ! पुनर्जन्म पुनरुत्पत्तिर्न विद्यते ॥ १६ ॥

श्रा० टी० । भगवन्तमुपगतानामपुनरावृत्तौ ततो विमुखानामपु-

प्रज्ञातत्त्वमर्पियां पुनरावृत्तिरर्थसिद्धेत्याह वै पुनरिति। अपाम सोमममृता अभूमेति श्रुतेः स्वर्गादिगतानामपि समानैवानावृत्तिरिति आशङ्कते के पुनरिति। अर्थवादश्रुतौ कर्मिणामन्नतत्त्वसापेक्षिकत्वं विवक्षित्वा परिहरति उच्यत इति। एतेन भूरादिलोकचतुष्टयं प्रविष्टानां पुनरावृत्तावपि जनादिलोक एषां प्राप्तानामपुनरावृत्तिरिति विभागोक्तिरप्रामाणिकत्वादेव हेयेत्यवधेयम्। तर्हि तद्देवेश्वरं प्राप्तानामपि पुनरावृत्तिः स्यादिति नेत्याह मामिति। यावत्तु पातस्मृतिवद्धेश्वरं प्राप्तानां निवृत्ताविद्यानां पुनरावृत्तिरप्रमाणिकीत्यर्थः॥ १६॥

श्रा॰ टी॰। तदेवं सर्वेष्वपि लोकेषु पुनरावृत्तिं दर्शयन् निद्धारयति आब्रह्मभुवनादिति। ब्रह्मणो भुवनं वासस्थानं ब्रह्मलोकस्तमभिव्याप्य सर्वे लोकाः पुनरावर्त्तनशीलाः ब्रह्मलोकस्यापि विनाशित्वात्, तत्प्राप्तानामनुत्पन्नज्ञानानामवश्यम्भावि पुनर्जन्म य एवं क्रममुक्तिफलाभिरुपासनाभिर्ब्रह्मलोकं प्राप्तास्तेषामेव तत्रोत्पन्नज्ञानानां ब्रह्मणा सह मोक्षो नान्येषां तथा च, ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्। परस्यान्ते ब्रह्मणः परमायुषोऽन्ते कृतात्मानो ब्रह्मभावापादितमनोवृत्तयः कर्मद्वारेण येषां ब्रह्मलोकप्राप्तिस्तेषां न मोक्ष इति परनिर्णितिः, मामुपेत्य वर्त्तमानानान्तु पुनर्जन्म नास्त्येवेति॥ १६॥

**सहस्रयुगपर्य्यन्तमहर्यद्‌ब्रह्मणो विदुः।**
**रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः॥१७**

ब्रह्मलोकसहिता लोकाः कस्मात् पुनरावर्त्तिनः कालपरिच्छिन्नत्वात् कथं सहस्रेति। सहस्रयुगपर्य्यन्तं सहस्राणि युगानि पर्य्यन्तं पर्य्यवसानं यस्याह्नस्तदहः सहस्रयुगपर्य्यन्तं ब्रह्मणः प्रजापतेः विराजो विदुः रात्रि-

अपि युगसहस्रान्तः परिमाणमेव के विदुरित्याह तेऽहोरात्रविदः कालसंख्याविदो जना इत्यर्थः ॥ १७ ॥

आ० टी०। यस्य स्वाभाविकी संयमबुद्धा च शुद्धिस्तस्यैवोक्तं नैव बुद्धिरस्तीति मत्वा संबुद्धिद्वयं ब्रह्मलोकसहितानां पुनरावृत्तौ हेतु प्रश्नद्वारा दर्शयति ब्रह्मेति। उक्तमेव हेतुमाकाङ्क्षापूर्वकमुत्तरश्लोकेन साधयति कथमित्यादिना। यथोक्ताहोरात्रावयवमासर्त्वयनसंवत्सरावयवं शतसंख्यायुरवच्छिन्नत्वात् प्रजापतेस्तदन्तर्वर्त्तिनामपि लोकानां यथायोग्यकालपरिच्छिन्नत्वेन पुनरावृत्तिरित्यभिप्रेत्य व्याचष्टे सहस्रेत्यादिना ॥ १७ ॥

स्वा० टी०। मनुः च तपस्विनो दानशीला वीतरागास्तितिक्षवः। त्रैलोक्यस्योपरिस्थानं लभन्ते शोकवर्जितम्। इत्यादिपुराणवाक्यैस्त्रिलोक्याः सकाशान्महर्लोकादीनामुत्कृष्टत्वं गम्यते विनाशित्वे च सर्वेषामविशिष्टे कथमसौ विशेषः स्यादित्याशङ्क्य बहुकल्पकालावस्थायित्वनिमित्तोऽसौ विशेष इत्याशयेन स्वमानेन शतवर्षायुषो ब्रह्मणोऽहन्यहनि त्रिलोक्या उत्पत्तिर्निशि निशि च प्रलयो भवतीति दर्शयिष्यन् ब्रह्मणोऽहोरात्रयोः प्रमाणमाह सहस्रेति। सहस्रं युगानि पर्यन्तोऽवसानं यस्य तद्ब्रह्मणो यदहस्तद्ये विदुः युगसहस्रमन्तो यस्यास्तां रात्रिञ्च ये विदुस्त एव सर्वज्ञा जना अहोरात्रविदः येषान्तु केवलं चन्द्रादित्यगत्यैव ज्ञानं ते तथाहोरात्रविदो न भवन्ति अल्पदर्शित्वात्, युगशब्देनात्र चतुर्युगमभिप्रेतं चतुर्युगसहस्रन्तु ब्रह्मणो दिनमुच्यत इति विष्णुपुराणोक्तेः, ब्रह्मण इति च महर्लोकादिवासिनामुपलक्षणार्थम्। तत्रायं कालगणनाप्रकारः मनुष्याणां यद्वर्षं तद्देवानामहोरात्रं तादृशैरहोरात्रैः पक्षमासादिकल्पनया द्वादशभिर्वर्षसहस्रैश्चतुर्युगं भवति चतुर्युगसहस्रन्तु ब्रह्मणो दिनं तावत्प्रमाणैव रात्रिस्तादृशैरहोरात्रैः पक्षमासादिक्रमेण वर्षशतं ब्रह्मणः परमायुरिति ॥ १७ ॥

**अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे।**

**रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥ १८ ॥**

यत एवं कालपरिच्छिन्नास्तेऽतः पुनरावर्त्तिनो लोकाः प्रजापतेरहनि यद्भवति रात्रौ च तदुच्यते अव्यक्तेति । अव्यक्ताद्व्यक्तं प्रजापतेः स्वापावस्था तस्मादव्यक्तात् व्यक्तयो व्यज्यन्त इति व्यक्तयः स्थावरजङ्गमलक्षणाः सर्वाः प्रजाः प्रभवन्त्यभिव्यज्यन्ते अह्नः आगमोऽहरागमस्तस्मिन्नहरागमे काले ब्रह्मणः प्रबोधकाले तथा रात्र्यागमे ब्रह्मणः स्वापकाले प्रलीयन्ते सर्वा व्यक्तयस्तत्रैव पूर्वोक्तेऽव्यक्तसंज्ञके ॥ १८ ॥

श्री० टी० । अक्षरार्थमुक्त्वा तात्पर्यार्थमाह यत इति । यत् प्रजापतेरहस्तद्युगसहस्रपरिमितं या च तस्य रात्रिः सापि तथेति कालविदामभिप्रायमनुसृत्य ब्रह्मणस्त्वहोरात्रस्य कालपरिमाणं दर्शयित्वा तत्रैव विभज्य कार्य्यं कथयति प्रजापतेरिति । अव्यक्तमव्याकृतमिति शङ्कां वारयति अव्यक्तमित्यादिना । कानित्यनित्यानि भूतान्यव्यक्तीभावं वर्त्तयति स्थावरेति । अवस्थान्तरप्रवृत्तिं प्रकाशयति अभिव्यज्यन्त इति । पूर्वोक्तमव्यक्तसंज्ञकं स्वापावस्थं ब्रह्म प्रजापतिसंज्ञितं तत्रैवेति यावत् ॥ १८ ॥

आ० टी० । ततः किमत आह अव्यक्तादित्यादि । कार्य्याव्यक्त-रूपं कारणात्मकं तस्मादव्यक्तात् कारणरूपात् व्यज्यन्त इति व्यक्तयश्चरा-चराणि भूतानि प्रादुर्भवन्ति, कदा, अहरागमे ब्रह्मणो दिवसप्रारम्भे तथा रात्र्यागमे ब्रह्मणःशयने तस्मिन्नेवाव्यक्तसंज्ञके कारणरूपे लयं यान्ति । यद्वा तेऽहोरात्रविद इत्येतद् विधीयते किन्तु ते जनिता अहोरात्रविदो जना ब्रह्मणो यद्दर्शितं तत्स्वरूपं कालेऽव्यक्तात्सर्वाः प्रभवन्ति यान्ति रात्रिं विभुरहोरात्रागमे प्रलीयन्त इति सम्ब-न्धः ॥ १८ ॥

**भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते।**
**रात्र्यागमेऽवशः पार्थ! प्रभवत्यहरागमे ॥१९॥**

अकृताभ्यागमकृतविप्रणाशदोषपरिहारार्थं बन्धमोक्षशास्त्रप्रवृत्तिसाफल्यप्रदर्शनार्थं अविद्यादिक्लेशमूलकर्माशयवशाच्चावशो भूतग्रामो भूत्वा प्रलीयत इत्यतः संसारे वैराग्यप्रदर्शनार्थञ्चेदमाह भूतग्राम इति। भूतग्रामो भूतसमुदायः स्थावरजङ्गमलक्षणो यः पूर्वस्मिन् कल्पे आसीत् स एवायं नान्यो भूत्वा पुनः अहरागमे प्रलीयते पुनः पुनः रात्र्यागमेऽह्नःक्षयेऽवशोऽस्वतन्त्र एव पार्थ! प्रभवति जायते स एव अहरागमे ॥ १९ ॥

आ॰ टी॰। ननु प्रबोधकाले ब्रह्मणो यो भूतग्रामो भूत्वा तस्यैव स्वापकाले विलीयते तस्मादन्यो भूयोभूयो ब्रह्मणोऽहरागमे भूत्वा पुनस्तदागमे परवशो विनश्यति तदेवं प्रत्यवान्तरकल्पं भूतग्रामविभागो भवेदित्याशङ्क्यानन्तरश्लोकतात्पर्यमाह अकृतेति। प्रतिकल्पं प्राणिनिकायस्य भिन्नत्वे सति 'अकृताभ्यागमा'दिदोषप्रसङ्गात्तत्परिहारार्थं भूतग्रामस्य प्रतिकल्पमैक्यमास्थेयमित्यर्थः। यदि स्थावरजङ्गमलक्षणप्राणिनिकायस्य प्रतिकल्पमन्यथात्वं तदेकस्य बन्धमोक्षान्वयिनोऽभावात् कायव्यूहात्मनो बन्धमोक्षार्थस्य शास्त्रस्य प्रवृत्तिरफला प्रसज्येत अतस्तत्साफल्यार्थमपि प्रतिकल्पं प्राणिवर्गस्य नवीनत्वानुपपत्तिरित्याह बन्धेति। कथं पुनर्भूतसमुदायोऽस्वतन्त्रः सन्नवशो भूत्वा प्रविलीयते तत्राह अविद्यादीति। आदिशब्देनास्मितारागद्वेषाभिनिवेशा गृह्यन्ते, यथोक्तक्लेशपूर्वकं मूलं प्रति प्रतिलभ्य कल्पं प्रतिलभ्य धर्माधर्मात्मककर्मराशिवशादवि सहस्रैवास्वतन्त्रो भूतसमुदायो जन्मविनाशावनुभवतीत्यर्थः। प्राणिनिकायस्य जन्मनाशाभ्यामुक्तैर्वैराग्यमर्थमाह इत्यत इति। संसारे विपरिवर्त्तमानानां प्राणिनामस्वातन्त्र्यादवशानामेव जन्ममरण-

प्रपञ्चसम्बन्धात् अवशमनेन संसारेऽपीति वैतृष्ण्यं तस्मिन् प्रदर्शनीयं तदर्थं चेदमुक्तानामहोरात्रमाहात्म्यकथनमित्यर्थः, समनन्तरवाक्यमिदमा-परामृश्यते। रात्र्यागमे लयमनुभवतोऽहरागमे च प्रभवं प्रतिपद्य-मानस्य प्राणिवर्गस्य तुल्यं पारवश्यमित्याशयवानाह अवश इति ॥ १९ ॥

स्वा० टी०। तत्र च कृतनाशाकृताभ्यागमशङ्कां वारयन् वैरा-ग्यार्थं सृष्टिप्रलयप्रवाहस्याविच्छेदं दर्शयति भूतग्राम इति भूतानां चरा-चरप्राणिनां ग्रामः समूहो यः प्रागासीत् स एवायमहरागमे भूत्वा भूत्वा रात्रेरागमे प्रलीयते प्रलीय प्रलीय पुनरप्यहरागमेऽवशः कर्मा-दिपरतन्त्रः सन् प्रभवति नान्य इत्यर्थः ॥ १९ ॥

**परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात् सनातनः।**
**यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥२०॥**

यदुपन्यस्तमक्षरं तस्य प्राप्त्युपायो निर्दिष्ट ओमित्ये-काक्षरं ब्रह्मेत्यादिनाथेदानीमक्षरस्यैव स्वरूपनिर्दिदिक्षये-दमुच्यते पर इति। अनेन योगमार्गेणेदं गन्तव्यमिति परस्तस्मादिति परो व्यतिरिक्तोऽभिन्न कुतस्तस्मात् पूर्वोक्ता-दव्यक्तात् तुशब्दोऽव्यक्ताक्षरस्य विवक्षितस्य व्यक्तादव्यक्तलक्ष-णविशेषणार्थः भावोऽक्षराख्यं परं ब्रह्म व्यतिरिक्तत्वे सत्यपि सालक्षण्यप्रसङ्गोऽस्तीति तद्विनिवृत्त्यर्थमाह अन्य इति अन्यो विलक्षणः स चाव्यक्तोऽनिन्द्रियगोचरः परस्त-स्मादित्युक्तं कस्मात् पुनः परः पूर्वोक्ताद्भूतग्रामबीज-भूतादविद्यालक्षणादव्यक्तादन्यो विलक्षणो भाव इत्यभि-प्रायः सनातनश्चिरन्तनो यः स भावः सर्वेषु भूतेषु ब्रह्मा-दिषु नश्यत्सु न विनश्यति ॥ २० ॥

आ० टी०। अक्षरं ब्रह्म परमित्युपक्रम्य तदनुपयुक्तं किञ्चिद-

मव्यदुक्तमित्याशङ्क्य दृष्टमनूद्यानन्तरमव्यक्तकृतिमाह यदुपन्यस्तमिति। अक्षरस्वरूपे निर्दिदिक्षिते तस्मिन् पूर्वोक्तयोगमार्गस्य कथमुपयोगः स्यादित्याशङ्क्य तत्प्राप्त्युपायत्वेनेत्याह अनेनेति। गन्तव्यमिति योगमार्गेणाभियुक्तेति शेषः, पूर्वोक्तादव्यक्तादिति सम्बन्धः। परशब्दस्य व्यतिरिक्तविषयत्वे तुशब्देन वैलक्षण्यमुक्त्वा पुनरन्यशब्दप्रयोगात् पौनरुक्त्यमित्याशङ्क्याह व्यतिरिक्तत्व इति। तुना द्योतितं वैलक्षण्यमन्यशब्देन प्रकटितं यतो भिन्नेष्वपि भावभेदेषु सालक्षण्यमालक्ष्यते ततश्चाव्यक्ताद्भिन्नत्वेऽपि सलक्षणत्वेन सादृश्यमाशङ्कते तच्छित्त्यर्थमन्यपदमित्यर्थः, यद्वा परशब्दस्य प्रकृष्टवाचिनो भावविशेषणार्थत्वे पुनरुक्तिशङ्कैव नास्तीति द्रष्टव्यं अनादिभावस्याक्षरस्याविनाशित्वमर्थसिद्धं समर्थयते यः स भाव इति। सर्वं हि विनश्यद्विकारजातं पुरुषान्तं विनश्यति स तु विनाशहेत्वभावान्न विनष्टुमर्हतीत्यर्थः॥ २०॥

स्वा० टी०। लोकानामनित्यत्वं प्रपञ्च्य परमेश्वरस्वरूपस्य नित्यत्वं प्रपञ्चयति पर इति द्वाभ्याम्। तस्माच्चराचरकारणभूतादव्यक्तात् परस्तस्यापिकारणभूतो योऽन्यस्तद्विलक्षणोऽव्यक्तश्चक्षुराद्यगोचरो भावः सनातनोऽनादिः स तु सर्वेषु कार्यकारणलक्षणेषु भूतेषु नश्यत्स्वपि न विनश्यति॥ २०॥

**अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम्।**
**यं प्राप्य न निवर्त्तन्ते तद्धाम परमं मम॥ २१॥**

अव्यक्त इति। योऽसावव्यक्तोऽक्षर इत्युक्तस्तमेवाक्षरसंज्ञकमव्यक्तं भावं आहुः परमां प्रकृष्टां गतिं यं भावं प्राप्य गत्वा न निवर्त्तन्ते संसाराय तद्धामस्थानं परमं प्रकृष्टं मम विष्णोः परमं पदमित्यर्थः॥ २१॥

शा० टी०। यथोक्तेऽव्यक्ते भावे श्रुतिसम्मतिमाह अव्यक्त इति। तस्य परमगतित्वं साधयति यं प्राप्येति। योऽसावव्यक्तो भावोऽत्र

दर्शितः स येनाक्षरं पुरुषं वेद सत्यमित्यादिश्रुतावक्षर इत्युक्तः तं वाक्षरं भाव' परमां गतिं पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिरित्याद्याः श्रुतयो वदन्तीत्याह योऽसाविति । परमपुरुषस्य परमगतित्वमुक्तं व्यनक्ति यं भावमिति। तद्विष्णोः परमं पदमिति श्रुतिमत्र संवादयति तद्धामेति ॥ २१ ॥

स्वा॰ टी॰ । अविनाशे प्रमाणं दर्शयन्नाह अव्यक्त इति । यो भावोऽव्यक्तोऽतीन्द्रियः अक्षरः एषेश्वनाशमभूत्व इति तथा अक्षरात् सम्भवतीह विश्वमित्यादिश्रुतिष्वक्षर इत्युक्तः, तं परमां गतिं गम्यं पुरुषार्थमाहुः पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिरित्यादिश्रुतयः, परमगतित्वमेवाह यं प्राप्य न पुनर्निवर्त्तन्त इति । तच्च ममैव धाम स्वरूपं, ममेत्युपचारे षष्ठी राहोः शिर इतिवत्, अतोऽहमेव परमा गतिरित्यर्थः ॥ २१ ॥

# पुरुषः स परः पार्थ ! भक्त्या लभ्यस्त्वनन्यया ।
# यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम् २२॥

तल्लब्धेरुपाय उच्यते पुरुष इति । पुरुषः पुरि शयनात् पूर्णत्वाद्वा स परः पार्थ ! परो निरतिशयो यस्मात् पुरुषान्न परं किञ्चित् स भक्त्या लभ्यस्तु ज्ञानलक्षणयानन्यया आत्मविषयया: यस्य पुरुषस्यान्तःस्थानि मध्यस्थानि कार्य्यभूतानि कार्य्यं हि कारणस्यान्तर्वर्त्ति भवति येन पुरुषेण सर्वमिदं जगत्ततं व्याप्तं आकाशेनेव घटादि ॥ २२ ॥

व्या॰ टी॰ । नतु व्यक्तादतिरिक्तस्य तद्विलक्षणस्य परमपुरुषस्य प्राप्तौ कश्चिदसाधारणो हेतुरेषितव्यो यस्मिन् प्रेक्षापूर्वकारी तत्प्रेप्सया प्रवृत्तो निर्वृणोत तत्राह तल्लब्धेरिति । परस्य पुरुषस्य सर्वकारणत्वं सर्वव्यापकत्वञ्च विशेषणद्वयस्तदाहरति यस्येति । निरतिशयत्वं विशदयति यस्मादिति । तुशब्दोऽवधारणार्थः, भक्तिर्भजनम् । वेदान्तदर्शितप्रमाणा-

यामादिलक्षणानां व्यावर्त्तयति स्थानेति । उक्ताया भक्तेर्विषयतो वैशिष्ट्य-
माह अनन्ययेति । कोऽसौ पुरुषो यद्विषया भक्तिस्तत्प्राप्तौ पर्याप्तेत्या-
शङ्क्योत्तरार्द्धं व्याचष्टे यस्येति । कथंभूतानां तदन्तःस्थत्वं तत्राह कार्य्य-
हीति । सपर्य्यगादिति श्रुतिमाश्रित्याह येनेति ॥ २२ ॥

स्वा० टी० । तत्प्राप्तौ च भक्तिरन्तरङ्गोपाय इत्युक्तमेवेत्याह पुरुष इति । स चाहं परः पुरुषोऽनन्यया न विद्यतेऽन्यः शरणत्वेन यस्यास्तया एकान्तभक्त्यैव लभ्यो नान्यथा । परत्वमेवाह यस्य कारणभूतस्यान्तर्मध्ये भूतानि स्थितानि येन च कारणभूतेनेदं सर्वं जगत्ततं व्याप्तम् ॥२२॥

**यत्र काले त्वनावृत्तिमावृत्तिञ्चैव योगिनः ।**
**प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥२३॥**

प्रकृतानां योगिनां प्रणवावेशितब्रह्मबुद्धीनां कालान्तरमुक्तिभाजां तद्ब्रह्मप्रतिपत्तये उत्तरो मार्गो वक्तव्य इति यत्र काल इत्यादिविवक्षितार्थसमर्पणार्थमुच्यते आवृत्तिमार्गोपन्यास इतरमार्गस्तुत्यर्थः यत्रेति । यत्र काले प्रयाता इति व्यवहितेन सम्बन्धः यत्र यस्मिन् काले त्वनावृत्तिमपुनर्जन्म आवृत्तिं तद्विपरीतां चैव योगिन इति कर्मिणश्चोच्यन्ते कर्मिणस्तु गुणतः कर्मयोगेन योगिनामिति विशेषणात् तत्र विभज्यन्ते योगिनः यत्र काले प्रयाता मृता योगिनो नावृत्तिं यान्ति यत्र काले च प्रयाता मृता आवृत्तिं यान्ति तं कालं वक्ष्यामि भरतर्षभ ! ॥ २३ ॥

आ० टी० । ननु ज्ञानायत्ता परमपुरुषप्राप्तिरुक्ता न च ज्ञानं मार्गमपेक्ष्य फलाय कल्पते विदुषो गत्युत्क्रान्तिनिषेधश्रुतेः तथाच मार्गोक्तिरयुक्तेत्याशङ्क्य स गुणशरणानां तदुपदेशोऽर्थवानित्यभिप्रेत्याह प्रकृतानामिति । वक्तव्य इति यत्र काल इत्याद्युच्यते इति सम्बन्धः । स चेद्वक्तव्यस्तर्हि किमित्यध्यात्मादिभावेन सविशेषं ब्रह्म ध्यायतां फलाप्तये

मूर्द्धन्यनाड्योपलक्षिते देवयाने पथ्युपासकानाम् वक्तव्ये कालो निर्दिश्यते तत्राह विवक्षितेति। कोऽसौ मार्गस्तदुक्तिशेषत्वेन कालोक्तिरित्यर्थः। पितृयाणमार्गोऽन्यानर्थस्तर्हि किमिति क्रियते तत्राह आवृत्तिमिति। मार्गान्तरस्यावृत्तिफलत्वादस्य चानावृत्तिफलत्वात्तदपेक्षया महीयानय-मिति स्तुतिर्विवक्षितेति भावः, योगिन इति ध्यायिनां कर्मिणाञ्च तन्त्रेणाभिधानमित्याह योगिन इति। कथं कर्मिषु योगिशब्दो वर्त्तता मित्याशङ्क्यानुष्ठानगुणयोगादित्याह कर्मिणश्चेति। गुणतो योगिन इति सम्बन्धः। तत्रैव वाक्योपक्रमस्यानुकूल्यमाह कर्मयोगेनेति। अथ-शिष्टान्यक्षराणि व्याचक्षाणो वाक्यार्थमाह यत्रेति। योगिनोऽध्यायि-नोऽत्र विवक्षिताः ये आवृत्तावधिकृता योगिनः कर्मिण इति विभागः कालप्राधान्येन मार्गद्वयोपन्यासमुपक्रम्य तमेव प्रधानीकृत्य देवयानं पन्थानमवतारयति तं कालमिति ॥ २३ ॥

स्वा० टी०। तदेवं परमेश्वरोपासकास्तत्पदं प्राप्य न निवर्त्तन्ते अन्ये त्वावर्त्तन्त इत्युक्तं तत्र केन मार्गेण गता नावर्त्तन्ते केन वाव-र्त्तन्त इत्यपेक्षायामाह यत्रेति यत्र यस्मिन् काले प्रयाता योगिनोऽना-वृत्तिं यान्ति यस्मिंश्च काले प्रयाता आवृत्तिं यान्ति तं कालं वक्ष्यामी-त्यन्वयः, अत्र च रश्म्यनुसारी चतनायनेऽपि दक्षिण इति सूत्रित-न्यायेनोत्तरायणादिकालविशेषमरणस्य त्वविवक्षितत्वात् कालशब्देन, कालाभिमानिनीभिरातिवाहिकीभिर्देवताभिः प्राप्यो मार्ग उपलक्ष्यते. अतोऽयमर्थः यस्मिन् कालाभिमानिदेवतोपलक्षिते मार्गे प्रयाता योगिन उपासकाः कर्मिणश्च यथाक्रममनावृत्तिमावृत्तिञ्च यान्ति तं कालाभि मानिदेवतोपलक्षितं मार्गं कथयिष्यामीति, अग्निज्योतिषोः कालाभि-मानित्वाभावेऽपि भूयसामहरादिशब्दोक्तानां कालाभिमानिनां बाहु-ल्यादाम्रवनमित्यादिवत् कालशब्देनोपलक्षणमविरुद्धम् ॥ २३ ॥

**अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्।**
**तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥२४॥**

तं कालमाह अग्निर्ज्योतिरिति। अग्निः कालाभिमानिनी देवता तथा ज्योतिर्देवतैव कालाभिमानिनी अथ वा अग्निर्ज्योतिषी यथाश्रुते एव देवते भूयसा तु निर्देशो यत्र काले तं कालमिति आम्रवनवत् तथाहर्देवताहरभिमानिनी शुक्लः शुक्लपक्षदेवता तथा षण्मासा उत्तरायणं तत्रापि देवतैव मार्गभूतेति स्थितोऽन्यत्र न्यायस्तत्र तस्मिन् मार्गे प्रयाता मृता गच्छन्ति ब्रह्म ब्रह्मविदो ब्रह्मोपासकाः ब्रह्मोपासनपरा जनाः क्रमेणेति वाक्यशेषो न हि सद्योमुक्तिभाजां सम्यग्दर्शननिष्ठानां गतिरागतिर्वा क्वचिदस्ति न तस्य प्राणा उत्क्रामन्तीति श्रुतेः ब्रह्मसंलीनप्राणा एव ते ब्रह्ममया ब्रह्मभूता एव ते॥ २४॥

व्या० टी०। यथोपक्रमं व्याख्याय यथाश्रुतं व्याचष्टे अथ वेति। कथं तर्हि देवतानामभिनेतॄणां ग्रहणे कालप्राधान्येन निर्देशः क्रियते तत्राह भूयसात्त्विति। मार्गद्वयेऽपि कालाद्यभिमानिन्यो देवताः कालशब्देनोच्यन्ते कालाभिमानिनीनां भूयस्त्वात् कालशब्देन सर्वासां देवतानामुपलक्षणत्वं विवक्षित्वा कालकथनमित्यर्थः यथाम्राणां भूयस्त्वादितरस्थानेष्वपि वृक्षान्तरेषु आम्रैरेव वनं निर्दिश्यते तद्वदित्युदाहरणमाह आम्रवनेति। ननु मार्गचिह्नानां भोगभूमीनां वा तत्तच्छब्दैरुपादानसम्भवे किमिति देवताग्रहणमित्याशङ्क्यातिवाहिकास्तल्लिङ्गादिति न्यायेनोत्तरमाह इति स्थित इति। तेषामग्न्यादीनां समीपमिति सामीप्ये तत्रेति सप्तमी, ब्रह्म कार्यमौपाधिकं परं वा ब्रह्मपरम्परया सूत्रात्मान-मत एव क्रमेणेत्युक्तं निर्गुणमप्रपञ्चं ब्रह्माप्नोतीति विद्यावतो व्यवच्छिनत्ति ब्रह्मोपासकेति। ननु ब्रह्मशब्दस्य मुख्यार्थत्वात् परब्रह्मविदामेवेयं गतिरिष्यते न बादरायणाधिकरणविरोधादित्याह न हीति॥ २४॥

व्या० टी०। तत्रावृत्तिमार्गमाह धूम इति। धूमज्योतिः-

शब्दाभ्यां तेऽर्चिरभिसम्भवन्तीति श्रुत्युक्तार्चिरभिमानिनी देवतोपलक्ष्यते, अहरिति दिवसाभिमानिनी, शुक्ल इति शुक्लपक्षाभिमानिनी, उत्तरायणरूपाः षण्मासा इत्युत्तरायणाभिमानिनी, एतच्छब्दाभ्यामपि श्रुत्युक्तानां संवत्सर देवलोकादि देवतानामुपलक्षणार्थं, एवंभूतो यो मार्गस्तत्र प्रयाता गता भगवदुपासका जना ब्रह्म प्राप्नुवन्ति यतस्ते ब्रह्मविदः तथा च श्रुतिः तेऽर्चिषमभिसम्भवन्ति अर्चिषोऽहरह्न आपूर्य्यमाणपक्षमापूर्य्यमाणपक्षाद्यान् षण्मासानुदङ्ङादित्य इति मासेभ्यो देवलोकमिति ॥ २४ ॥

धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्त्तते ॥२५॥

धूम इति । धूमो रात्रिः धूमाभिमानिनी रात्र्यभिमानिनी च देवता तथा कृष्णः कृष्णपक्षदेवता षण्मासा दक्षिणायनमिति च पूर्ववद्देवतैव तत्र चन्द्रमसि भवं चान्द्रमसं ज्योतिस्तत्फलं इष्टादिकारी योगी कर्म्मी प्राप्य भुक्त्वा तत्क्षयादिह निवर्त्तते पुनः ॥ २५ ॥

श्री० टी० । प्रकृतं देवयानं पन्थानं स्तोतुं पितृयानमुपन्यस्यति धूम इति । अत्रापि मार्गचिह्नानि भोगभूमीश्च व्यवच्छिद्य आतिवाहिकदेवताविषयत्वं धूमादिपदानां विभजते धूमेत्यादिना । तत्रेति सप्तमी पूर्ववदेव सामीप्यार्था, इष्टादीत्यादिशब्देन पूर्त्तदत्ते गृह्येते । कृतात्ययेऽनुशयवानिति न्यायं सूचयति तत्क्षयादिति । आरोहावरोहयोरभ्यासवाचिना पुनःशब्देन संसारस्थानादित्वं सूच्यते ॥ २५ ॥

स्वा० टी० । आवृत्तिमार्गमाह धूम इति । धूमाभिमानिनी देवता रात्र्यादिशब्देश्च पूर्ववदेव रात्रिकृष्णपक्ष-दक्षिणायन रूप-षण्मासाभिमानिन्यस्तिस्रो देवता उपलक्ष्यन्ते, एताभिरुपलक्षितो यो मार्गस्तत्र प्रयातः कर्मयोगी चान्द्रमसं ज्योतिस्तदुपलक्षितं स्वर्गलोकं प्राप्य तत्रेष्टा-

भूत्वा कर्मफलं भुक्त्वा पुनरावर्त्तते, तत्रापि श्रुतिः ते धूममभिसम्भवन्ति धूमाद्रात्रिं रात्रेरपक्षीयमाणपक्षमपक्षीयमाणपक्षाद्यान् षण्मासान् दक्षिणादित्य एति मासेभ्यः पितृलोकं पितृलोकात् चन्द्रं ते चन्द्रं प्राप्यान्नं भवन्तीत्यादि, तदेवं निवृत्तिकर्मसहितोपासनया क्रममुक्तिः काम्यकर्मभिश्च स्वर्गभोगानन्तरमावृत्तिः निषिद्धकर्मभिस्तु नरकभोगानन्तर-
मावृत्तिः क्षुद्रकर्मणाञ्च जन्तूनां अत्रैव पुनः पुनर्जन्मेति द्रष्टव्यम् ॥ २५ ॥

**शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते।**
**एकया यात्यनावृत्तिमन्यया वर्त्तते पुनः॥ २६ ॥**

शुक्लेति। शुक्लकृष्णे शुक्ला च कृष्णा च शुक्लकृष्णे ज्ञानप्रकाशकत्वात् शुक्ला तदभावात् कृष्णा एते शुक्लकृष्णे हि गती जगत इत्यधिकृतानां ज्ञानकर्मणोर्न जगतः सर्वस्यैवैते गती सम्भवतः शाश्वते नित्ये संसारस्य नित्य-
त्वान्नित्ये मतेऽभिप्रेते तत्रैकया शुक्लया यात्यनावृत्तिमा-
वृत्तिमन्ययेतरया वर्त्तते पुनः भूयः ॥ २६ ॥

व्या० टी०। रात्र्यादौ मृतानां ब्रह्मविदामब्रह्मप्राप्तिप्रसङ्गानिवृ-
त्त्यर्थमभिमानिनीदेवताग्रहणाय मार्गयोर्नित्यत्वमाह शुक्लेति। ज्ञान-
प्रकाशकत्वाद्विद्याप्राप्यत्वादर्चिरादिप्रकाशोपलक्षितत्वाच्च शुक्ला देवयानाख्या
गतिस्तदभावाज्ज्ञानप्रकाशकत्वाभावात् धूमाद्यप्रकाशोपलक्षितत्वादविद्या-
प्राप्यत्वाच्च कृष्णा पितृयानलक्षणा गतिः ययोर्गत्योः श्रुतिस्मृतिप्रसिद्धयो-
र्हिशब्दः। जगतः कृत्स्नस्य ज्ञानकर्माधिकृतविषयत्वेन सङ्कोचे हेतुमाह न
जगत इति। अन्यथा ज्ञानकर्मोपदेशानर्थक्यादित्यर्थः। तयोर्नित्यत्वे
हेतुमाह संसारस्येति। मार्गयोर्नित्यत्वे संसारभावित्वे फलितमाह तत्रेति।
क्रममुक्तिरनावृत्तिः भूयो भोक्तव्यकर्मक्षये शेषकर्मवशादित्यर्थः ॥ २६ ॥

स्वा० टी०। उक्तमार्गावुपसंहरति शुक्लेति। शुक्लाऽर्चिरादिगतिः
प्रकाशमयत्वात् कृष्णा धूमादिगतिस्तमोमयत्वात् एते गती मार्गौ ज्ञान-

कर्म्मादिकारिणो जगतः शाश्वते अनादी संमते संसारस्यानादित्वात्, तयोरेकया शुक्लयानावृत्तिं मोक्षं याति अन्यया कृष्णया तु पुनरावर्त्तते ॥ २६ ॥

नैते सृती पार्थ! जानन् योगी मुह्यति कश्चन।
तस्मात् सर्वेषु कालेषु योगयुक्तो भवार्जुन! ॥२७

नैत इति। नैते यथोक्ते सृती मार्गौ पार्थ! जानन् संसारायैकान्या मोक्षाय चेति योगी न मुह्यति न कश्चन कश्चिदपि तस्मात् सर्वेषु कालेषु योगयुक्तः समाहितो भवार्जुन! ॥ २७ ॥

श्वा० टी०। गतेरुपास्यत्वाय तद्विज्ञानं स्तौति नैत इति। योगस्य मोक्षोपायोहकत्वे फलितमाह तस्मादिति। ज्ञानप्रकारमनुवदति संसारायेति। मोक्षाय क्रमसुक्त्यर्थमित्यर्थः, योगी ध्याननिष्ठो गतिमपि ध्यायन्नेव मुह्यति केवलं कर्मदक्षिणमार्गप्रापकं कर्त्तव्यत्वेन न प्रत्येतीत्यर्थः। योगस्यापुनरावृत्तिफलत्वे नित्यकर्त्तव्यत्वं सिद्धमित्युपसंहरति तस्मादिति ॥ २७ ॥

स्वा० टी०। मार्गज्ञानफलं दर्शयन् भक्तियोगमुपसंहरति नैते इति। एते सृती मार्गौ मोक्षसंसारप्रापकौ जानन् कश्चिदपि योगी न मुह्यति सुखबुद्ध्या स्वर्गादिफलं न कामयते किन्तु परमेश्वरनिष्ठ एव भवतीत्यर्थः स्पष्टमन्यत् ॥ २७ ॥

वेदेषु यज्ञेषु तपःसु चैव
दानेषु यत् पुण्यफलं प्रदिष्टम्।
अत्येति तत् सर्वमिदं विदित्वा
योगी परं स्थानमुपैति चाद्यम् ॥ २८ ॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे तारकब्रह्मयोगो नाम अष्टमोऽध्यायः।

---

शृणु योगस्य माहात्म्यं वेदेष्विति। वेदेषु सम्यगधीतेषु यज्ञेषु च साद्गुण्येनानुष्ठितेषु तपःसु च सुतप्तेषु दानेषु च सम्यग्दत्तेषु यदेतेषु पुण्यफलं प्रदिष्टं शास्त्रेणात्येत्यतीत्य गच्छति तत् सर्वं फलजातमिदं विदित्वा सप्तप्रश्ननिर्णयद्वारेणोक्तं सम्यगवधार्य्यानुष्ठाय इह योगी परं उत्कृष्टमैश्वरं स्थानमुपैति प्रतिपद्यते आद्यमादौ भवं कारणं ब्रह्मेत्यर्थः ॥ २८ ॥

इति श्रीभगवद्गीताभाष्ये अष्टमोऽध्यायः।

व्या० टी०। अध्यायार्थं योगं स्तौति वेदेष्विति। पवित्रपाणित्वप्राङ्मुखत्वादिसाहित्यमध्ययनस्य सम्यक्त्वमङ्गोपाङ्गोपेतत्वमनुष्ठानस्य साद्गुण्यं तपसां शास्त्रोक्तानां सुतप्तत्वं मनोबुद्ध्याद्यैकाग्र्यपूर्वकत्वं दानस्य च सम्यक्त्वं देशकालपात्रानुगुणत्वमिदं विदित्वेत्यत्रेदं शब्दार्थमेव स्फुटयति सप्तेति। यद्यपि किं तद्ब्रह्मेत्यादावधियज्ञः कथं कोऽत्रेत्यत्र प्रश्नद्वयं प्रतिभासानुसारेण कैश्चिदुक्तं तथापि प्रतिवचनालोचनायां द्वित्वप्रतीत्यभावात् प्रकारभेदविवक्षया च शब्दद्वयस्य प्रतिनियतत्वाच्च सप्तेति विरुध्यते न चेदं वेदनमापातिकं किन्त्वनुष्ठानपर्य्यन्तमित्याह सम्यगिति। प्रकृतो ध्याननिष्ठो योगीत्युच्यते ऐश्वरं विष्णोः परमं पदं

तदेव तिष्ठत्यविनश्वरमिति स्थानं योगानुष्ठानाद्योगफलातिशयि मोक्ष-लक्षणं फलं क्रमेण लब्धुं शक्यमिति भावः तदनेन सप्तप्रश्नप्रतिवचनेन योगमार्गं दर्शयता ध्येयत्वेन तत्पदार्थो व्याख्यातः ॥ २८ ॥

इति अष्टमोऽध्यायः ।

भा० टी० । अध्यायार्थमष्टप्रश्नार्थनिर्णयं सफलमुपसंहरति वेदे-ष्विति । वेदेषु अध्ययनादिभिः यज्ञेषु अनुष्ठानादिभिः तपःसु कायशोष-णादिभिः दानेषु सत्पात्रेऽर्पणादिभिः यत् पुण्यफलमुपदिष्टं शास्त्रेषु तत्सर्वमत्येति ततोऽपि श्रेष्ठं योगैश्वर्य्यं प्राप्नोति, किं कृत्वा, इदमष्ट-प्रश्नार्थनिर्णयेनोक्तं तत्त्वं विदित्वा ततश्च योगी ज्ञानी भूत्वा परमुत्कृष्टं आद्यं जगन्मूलभूतं स्थानं विष्णोः पदं प्राप्नोति ॥ २८ ॥

इति अष्टमोऽध्यायः ।

---

## नवमोऽध्यायः ।

---

### श्रीभगवानुवाच।

**इदन्तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।**
**ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् १**

अष्टमे नाडीद्वारेण धारणायोगः सगुण उक्तस्तस्य च फलमर्च्चिरादिक्रमेण कालान्तरे ब्रह्मप्राप्तिलक्षण-मेवानावृत्तिरूपं निर्दिष्टं तत्रानेनैव प्रकारेण मोक्षप्राप्ति-फलमधिगम्यते नान्यथेति तदाशङ्काव्यावृत्तये भगवा-

नुवाच इदमिति। इदं ब्रह्मज्ञानं वक्ष्यमाणमुक्तं च पूर्वेष्वध्यायेषु तद्बुद्धौ संनिधीकृत्येदमित्याह तुशब्दो विशेषनिर्धारणार्थः इदमेव तु सम्यग्ज्ञानं साक्षान्मोक्षप्राप्तिसाधनं वासुदेवः सर्वमित्यात्मैवेदं सर्वमेकमेवाद्वितीयमित्यादिश्रुतिस्मृतिभ्यो नान्यदथ येऽन्यथातो विदुरन्यराजानस्तेऽक्षय्यलोका भवन्तीत्यादिश्रुतिभ्यश्च ते तुभ्यं गुह्यतमं गोप्यतमं प्रवक्ष्यामि कथयिष्याम्यनसूयवेऽसूयारहिताय किं तज्ज्ञानं किं विशिष्टं विज्ञानसहितमनुभवयुक्तं यत् ज्ञानं ज्ञात्वा प्राप्य मोक्ष्यसेऽशुभात् संसारबन्धनात् ॥ १ ॥

आ० टी०। अतीतेनागामिनोऽध्यायस्यागतार्थत्वं वक्तुं वृत्तमनुद्रवति अष्टम इति। नाड्या सुषुम्नाख्यया धारणायोगेन युक्तो योगः सगुणः सर्वद्वारसंयमनादिगुणकेन सहित इत्यर्थः। तत्फलोक्त्यर्थमनन्तराध्यायारम्भमाशङ्क्याह तस्य चेति। अग्निर्ज्योतिरित्यादिनोपलक्षितेन क्रमवता देवयानेन पथेति यावत्। ज्ञानानन्तरमेव यथोक्तफलाभावात् क्रमेण मार्गेणेत्याशङ्क्याह कालान्तर इति। अर्चिरादिमार्गेण ब्रह्मप्राप्तौ मुक्तेः मार्गायत्तत्वात् न तस्येत्यादिश्रुतिविरोधः स्यादित्याशयेन शङ्कते तत्रेति। उक्तोऽर्थः सप्तम्यर्थः। उक्ताशङ्कानिवृत्त्यर्थमनन्तराध्यायमुत्थापयति तद्धाशङ्केति। संप्रयुक्तत्वेनापरोक्षत्वाभावेऽपि पूर्वोत्तरग्रन्थालोचनया बुद्धिसंनिधानादिदंशब्देन ब्रह्मज्ञानं गृहीतं इत्याह तद्बुद्धाविति। प्रकृताज्ञानात् ज्ञानस्य वैशिष्ट्यावद्योती तुशब्द इत्याह तुशब्द इति। निपातार्थमेव स्फुटयति इदमेवेति। तस्मिन्नर्थे संवादकत्वेन श्रुतिस्मृतिं दर्शयति वासुदेव इति। अद्वैतज्ञानवत् द्वैतज्ञानमपि केषाञ्चिन्मोक्षहेतुरित्याशङ्क्याह नान्यदिति। द्वैतज्ञानं मोक्षाय न समभिमतमिति श्रुतिमुदाहरति अथेति। अविद्याप्रकरणोपक्रमार्थोऽयमथशब्दः, अतो द्वैतादन्यथा भिन्नत्वेनार्थः, विदुस्तत्त्वमिति शेषः, द्वैतस्य दुर्निरूपत्वेन कल्पितत्वात् तज्ज्ञानं रज्जुसर्पादिज्ञानवदयथार्थं क्षेमप्राप्तिहेतु-

रिति चकारार्थः, असूया गुणेषु दोषाविष्करणं तद्रहिताय ज्ञानाभि-लताय इत्यर्थः। ज्ञानं ब्रह्मचैतन्यं तद्विषयं वा प्रमाणज्ञानं तस्य तेनैव विशेषितत्वानुपपत्तिमाशङ्क्य व्याकरोति अनुभवेति। विज्ञानमनुभवः साक्षात्कारस्तेन सहितमित्यर्थः। उक्तज्ञानं प्राप्तस्य किं स्यादित्याशङ्क्याह यज्ज्ञानमिति ॥ १ ॥

स्वा॰ टी॰। परेशः प्राप्यते शुद्धभक्त्येति स्थितमष्टमे। नवमे तु तदैश्वर्यमत्याश्चर्यं प्रपञ्च्यते। एवं तावत् सप्तमाष्टमयोः स्वीयपरमेश्वरतत्त्वं भक्त्यैव सुलभं नान्यथेत्युक्तमिदानीमचिन्त्यं स्वकीयमैश्वर्यं भक्तेश्चासाधारणं प्रभावं प्रपञ्चयिष्यन् श्रीभगवानुवाच इदमिति। विशेषेण ज्ञायते अनेनेति विज्ञानमुपासनं तत्सहितं ज्ञानमीश्वरविषय-मिदं तु तेऽनसूयवे पुनः पुनः स्वमाहात्म्यमेवोपदिशतीत्येवं परमकारु-णिके मयि दोषदृष्टिरहिताय तुभ्यं वक्ष्यामि, तुशब्दो वैशिष्ट्ये। तदे-वाह गुह्यतममित्यादिना। गुह्यं धर्मज्ञानं ततो देहादिव्यतिरिक्तात्म-ज्ञानं गुह्यतरं ततोऽपि परमात्मज्ञानमतिरहस्यत्वाद्गुह्यतमं यज्ज्ञात्वा-ऽशुभात् संसारबन्धान्मोक्ष्यसे सद्य एव मुक्तो भविष्यसि ॥ १ ॥

**राजविद्या राजगुह्यं पवित्रमिदमुत्तमम्।**
**प्रत्यक्षावगमं धर्म्यं सुसुखं कर्त्तुमव्ययम् ॥ २ ॥**

तच्च स्तौति राजविद्येति। राजविद्या विद्यानां राजा दीप्त्यतिशयत्वात् दीप्यते ह्ययमतिशयेन ब्रह्म-विद्या सर्वविद्यानां राजगुह्यं तथा गुह्यानां राजा पवित्रं पावनमिदमुत्तमं सर्वेषां पावनानां शुद्धिकारणा-नामिदं ब्रह्मविज्ञानमुत्कृष्टतममनेक जन्मसहस्र-सञ्चितमपि धर्माधर्मादि समूलं कर्म्म क्षणमात्राद्भस्मी-करोति यतोऽतः किं तस्य पावनत्वं वक्तव्यं किञ्च प्रत्य-क्षावगमं प्रत्यक्षेण सुखादेरिवावगमो यस्य तत् प्रत्यक्षा-

वगमं अनेकगुणवतोऽपि धर्म्मविरुद्धत्वं दृष्टं श्येनयाग इव न तथा आत्मज्ञानं धर्म्मविरोधि किन्तु धर्म्यं धर्मादनपेतं एवमपि स्यात् दुःसंपाद्यमित्यत आह सुसुखं कर्त्तुं यथा रत्नविवेकविज्ञानं तत्राल्पायासानां अन्येषां कर्मणां सुखसंपाद्यानामल्पफलत्वं दृष्टं दुष्कराणाञ्च महाफलत्वं दृष्टमितीदन्तु सुखसंपाद्यत्वात् फलक्षयादव्येतीति प्राप्ते तत्राहाव्ययं नास्य फलतः कर्म्मवद्व्ययोऽस्तीति अव्ययं अतः श्रद्धेयमात्मज्ञानम् ॥ २ ॥

आ० टी० । तदाभिमुख्यसिद्धये तज्ज्ञानं स्तौति तच्चेति । ब्रह्मविद्या विद्यानां राजा श्रेष्ठा इत्यत्र हेतुमाह दीप्तीति । कुतो ब्रह्मविद्यायाः विद्यान्तरेभ्यो दीप्त्यतिशयित्वं तदाह दीप्यते ह्यीति । दृश्यते हि विद्वदन्तरेभ्यो लोके पूजातिरेको ब्रह्मविदामिति भावः । उत्कृष्टतमं शुद्धिकारणं ब्रह्मज्ञानमित्येतदुपपादयति अनेकेति । तत्र श्रुतिस्मृतिप्रमाणयितव्ये न शास्त्रैकगम्यमिदं ज्ञानं किन्तु प्रत्यक्षप्रमेयमित्याह किञ्चेति । प्रत्यक्षमवगम्यमानमर्थिकाञ्चेति तथा, यद्वावगम्यत इति अवगमः फलं प्रत्यक्षोऽवगमोऽस्येति दृष्टफलत्वं ज्ञानस्योच्यते । धर्मीमत्येतद्व्याकरोति अनपेतमिति । धर्मस्यैव तस्य क्लेशसाध्यत्वमाशङ्क्याह एवमपीति । रत्नविषयं विवेकज्ञानं संप्रयोगादुपदेशापेक्षादनायासेन दृष्टं तथेदं ब्रह्मज्ञानमित्याह यथेति । अव्ययमिति विशेषणमाशङ्कापूर्वकं विवृणोति तत्रेत्यादिना । व्यवहारभूमिः सम्प्रत्ययः । ज्ञानस्याक्षयफलत्वे फलितमाह अत इति ॥ २ ॥

स्वा० टी० । किञ्च राजविद्येति । इदं ज्ञानं राजविद्या विद्यानां राजा राजगुह्यं गुह्यानाञ्च राजा विद्यासु गोप्येषु चातिरहस्यं श्रेष्ठमित्यर्थः राजदन्तादित्वादुपसर्जनस्यापि परत्वं राज्ञां विद्या राज्ञां गुह्यमिति वा उत्तमं पवित्रमिदमत्यन्तपावनं ज्ञानिनां प्रत्यक्षावगमञ्च प्रत्यक्षः स्पष्टोऽवगमोऽवबोधो यस्य तत् प्रत्यक्षावगमं दृष्टफलं इत्यर्थः,

धर्म्यं धर्मादनपेतं वेदोक्तसर्वधर्मफलत्वात्, कर्त्तुञ्च सुसुखं सुखेन कर्त्तुं शक्यमित्यर्थः, अव्ययञ्चाव्ययफलत्वात् ॥ २ ॥

**अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप ! ।**
**अप्राप्य मां निवर्त्तन्ते मृत्युसंसारवर्त्मनि ॥३॥**

ये पुनः अश्रद्दधाना इति । अश्रद्दधानाः श्रद्धाविरहिताः आत्मज्ञानस्य धर्म्मस्यास्य स्वरूपे तत्फले च नास्तिकाः पापकारिणोऽसुराणामुपनिषदं देहमात्रात्मदर्शनमेव प्रतिपन्ना असन्तः पुरुषाः परन्तप ! अप्राप्य मां परमेश्वरं मत्प्राप्तौ नैवाशङ्कोति मत्प्राप्तिमार्गसाधनभेदभक्तिमात्रमप्यप्राप्येत्यर्थः, निवर्त्तन्ते निश्चयेन आवर्त्तन्ते क्व मृत्युसंसारवर्त्मनि मृत्युयुक्तः संसारो मृत्युसंसारस्तस्य वर्त्म नरकतिर्य्यगादिप्राप्तिमार्गस्तस्मिन्नेव वर्त्तन्त इत्यर्थः ॥ ३

आ० टी० । आत्मज्ञानाख्ये धर्मे श्रद्धावतां तन्निष्ठानां परमपदप्राप्तिमुक्त्वा ततो विमुखानां संसारप्राप्तिमाह ये पुनरिति । आत्मज्ञान तत्फलयोर्नास्तिकानेव विशिनष्टि पापेति । उक्तानामात्मशरीराणां भगवत्प्राप्तिसम्भावनाऽभावादप्राप्य मामित्यप्रसक्तं प्रतिषेधः स्यादित्याशङ्क्याह मत्प्राप्ताविति ॥ ३ ॥

स्वा० टी० । नन्वेवमप्यतिसुकरत्वेन को नाम संसारिणः स्युस्तत्राह अश्रद्दधाना इति । अस्य भक्तिसहितज्ञानलक्षणस्य धर्मस्येति कर्मणि षष्ठी इमं धर्ममश्रद्दधाना आस्तिक्येनास्वीकुर्वन्त उपायान्तरैर्मत्प्राप्तये कृतप्रयत्ना अपि मामप्राप्य मृत्युयुक्ते संसारवर्त्मनि निवर्त्तन्ते मृत्युव्याप्ते संसारमार्गे परिभ्रमन्तीत्यर्थः ॥ ३ ॥

**मया ततमिदं सर्वं जगदव्यक्तमूर्त्तिना ।**
**मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥४॥**

इति ज्ञानं स्तुत्वार्जुनमभिमुखीकृत्याह मयेति। मया मम यः परो भावस्तेन ततं व्याप्तं सर्वमिदं जगद-व्यक्तमूर्त्तिना न व्यक्ता मूर्त्तिः स्वरूपं यस्य मम सोऽहम-व्यक्तमूर्त्तिस्तेन मयाव्यक्तमूर्त्तिना करणागोचरस्वरूपेणे-त्यर्थः तस्मिन्मय्यव्यक्तमूर्त्तौ स्थितानि मत्स्थानि सर्वभूतानि ब्रह्मादीनि स्तम्बपर्य्यन्तानि न हि निरात्मकं किञ्चिद्भूतं व्यवहारायावकल्पतेऽतो मत्स्थानि मयात्मनात्मवत्त्वेन स्थितानि अतो मयि स्थितानीत्युच्यते तेषां भूतानामहमेव आत्मा इत्यतस्तेषु स्थित इति मूढ़बुद्धीनामवभासतेऽतो ब्रवीमि न चाहं तेषु भूतेष्ववस्थितो मूर्त्तवत् संश्लेषाभावेनाकाशस्याप्यन्तरतमो ह्यहम् ॥ ४ ॥

आ० टी० । स्तुतिनिन्दाभ्यां ज्ञाननिष्ठां मध्ये कृत्य ज्ञानं व्याख्यातुमारभते स्तुत्वेति । सोपाधिकस्य व्याप्यव्यापकभावमभिप्रेत्य विशिनष्टि ममेति । अनवच्छिन्नस्य भगवद्रूपस्य निरुपाधिकत्वमेव साधयति करणेति । व्याप्यव्यापकत्वेन जगतो भगवतश्च परिच्छेदमाशङ्क्याह तस्मिन्निति । तथापि भगवतो भूतानाञ्चाधाराधेयत्वेन भेदः स्यादित्याशङ्क्याह न हीति, निरात्मकस्य व्यवहारानर्हत्वे फलितमाह अत इति । ईश्वरस्य भूतात्मत्वे तेषु स्थितिः स्यादित्याशङ्क्याह तेषामिति । तस्य तेषु स्थित्यभावं व्यवस्थापयति मूर्त्तवदिति ॥ ४ ॥

स्वा० टी० । तदेवं वक्तव्यतया प्रस्तुतस्य ज्ञानस्य स्तुत्या श्रोतारमभिमुखीकृत्य तदेव ज्ञानं कथयति मयेति द्वाभ्याम् । अव्यक्ता अतीन्द्रिया मूर्त्तिः स्वरूपं यस्य तादृशेन मया कारणभूतेन सर्वमिदं जगत्ततं व्याप्तं तत् सृष्ट्वा तदेवानुप्राविशदित्यादि श्रुतेः, अतएव कारणभूते मयि तिष्ठन्तीति मत्स्थानि सर्वाणि भूतानि चराचराणि, एवमपि घटादिषु कार्य्येषु मृत्तिकेषु तेषु भूतेषु नाहमवस्थित आकाशवदसङ्गत्वात् ॥४॥

**न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम्।**
**भूतभृन्न च भूतस्थो ममात्मा भूतभावनः॥५॥**

न ह्यसंसर्गि वस्तु क्वचिदाधेयभावेनावस्थितं भवत्यत एवासंसर्गित्वान्मम न चेति। न च मत्स्थानि भूतानि ब्रह्मादीनि पश्य मे योगं युक्तिः घटनं मे ममैश्वरं योगमात्मानं ईश्वरस्येदमैश्वरं माहात्म्यमित्यर्थः तथा चात्मनो या श्रुतिरसंसर्गित्वादसङ्गतां दर्शयत्यसङ्गो न हि सज्जत इदञ्चाश्चर्यमन्यत् पश्य भूतभृदसङ्गोऽपि सन् भूतानि बिभर्त्ति न च भूतस्थो यथोक्तेन न्यायेन दर्शितत्वात् भूतस्थत्वानुपपत्तेः कथं पुनरुच्यते असौ ममात्मेति विभज्य देहादिसङ्घातं तस्मिन्नहङ्कारमध्यारोप्य लोकबुद्धिमनुसरन् व्यपदिशति ममात्मेति। न पुनरात्मन आत्मा अन्य इति लोकवदजानंस्तथा भूतभावनो भूतानि भावयति उत्पादयति वर्द्धयति वा भूतभावनः॥ ५॥

आ॰ टी॰। संसर्गाभावेऽपि किमिति नाधेयत्वमत आह न हीति। परमेश्वरस्य भूतेषु स्थित्यभावेऽपि भूतानां तत्र स्थितिरास्थितेति कुतोऽसङ्गत्वं तत्राह अत एवेति। न चेत्यत्र चकारोऽवधारणार्थः। भूतानामीश्वरेऽपि स्थितिरित्यत्र हेतुमाह पश्येति। आत्मनोऽसङ्गत्वस्वरूपमित्यत्र प्रमाणमाह तथा चेति। असङ्गश्चेदीश्वरस्तर्हि कथं मत्स्थानि भूतानीत्युक्तं कथञ्च तथोक्तांश्च मत्स्थानीति तद्विरुद्धदीरितमित्याशङ्क्याह इदञ्चेति। तर्हि भूतसम्बन्धः स्यादिति नेत्याह न चेति। यथोक्तेन न्यायेन असङ्गत्वेनेति यावत्, असङ्गतया वस्तुतो भूतासम्बन्धेऽपि कल्पनया तदविरोधाच्च मिथोविरोधोऽस्तीति भावः। आत्मनः सकाशादात्मनोऽन्यत्वायोगात् कुतः षष्ठ्योक्तिरित्याशङ्क्याह कथमिति।

यथा लोके वस्तुतत्त्वमजानन् भेदमारोप्य ममायमिति सम्बन्धमनुभवति न तथेह सम्बन्धव्यपदेशः आत्मनि स्वतो भेदाभावादतो भेदे सत्येव लोके सम्बन्धबुद्धिदर्शनमनुसरन् भगवानात्मनो देहादिसंघातं विभज्याहङ्कारं तस्मिन्नारोप्य असौ ममात्मेति भेदं व्यपदिशति तथा च संघातस्य ममेति व्यपदेशात्ततो निष्कृष्टस्य स्वरूपस्यात्मशब्देन निर्देशान्न भूतस्थोऽस्मीत्यर्थः । पूर्वोक्तासङ्गत्वाङ्गीकारेणैवात्मा भूतानि भावयतीत्याह तथेति ॥५॥

स्वा० टी० । किञ्च न चेति । न च मयि स्थितानि भूतानि असङ्गत्वादेव मम, ननु तर्हि व्यापकत्वमाश्रयत्वञ्च पूर्वोक्तं विरुद्धमित्याशङ्क्याह पश्येति । मे ऐश्वरमसाधारणं योगं युक्तिं अघटनघटनाचातुर्यमिदं पश्य मदीययोगमायावैभवस्यावितर्क्यत्वान्न किञ्चित् विरुद्धमित्यर्थः । अन्यदप्याश्चर्यं पश्येत्याह भूतेति । भूतानि बिभर्त्ति धारयतीति भूतभृत् भूतानि भावयति पालयतीति भूतभावनः एवं भूतोऽपि ममात्मा परं स्वरूपं भूतस्थो न भवतीति । अयं भावः, यथा देहं बिभ्रत् पालयंश्च जीवोऽहङ्कारेण तत्संश्लिष्टस्तिष्ठति एवमहं भूतानि धारयन् पालयन्नपि तेषु न तिष्ठामि निरहङ्कारत्वादिति ॥ ५ ॥

**यथाकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ।**
**तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥६॥**

यथोक्तेन श्लोकद्वयेन उक्तमर्थं दृष्टान्तेनोपपादयन्नाह यथेति । यथा लोके आकाशस्थितः आकाशे स्थितो नित्यं सदा वायुः सर्वत्र गच्छतीति सर्वत्रगः महान् परिमाणतस्तथाकाशवत् सर्वगते मय्यसंश्लेषेणैव स्थितानि मत्स्थानीत्येवमुपधारय जानीहि ॥ ६ ॥

स्वा० टी० । सृष्टिस्थितिसंहाराणामसङ्गस्याधारत्वं मया ततमिदमित्यादिश्लोकद्वयेनोक्तोऽर्थस्तदुदृष्टान्तेनोपपादयन्नादौ दृष्टान्तमाहेति योजना, यद्वेत्सृष्टिस्थितिसंहारकालो व्यज्यते । आकाशादेर्भूतोऽस्या-

धारत्वं कथमित्याशङ्क्याह महानिति । यथा सर्वगामित्वात् परिमाणतो महान् वायुराकाशे सदा तिष्ठति तथा आकाशादीनि महान्त्यपि सर्वाणि भूतान्याकाशकल्पे पूर्णे प्रतीच्यसङ्गे परस्मिन्नात्मनि संश्लेषमन्तरेण स्थिता-नीत्यर्थः ॥ ६ ॥

स्वा॰ टी॰ । असंश्लिष्टयोरपि आधाराधेयभावं दृष्टान्तेनाह यथेति । अवकाशं विनावस्थानानुपपत्तेर्नित्यमाकाशस्थितो वायुः सर्वत्र-गोऽपि महानपि नाकाशेन संश्लिष्यते निरवयवत्वेन संश्लेषायोगात् तथा सर्वाणि भूतानि मयि स्थितानि जानीहि ॥ ६ ॥

**सर्वभूतानि कौन्तेय! प्रकृतिं यान्ति मामिकाम् ।**
**कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥७॥**

एवं वायुराकाश इव मयि स्थितानि सर्वभूतानि सर्वाणि भूतानि स्थितिकाले तानि सर्वभूतानि कौन्तेय । प्रकृतिं त्रिगुणात्मिकामपरां निकृष्टां यान्ति मामिकां मदीयां कल्पक्षये ब्राह्मे प्रलयकाले पुनर्भूयस्तानि भूतान्युत्-पत्तिकाले कल्पादौ विसृजाम्युत्पादयाम्यहं पूर्ववत् ॥ ७ ॥

व्या॰ टी॰। आकाशे वाय्वादिस्थितिवदाकाशादीनि भूतानि स्थिति-काले परमेश्वरे स्थितानि चेत्तर्हि प्रलयकाले ततोऽन्यत्र तिष्ठेयुरित्याश-ङ्क्याह एवमिति । प्रकृतिशब्दस्य स्वभाववचनत्वं व्यावर्त्तयति त्रिगुणा-त्मिकामिति । सा चापरेयमिति प्रागेव सूचितेत्याह अपरामिति । तस्याश्चेश्वराधीनत्वेनास्वातन्त्र्यमाह मदीयामिति । प्रलयकाले भूतानि यथोक्तां प्रकृतिं यान्ति चेदुत्पत्तिकालेऽपि ततस्तेषामुत्पत्तिरीश्वराधीनत्वं भूतसृष्टेर्न स्यादित्याशङ्क्याह पुनरिति ॥ ७ ॥

स्वा॰ टी॰ । तदेवमसङ्गस्यैव योगमायया स्थितिहेतुत्वमुक्तं तथैव सृष्टिप्रलयहेतुत्वमप्याह सर्वेति । कल्पक्षये प्रलयकाले सर्वाणि भूतानि

मदीयां प्रकृतिं यान्ति त्रिगुणात्मिकायां मायायां लीयन्ते पुनः कल्पादौ सृष्टिकाले तानि विसृजामि विशेषेण सृजामि ॥ ७ ॥

**प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।**
**भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥८॥**

एवमविद्यालक्षणां प्रकृतिमिति । प्रकृतिं स्वां स्वीयामवष्टभ्य वशीकृत्य विसृजामि पुनः पुनः प्रकृतितो जातं भूतग्रामं भूतसमुदायं इमं वर्त्तमानं कृत्स्नं समग्रवशमस्वतन्त्रमविद्यादिदोषैः परवशीकृतं प्रकृतेर्वशात् स्वभाववशात् ॥ ८ ॥

श्या० टी० । तर्हि कीदृशी प्रकृतिः सा च कथं सृष्टावुपयुक्तेत्याशङ्क्याह एवमिति । संसारस्यानादित्वद्योतनार्थं पुनः पुनरित्युक्तम् । भूतसमुदायस्याविद्याख्मितादिदोषपरवशत्वे हेतुमाह स्वभाववशादिति ॥८॥

स्वा० टी० । नन्वसङ्गो निर्विकारश्च त्वं कथं सृजसीत्यपेक्षायामाह प्रकृतिमित्यादि । स्वां स्वाधीनां प्रकृतिमवष्टभ्य अधिष्ठाय प्रलये लीनं सन्तं चतुर्विधमिमं सर्वं भूतग्रामं कर्म्मादिपरवशं पुनः पुनर्विविधं सृजामि विशेषेण सृजामीति वा । कथं, प्रकृतेर्वशात् प्राचीनकर्मनिमित्ततत्तत्स्वभाववशात् ॥ ८ ॥

**न च मां तानि कर्माणि निबध्नन्ति धनञ्जय ! ।**
**उदासीनवदासीनमसक्तं तेषु कर्मसु ॥ ९ ॥**

तर्हि तस्यैव परमेश्वरस्य भूतग्रामं विषमं विदधतः तन्निमित्ताभ्यां धर्माधर्माभ्यां सम्बन्धः स्यादितीदमाह भगवान् न च मामिति । न च मामीशं तानि भूतग्रामस्य विषमविसर्गनिमित्तानि कर्माणि निबध्नन्ति धनञ्जय !

तत्र कर्मणामसम्बद्धत्वे कारणमाह उदासीनवदासीनं यथोदासीन उपेक्षकः कश्चित् तद्वदासीनमात्मनोऽविक्रियत्वमसंसक्तं फलसङ्गरहितमभिमानवर्जितमहङ्करोमीति तेषु कर्मस्वतोऽन्यस्यापि कर्तृत्वाभिमानाभावः फलं सङ्गाभावश्चाबन्धकारणमन्यथा कर्मभिर्बध्यते मूढं कोषरकारवदित्यभिप्रायः ॥ ९ ॥

व्या० टी० । यदि प्राकृतं भूतग्रामं स्वभावादविद्यातन्त्रं विषमं यदधासि तर्हि तव विषमसृष्टिप्रयुक्तं धर्मादिसम्बन्धमित्यनीश्वरत्वापत्तिरिति शङ्कते तच्चेति । तत्रेति सप्तम्या परमेश्वरो निरूच्यते । ईश्वरस्य फलसङ्गाभावात् कर्तृत्वाभिमानाभावाच्च कर्मासम्बन्धवदीश्वरादन्यस्यापि तदुभयाभावो धर्माद्यसम्बन्धे कारणमित्याह अतोऽन्यस्येति । यदि कर्मसु कर्तृत्वाभिमानो वा कस्यचित् कर्मफलसंयोगो वा स्यात्तत्राह अन्यथेति ॥ ९ ॥

स्वा० टी० । नन्वेवं नानाविधानि कर्माणि कुर्वतस्तव जीववद्बन्धः कथं न स्यादित्यत आह न च मामिति । तानि विश्वसृष्ट्यादीनि कर्माणि मां न निबध्नन्ति, कर्मासक्तिर्हि बन्धहेतुः सा चाप्तकामत्वान्मम नास्ति अत उदासीनवद्वर्त्तमानस्य मे बन्धं नोपपादयन्ति, उदासीनत्वे कर्तृत्वे चोदासीनत्वानुपपत्तेरुदासीनवत् स्थितमित्युक्तम् ॥ ९ ॥

**मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ।**
**हेतुनानेन कौन्तेय ! जगद्विपरिवर्त्तते ॥ १० ॥**

तत्र भूतग्राममिमं, विसृजाम्युदासीनवदासीनमिति च विरुद्धमुच्यते तत्परिहारार्थमाह मयेति । मया सर्वतो दृशिमात्रस्वरूपेणाविक्रियात्मनाध्यक्षेण मम माया त्रिगु-

त्मिकाऽविद्यालक्षणा प्रकृतिः सूयते उत्पादयति सचराचरं जगत् तथा च मन्त्रवर्णः एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा। कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्चेति साक्षिमात्रेण हेतुना निमित्तेनानेनाध्यक्षत्वेन कौन्तेय! जगत् सचराचरं व्यक्ताव्यक्तात्मकं विपरिवर्त्तते सर्वावस्थासु दृशि कर्मत्वापत्तिनिमित्ता हि जगतः सर्वा प्रवृत्तिरहमिदं भोक्ष्ये पश्यामीदं शृणोमीदं सुखमनुभवामि दुःखमनुभवामि तदर्थमिदं करिष्यामि एतदर्थमिदं करिष्ये इदं ज्ञास्यामीत्याद्यवगतिनिष्ठा, अवगतिरवसाना योऽस्याध्यक्षः परमे व्योमन्नित्यादयश्च मन्त्रा एतमर्थं दर्शयन्ति ततश्चैकस्य देवस्य सर्वाध्यक्षभूतचैतन्यमात्रस्य परमार्थतः सर्वभोगानभिसम्बन्धिनोऽन्यस्य चेतनान्तरस्याभावे भोक्तुरन्यस्याभावात् किं निमित्तेयं सृष्टिरित्यत्र प्रश्नप्रतिवचनेऽनुपपन्ने कोऽद्धा वेद क इह प्रावोचत् कुत आयातः कुत इयं विसृष्टिरित्यादिमन्त्रवर्णेभ्यो दर्शितञ्च भगवताज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तव इति॥ १०॥

आ० टी०। ईश्वरे स्रष्टृत्वमौदासीन्यत्वञ्च विरुद्धमिति शङ्कते नन्विति। पूर्वग्रन्थः सप्तम्यर्थः। विरोधपरिहारार्थमुत्तरश्लोकमवतारयति तदिति। तृतीयाद्वयं समानाधिकरणमित्यभ्युपेत्य व्याचष्टे मयेत्यादिना। प्रकृतिशब्दार्थमाह ममेति। तस्या अपि ज्ञानत्वं व्यावर्त्तयति त्रिगुणेति। पराभिप्रेतं प्रधानं व्युदस्यति अविद्येति। साक्षित्वे प्रमाणमाह तथा चेति। मूर्त्तित्रयात्मनो भेदं वारयति एक इति। अलुप्तजाड्यं प्रत्याह देव इति। आदित्यवत्तटस्थत्वं प्रत्यादिशति

सर्वभूतेष्विति । किमिति तर्हि सर्वैर्नोपलभ्यते तत्राह गूढ इति । बुद्ध्या-
दिवत् परिच्छिन्नत्वं व्यवच्छिनत्ति सर्वव्यापीति । तर्हि नभोवदनात्मत्वं
नेत्याह सर्वभूतेति । तर्हि तत्र तत्र कर्मतत्फलसम्बन्धित्वं स्यात्तत्राह
कर्मेति । सर्वाधिष्ठानत्वमाह सर्वेति । सर्वेषु भूतेषु सत्तास्फूर्त्ति-
प्रदत्वेन संनिधिर्वासोऽस्योच्यते न केवलं कर्मणामेवायमध्यक्षोऽपि तु तद्वता-
मपीत्याह साक्षीति । दर्शनकर्तृत्वमङ्गं ज्ञापयति चेतेति । अद्वितीयत्वं
केवलत्वम् । धर्माधर्मादिराहित्यमाह निर्गुण इति । किं बहुना सर्व-
विशेषशून्य इति चकारार्थः । उदासीनस्यापीश्वरस्य साक्षित्वमात्र-
निमित्तीकृत्य जगदेतत् पौनःपुन्येन सर्गसंहारावनुभवतीत्याह हेतुनेति ।
कार्यवत् कारणस्यापि साक्ष्यधीना प्रवृत्तिरिति वक्तुं व्यक्ताव्यक्तात्मकमित्युक्तं
सर्वावस्थास्वित्यनेन सृष्टिस्थितिसंहारावस्था गृह्यन्ते । तथापि जगतः ।
स्वर्गादिभ्यो भिन्ना प्रवृत्तिः स्वाभाविकी नेश्वरायत्तेत्याशङ्क्याह दृशीति ।
न हि दृशा व्याप्यत्वं विना जडवर्गस्य कापि प्रवृत्तिरिति हिशब्दार्थः ।
तामेव प्रवृत्तिमुदाहरति अहमित्यादिना । भोगस्य विषयोपलम्भाभावा-
सम्भवान्नानाविधां विषयोपलब्धिं दर्शयति पश्यामीति । भोगफलमिदानीं
कथयति सुखमिति । विहितप्रतिषिद्धाचरणनिमित्तं सुखं दुःखञ्चेत्याह
तदर्थमिति । न च विमर्शपूर्वकं विज्ञानं विनानुष्ठानमित्याह इदमिति ।
इत्याद्या प्रवृत्तिरिति सम्बन्धः । सा च प्रवृत्तिः सर्वा दृक्कर्मत्वमुररी-
कृत्यैव विवर्त्तत इति इत्युक्तं निगमयति अवगतीति । तत्रैव च प्रवृत्तेरव-
सानमित्याह अवगतिरवसान इति । परस्याध्यक्षत्वमात्रेण जगद्धेतु-
त्वत्र प्रमाणमाह योऽस्येति । अस्य जगतो योऽध्यक्षो निर्विकारः स
परमे प्रकृष्टे हार्दे व्योम्नि स्थितो निर्विकारः स परमे प्रकृष्टे हार्दे
व्योम्नि स्थितो दुर्विज्ञेय इत्यर्थः । ईश्वरस्य साक्षित्वमात्रेण स्रष्टृत्वे
स्थिते फलितमाह तत्रेति । किंनिमित्तास्येयं सृष्टिर्न तावद्भोगार्था परस्य
परमार्थतो भोगासम्बन्धित्वात्तस्य सर्वसाक्षीभूतचैतन्यमात्रत्वात्त चान्यो
भोक्ता चेतनान्तराभावादीश्वरस्यैकत्वादचेतनस्याभोक्तृत्वात्त च सृष्टिरपव-
र्गार्था तद्विरोधित्वान्नैवं प्रश्नो वा तदनुरूपं प्रति वचनं वा संयुक्तं परस्य

मायानिबन्धने सर्गे तस्यानवकाशत्वादित्यर्थः । परस्यात्मनो दुर्विज्ञेयत्वे श्रुतिमुदाहरति कोऽद्धेति । तस्मिन् प्रवक्ताऽपि संसारमण्डले नास्ती-त्याह क इहेति । जगतः सृष्टिकर्तृत्वेन परस्य ज्ञेयत्वमाशङ्क्य कूटस्था-त्मनो न सृष्टिर्जातेत्याह कुत इति । न ह्ययं विविधसृष्टिरन्यस्मादपि कस्माच्चिदुपपद्यते अन्यस्य वस्तुनो भावादित्याह कुत इति । कथं तर्हि सृष्टिरित्याशङ्क्याज्ञानाधीनेत्याह दर्शितश्चेति ॥ १० ॥

स्वा० टी० । तदेवोपपादयति मयेति । मया अध्यक्षेण अधिष्ठात्रा निमित्तभूतेन प्रकृतिः सचराचरं विश्वं सूयते जनयति, अनेन मदधि-ष्ठानेन हेतुना इदं जगद्विपरिवर्त्तते पुनः पुनर्जायते सन्निधिमात्रेणाधि-ष्ठातृत्वात् कर्तृत्वमुदासीनत्वञ्चाविरुद्धमिति भावः ॥ १० ॥

## अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।
## परं भावमजानन्तो मम भूतमहेश्वरम् ॥ ११ ॥

एवं मां नित्यशुद्धमुक्तस्वभावं सर्वजन्तूनामात्मानमपि सन्तं अवेति अवजानन्त्यवज्ञां परिभवं कुर्वन्ति मां मूढा अविवेकिनो मानुषीं मनुष्यसम्बन्धिनीं तनुं देहमाश्रितं मनुष्यदेहेन व्यवहरन्तमित्येतत् परं प्रकृष्टं भावं पर-मात्मतत्त्वमाकाशकल्पमाकाशादप्यन्तरतममजानन्तो मम भूतमहेश्वरं सर्वभूतानां महान्तमीश्वरं स्वमात्मानं ततश्च तस्य ममावज्ञानभावनेन हताः वराकास्ते ॥ ११ ॥

आ० टी० । सर्वाध्यक्षः सर्वभूताधिवासी नित्यमुक्तश्चेत्त्वं तर्हि कि-मिति त्वामेवात्मत्वेन भेदेन वा सर्वे न भजन्ते तत्राह एवमिति । विपर्य्य-स्तबुद्धित्वं भगवदवज्ञायां कारणमित्याह मूढ इति । भगवतो मनुष्य-देहसम्बन्धात्तस्मिन् विपर्य्यासः सम्भवतीत्याह मानुषीमिति । घट-टादिवद्देहतादात्म्याभिमानं भगवतो व्यावर्त्तयति मनुष्येति । भगवन्त-मवजानतामविवेके मूलाज्ञानं हेतुमाह परमिति । ईश्वरावज्ञानात् किं

भवतीत्यपेक्षायां तदवज्ञानप्रतिबन्धबुद्धयः मोच्या भवन्तीत्याह तनश्चेति। भगवदवज्ञानादेव हेतोरवजानन्तस्ते जन्तवो वराकाः मोच्याः सर्वपुरुषार्थ-बाह्याः स्युरिति सम्बन्धः। तत्र हेतुं सूचयति तस्येति। प्रकृतस्य भग-वतोऽवज्ञानमनादरणं निन्दनं वा तस्य भावनं पौनःपुन्यं तेन कृता-त्तज्जनितदुरितप्रभावात् प्रतिबन्धबुद्धय इत्यर्थः॥ ११॥

स्वा॰ टी॰। नन्वेवं भूतं परमेश्वरं त्वां किमिति केचिन्नाद्रियन्ते तत्राह अवजानन्तीति द्वाभ्याम्। सर्वभूतमहेश्वररूपं मदीयं परं भावं तत्त्वमजानन्तो मूढा मूर्खा मामवजानन्ति मामवमन्यन्ते, अवज्ञाने हेतुः शुद्धसत्त्वमयीमपि तनुं भक्तेच्छावशान्मनुष्याकारमाश्रितवन्तमिति॥ ११॥

**मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः।**
**राक्षसीमासुरीञ्चैव प्रकृतिं मोहनीं श्रिताः॥१२॥**

कथं मोघाशेति। मोघाशा वृथा आशा आशिषो येषां ते मोघाशास्तथा मोघकर्माणो यानि चाग्निहोत्रादीनि तैर-नुष्ठीयमानानि कर्माणि तानि च तेषां भगवत्परिभवात् स्वात्मभूतस्यावज्ञानान्मोघान्येव निष्फलानि कर्माणि भव-न्तीति मोघकर्माणस्तथा मोघज्ञानाः मोघं निष्फलं ज्ञानं येषां ते मोघज्ञानाः ज्ञानमपि तेषां निष्फलमेव स्यात् विचेतसो विगतविवेकाश्च ते भवन्तीत्यभिप्रायः, किञ्च ते भवन्ति राक्षसीं रक्षसां प्रकृतिं स्वभावं आसुरीमसुरा-णाञ्च प्रकृतिं मोहनीं मोहकरीं देहात्मवादिनीं श्रिता आश्रिताः छिन्धि भिन्धि पिब खाद परस्वमपहरेत्येवं वदनशीलाः क्रूरकर्म कुर्वाणा भवन्तीत्यर्थः, असूर्या नाम ते लोका इति श्रुतेः॥ १२॥

स्वा॰ टी॰। भगवन्तमवजानतां प्रश्नपूर्वकं मोघत्वं विषदयति कथ-

मिति। भगवद्विन्दापराणां न काचिदपि प्रार्थनार्थवतीत्याह इयेति। ननु भगवन्तं निन्दतोऽपि नित्यं नैमित्तिकं वा कर्मानुतिष्ठन्ति, तदनुष्ठानाच्च तेषां प्रार्थनाः सार्था भविष्यन्तीति नेत्याह तथेति। परिभवस्तिरस्कारणं, अवज्ञानमनादरणम्। तेषामपि शास्त्रार्थविज्ञानवतां तद्द्वारा प्रार्थनार्थवत्त्वमित्याशङ्क्याह तथा मोघेति। तथापि यौक्तिकविवेकवशात्प्रार्थनासाफल्यमित्याशङ्क्याह विचेतस इति। न केवलमुक्तविशेषणवत्त्वमेव तेषां किन्तु वर्त्तमानदेहपातादनन्तरं तत्तदतिक्रूरयोनिप्राप्तिश्च निश्चितेत्याह किञ्चेति। मोहकरीमिति प्रकृतिद्वयेऽपि तुल्यं विशेषणं छिन्धि भिन्धि पिब खादेति प्राणिहिंसारूपो रक्षसां स्वभावोऽसुराणां स्वभावस्तु न देहिनो जुहुधि परस्वमपहरेत्यादिरूपः मोहो मिथ्याज्ञानम्। उक्तमेव स्फुटयति छिन्धीति॥ १२॥

स्वा॰ टी॰। किञ्च मोघाशा इति। मत्तोऽन्यद्दैवतान्तरं क्षिप्रं फलं दास्यतीत्येवंभूता मोघा निष्फलैवाशा येषां ते, अतएव मद्विमुखत्वान्मोघानि निष्फलानि कर्माणि येषां ते, मोघमेव नानाकुतर्काश्रितं शास्त्रज्ञानं येषां ते, अतएव विचेतसो विक्षिप्तचित्ताः, सर्वत्र हेतुः राक्षसीं तामसीं हिंसादिप्रचुरां आसुरीञ्च राजसीं कामदर्पादिबहुलां मोहनीं बुद्धिभ्रंशकरीं प्रकृतिं स्वभावं श्रिताः आश्रिताः सन्तो मामवजानन्तीति पूर्वेणैवान्वयः॥ १२॥

**महात्मानस्तु मां पार्थ! दैवीं प्रकृतिमाश्रिताः।**
**भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम्॥१३॥**

ये पुनः श्रद्दधानाः भगवद्भक्तिलक्षणे मोक्षमार्गे प्रवृत्ताः महात्मान इति। महात्मानस्तु अक्षुद्रचित्ता मामीश्वरं पार्थ! दैवीं देवानां प्रकृतिं शमदमदयाश्रद्धादिलक्षणामाश्रिताः सन्तो भजन्ति सेवन्तेऽनन्यमनसोऽनन्यचित्ता ज्ञात्वा मां भूतादिं भूतानां आश्रयमादिकारणं वियदादीनां प्राणिनां चादिकारणमाश्रयमव्ययम्॥ १३॥

श्वा० टी० । के पुनर्भगवन्तं भजन्ते तानाह ये पुनरिति । महानुप्रकृष्टो यज्ञादिभिः शोधित आत्मा सत्त्वं येषामिति व्युत्पत्तिमाश्रित्याह अत्तुद्रेति । तुशब्दोऽवधारणे । प्रकृतिं विशिनष्टि शमेति । अन्यस्मिन् प्रत्येकभूते मयि परस्मिन्नेव मनो येषामिति व्युत्पत्त्या व्याकरोति अनन्यचित्ता इति । अज्ञाते सेवानुपपत्तेः शास्त्रोपपत्तिभ्यामादौ ज्ञात्वा ततः सेवन्ते इत्याह ज्ञात्वेति । अव्ययमविनाशिनम् ॥ १३ ॥

स्वा० टी० । के तर्हि त्वामाराधयन्तोऽत्यन्त आह महात्मान इति । महात्मानः कामाद्यनभिभूतचित्ताः, अतएव अभयं सत्त्वसंशुद्धिरित्यादिना वक्ष्यमाणां दैवीं प्रकृतिं स्वभावमाश्रिताः अतएव मद्व्यतिरेकेण नास्त्यन्यस्मिन्मनो येषां ते तु भूतादिं जगत्कारणं अव्ययं नित्यञ्च मां ज्ञात्वा भजन्ति ॥ १३ ॥

**सततं कीर्त्तयन्तो मां यतन्तश्च दृढ़व्रताः ।**

**नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥१४॥**

कथं सततमिति । सततं सर्वदा भगवन्तं ब्रह्मस्वरूपं मां कीर्त्तयन्तो यजन्तश्चेन्द्रियोपसंहारशमदमदयाहिंसादिलक्षणैः धर्मैः प्रयतन्तश्च दृढव्रता दृढं स्थिरमचाचल्यं व्रतं येषां ते दृढ़व्रता नमस्यन्तश्च मां हृदयेशयमात्मानं भक्त्या नित्ययुक्ताः सन्त उपासते सेवन्ते ॥ १४ ॥

श्रा० टी० । भजनप्रकारं पृच्छति कथमिति । तत्प्रकारमाह सततमिति । सर्वदेति श्रवणावस्था गृह्यन्ते, कीर्त्तनं वेदान्तश्रवणं प्रणवजपश्च, व्रतं ब्रह्मचर्यादि नमस्यन्तो मां प्रति चेतसा प्रह्वीभवन्तो भक्त्या परेण प्रेम्णा नित्ययुक्ताः सन्तः सदा संयुक्ताः ॥ १४ ॥

स्वा० टी० । तेषां भजनप्रकारमाह सततमिति द्वाभ्याम् । सततं सर्वदा स्तोत्रमन्त्रादिभिः कीर्त्तयन्तः केचिन्मामुपासते सेवन्ते, दृढ़ानि व्रतानि नियमा येषां तादृशाः सन्तो यतन्तश्च ऐश्वर्य्यज्ञानादिषु प्रयत्नं कुर्वन्तः

केचिद्भक्त्या नमस्यन्तश्च प्रणमन्तः अन्ये नित्ययुक्ता अनवरतं अविरि ताः सेवन्ते, भक्त्येति नित्ययुक्ता इति च कीर्त्तनादिष्वपि द्रष्टव्यम् ॥ १४ ॥

**ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।**
**एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥१५॥**

ते केन केन प्रकारेणोपासत इत्युच्यते ज्ञानेति । ज्ञानयज्ञेन ज्ञानमेव भगवद्विषयं यज्ञस्तेन ज्ञानयज्ञेन यजन्तः पूजयन्तो मामीश्वरं चान्येऽन्यामुपासनां परित्यज्य उपासते तत्र ज्ञानमेकत्वेन एकमेव परं ब्रह्मेति परमार्थदर्शनेन यजन्त उपासते केचित् पृथक्त्वेन आदित्यचन्द्रादिभेदेन स एव भगवान् विष्णुरादित्यादिरूपेणावस्थित इत्युपासते केचिद्बहुधावस्थितः स एव भगवान् सर्वतोमुखो विश्वरूप इति तं विश्वरूपं सर्वतोमुखं बहुधा बहुप्रकारेणोपासते ॥ १५ ॥

आ० टी । उपासनप्रकारभेदप्रतिपिपृच्छया पृच्छति ते केनेति । तत्प्रकारभेदोदीरणार्थं श्लोकमवतारयति उच्यत इति । इज्यते पूज्यते परमेश्वरोऽनेनेति प्रकृते ज्ञाने यज्ञशब्द ईश्वरश्चेति चकारोऽवधारणे । देवतान्तरध्यानत्यागमपिशब्दसूचितं दर्शयति अन्यामिति । अन्ये च ब्रह्मनिष्ठामिति यावत् । ज्ञानयज्ञमेव विभजते तत्रेति । उत्तमाधिकारिणामुपासनमुक्त्वा मध्यमानामधिकारिणामुपासनप्रकारमाह केचिच्चेति । तेषामेव अहं यज्ञः आर्त्तः किञ्च स्वधाहं पितृभ्यो यद्दीयते तत्स्वधा तथाहमौषधं सर्वप्राणिभिर्यदद्यते । प्रकारान्तरेणोपासनमुदीरयति केचिदिति । बहुप्रकारेणाग्न्यादित्यादिरूपेणेति यावत् ॥१५॥

श्रा० टी० । किञ्च ज्ञानेति । वासुदेवः सर्वमित्येवं सर्वात्मदर्शनं ज्ञानं तदेव यज्ञस्तेन ज्ञानयज्ञेन मां यजन्तः पूजयन्तोऽन्येऽप्युपासते तत्रापि केचिदेकत्वेनाभेदभावनया केचित् पृथग्भावनया दासोऽहमिति केचित्तु विश्वतोमुखं सर्वात्मकं मां बहुधा ब्रह्मरुद्रादिरूपेणोपासते ॥१५॥

**अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम्।**
**मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥१६॥**

यदि बहुभिः प्रकारैरुपासते कथं त्वामेवोपासत इत्यत आह अहमिति। अहं श्रौतकर्मभेदोऽहमेवाहं यज्ञः स्मार्त्तः किञ्च स्वधान्नमहं पितृभ्यो यद्दीयते तत् स्वधा तथा अहमौषधं सर्वप्राणिभिर्यदद्यते तदौषधशब्दवाच्यव्रीहियवादिसाधनमथवा स्वधेति सर्वप्राणिसाधारणमन्नमौषधमिति व्याध्युपशमार्थभेषजं मन्त्रोऽहं यत् पितृभ्यो देवताभ्यश्च हविर्दीयतेऽहमेवाज्यं हविश्चाहमग्निर्यस्मिन् हूयते सोऽप्यग्निरहमेवाहं हुतं हवनकर्म च ॥ १६ ॥

आ० टी०। भगवदेकविषयमुपासनं तर्हि न सिध्यतीति शङ्कते यदीति। प्रकारभेदमादाय ध्यायन्तोऽपि भगवन्तमेव ध्यायन्ति तस्य सर्व्वात्मकत्वादित्याह अत आहेति। क्रतुयज्ञशब्दयोरनयोरपौनरुक्त्यं दर्शयन् व्याचष्टे श्रौत इति। क्रियाकारकफलजातं भगवदतिरिक्तं नास्तीति समुदयार्थः ॥ १६ ॥

स्वा० टी०। सर्वात्मतां प्रपञ्चयति अहं क्रतुरिति चतुर्भिः। क्रतुः श्रौतोऽग्निष्टोमादिः, यज्ञः स्मार्त्तः पञ्चयज्ञादिः, स्वधा पित्रर्थं श्राद्धादिः, औषधं ओषधिप्रभवमन्नं भेषजं वा, मन्त्रो याज्यपुरोधोवाक्यादिः। आज्यं होमादिसाधनं, अग्निराहवनीयादिः, हुतं होमः, एतत्सर्वमहमेव ॥ १६ ॥

**पितामहस्य जगतो माता धाता पितामहः।**
**वेद्यं पवित्रमोङ्कार ऋक्साम यजुरेव च ॥१७॥**

किञ्च पितेति। पिता जनयिताहमस्य जगतो माता जनयित्री धाता कर्म्मफलस्य प्राणिभ्यो विधाता पितामहः

पितुः पिता वेद्यं वेदितव्यं पवित्रं पावनं ओङ्कारश्च ऋक्-सामयजुरेव च ॥ १७ ॥

व्या० टी०। इतश्च भगवतः सर्वात्मकत्वमनुमन्तव्यमित्याह किञ्चेति। पवित्रं पूयतेऽनेनेति व्युत्पत्त्या परिशुद्धिकारणं पुण्यं कर्मेत्याह पावनमिति। वेदितव्ये ब्रह्मणि वेदनसाधनमोङ्कारस्तत्र प्रमाणमृगादि च चकारादथर्वाङ्गिरसो गृह्यन्ते ॥ १७ ॥

स्वा० टी०। किञ्च पिताहमस्येति। धाता कर्मफलविधाता, वेद्यं ज्ञेयं वस्तु, पवित्रं शोधकं प्रायश्चित्तात्मकं वा, ओङ्कारः प्रणवः, ऋगादयो वेदाश्चाहमेव सर्वमन्यत् ॥ १७ ॥

# गतिर्भर्त्ता प्रभुः साक्षी निवासः शरणं सुहृत्। प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥१८॥

किञ्च गतिरिति। गतिः कर्म्मफलं भर्त्ता पोष्टा प्रभुः स्वामी साक्षी प्राणिनां कृताकृतस्य निवासो यस्मिन् प्राणिनो निवसन्ति शरणमार्त्तानां प्रपन्नानामार्त्तिहरः सुहृत् प्रत्युपकारानपेक्ष उपकारी प्रभव उत्पत्तिर्जगतः प्रलयः प्रलीयते यस्मिन् इति प्रलयः तथा स्थानं तिष्ठत्यस्मिन्निति निधानं निक्षेपः कालान्तरोपभोग्यं बीजं प्ररोहकारणं प्ररोहधर्म्मिणामव्ययं यावत् संसारभावित्वादव्ययं नह्यबीजं किञ्चित् प्ररोहति नित्यञ्च प्ररोहदर्शनाद्बीजसन्ततिर्न व्येतीत्येव गम्यते ॥ १८ ॥

व्या० टी०। भगवतः सर्वात्मकत्वे हेत्वन्तरमाह किञ्चेति। गम्यत इति प्रकृतिविलयपर्य्यन्तं कर्मफलं गतिरित्याह कर्मेति। पोष्टा कर्मफलस्यैव प्रदाता। कार्य्यकारणप्रपञ्चस्याधिष्ठानमित्याह निवास इति। शीर्य्यते दुःखमस्मिन्निति व्युत्पत्तिमाश्रित्याह शरणमिति। प्रभवत्यस्माज्जगदिति व्युत्पत्तिमादायोक्तं उत्पत्तिरिति। कारणस्य कथमव्ययत्व

मित्याशङ्क्याह यावदिति । कारणमन्तरेणापि कार्य्यं कदाचिद्भविष्यति किं कारणेनेत्याशङ्क्याह न हीति । मा भूत्तर्हि संसारदशायामेव कार्य्योत्पत्तिरित्याशङ्क्याह नित्यश्चेति । कारणव्यक्तेर्नाशमङ्गीकृत्य तदन्यतमव्यक्तिशून्यत्वं पूर्वकालस्य नास्तीति विवक्षयतत्कृत्य विशिनष्टि वीजेति ॥१८॥

स्वा० टी० । किञ्च गतिरिति । गम्यत इति गतिः फलं, भर्त्ता पोषणकर्त्ता, प्रभुर्नियन्ता, साक्षी शुभाशुभद्रष्टा, निवासो भोगस्थानं शरणं रक्षकः, सुहृत् हितकर्त्ता, प्रकर्षेण भवत्यनेनेति प्रभवः स्रष्टा, प्रलीयतेऽनेनेति प्रलयः संहर्त्ता, तिष्ठन्त्यस्मिन्निति स्थानमाधारः, निधीयतेऽस्मिन्निति निधानं प्रलयस्थानं, वीजं कारणं तथाप्यव्ययमविनाशि न तु व्रीह्यादिवीजवद्विनश्वरमित्यर्थः ॥ १८ ॥

**तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ।**
**अमृतञ्चैव मृत्युश्च सदसच्चाहमर्जुनः ॥ १९ ॥**

किञ्च तपामीति । तपाम्यहमादित्यो भूत्वा कैश्चित् रश्मिभिस्तपामि अहं वर्षं कैश्चिद्रश्मिभिरुत्सृजामि उत्सृज्य पुनर्निगृह्णामि कैश्चिद्रश्मिभिरष्टभिर्मासैः पुनरुत्सृजामि प्रावृषि अमृतञ्चैव देवानां मृत्युश्च मर्त्यानां सत् यस्य यत् सम्बन्धितया विद्यमानं तद्विपरीतं असच्चैवाहं अर्ज्जुन ! न पुनरत्यन्तमेवासद्भगवान् स्वयं कार्य्यकारणे वा सदसती ये पूर्वोक्तैः निवृत्तिप्रकारैरेकत्वपृथक्त्वादिविज्ञानैर्यज्ञैर्मां पूजयन्त उपासते ज्ञानविदस्ते यथाविज्ञानं मामेव प्राप्नुवन्ति ॥ १९ ॥

आ० टी० । इतश्च सर्वात्मत्वे भगवतो न विप्रदितव्यमित्याह किञ्चेति । आदित्याज्जायते वृष्टिरिति स्मृतिमवष्टभ्य व्याचष्टे कैश्चिदिति । वर्षोत्सर्गनिग्रहावेकस्यैकस्मिन् काले विरुद्धौ इत्याशङ्क्याह अष्टभिरिति ।

ऋतुभेदेन वर्षस्य निग्रहोत्सर्गावेककर्त्तृकाववितव्याविवत्यर्थः। यस्य कारणस्य सम्बन्धित्वेन यत् कार्य्यमभिव्यज्यते तदिह सदित्युच्यते कारणसम्बन्धेनानभिव्यक्तं कारणमेव अनभिव्यक्तनामरूपमसदिति व्यवह्रियन्ते तदेतदाह सदिति। शून्यवादं व्युदस्यति न पुनरिति। भगवतोऽत्यन्तासत्त्वे कार्य्यकारणकल्पना निरधिष्ठाना न तिष्ठेदित्यर्थः। तर्हि यथाश्रुतं कार्य्यस्य सत्त्वं कारणस्य चासत्त्वमास्थेयमित्याशङ्क्य वाशब्देन निषेधति कार्य्येति। तर्हि कार्य्यस्यात्यन्तिकं सत्त्वं वाचारम्भणश्रुतेर्नापीतरस्यात्यन्तिकं असत्त्वं कुतस्तु खल्वित्यादिश्रुतेरित्यर्थः। उक्तैर्ज्ञानयज्ञैर्भगवदभिध्यानाभिनिविष्टबुद्धीनां किं फलमित्याशङ्क्य सद्यो वा क्रमेण वा मुक्तिरित्याह ये इति ॥ १९ ॥

स्वा° टी°। किञ्च तपाम्यहमिति। आदित्यात्मना स्थित्वा निदाघकाले तपामि जगतस्तापं करोमि, वृष्टिसमये च वर्षमुत्सृजामि विसृजामि, कदाचित्तु वर्षं निगृह्णामि आकर्षामि, अमृतं जीवनं मृत्युश्च नाशः सत् स्थूलं दृश्यं असच्च सूक्ष्ममदृश्यं एतत्सर्वमहमेवेति एवं मत्वा मामेव बहुधोपासते इति पूर्वेणैवान्वयः ॥ १९ ॥

**त्रैविद्या मां सोमपाः पूतपापा**
**यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते।**
**ते पुण्यमासाद्य सुरेन्द्रलोक-**
**मश्नन्ति दिव्यान् दिवि देवभोगान् ॥२०॥**

ये पुनरज्ञाः कामकामाः त्रैविद्येति। त्रैविद्या ऋग्यजुःसामविदः याज्ञिकाः येषां ते मां वस्वादिदेवरूपिणं इष्ट्वा संपूज्य यज्ञशेषं सोमपाः सोमं पिबन्तीति सोमपास्तेनैव सोमपानेन ते पूतपापाः शुद्धकिल्बिषा यज्ञैरग्निष्टोमादिभिरिष्ट्वा पूजयित्वा स्वर्गतिं स्वर्गगमनं स्वरेव

गतिः स्वर्गतिस्तां प्रार्थयन्ते याचयन्ते ते च पुण्यं पुण्यफलमासाद्य संप्राप्य सुरेन्द्रलोकं शतक्रतोः स्थानं अश्नन्ति भुञ्जते दिव्यान् दिवि भवान् अप्राकृतान् देवभोगान् देवानां भोगास्तान् ॥ २० ॥

श्रा० टी०। भगवद्भक्तानामपि निष्कामानामेव मुक्तिरिति दर्शयितुं सकामानां पुंसां संसारमवतारयति ये पुनरिति। तिस्रो विद्या अधीयन्ते विदन्तीति वा ते त्रैविद्यावेदविदस्तदाह त्रगिति। यस्तादीत्यादिश्रुत्या न सवनद्वयेनानादिना स्वर्गाय स्नान्ते शुद्धकिल्विषा निरस्तपापा इति यावत् ॥ २० ॥

स्वा० टी०। तदेवमयजानन्ति मां मूढा इत्यादिश्लोकद्वयेन क्षिप्रफलाशया देवतान्तरं यजन्तो मां नाद्रियन्त इत्यभक्ता दर्शिताः भक्तास्तु मां पार्थैत्यादिना च भक्ता उक्तास्तत्रैकत्वेन पृथक्त्वेन वा ये परमेश्वरं भजन्ति न०। जन्ममृत्युप्रवाहो दुर्वार इत्याह त्रैविद्या इति द्वाभ्याम्। ऋग्यजुःसामलक्षणास्तिस्रो विद्या येषां ते त्रिविद्यास्त्रिविद्या एव त्रैविद्याः स्वार्थेऽनुः तिस्रो विद्या अधीयन्ते जानन्तीति वा त्रैविद्यावेदत्रयोक्तकर्मपरा इत्यर्थः, वेदत्रयविहितैर्यज्ञैर्मामिष्ट्वा ममैव रूपं देवतान्तरमित्यजानन्तोऽपि वस्तुत इन्द्रादिरूपेण मामेवेष्ट्वा संपूज्य यज्ञशेषं सोमं पिबन्तीति सोमपास्तेनैव पूतपापाः शोधितकल्मषाः सन्तः स्वर्गतिं स्वर्गं प्रति गतिं ये प्रार्थयन्ते ते पुण्यफलरूपं सुरेन्द्रलोकं स्वर्गमासाद्य प्राप्य दिवि स्वर्गे दिव्यानुत्तमान् देवानां भोगानश्नन्ति भुञ्जते ॥ २० ॥

ते तं भुक्त्वा स्वर्गलोकं विशालं
क्षीणे पुण्ये मर्त्यलोकं विशन्ति।
एवं त्रयीधर्ममनुप्रपन्ना
गतागतं कामकामा लभन्ते ॥ २१ ॥

ते तमिति। ते तं भुक्त्वा स्वर्गलोकं विशालं विस्तीर्णं क्षीणे पुण्ये मर्त्यलोकमिमं विशन्त्या विशन्ति एवं हि यथोक्तेन प्रकारेण त्रयीधर्मं केवलं वैदिकं कर्मानुप्रपन्नास्ते गतागतं गतञ्चागतञ्च गतागतं गमनागमनं कामकामाः कामं कामयन्त इति कामकामा लभन्ते गतागतमेव न तु स्वातन्त्र्यं क्वचिल्लभन्त इत्यर्थः॥ २१ ॥

श्रा॰ टी॰। तर्हि स्वर्गप्राप्तेरपि भगवत्प्राप्तितुल्यतामित्याशङ्क्याह ते तमिति। पुण्ये स्वर्गप्राप्तिहेतावेति यावत्, प्रसिद्धोऽर्थो हिशब्दः, त्रयाणां होत्रादीनां वेदत्रयविहितानां धर्माणां समाहारस्त्रिधर्मं तदेव त्रैधर्म्यं तदनुप्रपन्नास्तदनुगता इति यावत्। कामकामानां गमनागमनद्वारा कामितत्फलप्राप्तिश्चेदिष्टमेव चेत्तत्रमित्याशङ्क्याह गतेति॥ २१ ॥

स्वा॰ टी॰। ततश्च ते तमिति। ते स्वर्गकामास्तं प्रार्थितं विपुलं स्वर्गलोकं तत् सुखं भुक्त्वा भोगप्रापके पुण्ये क्षीणे सति मर्त्यलोकं विशन्ति, पुनरप्येवमेव वेदत्रयविहितं धर्ममनुगताः कामकामा भोगान् कामयमाना गतागतं यातायातं लभन्ते॥२१॥

**अनन्याश्चिन्तयन्तो मां ये जनाः पर्य्युपासते।**
**तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्॥२२**

ये पुनः निष्कामाः सम्यग्दर्शिनः अनन्या इति। अनन्या अपृथग्भूताः परं देवं नारायणं आत्मत्वेन गताः सन्तश्चिन्तयन्तो मां ये जनाः सन्न्यासिनः पर्य्युपासते तेषां परमार्थदर्शिनां नित्याभियुक्तानां सततामियोगिनां योगक्षेमं योगोऽप्राप्तस्य प्रापणं क्षेमस्तद्रक्षणं तदुभयं वहामि प्रापयाम्यहं ज्ञानी त्वात्मैव मे मतं स च मम

प्रियो यस्मात्तस्मात्ते ममात्मभूताः प्रियाश्चेति, नन्वेषामपि भक्तानां योगक्षेमं वहत्येव भगवान् सत्यमेवं वहत्येव किन्त्वयं विशेषोऽन्ये ये भक्तास्ते स्वात्मार्थं स्वयमपि योगक्षेममीहन्ते अनन्यदर्शिनस्तु नात्मार्थं योगक्षेममीहन्ते न हि ते जीविते मरणे वात्मनो गृद्धिं कुर्वन्ति केवलमेव भगवच्छरणास्ते अतो भगवानेव तेषां योगक्षेमं वहतीति ॥ २२ ॥

आ० टी० । फलमनभिसन्धाय त्वामेवाराधयतां सम्यग्दर्शननिष्ठानामत्यन्तनिष्कामानां कथं योगक्षेमौ स्यातामित्याशङ्क्याह ये पुनरिति । तेषां योगक्षेमं वहामीत्युत्तरत्र सम्बन्धः । येभ्योऽन्यो न विद्यत इति व्युत्पत्तिमाश्रित्याह अपृथगिति । कार्य्यस्येव कारणे कल्पितादात्म्यं व्यावर्त्तयति परमिति । अहमेव वासुदेवः सर्वात्मानमतोऽन्यत् किञ्चिदस्तीति ज्ञात्वा तमेव प्रत्यञ्चं सदा ध्यायन्त इत्याह चिन्तयन्त इति । प्राकृतान् व्यावर्त्त्य मुख्यानधिकारिणो निर्दिशति सन्यासिन इति । पर्य्युपासते परितः सर्वतोऽनवच्छिन्नतया पश्यन्तीत्यर्थः । नित्याभियुक्तानां नित्यमनवरतमादरेण ध्याने व्यापृतानामित्याह सततेति । योगश्च क्षेमश्च योगक्षेमं तत्रापुनरुक्तमर्थमाह योग इति । किमर्थं परमार्थदर्शिनां योगक्षेमं वहामीत्याशङ्क्याह ज्ञानी त्विति । अतस्तेषां योगक्षेमं वहामि इति सम्बन्धः । सम्यग्दर्शननिष्ठानामेव योगक्षेमं वहति भगवानिति विशेषणमक्षममाणः शङ्कते नन्विति । अन्येषामपि भक्तानां भगवान् योगक्षेमं वहतीत्येतदङ्गीकरोति सत्यमिति । तर्हि भक्तेषु ज्ञानिषु च विशेषो नास्तीति पृच्छति किं त्विति । तत्र विशेषं प्रतिज्ञाय विवृणोति अयमित्यादिना । योगक्षेममुद्दिश्य स्वयमीहन्ते चेष्टां कुर्वन्तीति यावत् । आत्मविदां स्वार्थयोगक्षेममुद्दिश्य चेष्टाभावं स्फुटयति न हीति । यन्निरपेक्षाकामानामित्येतत् । ज्ञानिनां

नहि सर्वशास्त्रार्थत्यागरूपं केवलमिति । तेषां मदेकशरणत्वे फलित-माह यत इति । इतिशब्दो विशेषशब्देन सम्बध्यते ॥ २२ ॥

स्वा॰ टी॰ । मद्भक्तास्तु मत्प्रसादेन कृतार्था भवन्तीत्याह अनन्या इति । अनन्या नास्ति मद्व्यतिरेकेणान्यत् काम्यं येषां ते तथाभूता ये जना मां चिन्तयन्तः सेवन्ते तेषान्तु नित्याभियुक्तानां सर्वथा मदेकचि-त्तानां योगं धनादिलाभं क्षेमञ्च तत्पालनं, मोक्षं वा तैरप्रार्थितमपि अहमेव वहामि प्रापयामि ॥ २२ ॥

# येऽप्यन्यदेवता भक्ता यजन्ते श्रद्धयान्विताः ।
# तेऽपि मामेव कौन्तेय ! यजन्त्यविधिपूर्वकम् ॥२३॥

नन्वन्या अपि देवतास्त्वमेव चेत्तद्भक्ताश्च त्वामेव भजन्ते सत्यमेवं येऽपीति । ये अन्यदेवताभक्ता अन्यासु देवतासु भक्ता अन्यदेवताभक्ताः सन्तो यजन्ते पूजयन्ति श्रद्धया-स्तिक्यबुद्ध्या अन्विता अनुगतास्तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकमविधिरज्ञानं तत्पूर्वकं अज्ञानपूर्वकं यजन्ते इत्यर्थः ॥ २३ ॥

श्री॰ टी॰ । ननु देवतात्मना परस्यैवात्मनः स्थित्यभ्युपगमाद्देव-तान्तरपराणामपि भगवच्छरणत्वाविशेषात्तदेकनिष्ठत्वमकिञ्चित्करमिति मन्वानः शङ्कते नन्विति । उक्तमङ्गीकृत्य परिहरति सत्यमित्यादिना । देवतान्तरयाजिनां भगवद्याजिभ्यो विशेषमाह अविधीति । तद्व्या-करोति अविधिरिति ॥ २३ ॥

स्वा॰ टी॰ । ननु च त्वद्व्यतिरेकेण वस्तुतो देवतान्तरस्याभावादि-न्द्रादिसेविनोऽपि त्वद्भक्ता एवेति कथं ते गतागतं लभेरन्नित्याह ये-ऽपीति । श्रद्धयोपेताः सन्तो ये जना अन्यदेवता इन्द्रादिरूपा यजन्ते तेऽपि मामेव यजन्तीति सत्यं किन्तु अविधिपूर्वकं मोक्षप्रापकं विधिं विना यजन्ति अतस्ते पुनरावर्त्तन्ते ॥ २३ ॥

**अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।**
**न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥२४॥**

कस्मात्तेऽविधिपूर्वकं यजन्ते इत्युच्यते यस्मात् अहमिति । अहं हि सर्वयज्ञानां श्रौतानां स्मार्त्तानाञ्च सर्वेषां यज्ञानां देवात्मत्वेन भोक्ता च प्रभुरेव च मत्स्वामिको हि यज्ञोऽधियज्ञोऽहमेवात्रेति चोक्तं तथा न तु मामभिजानन्ति तत्त्वेन यथावदतश्चाविधिपूर्वकमिष्ट्वा यागफलात् च्यवन्ति ते ॥ २४ ॥

आ॰ टी॰ । ननु वस्वादिग्येन्द्रादियागपूर्वकमेव तद्भक्तास्तद्याजिनो भवन्तीति कथमविधिपूर्वकं तेषां यजनमिति शङ्कते कस्मादिति । देवतान्तरयाजिनां यजनमविधिपूर्वकमित्यत्र हेत्वर्थत्वेन श्लोकद्वयमुत्थापयति उच्यत इति । सर्वेषां द्विविधानां यज्ञानां वस्वादिदेवतात्वेनाहमेव भोक्ता स्वेनान्तर्यामिरूपेण प्रभुश्चाहमेवेति प्रसिद्धमेतदिति हिशब्दः । प्रभुरेव चेत्युक्तं विवृणोति मत्स्वामिको हीति । तत्र पूर्वाध्यायगतवाक्यं प्रमाणयति अधियज्ञोऽहमिति । तथापि देवतान्तरयाजिनां यजनमविधिपूर्वकमिति कुतः सिद्धं तत्राह तथा इति । ममैव यज्ञेषु भोक्तृत्वे प्रभुत्वे च सतीति यावत् । तयोर्भोक्तृप्रभ्वोर्भावस्तत्त्वं तेन भोक्तृत्वेन प्रभुत्वेन च मां यथावद्यतो न जानन्ति अतो भोक्त्रादिना ममाज्ञानान्मय्यनर्पितकर्म्माणश्चावर्त्तन्ते कर्मफलादित्याह अतश्चेति ॥२४॥

स्वा॰ टी॰ । एतदेव विवृणोति अहमिति । सर्वेषां यज्ञानां तत्तद्देवतारूपेणाहमेव भोक्ता प्रभुश्च स्वामी फलदाताप्यहमेवेत्यर्थः, एवंभूतं मां ते तत्त्वेन यथावन्नाभिजानन्ति अतश्च्यवन्ति प्रच्यवन्ते पुनरावर्त्तन्ते, ये तु सर्वदेवतासु मामन्तर्यामिनं पश्यन्तो यजन्ति ते तु नावर्त्तन्ते ॥ २४॥

**यान्ति देवव्रता देवान्**
**पितॄन् यान्ति पितृव्रताः ।**

भूतानि यान्ति भूतेज्या-
यान्ति मद्याजिनोऽपि माम् ॥ २५ ॥

येऽप्यन्यदेवताभक्तिमत्त्वेनाविधिपूर्वकं यजन्ते तेषामपि यागफलमवश्यम्भाविकं कथं यान्तीति। यान्ति गच्छन्ति देवव्रता देवेषु व्रतं नियमो भक्तिश्च येषां ते देवव्रता देवान् यान्ति पितॄनग्निष्वात्तादीन् यान्ति पितृव्रताः श्राद्धादिक्रियापराः पितृभक्ताः भूतानि विनायकमातृगणचतुर्भगिन्यादीनि यान्ति भूतेज्या भूतानां पूजकाः यान्ति मद्याजिनो मद्यजनशीला वैष्णवाः मामेव यान्ति समानेऽप्यायासे मामेव न भजन्तेऽज्ञानात्तेन तेऽल्पफलभाजो भवन्तीत्यर्थः ॥ २५ ॥

श्रा० टी०। यद्यन्यदेवताभक्ता भगवत्तत्त्वाज्ञानात् कर्मफलाच्च्यवन्ते तर्हि तेषां देवतायजनमकिञ्चित्करमित्याशङ्क्याह येऽपीति। देवतान्तरयाजिनामनावृत्तिफलाभावेऽपि तत्तद्देवतायागानुरूपफलप्राप्तिध्रौव्यान्न तदकिञ्चित्करमित्यर्थः। देवतान्तरयाजिनामावश्यकं तत्फलमाशङ्कापूर्वकमुदाहरति कथमित्यादिना। नियमो वस्त्वपहारप्रदक्षिणप्रह्वीभावादिरित्यर्थः। देवतान्तराराधनस्यान्तवत्फलमुक्त्वा भगवदाराधनस्यानन्तफलत्वमाह यान्तीति। भगवदाराधनस्यानन्तफलत्वे देवतान्तराराधनं त्यक्त्वा भगवदाराधनमेव युक्तमायाससाम्यात् फलातिरेकाच्चेत्याशङ्क्याह समानेऽपीति। अज्ञानाधीनत्वेन देवतान्तराराधनवतां फलतो न्यूनतां दर्शयति तेनेति ॥ २५ ॥

स्वा० टी०। तदेवोपपादयति यान्तीति। देवेष्विन्द्रादिषु व्रतं नियमो येषां तेऽन्नवतो देवान् यान्ति अतः पुनरावर्त्तन्ते, पितृषु व्रतं येषां श्राद्धादिक्रियापराणां ते पितॄन् यान्ति, भूतेषु विनायकमातृगणा-

दिषु इज्या पूजा येषां ते भूतेज्या भूतानि यान्ति, मां यष्टुं शीलं येषां ते मद्याजिनस्ते तु मामक्षयं परमानन्दस्वरूपं यान्ति ॥ २५ ॥

**पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।**
**तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ २६ ॥**

न केवलं मद्भक्तानामनावृत्तिलक्षणमनन्तफलमुक्तं सुखाराधनञ्चाहं कथं पत्रमिति । पत्रं पुष्पं फलं तोयमुदकं यो मे मह्यं भक्त्या प्रयच्छति तदहं पत्रादि भक्त्योपहृतं भक्तिपूर्वकं प्रापित भक्त्युपहृतमश्नामि गृह्णामि प्रयतात्मनः शुद्धबुद्धेः ॥ २६ ॥

आ० टी० । अनन्तफलत्वाद्भगवदाराधनमेव कर्त्तव्यमित्युक्तं सुकरत्वाच्च तथेत्याह न केवलमिति । भगवदाराधनस्य सुकरत्वमेव प्रश्नपूर्वकं प्रपञ्चयति कथमित्यादिना । यद्वि पुष्पादिकं भक्तिपूर्वकं मदर्थमर्पितं तेनायं शुद्धचेताः तपस्वी मामाराधयतीत्यहमवधारयामीत्याह पत्रमित्यादिना ॥ २६ ॥

स्वा० टी० । तदेवं स्वभक्तानामक्षयफलसक्ता कनायासत्वञ्च स्वभक्तेर्दर्शयति पत्रमिति । पत्रपुष्पादिमात्रमपि मह्यं भक्त्या यः प्रयच्छति तस्य प्रयतात्मनः शुद्धचित्तस्य निष्कामभक्तस्य तत् पत्रपुष्पादिकं भक्त्या तेनोपहृतं समर्पितमहमश्नामि प्राप्नोमि प्रीत्या गृह्णामि, न हि महाविभूतिपतेः परमेश्वरस्य मम क्षुद्रदेवतानामिव बहुवित्तसाध्ययागादिभिः परितोषः स्यात् किन्तु भक्तिमात्रेण अतो भक्तेन समर्पितं यत्किञ्चित् पत्रादिमात्रमपि तदनुग्रहार्थमेवाश्नामीति भावः ॥ २६ ॥

**यत् करोषि यदश्नासि यज्जुहोषि ददासि यत् ।**
**यत्तपस्यसि कौन्तेय ! तत् कुरुष्व मदर्पणम् ॥२७**

यत एवमतः यत् करोषीति । यत् करोषि यदाचरसि

शास्त्रीयं कर्म स्वतः प्राप्तं यदश्नासि यत् खादसि यद्-जुहोषि हवनं निर्वर्त्तयसि श्रौतं स्मार्त्तं वा यद्ददासि प्रयच्छसि ब्राह्मणादिभ्यो हिरण्यान्नपात्ररत्नादि यत्तपस्यसि कौन्तेय ! तत् कुरुष्व मदर्पणं मत्समर्पणम् ॥ २७ ॥

व्या॰ टी॰। तदाराधनस्य सुकरत्वे तदेवावश्यकमित्याह यत इति। स्वतः शास्त्रादितः प्राप्तं गमनादीति यावत्। यदश्नासि यं किञ्चिद्भोगं भुंक्ते। हवनस्य स्वतस्त्वं वारयति श्रौतमिति। मत्समर्पणं तत् सर्वं मह्यं समर्पयेत्यर्थः ॥ २७ ॥

स्वा॰ टी॰। न च फलपुष्पादिकमपि यज्ञार्थपशुसोमादिद्रव्यवन्मदर्थ-मेवोद्यमैरापाद्य समर्पणीयं किन्तर्हि यत् करोषीति। स्वभावत शास्त्रतो वा यत्किञ्चित् कर्म करोषि तथा यदश्नासि यज्जुहोषि यद्ददासि यच्च तपस्यसि तपः करोषि तत्सर्वं मय्यर्पितं यथा भवति एव कुरुष्व ॥ २७ ॥

शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः।
सन्न्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥२८॥

एवं कुर्वतस्तव यद्भवति तच्छृणु शुभाशुभफलैरिति। शुभाशुभफलैरेवं शुभाशुभे इष्टानिष्टफले येषां तानि शुभा-शुभफलानि कर्माणि तैः शुभाशुभफलैः कर्मबन्धनैरेवं मत्समर्पणं कुर्वन् मोक्ष्यसे सोऽयं सन्न्यासयोगो नाम सन्न्यासश्चासौ मत्समर्पणतया कर्मकर्त्तृत्वाद्योगश्चासाविति तेन सन्न्यासयोगेन युक्त आत्मान्तःकरणं यस्य तव सत्वं सन्न्यासयोगयुक्तात्मा सन् विमुक्तः कर्मबन्धनैर्जीवन्नेव पतिते चास्मिन् शरीरे मामुपैष्यस्यागमिष्यसि ॥ २८ ॥

व्या॰ टी॰। किमतो भवति तदाह एवमिति। भगवदर्पणबुद्धा

सर्वकर्म कुर्वतो जीवन्मुक्तस्य प्रारब्धकर्मावसाने विदेहकैवल्यमावश्यक-मित्याह शुभेत्यादिना । भगवदर्पणकारणान्मुक्तिः संन्यासयोगाश्चेति साधनद्वयसङ्गं द्योतयति सोऽयमिति ॥ २८ ॥

व्या॰ टी॰ । एवञ्च यत् फलं प्राप्स्यसि तच्छृणु इत्याह शुभा-शुभेति । एवं कुर्वन् कर्मबन्धनैः कर्मनिमित्तैरिष्टानिष्टफलैर्मुक्तो भविष्यसि कर्मणां मयि समर्पितत्वेन तव तत्फलसम्बन्धानुपपत्तेः, तैश्च विमुक्तः सन् संन्यासयोगयुक्तात्मा संन्यासः कर्मणां मदर्पणं स एव योगस्तेन युक्त आत्मा चित्तं यस्य तथाभूतस्त्वं मां प्राप्स्यसीत्यर्थः ॥ २८ ॥

**समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।**
**ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् २९**

रागद्वेषवान् तर्हि भगवान् यतो भक्ताननुगृह्णाति नेतरानिति तन्न समोऽहमिति । समः तुल्योऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः अग्निवदहं दूरस्थानां यथाग्निः शीतं नापनयति समीपमुपसर्पतामपनयति तथाहं भक्ताननुगृह्णामि नेतरान् ये भजन्ति तु मामीश्वरं भक्त्या मयि ते स्वभावत एव न मम रागनिमित्तं मयि वर्त्तन्ते तेषु चाप्यहं स्वभावत एव वर्त्ते नेतरेषु नैतावता तेषु द्वेषो मम ॥ २९ ॥

व्या॰ टी॰ । भगवतो रागद्वेषवत्त्वमानीश्वरत्वमाशङ्क्य परिहरति समेत्यादिना । तर्हि भगवद्भजनमकिञ्चित्करमित्याशङ्क्याह अग्निव-दिति । तत्प्रपञ्चयति यथेति । भक्तानभक्तांश्चानुगृह्णतोऽननुगृह्णतश्च भगवतो न कथं रागादिमत्त्वमित्याशङ्क्याह ये भजन्तीति । ये हि वर्णाश्रमादिधर्म्मैर्मां भजन्ति ते तेनैव भजनेनाचिन्त्यमाहात्म्येन परि-शुद्धबुद्धयो मयि मत्समीपे वर्त्तन्ते मदभिव्यक्तियोग्यचित्ता भवन्ति, तथ्यु-

ऽस्य विशेषस्य द्योतनार्थः, तेषु च समीपे समक्षं तेषामहमपि स्वभावतो वर्त्तमानस्तदनुग्रहपरो भवामि यथा व्यापकमपि सावित्रं तेजः स्वच्छे दर्पणादौ प्रतिफलति तथा परमेश्वरोऽवर्जनीयतया भक्ति-निरस्तसमस्तकलुषसत्त्वेषु पुरुषेषु सन्निधत्ते दैवीं प्रकृतिमाश्रितानां भजन्तीत्युक्तत्वादित्यर्थः ॥ २९ ॥

स्वा० टी० । यदि तु भक्तेभ्य एव मोक्षं ददासि नाभक्तेभ्यस्तर्हि तथापि किं रागद्वेषादिकृतं वैषम्यमस्ति नेत्याह स मोऽहमिति । सर्वेषु भूतेष्वहं समः अतो मम प्रियश्च द्वेष्यश्च नास्त्येव, एवं सत्यपि ये मां भजन्ति ते भक्त्या मयि वर्त्तन्ते अहमपि तेष्वनुग्राहकतया वर्त्ते, अयं भावः यथाग्नेः स्वसेवकेष्वेव तमः शीतादिदुःखमपाकुर्वतोऽपि न वैषम्यं यथा वा कल्पवृक्षस्य तथैव भक्तपक्षपातिनोऽपि मम वैषम्यं नास्त्येव किन्तु मद्भक्तेरेवायं महिमेति ॥ २९ ॥

**अपि चेत् सुदुराचारो भजते मामनन्यभाक् ।**
**साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः॥३०॥**

शृणु मद्भक्तमाहात्म्यं अपि चेदिति। अपि चेत् यद्यपि सुष्ठु दुराचारः सुदुराचारोऽतीवकुत्सिताचारोऽपि भजते मां अनन्यभाक् नान्यभक्तिः सन् साधुरेव सम्यग्वृत्त एव स मन्तव्यः ज्ञातव्यः सम्यग् यथावद्व्यवसितो हि यस्मात् साधुनिश्चयः सः ॥ ३० ॥

आ० टी० । प्रकृतां भगवद्भक्तिं स्तुवन् पापीयसामपि तत्राधि-कारोऽस्तीति सूचयति अपीत्यादिना । सम्यग्वृत्त एव भगवद्भक्तो ज्ञातव्य इत्यत्र हेतुमाह सम्यगिति ॥ ३० ॥

स्वा०टी० । अपि च मद्भक्तेरेवायमचिन्त्यः प्रभाव इति दर्शयन्नाह अपि चेदिति । अत्यन्तदुराचारोऽपि यद्यपृथक्त्वेन पृथग्देवतापि वासुदेव एवेति बुद्ध्या देवतान्तरभक्तिमकुर्वन् मामेव परमेश्वरं भजते

तर्हि साधुः श्रेष्ठ एव मन्तव्यः यतोऽसौ सम्यग्व्यवसितः शोभनमध्यवसायं कृतवान् ॥ ३० ॥

**क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।**
**कौन्तेय ! प्रतिजानीहि न मे भक्तः प्रणश्यति ॥३१॥**

उत्सृज्य च बाह्यां दुराचारतामन्तः सम्यग्व्यवसायसामर्थ्यात् क्षिप्रमिति । क्षिप्रं शीघ्रं भवति धर्मात्मा धर्मचित्त एव शश्वत् नित्यं शान्तिञ्चोपशमं निगच्छति प्राप्नोति शृणु परमार्थं कौन्तेय । प्रतिजानीहि निश्चितां प्रतिज्ञां कुरु न मे मम भक्तः मयि समर्पितान्तरात्मा मद्भक्तो न प्रणश्यतीति ॥ ३१ ॥

आ० टी० । हेत्वर्थमेव प्रपञ्चयति उत्सृज्येति । भगवन्तं भजमानस्य कथं दुराचारता परित्यक्ता भवतीत्याशङ्क्याह क्षिप्रमिति । सति दुराचारे कथं धर्मचित्तत्वं तदाह शश्वदिति । उपशमो दुराचारादुपरमः । किमिति तद्भक्तस्य दुराचारादुपरतिरुच्यते दुराचारोपहतचेतस्तया किमित्यसौ न नश्यतीत्याशङ्क्याह शृणिवति ॥ ३१ ॥

स्वा० टी० । ननु कथं समीचीनाध्यवसायमात्रेण साधुर्मन्तव्यस्तत्राह क्षिप्रमिति । सुदुराचारोऽपि मां भजन् शीघ्रं धर्मचित्तो भवति ततश्च शश्वच्छान्तिं चित्तोपप्लवोपरमरूपां परमेश्वरनिष्ठां नितरां गच्छति प्राप्नोति, कुतर्ककर्कशवादिनो नैतन्मन्येरन्निति शङ्काकुलमर्जुनं प्रोत्साहयति हे कौन्तेय ! पटहादिमहाघोषपूर्वकं विवदमानानां सभां गत्वा बाहुमुत्क्षिप्य निःशङ्कं प्रतिजानीहि प्रतिज्ञां कुरु, कथं मे परमेश्वरस्य भक्तः सुदुराचारोऽपि न प्रणश्यति अपि तु कृतार्थ एव भवतीति, ततश्च ते तत्प्रौढ़ि विजृम्भात् विध्वंसितकुतर्काः सन्तो निःसंशयं त्वामेव गुरुत्वेनाश्रयेरन् ॥ ३१ ॥

**मां हि पार्थ! व्यपाश्रित्य येऽपि स्युः पापयोनयः।**
**स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिं॥३२**

किञ्च मां हीति। मां हि यस्मात् पार्थ! व्यपाश्रित्य मामाश्रित्याश्रयत्वेन गृहीत्वा येऽपि स्युर्भवेयुः पापयोनयः पापानि योनिः येषां ते पापजन्मानः के त इत्याह स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति गच्छन्ति परां गतिं प्रकृष्टां गतिम्॥ ३२॥

व्या॰ टी॰। इतश्च भगवद्भक्तिर्विधातव्येत्याह किञ्चेति। न मे भक्तः प्रणश्यतीत्यत्र हेतुमाचक्षाणो भक्त्यधिकारे जातिनियमो नास्तीत्याह मां हीति॥ ३२॥

स्वा॰ टी॰। स्वाचारभ्रष्टं मद्भक्तः पवित्रीकरोतीति किमत्र चित्रं यतो मद्भक्तिर्दुष्कुलानयनविकारिणोऽपि संसारान्मोचयतीत्याह मां हीति। येऽपि पापयोनयः स्युर्निकृष्टजन्मानोऽन्त्यजादयो भवेयुः, येऽपि वैश्याः केवलं कृष्यादिनिरताः अतः स्त्रियः शूद्राश्चाध्ययनादिरहितास्तेऽपि मां व्यपाश्रित्य संसेव्य परां गतिं यान्ति हि निश्चितम्॥३२

**किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा।**
**अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम्॥३३**

किं पुनरिति। किं पुनर्ब्राह्मणाः पुण्याः पुण्ययोनयः भक्ता राजर्षयस्तथा राजानश्च ते ऋषयश्चेति राजर्षयः यत एवमतोऽनित्यं क्षणभङ्गुरमसुखं च सुखवर्जितं मनुष्यलोकं प्राप्य पुरुषार्थसाधनं दुर्लभं मनुष्यत्वं लब्ध्वा भजस्व सेवस्व माम्॥ ३३॥

व्या॰ टी॰। यदि पापयोनिः पापाचारश्च त्वद्भक्त्या परां गतिं

गच्छन्ति तर्हि किमुत्तमजातिनिमित्तेन संन्यासादिना किं वा बहुधर्मेणेत्याशङ्क्याह किं पुनरिति। उत्तमजातिमतां ब्राह्मणादीनामतिशयेन परा गतिर्यतो लभ्यते अतो भगवद्भजनं तैः एकान्तेन विधातव्यमित्याशयेन इति। मनुष्यदेहातिरिक्तेषु पश्वादिदेहेषु भगवद्भजनयोग्यताभावात् प्राप्ते मनुष्यत्वे तद्भजने प्रयतितव्यं इत्याह दुर्लभमिति ॥ ३३ ॥

स्वा॰ टी॰। यदेवं तदा सत्कुलाः सदाचाराश्च मद्भक्ताः परां गतिं यान्तीति किं वक्तव्यमित्याह किं पुनरिति। पुण्याः सुकृतिनो ब्राह्मणाः, तथा राजानश्च ते ऋषयश्चेति एवंभूताश्च परां गतिं यान्तीति किं वक्तव्यमित्यर्थः। अतस्त्वं इमं राजर्षिरूपं देहं प्राप्य स्वधर्मे स्थित्वा मां भजस्व, किन्तु अनित्यमध्रुवं असुखं सुखरहितमेवं मर्त्यलोकं प्राप्य अनित्यत्वादिविलम्बमकुर्वन् असुखत्वाच्च सुखार्थमुद्यमं हित्वा मामेव भजस्वेत्यर्थः ॥ ३३ ॥

**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।**
**मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः॥३४॥**

**इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे राजगुह्ययोगो नाम नवमोऽध्यायः।**

---

कथं मन्मना इति। मयि मनो यस्य तव स त्वं मन्मना भव तथा मद्भक्तो भव मद्याजी मद्यजनशीलो भव मामेव च नमस्कुरु मामेवेश्वरमेष्यसि आगमिष्यसि युक्त्वा समा-

धाय चित्तमेवमात्मानं मामेवमहं हि सर्वेषां भूतानां आत्मा परा च गतिः परमयनं तं मामेवम्भूतं एष्यसीत्यतीतेन पदेन सम्बन्धः मत्परायणः सन्नित्यर्थः ॥ ३४ ॥

इति श्रीभगवद्गीताभाष्ये नवमोऽध्यायः।

आ॰ टी॰। भगवद्भक्तेरित्यमाव पृच्छति। कथमिति। ईश्वर भजने इतिकर्त्तव्यतां दर्शयति मन्मना इति। एवं भगवन्तं भजमानस्य मम किं स्यादित्याशङ्क्याह मामेवेति। समाधाय भगवत्येवेति शेषः। एवमात्मानमित्येतद्विदृणोति अहं हीति। अहमेव परमयनं तवेति मत्परायणस्तथाभूतः सन् मामेवात्मानमेष्यसीति सम्बन्धः। तदेवं मध्यमानां ध्येयं निरूप्य नवमेनाधमानामाराध्याभिधानमुखेन निजेन पारमार्थिकेन रूपेण मत्पदेन ज्ञानं परमेश्वरस्य परमाराधनमित्यभिदधता सोपाधिकं तत्पदवाच्यं निरुपाधिकञ्च तत्पदलक्ष्यं व्याख्यातम् ॥ ३४ ॥

इति नवमोऽध्यायः।

स्वा॰ टी॰। भजनप्रकारं दर्शयन्नुपसंहरति मन्मना इति। मय्येव मनो यस्य स मन्मनास्त्वं भव, तथा ममैव भक्तः सेवको भव, मद्याजी मत्पूजनशीलो भव, मामेव च नमस्कुरु, एवमेभिः प्रकारैर्मत्परायणः सन्नात्मानं मनो मयि युक्त्वा समाधाय मामेव परमानन्दरूपमेष्यसि प्राप्स्यसि निजमैश्वर्यं माधवः भक्तेभ्यः स्फुटतैभवम्। नवमे राजगुह्याख्ये कृपया वोचदच्युतः ॥ ३४ ॥

इति नवमोऽध्यायः।

# दशमोऽध्यायः ।

---

## श्रीभगवानुवाच ।

**भूय एव महाबाहो ! शृणु मे परमं वचः ।**
**यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥१॥**

सप्तमाध्याये भगवतस्तत्त्वं विभूतयश्च प्रकाशिता नवमे च, अथेदानीं येषु येषु भावेषु चिन्त्यो भगवांस्ते ते भावा वक्तव्याः तत्त्वञ्च भगवतो वक्तव्यं उक्तमपि दुर्विज्ञेयत्वादित्यतो भगवानुवाच भूय इति । भूय एव भूयः पुनः हे महाबाहो ! शृणु मे मदीयं परमं प्रकृष्टं निरतिशयवस्तुनः प्रकाशकं वचो वाक्यं यत् परमं ते तुभ्यं प्रीयमाणाय मद्वचनात् प्रीयसे त्वमतीवामृतमिव पिबंस्ततो वक्ष्यामि हितकाम्यया हितेच्छया ॥ १ ॥

आ॰ टी॰ । अध्यायद्वये सिद्धमर्थं संक्षेपतोऽनुभाषते सप्तम इति । तत्त्वं सोपाधिकं निरुपाधिकञ्च विभूतयः सविशेषनिर्विशेषरूपप्रतिपत्त्युपयोगिन्यः । उत्तराध्यायस्याध्यायद्वयेन सम्बन्धं वदन्नध्यायान्तरमवतारयति अथेति । वक्तव्याः सविशेषध्याने निर्विशेषप्रतिपत्तौ च शेषत्वेनेति शेषः । ननु सविशेषं निर्विशेषञ्च भगवतो रूपं प्रागेव तत्र तत्रोक्तं तत् किमिति पुनरुच्यते तत्राह उक्तमपीति । तद्यदि तत्र तत्र सम्यगुक्तं तथापि पुनर्वक्तव्यं दुर्विज्ञेयत्वादिति यतो मन्यतेऽत इति योजना । प्रकृष्टत्वं वचसः स्पष्टयति निरतिशयेति । तदेव वचो विशिनष्टि यत्परममिति । सकृदुक्तेऽर्थे विदुषे सकृदुक्तिरनर्थिकेत्याशङ्क्याह प्रीयमाणायेति । ततो वक्ष्यामि इति तुभ्यं इति पूर्वेण सम्बन्धः ॥ १ ॥

व्या॰ टी॰। उक्ताः संक्षेपतः पूर्वं सप्तमादौ विभूतयः। दशमे ता वितन्यन्ते सर्वत्रेश्वरदृष्टये। एवं तावत् सप्तमादिभिस्त्रिभिरध्यायैर्भगवतीवं परमेश्वरतत्त्वं निरूपितं तद्विभूतयश्च सप्तमे रसोऽहमप्सु कौन्तेयेत्यादिना संक्षेपतो दर्शिताः अष्टमे च अधियज्ञोऽहमेवात्र देहे इत्यादिना नवमे चाहं क्रतुरहं यज्ञ इत्यादिना, इदानीं ता एव विभूतीः प्रपञ्चयिष्यन् स्वभक्तेर्वासवत्करणीयत्वं वर्णयिष्यन् श्रीभगवानुवाच भूय एवेति। महान्तौ युद्धादिस्वधर्मानुष्ठाने मद्भक्तपरिचर्य्यायां वा कुशलौ बाहू यस्य तथा हे महाबाहो! भूय एव पुनरपि मे वचः शृणु, कथंभूतं परमं परमात्मनिष्ठं, मद्वचनामृतेनैव प्रीतिं प्राप्नुवते तुभ्यं हितकाम्यया हितेच्छया यदहं वक्ष्यामि तत्॥ १॥

# न मे विदुः सुरगणाः प्रभवं न महर्षयः।
# अहमादिर्हि देवानां महर्षीणाञ्च सर्वशः॥२॥

किमर्थमहं वक्ष्यामीत्यत आह नम इति। न मे विदुर्न जानन्ति सुरगणाः किं ते न विदुः मम प्रभवं प्रभावं प्रभुशक्त्यतिशयं अथ वा प्रभवं प्रभवनं उत्पत्तिं वा नापि महर्षयो भृग्वादयो विदुः कस्मात्ते न विदुरित्युच्यते अहमादिः कारणं हि यस्माद्देवानां महर्षीणां च सर्वशः सर्वप्रकारैः॥ २॥

व्या॰ टी॰। हितकाम्यया दुर्विज्ञेयं तत्त्वज्ञानं कश्चिदन्योऽपि परमं वचो मह्यं वक्ष्यति तेन च मम तत्त्वज्ञानं भविष्यत्यतो भगवद्वचनमकिञ्चित्करमिति शङ्कित्वा परिहरति किमर्थमित्यादिना। इन्द्रादयो भृग्वादयश्च भगवत्प्रभावं न विदन्तीत्यत्र प्रश्नपूर्वकं हेतुमाह कस्मादिति। निमित्तत्वेनोपादानत्वेन च यतो देवादीनां भगवानेव हेतुरतस्तद्विकारत्वेन तस्य प्रभावं विदुरित्यर्थः॥ २॥

व्या॰ टी॰। उक्तस्यापि दुर्वचनते दुर्ज्ञेयत्वं हेतुमाह न मे विदु-

र्रिति । मे मम प्रभवं प्रभवं जन्मरहितस्यापि नानाविभूतिभिराविर्भावं सुरगणा अपि महर्षयोऽपि भृग्वादयो न जानन्ति । तत्र हेतुः अहं हि देवानां महर्षीणाञ्चादिः कारणं सर्वशः सर्वैः प्रकारैरुत्पादकत्वेन बुद्ध्यादिप्रवर्त्तकत्वेन च अतो मदनुग्रहं विना मां केऽपि न जानन्तीत्यर्थः ॥ २ ॥

**योमामजमनादिञ्च वेत्ति लोकमहेश्वरम् ।**
**असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥ ३ ॥**

किञ्च यो मामिति । यो मामजमनादिञ्च यस्मादहमादिर्हि देवानां महर्षीणाञ्च न ममान्यः आदिर्विद्यतेऽहमजोऽनादिश्च अनादित्वमजत्वे हेतुस्तं मामजमनादिञ्च यो वेत्ति विजानाति लोकमहेश्वरं लोकानां महान्तमीश्वरमसंमूढः संमोहवर्जितः स मर्त्येषु मनुष्येषु सर्वपापैः सर्वैः पापैः मतिपूर्वामतिपूर्वकृतैः प्रमुच्यते प्रमोच्यते ॥ ३ ॥

श्रा॰ टी॰ । इतश्च कश्चिदेव भगवत्प्रभावं वेत्तीत्याह किञ्चेति । कोऽसौ प्रभावो भगवतोऽयं बहवो न विदुरित्यपेक्षायां पारमार्थिकं प्रभावं तद्धीनफलञ्च कथयति यो मामिति । पदद्वयापौनरुक्त्यमाह अनादित्वमिति ॥ ३ ॥

स्वा॰ टी॰ । एवं भूतात्मज्ञाने फलमाह यो मामिति । सर्वकारणत्वादेव न विद्यते आदिः कारणं यस्य तमनादिं, अतएवाजं जन्मशून्यं लोकानां महेश्वरञ्च मां यो वेत्ति स मनुष्येषु सम्मोहरहितः सन् सर्वपापैः प्रमुच्यते ॥ ३ ॥

**बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः ।**
**सुखं दुःखं भवोऽभावो भयञ्चाभयमेव च ॥ ४ ॥**

इतश्चाह महेश्वरलोकानां बुद्धिरिति । बुद्धिरन्तः-

करणस्य सूक्ष्माद्यर्थावबोधनसामर्थ्यं तद्वन्तं बुद्धिमानिति हि वदन्ति ज्ञानमात्मादिपदार्थानामवबोधः असम्मोहः प्रत्युपपन्नेषु बोद्धव्येषु द्रव्येषु विवेकपूर्विका प्रवृत्तिः क्षमा आक्रुष्टस्य ताडितस्य वा अविकृतचित्तता सत्यं यथादृष्टस्य यथाश्रुतस्य चात्मानुभवस्य परबुद्धिसंक्रान्तये तथैवोच्चार्यमाणा वाक् सत्यमुच्यते दमो बाह्येन्द्रियोपशमः शमोऽन्तःकरणस्योपशमः सुखं आह्लादो दुःखं सन्तापो भव उद्भवः अभावस्तद्विपर्ययः भयञ्च त्रासोऽभयमेव च तद्विपरीतम् ॥ ४ ॥

व्या॰ टी॰ । भगवतो लोके महेश्वरत्वे हेत्वन्तरमाह इत्यादि । मुमुक्षुभिराराध्यत्वसिद्धये बन्धमोक्षसाधनं परस्मात्प्रभवज्जगत् प्रकृत्य धर्मात्मलक्षणं सोपाधिकं भगवत्प्रभावमभिधत्ते बुद्धिरिति । सूक्ष्मादीत्यादिशब्देन सूक्ष्मतरः सूक्ष्मतमश्चार्थो गृह्यते उक्तं सामर्थ्यं बुद्धिरित्यभियुक्तं प्रसिद्धिं प्रमाणयति तद्वन्तमिति । आत्मादीति तदभावेऽभवन्तं हि ज्ञानिनं वदन्ति अन्तःकरणस्योपशमो विषयेभ्यो व्यावृत्तिरिति शेषः ॥ ४ ॥

स्वा॰ टी॰ । लोकमहेश्वरतां स्फुटयति बुद्धिरिति त्रिभिः । बुद्धिः सारासारविवेकनैपुण्यं, ज्ञानमात्मविषयं, असम्मोहो व्याकुलताभावः, क्षमा सहिष्णुत्वं, सत्यं यथार्थभाषणं, दमो बाह्येन्द्रियसंयमः, शमोऽन्तःकरणसंयमः, सुखमनुकूलसंवेदनीयं, दुःखञ्च तद्विपरीतं, भव उद्भवः, अभवस्तद्विपरीतं, भयं त्रासः, अभयं तद्विपरीतं, अस्य श्लोकस्य मत्त एव भवन्तीत्युत्तरेणान्वयः ॥ ४ ॥

**अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।**
**भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥५॥**

अहिंसेति। अहिंसा अपीडा प्राणिनां समता समचित्तता तुष्टिः सन्तोषः पर्य्याप्तबुद्धिर्लाभेषु तप इन्द्रियसंयमपूर्वकं शरीरपीड़नं दानं यथाशक्तिसंविभागः यशो धर्मनिमित्ता कीर्त्तिः अयशस्त्वधर्मनिमित्ता कीर्त्तिः भवन्ति भावा यथोक्ता बुद्ध्यादयो भूतानां प्राणिनां मत्त एवेश्वरात् पृथग्विधा नानाविधाः स्वकर्मानुरूपेण ॥ ५ ॥

आ॰ टी॰। शेषः यथाशक्तीति। पात्रे श्रद्धया स्वशक्तिमनतिक्रम्यार्थानां देशकालानुगुण्येन प्रतिपादनमित्यर्थः। उक्तानां बुद्ध्यादीनां साक्षात् परमेश्वरादुत्पत्तिं प्रतिजानीते भवन्तीति। नानाविधत्वे हेतुमाह स्वकर्मेति ॥ ५ ॥

स्वा॰ टी॰। किञ्च अहिंसेति। अहिंसा परपीडानिवृत्तिः समता रागद्वेषादिराहित्यं, तुष्टिर्दैवलब्धेन सन्तोषः, तपः शारीरादि वक्ष्यमाणं, दानं न्यायार्जितस्य धनादेः पात्रेऽर्पणं, यशः सत्कीर्त्तिः, अयशो दुष्कीर्त्तिः, एते बुद्धिज्ञानादयस्तद्विपरीताश्च बुद्ध्यादयो नानाविधा भावाः प्राणिनां मत्तः सकाशादेव भवन्ति ॥ ५ ॥

**महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा।**
**मद्भावा मानसा जाता येषां लोक इमाः प्रजाः॥६॥**

किञ्च महर्षय इति। महर्षयः सप्त भृग्वादयः पूर्वेऽतीतकालसम्बन्धिनश्चत्वारो मनवस्तथा सावर्णा इति प्रसिद्धाः ते च मद्भावा मद्गतभावना वैष्णवेन वा सामर्थ्येनोपेता मानसा मनसैवोत्पादिता मया जाता उत्पन्ना येषां मनूनां महर्षीणाञ्च सृष्टिर्लोक इमाः स्थावरजङ्गमलक्षणाः प्रजाः ॥ ६ ॥

आ॰टी॰। कथञ्चिदपि तेषामात्मातिरेकेणाभावात् मत्त एवेत्युक्तं च

केवलं भगवतः सर्वप्रकृतित्वमेव किन्तु सर्वज्ञत्वसर्वेश्वरत्वरूपमधिष्ठातृत्व-मपीत्याह किञ्चेति । आद्या भृग्वादयो वशिष्ठान्ताः सर्वज्ञा विद्यासंप्रदाय-प्रवर्त्तकास्तथेति मनूनामपि पूर्वत्वेनाद्यत्वमनुकृष्यते । के ते मनवस्तत्राह सावर्णा इति । इति प्रसिद्धाः पुराणेषु प्रजानां पालकाः स्वयमी-श्वराश्चेति शेषः । महर्षीणां मनूनाञ्च तुल्यं विशेषणं ते चेति । मयि सर्वज्ञे सर्वेश्वरे गता भावना येषां ते तथा । भावनाफलमाह वैष्णवेनेति । वैष्णव्या शक्त्याधिष्ठितत्वेन ज्ञानैश्वर्य्यवन्त इत्यर्थः । तेषां जन्मनो वैशिष्ट्यमाचष्टे मानसा इति । मन्वादीनेव विशिनष्टि येषामिति । विद्यया जन्मना च सन्ततिभूता मन्वादीनामस्मिन् लोके सर्व्वाः प्रजा इत्यर्थः ॥ ६ ॥

स्वा० टी० । किञ्च महर्षय इति । सप्त महर्षयो भृग्वादयः सप्त ब्रह्मणा इष्यते पुराणे निश्चयं गता इत्यादिपुराणप्रसिद्धास्तेभ्योऽपि पूर्वेऽन्ये चत्वारो महर्षयः सनकादयस्तथा मनवः स्वायम्भुवादयो मद्भावा मदीयो भावः प्रभावो येषु ते हिरण्यगर्भात्मनो ममैव मनस सङ्कल्पमात्राज्जाताः । प्रभावमेवाह येषामिति । येषां भृग्वादीना सनकादीनाञ्च इमा ब्राह्मणाद्या लोके वर्त्तमाना यथायथं पुत्त्रपौत्राद्-रूपाः शिष्यप्रशिष्यादिरूपाश्च प्रजाः प्रजायन्ते ॥ ६ ॥

**एतां विभूतिं योगञ्च मम यो वेत्ति तत्त्वतः ।**
**सोऽविकल्पेन योगेन युज्यते नात्र संशयः ॥७॥**

एतामिति । एतां यथोक्तां विभूतिं विस्तारं योगञ्च युक्तिं चात्मनो घटनमथ वा योगैश्वर्य्यसामर्थ्यं सर्वज्ञत्वञ्च योगजं योग उच्यते मम मदीयं योगं यो वेत्ति तत्त्व-तस्तत्त्वेन यथावदित्येतत् सः अविकल्पेनाप्रचलितेन योगेन सम्यग्दर्शनस्थैर्य्यलक्षणेन युज्यते संबध्यते नात्र संशयः नास्मिन्नर्थे संशयोऽस्ति ॥ ७ ॥

आ० टी०। सोपाधिकं प्रभावं भगवतो दर्शयित्वा तज्ज्ञानफल-माह एतामिति। बुद्ध्याद्युपादानत्वेन विविधा भूतिर्भवनं वैभवं सर्वा-त्मकत्वं तदाह विस्तारमिति। ईश्वरस्य तत्तदर्थसम्पादनसामर्थ्यं योग-स्तदाह आत्मन इति। योगस्तत्फलमैश्वर्यं सर्वज्ञत्वं सर्वेश्वरत्वञ्च। मदीयं शक्तिज्ञानमैश्वर्यमाश्रित्य मन्वादयो भृग्वादयश्च वर्त्तन्ते जानते च तदाह अथवेति। यथा तौ विभूतियोगौ तथा निरङ्कुशत्वेनेति वेदनस्य निरङ्कुशत्वं दर्शयति यथावदिति। सोपाधिकं ज्ञानं निरुपाधिकज्ञाने द्वारमित्याह सोऽविकल्पेनेति। उक्तेऽर्थे प्रतिबन्धाभावमाह नात्रेति॥ ७॥

आ० टी०। यथोक्तविभूत्यादितत्त्वज्ञानस्य फलमाह एतामिति। एतां भृग्वादिलक्षणां मम विभूतिं योगञ्चैश्वर्यलक्षणं तत्त्वतो यो वेत्ति सः अविकल्पेन निःसंशयेन योगेन सम्यग्दर्शनेन युक्तो भवति नात्र संशयः॥ ७॥

**अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते।**
**इति मत्वा भजन्ते मां बुधा भावसमन्विताः॥८॥**

कीदृशेनाविकल्पेन योगेन युज्यत इत्युच्यते अह-मिति। अहं परं ब्रह्म वासुदेवाख्यं सर्वस्य जगतः प्रभव उत्पत्तिर्मत्त एव स्थितिनाशक्रियाफलोपभोगलक्षणं विक्रि-याक्ष्पं सर्वं जगत् प्रवर्त्तते इत्येवं मत्वा भजन्ते सेवन्ते मां बुधा अवगतपरमार्थतत्त्वार्थाः भावसमन्विताः भावो भावना परमार्थतत्त्वाभिनिवेशस्तेन समन्विताः संयुक्ता इत्यर्थः॥ ८॥

आ० टी०। कथं तावकविभूत्यैश्वर्यज्ञानवज्ञयोगस्य हेतुरिति मत्वा पृच्छति कीदृशेनेति। उक्तज्ञानमाहात्म्यात् प्रतिष्ठिता भगवन्निष्ठा विवृण्वन्नाह उच्यत इति। प्रभवत्वमाहादिति प्रभवः सर्वप्रकृतिः

सर्वोऽस्मीत्याह उत्पत्तिरिति । सर्वस्मात् सर्वेश्वरान्मत्तो निमित्तात् सर्ग-स्थितिनाशादि भवति मयान्तर्यामिना प्रेर्यमाणं सर्वं यथा स्वां मर्यादामनतिक्रम्य चेष्टते तदाह मत्त इति । इत्थं मम सर्वात्मत्वं सर्वप्रकृतित्वं सर्वेश्वरत्वं सर्वज्ञत्वञ्च मत्तिमानां ज्ञात्वा मय्येव निष्ठावन्तो भवन्तीत्याह इत्येवमिति । संसारासारताज्ञानवतां भगवद्भजनेऽधिकारं द्योतयति अवगतेति । परमार्थतत्त्वे पूर्वोक्तरीत्या ज्ञाते प्रेमादरावभिनिवेशाख्यौ भवतस्तेन संयुक्तत्वञ्च भगवद्भजने भवति हेतुरित्याह भावेति ॥ ८ ॥

स्वा० टी० । यथा च विभूतियोगयोर्ज्ञाने सम्यग्ज्ञानावाप्तिस्तद्दर्शयति अहमित्यादि चतुर्भिः । अहं सर्वस्य जगतः प्रभवो जन्मादिमन्वादि-रूपविभूतिद्वारेणोत्पत्तिहेतुः, मत्त एव च सर्वस्य बुद्धिज्ञानासंमोह इत्यादि सर्वं प्रवर्त्तते इत्येवं मत्वा अवबुध्य बुधा विवेकिनो भावसमन्विताः प्रीतियुक्ता मां भजन्ते ॥ ८ ॥

**मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।**
**कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥९॥**

किञ्च मच्चित्ता इति । मच्चित्ता मयि चित्तं येषां ते मच्चित्ता मद्गतप्राणाः मयि गताः प्राप्ताश्चक्षुरादयः प्राणा येषां ते मद्गतप्राणा मय्युपसंहृतकरणा इत्यर्थः अथवा मद्गतप्राणा मद्गतजीवना इत्येतद्बोधयन्तोऽवगमयन्तः परस्परमन्योन्यं कथयन्तो ज्ञानबलवीर्यादिधर्मैर्विशिष्टं मां तुष्यन्ति च परितोषमुपयान्ति रमन्ति च रतिञ्च प्राप्नुवन्ति प्रियसंगत्येव ॥ ९ ॥

आ० टी० । न केवलमुक्तमेव भगवद्भजने साधनान्तरञ्चास्तीत्याह किञ्चेति । ईश्वरात् प्रतीचः प्रागुक्तादन्यत्र चित्तप्रचाररहित्यं भगव-

ऽभजनोपायमाह मयीति । चक्षुरादीनां भगवत्प्राप्तिसाधनोपकरत्वा-त्तथेत्याशयेनाह मद्युपसंहृतेति । भगवद्व्यतिरेकेण जीवनेऽपि नादर-स्तदपि मय्येवार्पितं भक्तानामित्याह अथवेति । आचार्येभ्यः श्रुत्वा वादकथया परस्परं भगवन्तं ब्रह्मचारिणो बोधयन्ति तदपि भगवद्भ-जनसाधनमित्याह बोधयन्त इति । आगमोपपत्तिभ्यां भगवन्तमेव विशिष्टधर्माणं शिष्येभ्यो गुरवो व्यपदिशन्ति तदपि भगवद्भजनमेवेत्याह कथयन्त इति । भक्तानां तुष्टिरतो स्वरसतः स्यातामित्याह तुष्यन्तीति । मनोरथपूर्त्यां रतिप्राप्तौ कान्तकसंमतदृष्टान्तमाह प्रियेति ॥ ९ ॥

स्वा० टी० । प्रीतिपूर्वकं भजनमाह मच्चित्ता इति । मय्येव चित्तं येषां ते मच्चित्ताः, मामेव गताः प्राप्ताः प्राणा इन्द्रियाणि येषां ते मद्गतप्राणाः मय्यर्पितजीवना इति वा एवंभूतास्ते बुधा अन्योन्यं मां न्यायोपेतैः श्रुत्यादिप्रमाणैर्बोधयन्तो बुद्धा च मां कथयन्तः संकीर्त्तयन्तः सन्तः नित्यं तुष्यन्ति अनुमोदनेन तुष्टिं यान्ति रमन्ति च निर्वृतिं यान्ति ॥ ९ ॥

**तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।**
**ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥१०॥**

ये यथोक्तैः प्रकारैर्भजन्ते मां भक्ताः सन्तः प्रीतिपूर्वकं तेषामिति । तेषां सततयुक्तानां नित्याभियुक्तानां भजतां सेवमानानां किमर्थित्वादिना कारणेन नेत्याह प्रीतिपूर्वकं प्रीतिः स्नेहस्तत्पूर्वकं मां भजतामित्यर्थः ददामि प्रय-च्छामि बुद्धियोगं बुद्धिः सम्यग्दर्शनं मत्तत्त्वविषयं तेन योगो बुद्धियोगस्तं बुद्धियोगं येन बुद्धियोगेन सम्यग्दर्शन-लक्षणेन मां परमेश्वरमात्मभूतं आत्मत्वेनोपयान्ति प्रति-पद्यन्ते ॥ १० ॥

शा॰ टी॰ । यदुक्तं सोऽविकल्पेनेत्यादि तदर्थं भूमिकां कृत्वा तद्ददामीत्युदाहरति ते इति यथोक्तेति । नित्याभियुक्तानामनवरतं भगवन्नेकाग्रमनसामित्यर्थः । पुत्रादिलोकत्रयहेतुत्वमिति न च, गर्भदासत्वेन वा प्रत्यहं जीवनोपायसिद्धये वा भजनमिति शङ्कित्वा दूषयति प्रीतिपूर्वकमित्यादिना । प्रागुक्तां ज्ञानाख्यां भक्तिं स्नेहेन कुर्वतामित्यर्थः तेभ्योऽहं तत्त्वज्ञानं प्रयच्छामीत्याह ददामीति । उक्तबुद्धियोगस्य फलमाह येनेति ॥ १० ॥

आ॰ टी॰ । एवंभूतानाञ्च सम्यग्ज्ञानमहं ददामीत्याह तेषामिति । एवं सततयुक्तानां मय्यासक्तचित्तानां प्रीतिपूर्वकं भजतां तं बुद्धियोगं मयमुपायं ददामि, तमिति कं येनोपायेन ते मद्भक्ता मां प्राप्नुवन्ति ॥ १० ॥

**तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।**
**नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥११॥**

के ते ये मच्चित्तादिप्रकाराः मां भजन्ते किमर्थं कस्य वा तत्प्राप्तिप्रतिबन्धहेतोः नाशकं बुद्धियोगं तेषां त्वद्भक्तानां ददामीत्याकाङ्क्षायामाह तेषामिति । तेषामेव कथं नाम श्रेयः स्यादित्यनुकम्पार्थं दयाहेतो रहमज्ञानजमविवेकतो जातं मिथ्याप्रत्ययलक्षणं मोहान्धकारं तमो नाशयाम्यात्मभावस्थः आत्मनो भावोऽन्तःकरणाशयस्तस्मिन्नेव स्थितः सन् ज्ञानदीपेन विवेकप्रत्ययरूपेण भक्तिप्रसादस्नेहाभिषिक्तेन मद्भावनाभिनिवेशवातेरितेन ब्रह्मचर्यादिसाधनसंस्कारवत्प्रज्ञावर्त्तिनापि, विरक्तान्तःकरणाधारेण विषयव्यावृत्तचित्तरागद्वेषाकलुषितनिवाताप-

वारकत्वेन नित्यप्रवृत्तैकाग्र्यध्यानजनितसम्यग्दर्शनभास्वता ज्ञानदीपेनेत्यर्थः ॥ ११ ॥

आ० टी०। ध्यानजन्यप्रकर्षकाष्ठागतान्तःकरणपरिणामे निरस्ताशेषविशेषभगवद्रूपप्राप्तिहेतौ बुद्धियोगे प्रश्नपूर्वकमभक्तानधिकारिणो दर्शयति केन इति। भगवत्प्राप्तेर्बुद्धिसाध्यत्वे सत्यनित्यत्वापत्तेस्तं भक्तेभ्यो बुद्धियोगं ददामीत्ययुक्तमिति शङ्कते किमर्थमिति। तेषां बुद्धियोगं किमर्थं ददामीति सम्बन्धः। भगवत्प्राप्तिप्रतिबन्धकनाशको बुद्धियोगस्तेन नास्ति तत्प्राप्तेरनित्यत्वमित्याशङ्क्याह कस्येति। भक्तानां तत्प्राप्तिप्रतिबन्धकं विवेच्य दर्शयति इत्याकाङ्क्षायामिति। अविवेको नाद्यज्ञानं ततो जातं मिथ्याज्ञानं तदुभयमेकीकृत्य तमो विवक्ष्यते। न च तन्नाशकत्वं जडस्य कस्यचित्तदन्तर्भूतस्य युक्तं तेनाहं नाशयामीत्युक्तं केवलचैतन्यस्य जडबुद्धिवृत्तेरिवाज्ञानाद्यनाशकत्वमाशङ्क्य विशिनष्टि आत्मेति। तस्याशयस्तच्चित्तं वृत्तिविशेषः वाक्योत्थबुद्धिवृत्त्यभिव्यक्तचिदात्मा सहायसामर्थ्यादज्ञानादिनिवृत्तिहेतुरित्यर्थः। बुद्धित्वबोधस्याज्ञानादिनिवर्त्तकत्वमुक्त्वाबोधे त्वबुद्धेस्तन्निवर्त्तत्वमिति पद्यान्तरमाह ज्ञानेति। देहाद्यव्यक्तान्तानात्मवर्गातिरिक्तवस्तुगोचरत्वमाह विवेकेति। भगवति सदा विहितया भक्त्या तस्य प्रसादोऽनुग्रहः स एव स्नेहस्तेनाभिषेचनद्वारा स्त्रोत्पत्तिमाह भक्तीति। मय्येव भावनायामभिनिवेशो यातस्तेन प्रेरितोऽयं जायते न हि वातप्रेरणमन्तरेणादौ दीपस्योत्पत्तिरित्याह सद्भावनेति। ब्रह्मचर्यमष्टाङ्गमादिशब्देन शमादिग्रहः। तेन हेतुनाहितसंस्कारवती या प्रज्ञा तथाविधवर्त्तिनिष्ठत्वायं न हि वर्त्त्यतिरेकेण दीपो निवर्त्त्यते तदाह ब्रह्मचर्येति। न चाधाराहते दीपस्योत्पत्तिरदृष्टत्वादित्याह विरक्तेति। यद्विषयेभ्यो व्यावृत्तं चित्तं रागाद्यकलुषितं तदेव निवातमपकारकं तत्र स्थितत्वमस्य दर्शयति विषयेति। भास्वतेति विशेषणं विशदयति नित्येति। सदातनं चित्तैकाग्र्यं तत्पूर्वं ध्यानं तेन जनितं सम्यग्दर्शनफलं तदेव भाः तद्वता

तमःपर्यन्तेनेत्यर्थः । तेनाज्ञाने सकार्य्ये निवृत्ते भगवद्भावः स्वयमेव प्रकाशीभवतीति मत्वा व्याख्यातमेव पदमनुवदति ज्ञानेति ॥ ११ ॥

स्वा॰ टी॰ । बुद्धियोगं दत्त्वा च तस्यानुभवपर्य्यन्तं तमाविष्कृत्य विद्याकृतं संसारं नाशयामीत्याह तेषामिति । तेषामनुकम्पार्थमनुग्रहार्थमेवाज्ञानाज्जात तमः संसाराख्यं नाशयामि, कुत्र स्थितः सन् केन वा साधनेन तमो नाशयसीत्यत आह आत्मभावस्थो बुद्धिवृत्तौ स्थितः सन् भास्वता विस्फुरता ज्ञानलक्षणेन दीपेन नाशयामि ॥ ११ ॥

## अर्जुन उवाच ।

**परं ब्रह्म परं धाम पवित्रं परमं भवान् ।**
**पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥ १२ ॥**

यथोक्तां भगवतो विभूतिं योगञ्च श्रुत्वा अर्जुन उवाच परमिति । परं ब्रह्म परमात्मा परं धाम परं तेजः पवित्रं पावनं परम प्रकृष्टं भवान् पुरुषं शाश्वतं नित्यं दिव्यं दिवि भवमादिदेवं सर्वदेवानामादौ भवं देवमजं विभुं विभवनशीलम् ॥ १२ ॥

आ॰ टी॰ । निरस्ताशेषविशेषं निरुपाधिकं सोपाधिकञ्च सर्वात्मत्वादि भगवतो रूपं तद्विफलञ्च श्रुत्वा निरुपाधिकरूपस्य प्राकृतबुद्ध्यनवगाह्योक्तिपूर्वकं मन्दानुग्रहार्थं सर्वदा सर्वबुद्धिग्राह्यं सोपाधिकं रूपं विस्तरेण श्रोतुमिच्छन् पृच्छतीत्याह यथोक्तामिति । परं ब्रह्म भवानिति सम्यङ्निर्देशः तस्य लक्षणार्थं परं धामेत्यादिविशेषणत्रयम् । धामशब्दस्य स्थानवाचित्वं व्यावर्त्तयन् व्याचष्टे तेज इति । तस्य चैतन्यस्य परमत्वं जन्मादिराहित्येन कौटस्थ्यं प्रकृष्टं पावनमत्यन्तशुद्धत्वमुच्यते यदेवं लक्षणं परमं ब्रह्म तद्भवानेव नान्य इत्यर्थः । कुतस्त्वमेवमशेषीरित्याशङ्क्याम्नायवाक्यादित्याह पुरुषमिति । दिवि परमे व्योम्नि भवतीति दिव्यः

सर्वप्रपञ्चातीतं दीव्यति द्योतत इति देवः स चादिः सर्वभूतत्वादतएवा जन्तं त्वां सर्वगतमाहुरिति सम्बन्धः ॥ १२ ॥

स्वा॰ टी॰ । संक्षेपेणोक्तां विभूतिं विस्तरेण जिज्ञासुर्भगवन्त स्तुवन्नर्जुन उवाच परं ब्रह्मेति सप्तभिः । परं ब्रह्म परं धाम च आश्रयः परमं पवित्रं भावनेय, कुत इत्यत आह यतः शाश्वतं नित्यं पुरुषं तथा दिव्यं द्योतनात्मकं स्वयं प्रकाशं, आदिश्चासौ देवश्चेति तं देवानामादिभूतमित्यर्थः, तथा अजं अजन्मानं विभुं व्यापकं त्वामेवाहुः ॥ १२ ॥

**आहुस्त्वामृषयः सर्वे देवर्षि र्नारदस्तथा ।**
**असितो देवलो व्यासः स्वयञ्चैव ब्रवीषि मे ॥ १३**

ईदृशं आहुः कथयन्ति त्वामृषयो वशिष्ठादय सर्वे देवर्षिर्नारदस्तथा असितो देवलोऽप्येवमाह व्यासश्च स्वयञ्चैव त्वञ्चैव ब्रवीषि मे मह्यम् ॥ १३ ॥

श्या॰ टी॰ । उक्तविशेषणं त्वामृषयः सर्वे यस्मादाहुस्तस्मात्तद्वचनात्तथोक्तं ब्रह्मत्वं युक्तमित्याह देहशमिति । ऋषिग्रहणेन ग्रहीतानामपि नारदादीनां विशिष्टत्वात् पृथग्ग्रहणं, असितो देवलस्य पिता । किमन्यैस्त्वं स्वयमेवात्मा गुह्यरूपं मह्यमुक्तवानित्याह स्वयञ्चेति ॥ १३ ॥

स्वा॰ टी॰ । के ते इत्याह आहुरिति । ऋषयो भृग्वादयः सर्वे देवर्षिश्च नारदः असितश्च देवलश्च व्यासश्च स्वयं त्वमेव साक्षान्मे मह्यं ब्रवीषि ॥ १३ ॥

**सर्वमेतदृतं मन्ये यन्मां वदसि केशव ! ।**
**न हि ते भगवन् ! व्यक्तिं विदुर्देवा न दानवाः १४**

सर्वमिति । सर्वमेतद्यथोक्तमृषिभिस्त्वया चैतदृतं सत्यमेव मन्ये यन्मां प्रति वदसि भाषसे हे केशव ! न हि ते तव भगवन् व्यक्तिं प्रभवं विदुर्न देवा न दानवाः ॥ १४ ॥

व्या॰ टी॰। ऋषिभिस्त्वया चोक्तत्वादुक्तं सर्वं सत्यमेवेति मम मनीषेत्याह सर्वमिति। किं तदित्याशङ्क्यात्मरूपमित्याह यन्मामिति। देवादिभिः सर्वैरूह्यमानतया तद्रूपे विशिष्टवक्तृपक्षपातमनर्थकमित्याशङ्क्याह न हीति। प्रभवो नाम प्रभवो निरुपाधिकस्वभावः यदा देवादीनामपि दुर्विज्ञेयं तव रूपं तदा का कथा मनुष्याणामित्यर्थः॥ १४॥

स्वा॰ टी॰। अतो ममेदानीं त्वदीयैश्वर्येऽसम्भावना निवृत्तेत्याह सर्वमेतदिति। एतद्भवानेव परं ब्रह्मेत्यादि सर्वमपि ऋतं सत्यं मन्ये, यन्मां प्रति त्वं कथयसि न मे विदुः सुरगणा इत्यादि तदपि सत्यमेव मन्ये इत्याह न हीति हे भगवंस्तव व्यक्तिं देवा न विदुः अस्मदनुग्रहार्थमियमभिव्यक्तिरिति न जानन्ति दानवाश्च अस्मन्निग्रहार्थमिति न विदुरेवेति॥ १४॥

स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम!।
भूतभावन! भूतेश! देवदेव! जगत्पते!॥ १५॥

यतस्त्वं देवादीनामादिरतः स्वयमिति। स्वयमेवात्मनात्मानं वेत्थ जानासि त्वं कथम्भूतं निरतिशयज्ञानैश्वर्यबलादिशक्तिमन्तमीश्वरं पुरुषोत्तम। भूतानि भावयतीति भूतभावनः तत्संबुद्धौ हे भूतभावन! भूतेश! भूतानामीश! हे देवदेव! जगत्पते!॥ १५॥

व्या॰ टी॰। कश्चिदेव महता कष्टेनानेकजन्मसंसिद्धो जानाति त्वदनुगृहीतस्त्वद्रूपमित्यभिप्रेत्याह यत इति। स्वयमेवोपदेशमन्तरेणेत्यर्थः, आत्मना प्रत्यक्षेणाविषयतयेति यावत्। आत्मानं निरुपाधिकं रूपम्। न च तव सोपाधिकमपि रूपमन्यस्य गोचरे तिष्ठतीत्याह निरतिशयेति। पुरुषश्चासावुत्तमश्चेति क्षराक्षरातीतपूर्णचैतन्यरूपत्वं सम्बोधनेन बोध्यते। सर्वप्रकृतित्वं सर्वकर्तृत्वञ्च कथयति भूतानीति। सर्वेश्वरत्वमाह भूतानामिति। उक्तं ते सोपाधिकं रूपं देवादीनामा-

साध्यतामधिगच्छतीत्याह देवेति । जगतः सर्वस्य स्वामित्वेन पालयितृत्वमाह जगत्पते इति ॥ १५ ॥

स्वा॰ टी॰ । किं तर्हि स्वयमिति । स्वयमेव त्वमात्मानं वेत्थ जानासि नान्यः, तदप्यात्मना स्वेनैव वेत्थ न साधनान्तरेण अत्यादरेण बहुधा सम्बोधयति हे पुरुषोत्तम ! पुरुषोत्तमत्वे हेतुगर्भसम्बोधनानि हे भूतभावन ! भूतोत्पादक ! भूतानामीश ! नियन्तः देवानामादित्यादीनां देव ! प्रकाशक ! जगत्पते ! विश्वपालक ! ॥ १५ ॥

**वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ।**
**याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥१६॥**

वक्तुमिति । वक्तुं कथयितुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः आत्मनो विभूतयो यास्ता वक्तुमर्हसि याभिर्विभूतिभिरात्मनो माहात्म्यविस्तरैरिमान् लोकांस्त्वं व्याप्य तिष्ठसि ॥ १६ ॥

आ॰ टी॰ । यस्मादहं शामगोचरस्तवात्मा जिज्ञासितश्च तस्मात् त्वयैव तद्रूपं वक्तव्यमित्याह वक्तुमिति । दिव्यत्वमप्राकृतत्वम् । कस्य-त्यन्वयमन्वाचष्टे आत्मन इति । वक्तव्याविभूतीर्विशिनष्टि याभिरिति । यद्द्वारा लोकान् पूरयित्वा वर्त्तसे ता विभूतीरशेषेण वक्तुमर्हसीत्यर्थः ॥१६॥

स्वा॰ टी॰ । यस्मात्तवाभिव्यक्तं त्वमेव वेत्सि न देवादयस्तस्माद्वक्तुमिति । या आत्मनस्तव दिव्या अद्भुता विभूतयस्ताः सर्वा वक्तुं त्वमेवार्हसि योग्योऽसि, याभिरिति विभूतीनां विशेषणं स्पष्टार्थम् ॥ १६ ॥

**कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन् ।**
**केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया ॥१७॥**

कथमिति । कथं विद्यां विजानीयामहं हे योगिन् !

त्वां सदा परिचिन्तयन् केषु केषु च भावेषु वस्तुषु चिन्त्योऽसि ध्येयोऽसि भगवान् मया ॥ १७ ॥

श्रा० टी० । किमर्थं विभूतीः श्रोतुमिच्छसीत्याशङ्क्य ध्यानसौकर्य्यप्रकारप्रश्नेन फलं कथयति कथमिति । योगो नामैश्वर्य्यं तदस्यास्तीति योगी तस्य सम्बन्धौ हे योगिन्नहं अविज्ञमतिस्त्वां केन प्रकारेण सततमनुसन्दधा विशुद्धबुद्धिर्भूत्वा निरुपाधिकं त्वां विजानीयामिति प्रश्नः । प्रश्नान्तरं प्रस्तौति केषु केष्विति चेतनाचेतनभेदादुपाधिबहुत्वाच्च बहुवचनम् ॥ १७ ॥

श्रा० टी० । कथनप्रयोजनं दर्शयन् प्रार्थयते कथमिति द्वाभ्याम् । हे योगिन् ! कथं कैर्विभूतिभेदैः सदा परिचिन्तयन्नहं त्वां विद्यां जानीयां, विभूतिभेदेन चिन्त्योऽसि त्वं केषु केषु पदार्थेषु मया चिन्तनीयोऽसि ॥ १७ ॥

विस्तरेणात्मनो योगं विभूतिञ्च जनार्दन ! ।
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥१८

विस्तरेणेति । विस्तरेणात्मनो योगं योगैश्वर्य्यं शक्तिविशेषं विभूतिञ्च विस्तरं ध्येयपदार्थानां हे जनार्दन ! अर्दतेर्गतिकर्मणोरूपं असुराणां देवप्रतिपक्षभूतानां जनानां नरकादिगमयितृत्वाज्जनार्दन ! अभ्युदयनिःश्रेयसपुरुषार्थप्रयोजनं सर्वैर्जनैर्याच्यत इति वा भूयः पूर्वमुक्तमपि कथय तृप्तिर्हि परितोषो यस्मान्नास्ति मे मम शृण्वतः त्वन्मुखनिःसृतवाक्यामृतम् ॥ १८ ॥

श्रा० टी० । प्रकृतमर्थमनुसन्धत्ते विस्तरेणेति । अर्दतेर्गतिकर्मणो जनार्दनेति रूपं तत् व्युत्पादयति असुराणामिति । प्रकारान्तरेण शब्दार्थं व्युत्पादयति अभ्युदयेति । ननु पूर्वमेव सप्तमे नवमे च

विभूतिरैश्वर्यञ्च ईश्वरस्य दर्शितं सत् किमिति भूयोऽपि पृच्छ्यते तत्राह भूय इति । अमृतममृतप्रख्यमित्यर्थः ॥ १८ ॥

स्वा० टी० । तदेवं बहिर्मुखेऽपि चित्ते तव विभूतिभेदेन त्वच्चिन्तैव यथा भवेत्तथा विस्तरेण कथयेत्याह विस्तरेणेति । आत्मनस्तव योगं सर्वज्ञत्वसर्वशक्तित्वादिलक्षणं योगैश्वर्यं विभूतिञ्च विस्तरेण पुनः कथय, यतस्तव वाक्यममृतरूपं शृण्वतो मम तृप्तिरलं बुद्धिर्नास्ति ॥१८॥

## श्रीभगवानुवाच ।

**हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ।**
**प्राधान्यतः कुरुश्रेष्ठ ! नास्त्यन्तो विस्तरस्य मे १९**

हन्त त इति । हन्तेदानीं ते तव दिव्या दिवि भवा आत्मविभूतयः आत्मनो मम विभूतयो यास्ताः कथयिष्यामीत्येतत् प्राधान्यतो यत्र यत्र प्रधाना या या विभूतिस्तां तां प्रधानां प्राधान्यतः कथयिष्याम्यहं कुरुश्रेष्ठ ! अशेषतस्तु वर्षशतेनापि न शक्यते वक्तुमतो नास्त्यन्तो विस्तरस्य मे विभूतीनामित्यर्थः ॥ १९ ॥

आ० टी० । प्रष्टारं विश्वासयितुं भगवानुक्तवानित्याह श्रीभगवानिति । हन्तेत्यनुमतिं व्यावर्त्य जिज्ञासावच्छिन्नं कालं दर्शयति इदानीमिति । दिवि भवत्वमप्रकृतत्वमसाधारणत्वं वाक्यान्वयं द्योतयति यास्ता इति । सर्वविभूतीनां वक्तव्यत्वप्राप्तावुक्तं यत्रेति । किमित्यनवशेषतो विभूतयो नोच्यन्ते तत्राह अशेषतस्त्विति । तत्र हेतुर्यत इति ॥ १९ ॥

स्वा० टी० । एवं प्रार्थितः सन् श्रीभगवानुवाच हन्तेति । हन्तेत्यनुकम्पासम्बोधने, दिव्या या मद्विभूतयस्ताः प्राधान्येन तुभ्यं कथयिष्यामि यतोऽयान्तरस्य विभूतिविस्तरस्य मदीयस्यान्तो नास्ति अतः प्रधानभूताः कतिचिद्वर्णयिष्यामि ॥ १९ ॥

**अहमात्मा गुडाकेश! सर्वभूताशयस्थितः।**
**अहमादिश्च मध्यञ्च भूतानामन्त एव च॥ २०॥**

तत्र प्रथममेव तावच्छृणु अहमिति। अहमात्मा प्रत्यगात्मा गुडाकेशः गुडाका निद्रा तस्या ईशो गुडाकेशो जितनिद्र इत्यर्थः घनकेश इति वा सर्वेषां भूतानां आशयेऽन्तर्हृदि स्थितोऽहमात्मा प्रत्यगात्मा नित्यं ध्येयस्तदशक्तेन चोत्तरेषु भावेषु चिन्त्योऽहं चिन्तयितुं शक्यः यस्मादहमेवादिर्भूतानां कारणं तथा मध्यञ्च स्थितिरन्तः प्रलयश्च एवञ्च ध्येयोऽहम्॥ २०॥

आ० टी०। विभूतिप्रदर्शने प्रस्तुते सत्यादावेव पारमार्थिकं पारमेश्वरं रूपं दर्शयितुं श्रोतुरर्जुनस्य मनःसमाधानार्थं वर्ण्यते तत्रेति। सोपाधिकमपि काल्पनिकं परस्य रूपं पश्चाद्वक्ष्यमाणं श्रोतुश्चित्तसमाधानञ्च कर्त्तव्यमेवेत्याह तावदिति। आशेरतेऽस्मिन् विद्याकर्मपूर्वप्रज्ञा इत्याशयो हृदयं सर्वेषां भूतानां हृदयेऽन्तः स्थितो यः प्रत्यगात्मा सोऽहमेवेति वाक्यार्थमाह सर्वेषामिति। यस्तु मन्दो मध्यमो वा परमात्मानमात्मत्वेन ध्यातुं नालं तं प्रत्याह तदशक्तेनेति। वक्ष्यमाणादित्यादिषु परस्य न ध्येयत्वमन्यदेव कारणं किञ्चित्तत्र तत्र ध्येयमित्याशङ्क्याह यस्मादिति सर्वकारणत्वेन सर्वात्मत्वेन सर्वेश्वरत्वेन च परस्य ध्येयत्वमत्रोपदिष्टं नान्यस्य कस्यचित् कारणस्यादित्यादिषु ध्येयतेत्यर्थः। उक्तध्यानाशक्तेभ्यो वक्तव्यं विभूतियोगमुपदिशति एवञ्चेति। तत्र तत्र प्रधानत्वेन परस्य ध्येयत्वम्॥ २०॥

स्वा० टी०। तत्र प्रथममैश्वरं रूपं कथयति अहमिति। हे गुडाकेश! सर्वेषां भूतानामाशयेष्वन्तःकरणेषु सर्वसाक्षित्वादिगुणैर्नियन्तृत्वेनावस्थितः परमात्माहं, आदिर्जन्म मध्यं स्थितिः अन्तः संहारः सर्वभूतानां जन्मादिहेतुत्वाद्दमेवेत्यर्थः॥ २०॥

**आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।**
**मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥ २१ ॥**

आदित्यानामिति । आदित्यानां द्वादशानां विष्णुर्नामादित्योऽहं ज्योतिषां रविः अंशुमान् प्रकाशयितॄणामंशुमान् रश्मिमान् मरीचिर्नाम मारुतां मरुद्देवताभेदानां अस्मि नक्षत्राणामहं शशी चन्द्रमाः ॥ २१ ॥

श्रा० टी० । एवं संक्षेपार्धमेव दर्शयति आदित्यानामित्यादिना ॥२१॥

स्वा० टी० । इदानीं विभूतीः कथयति आदित्यादीनामिति यावत् समाप्ति । आदित्यानाञ्च द्वादशादित्यानां मध्ये विष्णुर्नामाहं, ज्योतिषां प्रकाशकानां मध्ये अंशुमान् विश्वव्यापिरश्मियुक्तो रविः सूर्योऽहं, मरुतां वायूनां मध्ये मरीचिनामाहमस्मि. यद्वा सप्तमरुद्गणा देवविशेषास्तेषां मध्ये, नक्षत्राणां मध्ये, चन्द्रोऽहं, अत्र चादित्यानामहं विष्णुरित्यादिषु प्रायशो निर्धारणे षष्ठी क्वचिच्च भूतानामस्मि चेतनेत्यादिषु सम्बन्धे षष्ठी तच्च तत्रैव दर्शयिष्यामः विष्णुरित्यादिष्ववतारोऽपि प्रभावातिशयमात्रविवक्षया विभूतित्वेन निर्द्दिश्यते, अतः परञ्चाध्यायस्य स्पष्टार्थत्वेऽपि क्वचित् किञ्चिद्व्याख्यास्याम॥ २१ ॥

**वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ।**
**इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥२२**
**रुद्राणां शङ्करश्चास्मि वित्तेशो यक्षरक्षसाम् ।**
**वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥२३॥**

वेदानामिति । वेदानां मध्ये सामवेदोऽस्मि देवानां रुद्रादित्यादीनां वासव इन्द्रोऽस्मि इन्द्रियाणामेकादशानां मनश्चास्मि चक्षुरादीनां सङ्कल्पविकल्पात्मकं मनश्चास्मि

भूतानामस्मि चेतना कार्य्यकारणसङ्घातेऽभिव्यक्ता बुद्धेर्वृत्तिश्चेतना ॥ २२ ॥

रुद्राणामिति । रुद्राणामेकादशानां शङ्करश्चास्मि वित्तेशः कुवेरो यक्षरक्षसां यक्षाणां रक्षसाञ्च वसूनामष्टानां पावकश्चास्मि अग्निः मेरुः शिखरिणां शिखरवतामहम् ॥ २३ ॥

श्रा० टी० । मन्त्रब्राह्मणसमुदायानामृगादीनां मध्ये सामवेदोऽस्मीति ध्यानान्तरमुदाहरति वेदानामिति । सङ्घाते जीवाधिष्ठिते यावत् पञ्चत्वं सर्व्वत्र व्यापिनी चैतन्याभिव्यञ्जिकेति शेषः ॥ २२ ॥ २३ ॥

स्वा० टी० । वेदानामिति । वासव इन्द्रः भूतानां सम्बन्धिनी चेतना ज्ञानशक्तिरहमस्मि ॥ २२ ॥

स्वा० टी० । रुद्राणामिति । रक्षसामपि क्रूरत्वादिसाम्यात् यक्षैः सहैकीकृत्य निर्देशः, तेषां मध्ये वित्तेशः कुवेरोऽस्मि, पावकोऽग्निः, शिखरिणां शिखरवतामुच्छ्रितानां मध्ये मेरुः ॥ २३ ॥

**पुरोधसाञ्च मुख्यं मां विद्धि पार्थ ! बृहस्पतिम् ।**
**सेनानीनामहं स्कन्दः सरसामस्मि सागरः ॥२४॥**

पुरोधसामिति । पुरोधसां राजपुरोहितानां मुख्यं प्रधानं मां विद्धि जानीहि हे पार्थ ! बृहस्पतिं स हीन्द्रस्येति मुख्यः स्यात् पुरोधाः सेनानीनां सेनापतीनामहं स्कन्दो देवसेनापतिः सरसां यानि देवखातानि सरांसि तेषां सरसां सागरोऽस्मि भवामि ॥ २४ ॥

श्रा० टी० । पुरोहितेषु बृहस्पतेर्मुख्यत्वे हेतुमाह स हीति ॥२४॥

स्वा० टी० । पुरोधसामिति । पुरोधसां मध्ये देवपुरोहितत्वा-

स्कन्दं बृहस्पतिं मां विद्धि, सेनानीनां सेनापतीनां मध्ये देवसेनापतिः स्कन्दोऽहमस्मि, सरसां स्थिरजलाशयानां मध्ये समुद्रोऽस्मि ॥ २४ ॥

**महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।**
**यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥२५॥**

महर्षीणामिति । महर्षीणां भृगुरहं गिरां वाचां पदलक्षणानामेकमक्षरमोङ्कारोऽस्मि । यज्ञानामिति । यज्ञानां जपयज्ञोऽस्मि स्थावराणां स्थितिमतां हिमालयः ॥ २५ ॥

श्वा० टी० । एकमित्योङ्कारस्य ब्रह्म प्रतीकत्वेन तदभिधानत्वेन च प्रधानत्वमुच्यते । जपयज्ञस्य यज्ञान्तरेभ्यो हिंसादिराहित्येन प्राधान्यमुपेत्याह यज्ञानामिति । शिखरवतामुच्छ्रितानां पर्वतानां मध्ये मेरुरहमित्युक्तोऽपि स्थितिशीलानां तेषामेव हिमवान् पर्वतराजोऽस्मीत्यर्थभेदं गृहीत्वाह स्थितिमतामिति ॥ २५ ॥

स्वा० टी० । महर्षीणामिति । गिरां वाचां पदात्मिकानां मध्ये एकमक्षरमोङ्काराख्यं पदमस्मि ॥ २५ ॥

**अश्वत्थः सर्ववृक्षाणां देवर्षीणाञ्च नारदः ।**
**गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥२६**
**उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ।**
**ऐरावतं गजेन्द्राणां नराणाञ्च नराधिपम् ॥२७॥**

अश्वत्थ इति । अश्वत्थः सर्ववृक्षाणां देवर्षीणाञ्च नारदः देवा एव सन्त ऋषित्वं प्राप्ताः मन्त्रदर्शित्वादेते देवर्षयः तेषां नारदोऽस्मि गन्धर्वाणां चित्ररथो नाम गन्धर्वोऽस्मि सिद्धानां जन्मनैव धर्मज्ञानवैराग्यैश्वर्यातिशयं प्राप्तानां कपिलोमुनिः ॥ २६ ॥

उच्चैरिति। उच्चैःश्रवसमश्वानां उच्चैःश्रवानामाश्वस्तं मां विद्धि जानीहि अमृतोद्भवं अमृतनिमित्तमथनोद्भवं ऐरावतमिरावत्या अपत्यं गजेन्द्राणां हस्तीश्वराणां तं मां विद्धि इत्यनुवर्त्तते नराणां मनुष्याणाञ्च नराधिपं राजानं मां विद्धि जानीहि ॥ २७ ॥

आ०टी०। सर्ववृक्षाणामित्यत्र सर्वशब्देन वनस्पतयो गृह्यन्ते ॥२६॥२७॥

स्वा० टी०। अश्वत्थ इति। देवा एव सन्तो ये मन्त्रदर्शनेन ऋषित्वं प्राप्तास्तेषां मध्ये नारदोऽस्मि, सिद्धानामुत्पत्तित एवाधिगतपरमार्थतत्त्वानां मध्ये कपिलाख्यो मुनिरस्मि ॥ २६ ॥

स्वा० टी०। उच्चैःश्रवसमिति। अमृतार्थं क्षीरोदाब्धिमथनादुद्भूतं उच्चैःश्रवसनामाश्वं मद्विभूतिं विद्धि, अमृतोद्भवमित्येतदैरावतेऽपि संवध्यते, नराधिपं राजानं मां विद्धि ॥ २७ ॥

आयुधानामहं वज्रं धेनूनामस्मि कामधुक्।
प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ॥२८॥
अनन्तश्चास्मि नागानां वरुणो यादसामहम्।
पितॄणामर्य्यमा चास्मि यमः संयमतामहम् ॥२९॥
प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम्।
मृगाणाञ्च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥३०॥

आयुधानामिति। आयुधानामहं वज्रं दधीच्यस्थिसम्भवं मां विद्धि धेनूनां दोग्ध्रीणामस्मि कामधुकवशिष्ठस्य सर्वकामानां दोग्ध्री सामान्या वा कामधुक् प्रजनः प्रजनयितास्मि कन्दर्पः कामः चास्मि सर्पाणां सर्पभेदानां अस्मि वासुकिः सर्पराजः ॥ २८ ॥

अनन्त इति । अनन्तश्चास्मि नागानां नागविशेषाणां नागराजः वरुणो यादसामहमब्देवतानां राजाहं पितृणामर्य्यमा नाम पितृराजश्चास्मि यमः संयमतां संयमनं कुर्वतामहम् ॥ २९ ॥

प्रह्लाद इति । प्रह्लादो नाम चास्मि दैत्यानां दितिवंश्यानां कालः कलयतां कलनं गणनं कुर्वतामहं मृगाणाञ्च मृगेन्द्रः सिंहो व्याघ्रो वाहं वैनतेयश्च गरुत्मान् विनतासुतः पक्षिणां पतत्रिणाम् ॥ ३० ॥

श्रा० टी० । प्रजनयतीति व्युत्पत्तिमाश्रित्याह प्रजनयितेति । सर्पा नागाश्च जातिभेदाद्भिद्यन्ते ॥ २८ ॥ २९ ॥ ३० ॥

स्वा० टी० । आयुधानामिति । कामान् दोग्धीति कामधुक्, प्रजनः प्रजोत्पत्तिहेतुः कन्दर्पः कामोऽस्मि न केवलं सम्भोगमात्रप्रधानः कामो मद्विभूतिरशास्त्रीयत्वात्, सर्पाणां सविषाणां राजा वासुकिरस्मि॥२८॥

स्वा० टी० । अनन्त इति । नागानां निर्विषाणां राजा अनन्तः शेषोऽस्मि, यादसां जलचराणां मध्ये राजा वरुणोऽस्मि, पितृणां राजा अर्य्यमास्मि, संयमतां नियमं कुर्वतां मध्ये यमोऽस्मि ॥ २९ ॥

स्वा० टी० । प्रह्लाद इति । कलयतां वशीकुर्वतां गणयतां वा मध्ये कालोऽहमस्मि, मृगेन्द्रः सिंहः मृगाणां पक्षिणां, मध्ये गरुडोऽस्मि ॥ ३० ॥

**पवनः पवतामस्मि रामः शस्त्रभृतामहम् ।**
**झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥३१॥**
**सर्गाणामादिरन्तश्च मध्यञ्चैवाहमर्जुन ।**
**अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥३२**

पवनो वायुः पवतां पावयितॄणां अस्मि, रामः शस्त्रभृतामहं शस्त्राणां धारयितॄणां दाशरथी रामोऽहं, झषाणां मत्स्यादीनां मकरो नाम जातिविशेषोऽहं, स्रोतसां स्रवन्तीनामस्मि जाह्नवी गङ्गा ॥ ३१ ॥

सर्गाणामिति। सर्गाणां सृष्टीनां आदिरन्तश्च मध्यश्चैवाहमुत्पत्तिस्थितिलयानां अहमर्जुन! भूतानां जीवाधिष्ठितानामेवादिरन्तश्चेत्याद्युक्तमुपक्रम इह तु सर्वस्यैव सर्गमात्रस्येति विशेषः, अध्यात्मविद्या विद्यानां मोक्षार्थत्वात् प्रधानमस्मि, वादोऽर्थनिर्णयहेतुत्वात् प्रवदतां प्रधानमतः सोऽहमस्मि प्रवक्तृद्वारेण वदनभेदानामेव वादजल्पवितण्डानामिह ग्रहणं प्रवदतामिति ॥ ३२ ॥

ख्या० टी०। अहमादिश्चेत्यादावुक्तमेव पुनरिहोच्यते तथा च पुनरुक्तिरित्याशङ्क्याह भूतानामिति। सर्गशब्देन सृज्यन्त इति सर्वाणि कार्य्याणि गृह्यन्ते। अध्यात्मविद्येति। आत्मन्यन्तःकरणपरिणतिरविद्यानिवर्त्तिका गृहीता, प्रवदतां सम्बन्धी वादो वीतरागकथा तत्त्वनिर्णयावसाना। यदा प्रवदतामिति लक्षणया कथाभेदोपादानं तदा निर्द्धारणे षष्ठीत्याह प्रवक्तृति ॥ ३१ ॥ ३२ ॥

ख्या० टी०। पवन इति। पवतां पावयितॄणां वेगवतां वा मध्ये वायुरहमस्मि, रामो दाशरथिः, झषाणां मत्स्यानां मध्ये मकरनाम मत्स्यजातिविशेषोऽहं, स्रोतसां प्रवाहोदकानां मध्ये भागीरथी ॥३१॥

ख्या० टी०। सर्गाणामिति। सृज्यन्त इति सर्गा आकाशादयस्तेषामादिरन्तश्च मध्यश्चैवाहं, अहमादिश्च मध्यञ्चेत्यत्र सृष्ट्यादिकर्तृत्वं पारमैश्वर्यलक्षणमत्र तत् सृष्टिस्थितिप्रलया महिभूतित्वेन ध्येया इत्युच्यत इति विशेषः। अध्यात्मविद्या आत्मविद्या, प्रवदतां वादिनां सम्बन्धिन्यो वादजल्पवितण्डाख्यास्तिस्रः कथाः प्रसिद्धास्तासां मध्ये वादोऽहं, यत

द्वाभ्यामपि प्रमाणतर्काभ्यां स्वपक्षः स्थाप्यते परपक्षश्च छलजातिनिग्रहस्थानैर्दूष्यते स जल्पो नाम यत्र त्वेकः स्वपक्षं स्थापयति अन्यस्तु छलजातिनिग्रहस्थानैस्तत्पक्षं दूषयति न तु स्वपक्षं स्थापयति सा वितण्डानामकथा तत्र जल्पवितण्डे विजिगीषमाणयोर्वादिनोः शक्तिपरीक्षामात्रफले वादस्तु वीतरागयोः शिष्याचार्ययोरन्ययोर्वा तत्त्वनिर्णयफलः अतोऽसौ श्रेष्ठत्वान्मद्विभूतिरित्यर्थः ॥ ३२ ॥

अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च ।
अहमेवाक्षयः कालो धाताहं विश्वतोमुखः ॥३३॥
मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम् ।
कीर्त्तिःश्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिःक्षमा ३४

अक्षराणामिति । अक्षराणां वर्णानामकारो वर्णोऽस्मि द्वन्द्वः समासोऽस्मि सामासिकस्य समास समूहस्य किञ्च अहमेवाक्षयोऽक्षीणः कालः प्रसिद्धः क्षणलवाख्यः अथवा परमेश्वरः कालस्यापि कालोऽस्मि धाताऽहं कर्मफलस्य विधाता सर्वजगतो विश्वतोमुखः सर्वतोमुखः ॥ ३३ ॥

मृत्युरिति । मृत्युर्हि द्विविधो धनादिहरः प्राणहरश्च तत्र यः प्राणहरः सर्वहरः स उच्यते सोऽहमित्यर्थोऽथवा पर ईश्वरः प्रलये सर्वहरणात् सर्वहरः सोऽहमुद्भव उत्कर्षोऽभ्युदयस्तत्प्राप्तिहेतुश्चाहं केषां भविष्यतां भाविकल्याणानामुत्कर्षप्राप्तियोग्यानामित्यर्थः, कीर्त्तिः श्रीर्वाक् च नारीणां स्मृतिर्मेधा धृतिः क्षमेत्येता उत्तमाः स्त्रीणामहमस्मि यासामाभासमात्रसम्बन्धेनापि लोकाः कृतार्थमात्मानं मन्यन्ते ॥ ३४ ॥

स्वा० टी०। सर्वहरत्वस्य सुस्पष्टमर्थान्तरमाह चयवेति। भाविकल्याणानामित्युक्तमेव स्पष्टयति उत्कर्षेति। कीर्त्तिर्धार्मिकत्व-निमित्ता ख्यातिः श्रीर्लक्ष्मीः कान्तिः शोभा वाक् वाणी सर्वस्य प्रकाशिका स्मृतिश्चिरानुभूतस्मरणशक्तिः मेधा ग्रन्थधारणशक्तिः धृतिर्धैर्यं क्षमा मानापमानयोरविकृतचित्तता। स्त्रीषु कीर्त्त्यादीनामुत्तमत्वमुपपादयति यासामिति ॥ ३२ ॥ ३४ ॥

स्वा० टी०। अक्षराणामिति। अक्षराणां वर्णानां मध्ये अकारो-ऽस्मि तस्य सर्ववाङ्मयत्वेन श्रेष्ठत्वात्, तथा च श्रुतिः, अकारो वै सर्वा वाक् सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवतीति सूयत इति श्रैष्ठ्यं, समासिकस्य समाससमूहस्य मध्ये द्वन्द्वः रामकृष्णावित्यादिसमासोऽस्मि उभयपदप्रधानत्वेन श्रेष्ठत्वात्, अक्षयः प्रवाहरूपः कालोऽहमस्मि कालः कलयतामहमित्यत्रायुर्गणनात्मकः संवत्सरपराद्यायुः स्वरूपः काल उक्तः स च तस्मिन्नायुषि क्षीणे सति क्षीयते अत्र तु प्रवाहात्मको-ऽक्षयः काल उच्यत इति विशेषः कर्मफलविधातॄणां मध्ये विश्वतो मुखो धाता सर्वकर्मफलविधाताहमित्यर्थः ॥ ३३ ॥

स्वा० टी०। मृत्युरिति। संहारकाणां मध्ये सर्वहरो मृत्युरहं, भविष्यतां भाविकल्याणानां प्राणिनामुद्भवोऽभ्युदयोऽहं, नारीणां मध्ये कीर्त्याद्याः सप्त देवता रूपाः स्त्रियोऽहं यासामाभासमात्रयोगेन प्राणिनः श्लाघ्या भवन्तीति ताः कीर्त्याद्याः स्त्रियो मद्विभूतयः ॥ ३४ ॥

**बृहत्साम तथा साम्नां गायत्री छन्दसामहम्।**
**मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ॥३५॥**

बृहत् सामेति। बृहत् साम तथा साम्नां मोक्षप्रतिपादकसामवेदविशेषः प्रधानमस्मि गायत्री छन्दसामहं गायत्र्यादिच्छन्दोविशिष्टानामृचां गायत्री ऋगहमित्यर्थः। मासानामिति, मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरो वसन्तः ॥ ३५ ॥

आ० टी० । वेदानां सामवेदोऽस्मीत्युक्तं तत्रावान्तरविशेषमाह बृहदिति । छन्दसां मध्ये गायत्री नाम यच्छन्दस्तदहमित्ययुक्तम् । छन्दसामृग्भ्योऽतिरेकेण स्वरूपाभावादित्याशङ्क्याह गायत्र्यादीति । द्विजातेर्द्वितीयजन्मजननीत्वादित्यर्थः । मार्गशीर्षो मृगशीर्षेण युक्ता पौर्णमास्यस्मिन्निति मार्गशीर्षो मासः सोऽहं पक्वसस्याढ्यत्वादित्याह मासानामिति । वसन्तो रमणीयत्वादिति शेषः ॥ ३५ ॥

स्वा० टी० । बृहदिति । त्वां इन्द्र हवामह इत्यस्यां ऋचि गीयमानं बृहत्सामाहं तेन चेन्द्रः सर्वेश्वरत्वेन स्तूयत इति श्रैष्ठ्यं, छन्दोविशिष्टानां मन्त्राणां मध्ये गायत्री मन्त्रोऽहं द्विजत्वापादकत्वेन सोमाहरणेन च श्रेष्ठत्वात्, कुसुमाकरो वसन्तः ॥ ३५ ॥

**द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ।**
**जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ३६**
**वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनञ्जयः ।**
**मुनीनामप्यहं व्यासः कवीनामुशना: कविः ॥३७॥**

द्यूतमिति । द्यूतमक्षदेवनादिलक्षणं छलयतां छलस्य कर्तॄणामस्मि, तेजस्विनां तेजोऽहं, जयोऽस्मि जेतॄणां, व्यवसायोऽस्मि व्यवसायिनां, सत्त्वं सत्त्ववतां सात्त्विकानामहम् ॥ ३६ ॥

वृष्णीनामिति । वृष्णीनां यादवानां वासुदेवोऽस्मि अयमेवाहं त्वत्सखा, पाण्डवानां धनञ्जयस्त्वमेव मुनीनां मननशीलानां सर्वपदार्थज्ञानिनामप्यहं व्यासः, कवीनां क्रान्तदर्शिनामुशनाः कविरस्मि ॥ ३७ ॥

आ० टी० । द्यूतमुक्तलक्षणं सर्वस्वापहारकारणमन्यायापदेशेन पराभिप्रेतं निघ्नतां स्वाभिप्रेतं वा सम्पादयतामित्याह छलेति । तेजो

ऽप्रतिहताज्ञा तत्कर्त्ता जयः व्यवसायः फलहेतुरुद्यमः। धर्म्मज्ञानवैरा-ग्यादि सत्त्वकार्य्यं सत्त्वं उशनाः शुक्रः कविशब्दोऽत्र यौगिको न रूढ़ः पौनरुक्त्यात् ॥ २६ ॥ २७ ॥

स्वा० टी० । द्यूतमिति । छलयतामन्योऽन्यवञ्चनपराणां सम्बन्धि द्यूतमस्मि, तेजस्विनां प्रभाववतां तेजः प्रभावोऽस्मि, जेतृणां जयोऽस्मि, व्यवसायिनामुद्यमवतां व्यवसाय उद्यमोऽस्मि सत्त्ववतां सात्त्विकानां सत्त्वमहम् ॥ २६ ॥

स्वा० टी० । वृष्णीनामिति । वासुदेवो योऽहं त्वामुपदिशामि, धनञ्जयस्त्वमेव मद्विभूतिः, मुनीनां वेदार्थमननशीलानां वेदव्यासोऽस्मि कवीनां शास्त्रदर्शिनामुशनानामा कविः शुक्रः ॥ २७ ॥

# दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ।
# मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥ ३८

दण्ड इति। दण्डो दमयतां दमयितृणामस्मि अदा-न्तानां दमनकारणं, नीतिरस्मि जिगीषतां जेतुमिच्छतां, मौनञ्चैवास्मि गुह्यानां गोप्यानां, ज्ञानं ज्ञानवतामहम् ॥ ३८

स्वा० टी० । अदान्तानुत्पथान् पथि प्रवर्त्तयतां दण्डोऽनुत्पथप्रवृत्तौ निग्रहे हेतुरित्यर्थः, नीतिर्न्यायो धर्म्मस्य जयः पापस्य प्रकाशकः मौनं वाचः संयमस्तदुत्तमा वा चतुर्थाश्रमवृत्तिः श्रवणादिद्वारा परिपक्वसमाधि-जन्यं सम्यग्ज्ञानम् ॥ ३८ ॥

स्वा० टी० । दण्ड इति दमयतां दमनकर्तॄणां सम्बन्धी दण्डोऽस्मि येनासंयता अपि संयता भवन्ति स दण्डो मद्विभूतिः, जेतुमिच्छतां सम्बन्धिनी सामाद्युपायरूपा नीतिरस्मि, गुह्यानां गोप्यानां गोपनहेतु-र्मौनवचनमस्मि न हि तूष्णीं स्थितस्याभिप्रायो ज्ञायते, ज्ञानवतां तत्त्वज्ञा-निनां यत् ज्ञानं तदहमस्मि ॥ ३८ ॥

**यच्चापि सर्वभूतानां बीजं तदहमर्जुन।**
**न तदस्ति विना यत् स्यान्मया भूतं चराचरम्॥३८॥**

यच्चापीति। यच्चापि सर्वभूतानां बीजं प्ररोहकारणं तदहमर्जुन! प्रकरणोपसंहारार्थं विभूतिसंक्षेपमाह न तदस्ति भूतं चराचरं चरमचरं वा मया विना यत् स्याद्भवेन्मयापकृष्टं परित्यक्तं निरात्मकं शून्यं हि तत् स्यादतो मदात्मकं सर्वमित्यर्थः॥ ३८॥

व्या॰ टी॰। जाड्यमात्रप्रतिबिम्बितं चैतन्यं बीजं किमिति स्थावरं जङ्गमं वा तदतिरेकेण न भवति तदाह मयेति। तच्चापि स्वरूपेण सत्त्वमाशङ्क्योक्तं शून्यं हीति। आत्मनोपकर्षादित्यर्थः, मयैव सच्चिदानन्दस्वरूपेण सर्वस्य सिद्धेरित्यतःशब्दार्थः॥ ३८॥

स्वा॰ टी॰। यच्चापीति। यदपि सर्वभूतानां बीजं प्ररोहकारणं तदहं, तत्र हेतुः मया विना यत् स्यात् भवेत् तच्चरमचरं वा भूतं नास्त्येवेति॥ ३८॥

**नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप।**
**एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया॥४०॥**

नान्तोऽस्तीति। नान्तोऽस्ति मम दिव्यानां विभूतीनां विस्तराणां परन्तप! न हीश्वरस्य सर्वात्मनो दिव्यानां विभूतीनामियत्ता शक्या वक्तुं ज्ञातुं वा केनचित् एष तूद्देशत एकदेशेन प्रोक्तो विभूतेर्विस्तरो मया॥ ४०॥

व्या॰ टी॰। दिव्यानां विभूतीनां परिमितत्वशङ्कां वारयति नेत्यादिना। तदेवोपपादयति न हीति। कथं तर्हि विभूतेर्विस्तरो दर्शितस्तत्राह एषस्त्विति॥ ४०॥

स्वा० टी०। प्रकरणार्थमुपसंहरति नान्तोऽस्तीति। अनन्तत्वाद्विभूतीनां ताः साकल्येन वक्तुं न शक्यन्ते एष तु विभूतिविस्तर उद्देशतः संक्षेपतः प्रोक्तः॥ ४०॥

**यद्यद्विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा।**
**तत्तदेवावगच्छ त्वं मम तेजोऽंशसम्भवम्॥४१॥**

यद्यदिति। यत् यल्लोके विभूतिमद्विभूतियुक्तं सत्त्वं वस्तुजातं श्रीमदूर्जितमेव वा श्रीः लक्ष्मीः तया सहितं उत्साहोपेतं वा तत्तदेवावगच्छ त्वं जानीहि ममेश्वरस्य तेजोऽंशसम्भवं तेजसोऽंशः एकदेशः सम्भवो यस्य तत्तेजोऽंशसम्भवमित्यवगच्छ त्वं जानीहि॥ ४१॥

आ० टी०। अनुक्ता अपि परस्य विभूतीः संग्रहीतुं लक्षणमाह यद्यदिति। वस्तु प्राणिजातं श्रीमत्सम्पत्तिमद्वा शोभावद्वा कान्तिमद्वा स प्राणं बलवदूर्जितं तदाह उत्साहेति। सम्भवत्यस्मादिति सम्भवतेजसश्चैतन्यस्येश्वरशक्तेर्वाशस्तेजोऽंशः सम्भवोऽस्येति तेजोऽंशसम्भवं तदाह तेजस इति॥ ४१॥

स्वा० टी०। पुनश्च साकाङ्क्षं प्रति कथञ्चित् साकल्येन कथयति यत् यदिति। विभूतिमदैश्वर्ययुक्तं श्रीमत् सम्पत्तियुक्तं ऊर्जितं केनापि प्रभावबलादिना गुणेनातिशयितं यत् यत् सत्त्वं वस्तुमात्रं तत्तदेव मम तेजसः प्रभावस्यांशेन सम्भूतं जानीहि॥ ४१॥

**अथवा बहुनैतेन किं ज्ञातेन तवार्जुन।**
**विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्॥४२**

**इति श्रीमहाभारते शतसाहस्र्यां संहितायां**
**वैयासिक्यां भीष्मपर्वणि श्रीभगवद्गीतासु-**

## पनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विभूतियोगो नाम दशमोऽध्यायः ।

---

अथवेति । अथ वा बहुना एतेनैवमादिना किं ज्ञातेन तवार्जुन ! स्यात् सावशेषेण अशेषतस्त्वमिममुच्यमानमर्थं शृणु विष्टभ्य विशेषतस्तम्भनं दृढं कृत्वा इदं कृत्स्नं जगत् एकांशेन एकावयवेनैकपादेन सर्वभूतस्वरूपेणेत्येतत्तथा च मन्त्रवर्णः पादोऽस्य सर्वा भूतानीति स्थितोऽहं इति ॥४२॥

इति श्रीभगवद्गीताभाष्ये दशमोध्यायः ।

व्या० टी० । सर्वेषां सुगमत्वायावयवशो विभूतिमुक्त्वा भक्तानुग्रहार्थं साकल्येन तामाह अथवेति । पक्षान्तरपरिग्रहार्थमथवेत्युक्तम् । बहुना विस्तीर्णेनैतेन ग्रन्थेन संश्रुतेन सावशेषेण तव शक्तस्य न किञ्चित् फलं स्यादित्याह बहुनेति । न हि विभूतियुक्तान् ज्ञातान् सर्वं ज्ञायते कासाञ्चिदेव विभूतीनामुक्तत्वादित्यर्थः । तर्हि केनोपदेशेनाल्पाक्षरेण सर्वार्थो ज्ञातुं शक्यते तत्राह अशेषत इति । विशेषतस्तम्भनं विधरणं सर्वभूतस्वरूपेण सर्वप्रपञ्चोपादानशक्त्युपाधिकेनैकेन पादेन कृत्स्नं जगत् विष्टभ्य स्थितोऽस्मीति सम्बन्धः । तत्रैव श्रुतिं प्रमाणयति तथा चेति । तदनेन भगवतो नानाविधविभूतीर्ध्येयत्वेन ज्ञेयत्वेन चोपदिशन्ते सर्वप्रपञ्चात्मकं ध्येयं रूपं दर्शयित्वा त्रिपादस्यामृतं दिवीति प्रपञ्चाधिकं निरुपाधिकं तत्त्वमुपदिशता परिपूर्णः सच्चिदानन्दैकतानः तत्पदलक्ष्योऽर्थो निर्द्धारितः ॥ ४२ ॥

इति दशमोऽध्यायः ।

श्री० टी० । अथवा किमेतेन परिच्छिन्नविभूतिदर्शनेन सर्वत्र समदृष्टिमेव कुर्वित्याह अथवेति । बहुना पृथग्ज्ञातेन किं तव कार्य्यं यस्मादिदं सर्वं जगदेकांशेनैकदेशमात्रेण विष्टभ्य धृत्वा व्याप्येति वा अहमेवावस्थितः न मद्व्यतिरिक्तं किञ्चिदस्ति पादोऽस्य विश्वा भूतानीति श्रुतेः । इन्द्रियद्वारतश्चित्ते बहिर्धावति सत्यपि । ईशदृष्टिविधानाय विभूतीर्दशमेऽब्रवीत् ॥ ४२ ॥

इति दशमोऽध्यायः ।

---

## एकादशोऽध्यायः ।

---

### अर्जुन उवाच ।

**मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ।**
**यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥१॥**

भगवतो विभूतय उक्तास्तत्र च विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदिति भगवताभिहितं श्रुत्वा यज्जगदात्मरूपमाद्यमैश्वरं तत् साक्षात् कर्त्तुमिच्छन्नर्जुन उवाच । मदनुग्रहार्थं परमं निरतिशयं गुह्यं गोप्यं अध्यात्मसंज्ञितमात्मानात्मविवेकविषयं निरतिशयं यत्त्वयोक्तं वचो वाक्यं तेन वचसा मोहोऽयं विगतो ममाविवेकबुद्धिरपगतेत्यर्थः ॥ १ ॥

व्या० टी०। तेन तेनात्मना भगवदनुसन्धानार्थमुक्ताविभूतीरनुवदति भगवत इति। परस्य सोपाधिकं निरुपाधिकञ्च चिद्रूपं ध्येयत्वेन ज्ञेयत्वेन चोक्तमित्यर्थः। सोपाधिकमैश्वरं रूपमशेषजगदात्मकं विश्वरूपाख्यमधिकृत्याध्यायान्तरमवतारयन्ननन्तरप्रश्नोपयोगित्वेन वृत्तं कीर्त्तयति तत्र चेति। यदेतदशेषप्रपञ्चात्मकमखिलस्यैतस्य जगतः कारणं सर्वज्ञं सर्वैश्वर्य्यवद्रूपमुक्तं तदिदं श्रुत्वा तस्य साक्षात्कारं धियाचक्षिपुराटौ दृष्टवानित्याह श्रुत्वेति। मयि करुणां निमित्तीकृत्योपकारोऽनुग्रहस्तदर्थमिति वचसो विशेषणं, निरतिशयत्वं परमपुरुषार्थसाधनत्वं, अशोच्यानित्यादित्वम्पदार्थप्रधानवाक्यं मोहस्तायमित्यात्मसाक्षिकत्वं दर्शयति ॥ १ ॥

स्वा० टी०। विभूतेर्वैभवं प्रोच्य कृपया परया हरिः। दिदृक्षोरर्जुनस्याथ विश्वरूपमदर्शयत्। पूर्वाध्यायान्ते विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदिति विश्वात्मकं पारमेश्वररूपमुपक्षिप्तं तद्दिदृक्षुः पूर्वोक्तमभिनन्दन्नर्जुन उवाच मदनुग्रहायेति चतुर्भिः। ममानुग्रहाय शोकनिवृत्तये परमं परमात्मनिष्ठं गुह्यं गोप्यमपि अध्यात्मसंज्ञितमात्मानात्मविवेकविषयं यत्त्वयोक्तं वचः अशोच्यानन्वशोचस्त्वमित्यादिषष्ठाध्यायपर्य्यन्तं यद्वाक्यं तेन ममायं मोहोऽहं हन्ता एते हन्यन्ते इत्यादिलक्षणभ्रमो विगतो विनष्टः आत्मनः कर्त्तृत्वाद्यभावोक्तेः ॥ १ ॥

**भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया।**
**त्वत्तः कमलपत्राक्ष! माहात्म्यमपि चाव्ययम्॥२॥**

किञ्च भवेति। भव उत्पत्तिरप्ययः प्रलयो भूतानां तौ भवाप्ययौ श्रुतौ विस्तरशो मया न संक्षेपतस्त्वत्तः त्वत्सकाशात् कमलपत्राक्ष! कमलस्य पत्रं कमलपत्रं तद्वत् अक्षिणी यस्य तव स त्वं कमलपत्राक्षः हे कमलपत्राक्ष! माहात्म्यमपि चाव्ययमक्षयं श्रुतमित्यनुवर्त्तते ॥ २ ॥

आ० टी०। अविवेकबुद्धिरज्ञानविपर्य्ययात्मिका सप्तमादारभ्य तत्पदार्थनिर्णयार्थमपि भगवदुक्तं वचो मया श्रुतमित्याह किञ्चेति। तौ भूतानामुत्पत्तिप्रलयौ त्वत्तः श्रुतावित्याभ्यां सम्बध्यते, महात्मनस्तव भावो माहात्म्यं पारमार्थिकं सोपाधिकं वा सर्वात्मत्वादिरूपं श्रुतमिति परिच्छन्नस्यानुवृत्तिं द्योतयितुं अपि चेत्युक्तम् ॥ २ ॥

स्वा० टी०। किञ्च भवेति। भूतानां भवाप्ययौ सृष्टिप्रलयौ त्वत्तः सकाशादेव भवत इति श्रुतौ मया अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथेत्यादौ विस्तरशः पुनः पुनः, कमलस्य पत्रे इव सुप्रसन्ने विशाले अक्षिणी यस्य तव हे कमलपत्राक्ष! माहात्म्यमपि चाव्ययं अक्षयं श्रुतं विश्वसृष्ट्यादिकर्तृत्वेऽपि सर्वनियन्तृत्वेऽपि शुभाशुभकर्मकारयितृत्वेऽपि बन्धमोक्षादिविचित्रफलदातृत्वेऽपि अविकारावैषम्यासङ्गौदासीन्यादिलक्षणमपरिमितं महत्त्वञ्च श्रुतं अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धय इति. मया ततमिदं सर्वमिति, न च मां तानि कर्म्माणीति, समोऽहं सर्वभूतेष्वित्यादिना च, अतस्त्वत्परतन्त्राणामपि जीवानामहं कर्त्तेत्यादि मदीयो मोहो विगत इति भावः ॥ २ ॥

**एवमेतद्‌ यथात्थ त्वमात्मानं परमेश्वर!।**
**द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम!॥ ३॥**

एवमिति। एवमेतन्नान्यथा यथा येन प्रकारेणात्थ कथयसि त्वमात्मानं परमेश्वरं तथापि द्रष्टुमिच्छामि ते तव ज्ञानैश्वर्य्यशक्तिबलवीर्य्यतेजोभिः संपन्नमैश्वरं वैष्णवं रूपं पुरुषोत्तम!॥ ३॥

आ० टी०। त्वदुक्तेऽर्थेऽविश्वासाभावात् न तस्मिन् दिदृक्षा किन्तु कृतार्थीबुभूषया इत्याह एवमेतदिति। येन प्रकारेण सोपाधिकेन निरुपाधिकेन चेत्यर्थः। यदि ममाप्तत्वं निश्चित्य मद्वाक्यं ते मानं तर्हि किमिति मदुक्तं दिदृक्षते कृतार्थी बुभूषमेत्युक्तं मत्वाह तथापीति। चतुर्भुजादिरूपनिरुक्त्यर्थमाह ऐश्वरमिति। तद्व्याचष्टे ज्ञानेत्यादिना॥ ३॥

स्वा० टी०। किन्तु एवमेतदिति। भवाप्ययौ हि भूतानामित्यादि मया श्रुतं यथा चेदानीमात्मानं त्वमात्थ विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदित्येवं कथयसि हे परमेश्वर! एतदेवमेव अत्राप्यविश्वासो मम नास्ति तथापि हे पुरुषोत्तम! तवैश्वर्यं ज्ञानैश्वर्यशक्तिवीर्यादिभिः सम्पन्नं त्वद्रूपं कौतुहलादहं द्रष्टुमिच्छामि ॥ ३ ॥

**मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो!।**
**योगेश्वर! ततो मे त्वं दर्शयात्मानमव्ययम् ॥४॥**

मन्यस इति। मन्यसे चिन्तयसि यदि मयार्जुनेन तत् शक्यं द्रष्टुमिति प्रभो! स्वामिन्! योगेश्वर! योगिनो योगास्तेषामीश्वरो योगेश्वरः हे योगेश्वर! यस्मादहमतीवार्थी द्रष्टुं ततः तस्मान्मे मम मदर्थं दर्शय त्वमात्मानमव्ययम् ॥४॥

व्या० टी०। द्रष्टुमयोग्ये कुतो दिदृक्षेत्याशङ्क्याह मन्यस इति। प्रभवति सृष्टिस्थितिसंहारप्रवेशप्रशासनेभ्यः इति प्रभुः। लक्षणया योगशब्दार्थमाह योगिन इति। तत इत्यादि व्याचष्टे यस्मादिति ॥ ४ ॥

स्वा० टी०। न चाहं द्रष्टुमिच्छामीत्येतावतैव त्वया तद्रूपं दर्शयितव्यं किं तर्हि मन्यस इति। योगिन एव योगास्तेषामीश्वर! मयार्जुनेन तद्रूपं द्रष्टुं शक्यमिति यदि मन्यसे ततस्तर्हि तद्रूपं परमात्मानमव्ययं नित्यं मम दर्शय ॥ ४ ॥

## श्रीभगवानुवाच।

**पश्य मे पार्थ! रूपाणि शतशोऽथ सहस्रशः।**
**नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥५॥**

एवम्प्रोदितोऽर्जुनेन भगवानुवाच पश्य म इति। पश्य मे मम पार्थ! रूपाणि शतशोऽथ सहस्रशः अनेकश

इत्यर्थः तानि च नानाविधानि अनेकप्रकाराणि दिवि भवानि दिव्यान्यप्राकृतानि च नानावर्णाकृतीनि च नाना नीलपीतादिप्रकारा वर्णा विलक्षणास्तथा आकृतयोऽवयवसंस्थानविशेषा येषां रूपाणां तानि नानावर्णाकृतीनि च ॥५॥

आ० टी०। अर्जुनमतिभक्तं सखायं प्रार्थितदतिश्रवणेनाश्वासयितुमाह एवमिति ॥ ५ ॥

स्वा० टी०। एवं प्रार्थितः सन् स्वमद्भुतं रूपं दर्शयिष्यन् सावधानो भवेत्येवमर्जुनमभिमुखीकरोति श्रीभगवानुवाच पश्येति चतुर्भिः। रूपस्यैकत्वेऽपि नानाविधत्वाद्रूपाणीति बहुवचनं, अपरिमितानि अनेकप्रकाराणि दिव्यान्यलौकिकानि मम रूपाणि पश्य, वर्णाः शुक्लकृष्णादयः आकृतयः अवयवविशेषाः नाना अनेका वर्णा चाकृतयश्च येषां तानि नानावर्णाकृतीनि ॥ ५ ॥

**पश्यादित्यान् वसून् रुद्रानश्विनौ मरुतस्तथा।**
**बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत! ॥६॥**

पश्यादित्यानिति। पश्य आदित्यान् द्वादश वसूनष्टौ रुद्रानेकादशाश्विनौ द्वौ मरुतः सप्त सप्तगणान् एतान् तथा च बहून्यन्यान्यपि अदृष्टपूर्वाणि मनुष्यलोके त्वया त्वत्तोऽन्येन वा केनचित् पश्याश्चर्याणि रूपाण्यद्भुतानि भारत! ॥ ६ ॥

आ० टी०। दिव्यानि रूपाणि पश्येत्युक्तं तान्येव केवलोऽनुक्रामति पश्यादित्यानिति। तान् मरुतस्तथा पश्येति सम्बन्धः। नानाविधानीत्युक्तं तदेव स्फुटयति बहूनीति। अदृष्टपूर्वाणि पूर्वमदृष्टानि। नानावर्णाकृतीनीत्युक्तं व्यनक्ति आश्चर्याणीति ॥ ६ ॥

स्वा० टी०। तान्येवाह पश्येति। आदित्यादीन् मम देहे पश्य;

मरुत एकोनपञ्चाशद्देवताविशेषान्, अदृष्टपूर्वाणि त्वया चान्येन वा पूर्वमदृष्टानि रूपाणि ॥ ६ ॥

**इहैकस्थं जगत् कृत्स्नं पश्याद्य सचराचरम् ।**
**मम देहे गुडाकेश ! यच्चान्यद्द्रष्टुमिच्छसि ॥७॥**

न केवलमेतावदेव इहैकस्थमिति । इहैकस्थं एकस्मिन् स्थितं जगत् कृत्स्नं समस्तं पश्याद्येदानीं सचराचरं सह चरेणाचरेण वर्त्तते मम देहे गुडाकेश ! यच्चान्यज्जयपराजयादि यच्छङ्कसे यद्वा जयेम यदि वा नो जयेयुरिति यदवोचः तदपि द्रष्टुं यदीच्छसि ॥ ७ ॥

श्रा० टी० । न केवलमादित्यादीनेव मद्रूपं त्वया द्रष्टुं शक्यं किन्तु समस्तं जगदपि मद्देहस्थं द्रष्टुमर्हसीत्याह नेत्यादिना । सप्तमीद्वयं मिथः सम्बध्यते समासान्तर्गतापि सप्तमी तत्रैवानीता यदीच्छसि तर्हि इहैव पश्येति सम्बन्धः ॥ ७ ॥

स्वा० टी० । किञ्च इहैकस्थमिति । तत्र तत्र परिभ्रमता वर्षकोटिभिरपि द्रष्टुमशक्यं कृत्स्नमपि चराचरसहितं जगदिहास्मिन् मम देहेऽवयवरूपेणैकत्र स्थितमद्यावुनैव पश्य, यच्चान्यज्जगदाश्रयभूतं कारणस्वरूपं जगतश्चापस्थाविशेषादिकं जयपराजयादिकञ्च यच्च यदप्यन्यद्द्रष्टुमिच्छसि तत् पूर्वं पश्य ॥ ७ ॥

**न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।**
**दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥८॥**

किन्तु न तु मामिति । न तु मां शक्यसे न स्वकीयेन चक्षुषा मां विश्वरूपधरं शक्यसे द्रष्टुमनेन प्राकृतेन स्वचक्षुषा स्वकीयेन चक्षुषा येन तु शक्यसे द्रष्टुं दिव्येन

तद्दिव्यं ददामि ते तुभ्यं चक्षुस्तेन पश्य मे मम योगमैश्वरं ईश्वरस्य ममैश्वरं योगं योगशक्त्यतिशयमित्यर्थः ॥८॥

आ॰ टी॰। मन्यसे यदीत्युक्तमनुवदति किं त्विति। सप्रपञ्चमनवच्छिन्नं मां स्वचक्षुषा न शक्नोषि द्रष्टुमित्याह न त्विति। कथं तर्हि त्वां द्रष्टुं शक्नुयामित्याशङ्क्याह येनेति। दिव्यस्य चक्षुषो वक्ष्यमाणयोगशक्त्यतिशयदर्शने विनियोगं दर्शयति तेनेति ॥ ८ ॥

स्वा॰ टी॰। यदुक्तमर्जुनेन मन्यसे यदि तच्छक्यमिति तत्राह न तु मामिति। अनेनैव तु स्वीयेन चर्मचक्षुषा मां द्रष्टुं न शक्यसे शक्तो न भविष्यसि अतो दिव्यमलौकिकं ज्ञानात्मकं चक्षुस्तुभ्यं ददामि ममैश्वरमसाधारणं योगं युक्तिमघटनघटनासामर्थ्यं पश्य ॥ ८ ॥

## सञ्जय उवाच।

**एवमुक्त्वा ततो राजन्! महायोगेश्वरो हरिः।**
**दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९ ॥**

एवं तं यथोक्तप्रकारेणोक्त्वा ततोऽनन्तरं राजन्! धृतराष्ट्र! महांश्चासौ योगेश्वरश्च महायोगेश्वरो हरिर्नारायणः दर्शयामास दर्शितवान् पार्थाय! पृथासुताय परमं रूपं विश्वरूपमैश्वरम् ॥ ९ ॥

आ॰ टी॰। इमं वृत्तान्तं धृतराष्ट्राय सञ्जयो निवेदितवानित्याह सञ्जय इति। मदीयं विश्वरूपाख्यं रूपं न प्राकृतेन चक्षुषा निरीक्षितुं क्षमं किन्तु दिव्येन इत्यादि यथोक्तप्रकारः, अनन्तरं दिव्यचक्षुषः प्रदानादिति शेषः, हरत्यविद्यां सकार्य्यामिति हरिः। यदीश्वरस्य मायोपहितस्य परममुत्कृष्टं रूपं तद्दर्शयाम्बभूवेत्याह परममिति ॥ ९ ॥

स्वा॰ टी॰। एवमुक्त्वा भगवानर्जुनाय स्वरूपं दर्शितवांस्तच्च रूपं दृष्ट्वार्जुनः श्रीकृष्णं विज्ञापितवानितीममर्थं षड्भिः श्लोकैर्धृतराष्ट्रं प्रति

सञ्जय उवाच एवमुक्त्वेति। हे राजन् धृतराष्ट्र! महांश्चासौ योगेश्वरश्च हरिः परममैश्वरं रूपं दर्शितवान् ॥ ९ ॥

**अनेकवक्त्रनयनमनेकाद्भुतदर्शनम्।**
**अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥१०॥**

अनेकेति। अनेकवक्त्रनयनं अनेकानि वक्त्राणि नयनानि च यस्मिन् रूपे तदनेकवक्त्रनयनं अनेकाद्भुतदर्शनं अनेकान्यद्भुतानि विस्मापकानि दर्शनानि यस्मिन् रूपे तदनेकाद्भुतदर्शनं रूपं तथानेकदिव्याभरणं अनेकानि दिव्याभरणानि यस्मिंस्तदनेकदिव्याभरणं तथा दिव्यानेकोद्यतायुधं दिव्यानि अनेकानि उद्यतानि आयुधानि यस्मिंस्तद्दिव्यानेकोद्यतायुधं दर्शयामासेति पूर्वेण सम्बन्धः ॥१०॥

श्रा० टी०। तदेव रूपं विशिनष्टि अनेकेति। दिव्यान्याभरणादीनि हारकेयूरादीनि भूषणान्युद्यतानि उत्क्षिप्तानि ॥ १० ॥

स्वा० टी०। कथंभूतं तद्दिव्यमाह अनेकवक्त्रनयनमिति। अनेकानि वक्त्राणि नयनानि च यस्मिंस्तत्, अनेकानामद्भुतानां दर्शनं यस्मिंस्तत्, अनेकानि दिव्याभरणानि यस्मिंस्तत्, दिव्यान्यनेकान्युद्यतान्यायुधानि यस्मिंस्तत् ॥ १० ॥

**दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम्।**
**सर्वाश्चर्य्यमयं देवमनन्तं विश्वतोमुखम् ॥ ११ ॥**

किञ्च दिव्येति। दिव्यमाल्याम्बरधरं दिव्यानि माल्यानि पुष्पाणि अम्बराणि वस्त्राणि च ध्रियन्ते येनेश्वरेण तं दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनं दिव्यगन्धा अनुलेपनं सर्वाश्चर्य्यमयं सर्वाश्चर्य्यप्रायं देवमनन्तं नास्या-

न्तोऽस्तीति। अनन्तस्तं विश्वतोमुखं सर्वभूतात्मत्वात् तं दर्शयामासार्जुनो ददर्शेति वा अध्याह्रियते ॥ ११ ॥

व्या० टी०। उक्तरूपवन्तं भगवन्तं प्रकारान्तरेण विशिनष्टि किञ्चेति। अध्याहारोऽपि पदसङ्घटनासम्भवात् ॥ ११ ॥

स्वा० टी०। किञ्च दिव्येति। दिव्यानि माल्यान्यम्बराणि च धारयतीति तत्, तथा दिव्यो गन्धो यस्य तादृशमनुलेपनं यस्य तत, सर्वाश्चर्यमयमनेकाश्चर्यप्रायं, देवं द्योतनात्मकं, अनन्तमपरिच्छिन्नं, विश्वतः सर्वतो मुखानि यस्मिंस्तत् ॥ ११ ॥

**दिवि सूर्य्यसहस्रस्य भवेद्युगपदुत्थिता।**
**यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः॥१२**

या पुनर्भगवतो विश्वरूपस्य भास्तस्या उपमोच्यते दिवीति। दिव्यन्तरिक्षे तृतीयस्यां वा दिवि सूर्य्याणां सहस्रं सूर्य्यसहस्रं, तस्य युगपदुत्थितस्य युगपदुत्थिता भाः सा यदि सदृशी स्यात् तस्य महात्मनो विश्वरूपस्य भासो यदि वा न स्यात् ततोऽपि विश्वरूपस्यैव भाः अतिरिच्यत इत्यभिप्रायः ॥ १२ ॥

व्या० टी०। ननु प्रकृतस्य भगवतो रूपस्य दीप्तिरस्ति न वा नचेत् काष्ठादिसाम्यं यद्यस्ति कीदृशी सेत्याशङ्क्याह या पुनरिति। सा यदि स्यात्तद्भासः सदृशी सेति योजना, असम्भावितार्थ्युपगमार्थो यदिशब्दः, स्याच्छब्दो निश्चयार्थः। सा कथं सदृशी सम्भवति न तु भवत्येवेति विवक्षित्वाह यदि वेति ॥ १२ ॥

स्वा० टी०। विश्वरूपदीप्तेर्निरुपमत्वमाह दिवि सूर्य्येति। दिवि आकाशे सूर्य्यसहस्रस्य युगपदुत्थितस्य यदि युगपदुत्थिता भाः प्रभा भवेत्तर्हि सा महात्मनो विश्वरूपस्य भासः प्रभायाः कथञ्चित् सदृशी स्यात् अन्योपमा नास्त्येवेत्यर्थः, तथाभूतं रूपं दर्शयामासेति पूर्वेणैवान्वयः ॥१२॥

**तत्रैकस्थं जगत् कृत्स्नं प्रविभक्तमनेकधा।**
**अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा॥ १३॥**

किञ्च तत्रैकस्थमिति। तत्र तस्मिन् विश्वरूपे एकस्मिन् स्थितमेकस्थं जगत् कृत्स्नं प्रविभक्तमनेकधा देवपितृमनुष्यादिभेदैरपश्यत् दृष्टवान् देवदेवस्य हरेः शरीरे पाण्डवोऽर्जुनस्तदा॥ १३॥

आ॰ टी॰। न केवलमद्भुतमेवार्जुनो दृष्टवान् किन्तु तत्रैव विश्वरूपे सर्वं जगदेकस्मिन्नवस्थितमनुभूतवानित्याह किञ्चेति। तदा विश्वरूपस्य भगवद्रूपस्य दर्शनं दर्शयामीत्यर्थः॥ १३॥

स्वा॰ टी॰। ततः किं वृत्तमित्यपेक्षायामाह तत्रेति। अनेकधा प्रविभक्तं नानाविभागेनावस्थितं कृत्स्नं जगद्देवदेवस्य शरीरे तदवयवत्वेनैकत्र व्यवस्थितं तदा पाण्डवोऽर्जुनोऽपश्यत्॥ १३॥

**ततः स विस्मयाविष्टो हृष्टरोमा धनञ्जयः।**
**प्रणम्य शिरसा देवं कृताञ्जलिरभाषत॥ १४॥**

तत इति। ततस्तं दृष्ट्वा स विस्मयेनाविष्टो विस्मयाविष्टो हृष्टानि रोमाण्यस्य सोऽयं हृष्टरोमा चाभवद्धनञ्जयः प्रणम्य प्रकर्षेण नमनं कृत्वा प्रह्वीभूतः सन् शिरसा देवं विश्वरूपधरं कृताञ्जलिर्नमस्कारार्थं संपुटीकृतहस्तः सन्भाषतोक्तवान्॥ १४॥

आ॰ टी॰। विश्वरूपधरस्य भगवतस्तस्मिन्नेकीभूतजगतश्चोक्तविशेषणस्य दर्शनानन्तरं किमकरोदित्यपेक्षायामाह तत इति। आश्चर्यबुद्धिर्विस्मयः रोम्णां हृष्टत्वं पुलकितत्वं प्रकर्षो भक्तिश्रद्धयोरतिशयः॥ १४॥

स्वा॰ टी॰। एवं दृष्ट्वा किं कृतवानित्यत्राह तत इति। ततो दर्शनानन्तरं विस्मयेनाविष्टो व्याप्तः सन् हृष्टान्युत्पुलकितानि रोमाणि

यस्य च धनञ्जयस्तमेव देवं शिरसा प्रणम्य कृताञ्जलिः संपुटीकृतहस्तो भूत्वा अभाषत उक्तवान् ॥ १४ ॥

## अर्जुन उवाच ।

**पश्यामि देवांस्तव देव ! देहे**
**सर्वांस्तथा भूतविशेषसङ्घान् ।**
**ब्रह्माणमीशं कमलासनस्थ-**
**मृषींश्च सर्वानुरगांश्च दिव्यान् ॥ १५ ॥**

कथं यत्त्वया दर्शितं विश्वरूपं तदहं पश्यामीति स्वानुभवमाविष्कुर्वन् अर्जुन उवाच पश्यामीति । पश्याम्युपलभे हे देव ! तव देहे देवान् सर्वांस्तथा भूतविशेषसङ्घान् भूतविशेषाणां स्थावरजङ्गमानां नानासंस्थानविशेषाणां सङ्घा भूतविशेषसङ्घास्तान् किञ्च ब्रह्माणं चतुर्मुखमीशमीशितारं प्रजानां कमलासनस्थं पृथिवीपद्ममध्ये मेरुकर्णिकासनस्थमित्यर्थः ऋषींश्च वशिष्ठादीन् सर्वानुरगांश्च वासुकिप्रभृतीन् दिव्यान् दिवि भवान् ॥ १५ ॥

व्या० टी० । कथं भगवन्तं प्रत्यर्जुनो भाषितवानिति पृच्छति कथमिति । तत् प्रश्नमपेक्षितं पूरयन्नवतारयति यत्त्वयेति । भूतविशेषसङ्घातेषु देवतानामन्तर्भावेऽपि पृथक्करणमुत्कर्षाद्ब्रह्मणः सर्वदेवतात्मत्वेऽपि तेभ्यो भेदकथनं तदुत्पादकत्वादिति मत्वाह किञ्चेति । ऋषीणामुरगाणाञ्च किञ्चिद्वैषम्यात् पृथक्त्वं, दिव्यानित्युभयेषां विशेषणम् ॥१५॥

स्वा० टी० । भाषणमेवाह पश्यामीति सप्तदशभिः । हे देव ! तव देहे देवानादित्यादीन् पश्यामि तथा सर्वान् भूतविशेषाणां जरायुजाण्डजादीनां संघांश्च तथा दिव्यानृषीन् उरगांश्च तक्षकादीन् तथा तेषां देवादीनामीशं स्वामिनं ब्रह्माणञ्च कथंभूतं कमलासनस्थं पृथिवीपद्मकर्णिकायां मेरौ स्थितमित्यर्थः, यद्वा त्वन्नाभिपद्मासनस्थमिति ॥१५॥

अनेकबाहूदरवक्त्रनेत्रं
पश्यामि त्वा सर्वतोऽनन्तरूपम् ।
नान्तं न मध्यं न पुनस्तवादिं
पश्यामि विश्वेश्वर ! विश्वरूप ! ॥१६॥

किञ्च अनेकेति । अनेकबाहूदरवक्त्रनेत्रं अनेके बाहव उदराणि वक्त्राणि नेत्राणि च यस्य तव स त्वमनेकबाहूदरवक्त्रनेत्रस्तमनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वा त्वां सर्वतः सर्वत्र अनन्तरूपमनन्तानि रूपाणि अस्येत्यनन्तरूपस्तं अनन्तरूपं नान्तमन्तोऽवसानं न मध्यं मध्यं नाम द्वयोः कोटयोरन्तरं न पुनस्तवादिं तव देवस्य न अन्तं पश्यामि न मध्यं पश्यामि न पुनरादिं पश्यामि हे विश्वेश्वर ! हे विश्वरूप ! ॥ १६ ॥

व्या॰ टी॰ । यत्र भगवद्देहे सर्वमिदं दृष्टं तमेव विशिनष्टि अनेकेति । आदिशब्देन मूलमुच्यते । नान्तं न मध्यमित्यत्रापि पश्यामीत्यस्य प्रत्येकं सम्बन्धं सूचयति नान्तं पश्यामीति ॥ १६ ॥

स्वा॰ टी॰ । किञ्च अनेकेति । अनेकानि बाह्वादीनि यस्य तादृशं त्वां पश्यामि, अनन्तानि रूपाणि यस्य तं त्वां सर्वतः पश्यामि, तव तु अन्तं मध्यमादिञ्च न पश्यामि सर्वगतत्वात् ॥ १६ ॥

किरीटिनं गदिनं चक्रिणञ्च
तेजोराशिं सर्वतो दीप्तिमन्तम् ।
पश्यामि त्वां दुर्निरीक्ष्यं समन्ता-
द्दीप्तानलार्कद्युतिमप्रमेयम् ॥ १७॥

किञ्च किरीटिनमिति । किरीटिनं किरीटी नाम

शिरोभूषणविशेषः तद्‌यस्यास्तीति स किरीटी तं किरीटिनं तथा गदिनं गदा यस्य विद्यत इति गदी तं गदिनं तथा चक्रिणं चक्रमस्यास्तीति चक्री तं चक्रिणं च तेजोराशिं तेजःपुञ्जं सर्वतोदीप्तिमन्तं सर्वतोदीप्तिर्यस्यास्तीति सर्वतोदीप्तिमांस्तं सर्वतो दीप्तिमन्तं पश्यामि त्वां दुर्निरीक्ष्यं दुःखेन निरीक्ष्यो दुर्निरीक्ष्यस्तं समन्ततः सर्वत्र दीप्तानलार्कद्युतिं अनलश्चार्कश्चानलार्कौ दीप्तौ अनलार्कौ दीप्तानलार्कौ तयोर्दीप्तानलार्कयोर्द्युतिरिव द्युतिस्तेजो यस्य तव स त्वं दीप्तानलार्कद्युतिस्तं त्वां दीप्तानलार्कद्युतिं अप्रमेयं न प्रमेयमप्रमेयमशक्यपरिच्छेदमित्यर्थः ॥ १७ ॥

व्या० टी०। विश्वरूपवन्तं भगवन्तमेव प्रकारान्तरेण प्रपञ्चयति किञ्चेति। परिच्छिन्नत्वं व्यावर्त्तयति सर्वत इति। दुर्निरीक्ष्यं पश्यामीत्यधिकारिभेदादविरुद्धम्। पुरतो वा पृष्ठतो वा पार्श्वतो वा नास्य दर्शनं किन्तु सर्वतोऽस्त्याह समन्तत इति। दीप्तिमत्त्वं दृष्टान्तेन स्फुटयति दीप्तेति ॥ १७ ॥

स्वा० टी०। किञ्च किरीटिनमिति। मुकुटवन्तं गदावन्तं चक्रवन्तं सर्वतो दीप्तिमन्तं तेजःपुञ्जरूपं तथा दुर्निरीक्ष्यं द्रष्टुमशक्यं तत्र हेतुः दीप्तयोरनलार्कयोर्द्युतिरिव द्युतिर्यस्य तं अतएवाप्रमेयं एवंभूत इति निश्चेतुमशक्यं त्वां समन्ततः पश्यामि ॥ १७ ॥

त्वमक्षरं परमं वेदितव्यं
त्वमस्य विश्वस्य परं निधानम्।
त्वमव्ययः शाश्वतधर्मगोप्ता
सनातनस्त्वं पुरुषो मतो मे ॥ १८ ॥

इत एव ते योगशक्तिदर्शनादनुमिनोमि त्वमिति।

त्वमक्षरं न क्षरतीति परमं परं ब्रह्म वेदितव्यं ज्ञातव्यं मुमुक्षुभिः त्वमस्य विश्वस्य समस्तस्य जगतः परं प्रकृष्टं निधानं निधीयते अस्मिन्निति निधानं परमाश्रय इत्यर्थः। किञ्च त्वमव्ययो न च तव व्ययो विद्यत इति अव्ययः शाश्वतधर्म्मगोप्ता शश्वद्भवः शाश्वतो नित्यो धर्म्मस्तस्य गोप्ता शाश्वतधर्म्मगोप्ता सनातनश्चिरन्तनस्त्वं पुरुषः परो मतोऽभिप्रेतो मे मम ॥ १८ ॥

आ० टी०। स्वप्रपञ्चे भगवद्रूपे प्रकृते प्रकरणविरुद्धत्वमक्षरमित्यादिनिरुपाधिकवचनमित्याशङ्क्याह इत एवेति। योगशक्तिरैश्वर्यातिशयः, न क्षरतीति निःप्रपञ्चत्वमुच्यते, परमपुरुषार्थत्वात् परमार्थत्वाच्च ज्ञातव्यत्वम्। यस्मिन् द्यौः पृथिवीत्यादौ प्रपञ्चायतनस्यैव ततो निकृष्टस्य ज्ञातव्यत्वश्रवणात् कुतो ब्रह्मणो ज्ञातव्यत्वं तत्राह त्वमस्येति। निःप्रपञ्चस्य ब्रह्मणो ज्ञेयत्वे हेत्वन्तरमाह किञ्चेति। अविनाशित्वात्त्वैव ज्ञातव्यतातिरिक्तस्य नाशित्वेन हेयत्वादित्यर्थः, ज्ञानकर्मात्मनो धर्म्मस्य नित्यत्वं वेदप्रमाणकत्वं धर्म्मसंस्थापनार्थाय सम्भवामीत्युक्तत्वाद्गोप्ता रक्षिता ॥ १८ ॥

स्वा० टी०। यस्मादेवं तवातर्क्यमैश्वर्यं तस्मात्त्वमिति। त्वमेवाक्षरं परमं परं ब्रह्म, कथंभूतं वेदितव्यं मुमुक्षुभिर्ज्ञातव्यं, त्वमेवास्य विश्वस्य परं निधानं निधीयतेऽस्मिन्निति निधानं प्रकृष्टाश्रयः, अतएव त्वमव्ययो नित्यः, शाश्वतस्य नित्यस्य धर्म्मस्य गोप्ता पालकः, सनातनश्चिरन्तनः पुरुषो मतो मे सम्मतोऽसि ॥ १८ ॥

अनादिमध्यान्तमनन्तवीर्य्य-
मनन्तबाहुं शशिसूर्य्यनेत्रम्।
पश्यामि त्वां दीप्तहुताशवक्त्रं
स्वतेजसा विश्वमिदं तपन्तम् ॥ १९ ॥

किञ्च अनादीति। अनादिमध्यान्तमादिश्च मध्यश्च अन्तश्च न विद्यते यस्य सोऽयमनादिमध्यान्तस्तं त्वामनादिमध्यान्तमनन्तवीर्य्यं न तव वीर्य्यस्यान्तोऽस्तीत्यनन्तवीर्य्यस्तं त्वामनन्तवीर्य्यं तथा अनन्तबाहुमनन्ता बाहवो यस्य तव स त्व मनन्तबाहुस्तं त्वां अनन्तबाहुं शशिसूर्य्यनेत्रं शशिसूर्य्यौ नेत्रे यस्य तव स त्वं शशिसूर्य्यनेत्रः तं त्वां शशिसूर्य्यनेत्रं चन्द्रादित्यनयनं पश्यामि त्वां दीप्तहुताशवक्त्रं दीप्तश्चासौ हुताशश्च तद्वत् वक्त्रं यस्य तव स त्वं दीप्तहुताशवक्त्रः तं त्वां दीप्तहुताशवक्त्रं स्वतेजसा विश्वं समस्तमिदं तपन्तं सन्तापयन्तम्॥ १९॥

श्रा॰ टी॰। भगवतो रूपं विश्वरूपाख्यं रूपमेव पुनर्विवृणोति किञ्चेति। हुतमश्नातीति हुताशो वह्निः॥ १९॥

स्वा॰ टी॰। किञ्च अनादीति। अनादिमध्यान्तं उत्पत्तिस्थितिलयरहितं, अनन्तं वीर्य्यं प्रभावो यस्य तं, अनन्ता बाहवो यस्य तं, शशिसूर्य्यौ नेत्रे यस्य तादृशं त्वां पश्यामि, तथा दीप्तो हुताशोऽग्निर्वक्त्रेषु यस्य तं स्वतेजसा इदं विश्वं सन्तापयन्तं पश्यामि॥ १९॥

द्यावापृथिव्योरिदमन्तरं हि
व्याप्तं त्वयैकेन दिशश्च सर्वाः।
दृष्ट्वाद्भुतं रूपमिदं तवोग्रं
लोकत्रयं प्रव्यथितं महात्मन्!॥ २०॥

द्यावापृथिव्योरिति। द्याव्यापृथिव्योरिदमन्तरं हि अन्तरिक्षं व्याप्तं त्वयैकेन विश्वरूपधरेण दिशश्च सर्वा व्याप्ताः दृष्ट्वा उपलभ्य अद्भुतं विस्मापकं रूपमिदं तव

उग्रं क्रूरं लोकत्रयं लोकानां त्रयं लोकत्रयं प्रव्यथितं भीतं प्रचलितं वा हे महात्मन्! अक्षुद्रस्वभाव! ॥ २० ॥

आ० टी०। प्रकृतभगवद्रूपस्य व्याप्तिं व्यनक्ति द्यावापृथिव्योरिति। तस्यैव भयङ्करत्वमाचष्टे दृष्ट्वेति ॥ २० ॥

स्वा० टी०। किञ्च द्यावापृथिव्योरिति। द्यावापृथिव्योरिदमन्तरमन्तरीक्षं त्वयैकेन व्याप्तं दिशश्च सर्वा व्याप्ताः, अद्भुतमदृष्टपूर्वं त्वदीयमिदमुग्रं घोरं रूपं दृष्ट्वा लोकत्रयं प्रव्यथितमतिभीतं पश्यामीति पूर्वस्यैवानुषङ्गः ॥ २० ॥

**अमी हि त्वां सुरसंघा विशन्ति**
**केचिद्भीताः प्राञ्जलयो गृणन्ति।**
**स्वस्तीत्युक्त्वा महर्षिसिद्धसंघाः**
**स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ॥२१॥**

अथाधुना पुरा यद्वा जयेम यदि वा नो जयेयुरिति अर्जुनस्य संशय आसीत् तन्निर्णयाय पाण्डवजयमैकान्तिकं दर्शयामीति प्रवृत्तो भगवान् तं पश्यन्नाह अमी हीति। किञ्च अमी हि युध्यमाना योधास्त्वां सुरसङ्घा येऽत्र भूभारावतारायावतीर्णा वस्वादिदेवसङ्घा मनुष्यसंस्थानास्त्वां विशन्ति प्रविशन्तो दृश्यन्ते तत्र केचिद्भीताः प्राञ्जलयः सन्तो गृणन्ति स्तुवन्ति त्वामन्ये पलायनेऽप्यशक्ताः सन्तो युद्धे प्रत्युपस्थिते उत्पातादिनिमित्तान्युपलक्ष्य स्वस्त्यस्तु जगत इत्युक्त्वा महर्षिसिद्धसङ्घाः महर्षीणाञ्च सिद्धानाञ्च सङ्घाः स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः सम्पूर्णाभिः ॥२१॥

आ० टी०। अमी हीत्यादि समनन्तरपद्यस्य तात्पर्यमाह अथेति।

तं भगवन्तं पाण्डवजयमैकान्तिकं दर्शयन्तं पश्यन्नर्जुनो ब्रवीतीत्याह त्वं पश्यामीति । विश्वरूपस्यैव प्रपञ्चनार्थमनन्तरमन्यजातमिति दर्शयति किञ्चेति । असुरसङ्घा इति पदं स्थित्वा भूभारभूता दुर्योधनादयस्त्वां विशन्तीत्यपि च वक्तव्यम् । उभयोरपि सेनयोरवस्थितेषु योद्धृकामेष्वन्तरविशेषमाह अमी इति । समरभूमौ समागतान् द्रष्टुकामान् नारद-प्रभृतीनां विश्वविनाशमाशङ्कमानानां तं परिजिहीर्षतां स्तुतिपदेषु भगवद्विषयेषु प्रवृत्तिप्रकारं दर्शयति युद्धे इति ॥ २१ ॥

स्वा॰ टी॰ । किञ्च अमी हीति । अमी सुरसङ्घा भीताः सन्तस्त्वां विशन्ति शरणं प्रविशन्ति, तेषां मध्ये केचिदतिभीता दूरत एव स्थिताः कृतसंपुटकरयुगलाः सन्तो स्तुवन्ति जय जय रक्ष रक्षेति प्रार्थयन्त इत्यर्थः ॥ २१ ॥

**रुद्रादित्या वसवो ये च साध्या**
**विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।**
**गन्धर्वयक्षासुरसिद्धसंघा**
**वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ॥२२॥**

किञ्चान्यत् रुद्रेति । रुद्रादित्या वसवो ये च साध्या रुद्रादयो गणाः विश्वेऽश्विनौ विश्वे देवाः अश्विनौ च देवौ मरुतश्च वायवः उष्मपाश्च पितरो गन्धर्वयक्षासुरसिद्धसङ्घाः गन्धर्वा हाहाहूहूप्रभृतयो यक्षाः कुवेरप्रभृतयः असुरा विरोचनप्रभृतयः सिद्धाः कपिलादयस्तेषां सङ्घाः गन्धर्वयक्षासुरसिद्धसङ्घास्ते वीक्षन्ते पश्यन्ति त्वा त्वां विस्मिताः विस्मयमापन्नाः सन्तस्तएव सर्वे ॥ २२ ॥

स्वा॰ टी॰ । दृश्यमानस्य भगवद्रूपस्य विस्मयकरत्वे हेत्वन्तरमाह किञ्चेति । तत्र वीक्षा रुद्रादयः सर्वे विस्मयमापन्नास्त्वां पश्यन्तीति कर्मणा ॥ २२ ॥

स्वा० टी०। किञ्च रुद्रेति। रुद्राश्च आदित्याश्च वसवश्च ये च साध्या नाम देवाः विश्वे विश्वेदेवाः अश्विनौ देवौ मरुतो मरुद्गणाश्च ऊष्माणं पिबन्तीत्यूष्मपाः पितरः ऊष्मभागा हि पितर इति श्रुतेः स्मृतिश्च यावदुष्णं भवेदन्नं तावदश्नन्ति वाग्यताः। तावदश्नन्ति पितरो यावन्नोक्ता हविर्गुणाः, गन्धर्वाश्च यक्षाश्च असुराश्च विरोचनादयः सिद्धसङ्घाः सिद्धानां सङ्घाश्च सर्व एव विस्मिताः सन्तस्त्वां वीक्षन्त इत्यन्वयः ॥२२॥

**रूपं महत्ते बहुवक्त्रनेत्रं**
**महाबाहो! बहुबाहूरुपादम्।**
**बहूदरं बहुदंष्ट्राकरालं**
**दृष्ट्वा लोकाः प्रव्यथितास्तथाहम् ॥२३॥**

यस्मात् रूपमिति। रूपं महदतिप्रमाणं ते तव बहुवक्त्रनेत्रं बहूनि वक्त्राणि मुखानि नेत्राणि चक्षूंषि च यस्मिंस्तद्रूपं बहुवक्त्रनेत्रं हे महाबाहो! बहुबाहूरुपादं बहवो बाहवः ऊरवः पादाश्च यस्मिन् रूपे तद्बहुबाहूरुपादं किञ्च बहूदरं बहूनि उदराणि यस्मिन्निति तत् बहूदरं बहुदंष्ट्राकरालं बह्वीभिः दंष्ट्राभिः करालं विकृतं तद्बहुदंष्ट्राकरालं दृष्ट्वा रूपमीदृशं लोकाः लौकिकाः प्राणिनः प्रव्यथिताः प्रचलिता भयेन तथाऽहम ॥ २३ ॥

आ० टी०। लोकत्रय प्रव्यथितमित्युक्तमुपसंहरति यस्मादिति। ईदृशं यस्मात्ते रूपं तस्मात्त्वां दृष्ट्वेति योजना। भयेन लौकिकवदहमपि व्यथितो व्यथां पीडां देहेन्द्रियप्रचलनं प्राप्तोऽस्मीत्याह तथेति ॥ २३ ॥

स्वा० टी०। किञ्च रूपमिति। हे महाबाहो! महदत्यूर्जितं तव रूपं दृष्ट्वा लोकाः सर्वे प्रव्यथिता अतिभीताः तथाहञ्च प्रव्यथितोऽस्मि, कीदृशं रूपं दृष्ट्वा, बहूनि वक्त्राणि नेत्राणि च यस्मिंस्तत्, बहवो

बाहव ऊरवः पादाश्च यस्मिंस्तत्, बहून्युदराणि यस्मिंस्तत्, बह्वीभि-र्दंष्ट्राभिः करालं विकृतं रौद्रमित्यर्थः ॥ २३ ॥

**नभःस्पृशं दीप्तमनेकवर्णं**
**व्यात्ताननं दीप्तविशालनेत्रम्।**
**दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा**
**धृतिं न विन्दामि शमञ्च विष्णो! ॥२४॥**

तत्रेदं कारणं नभःस्पृशमिति। नभःस्पृशं दुस्पर्शमित्यर्थः दीप्तं प्रज्वलितं अनेकवर्णं अनेकवर्णा भयङ्करा नानासंस्थाना यस्मिंस्त्वयि तं त्वामनेकवर्णं व्यात्ताननं व्यात्तानि विवृतानि आननानि मुखानि यस्मिन् त्वयि तं त्वां व्यात्ताननं दीप्तविशालनेत्रं दीप्तानि प्रज्वलितानि विशालानि विस्तीर्णानि नेत्राणि यस्मिंस्त्वयि तं त्वां दीप्तविशालनेत्रं दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा प्रव्यथितः प्रभीतोऽन्तरात्मा मनो यस्य मम सोऽहं प्रव्यथितान्तरात्मा सन् धृतिं धैर्यं न विन्दामि न लभे शमञ्चोपशमं मनस्तुष्टिं हे विष्णो! ॥ २४ ॥

श्रा० टी०। अर्जुनस्य विश्वरूपदर्शनेन व्यथितत्वे हेतुमाह नभेति ॥ २४ ॥

स्वा० टी०। न केवलं भीतोऽहमेतावदेव अपि तु नभ इति। नभः स्पृशतीति नभस्पृक् तं अन्तरीक्षव्यापिनमित्यर्थः, दीप्तं तेजोयुक्तं, अनेका वर्णा यस्य तं, व्यात्तानि विवृतान्याननानि यस्य तं, दीप्तानि विशालानि नेत्राणि यस्य तं, एवंभूतं हि त्वां दृष्ट्वा प्रव्यथितोऽन्तरात्मा मनो यस्य सोऽहं धृतिं धैर्यमुपशमञ्च न लभे ॥ २४ ॥

**दंष्ट्राकरालानि च ते मुखानि**
**दृष्ट्वैव कालानलसन्निभानि**
**दिशो न जाने न लभे च शर्म्म**
**प्रसीद देवेश ! जगन्निवास ! ॥ २५ ॥**

कस्मात् दंष्ट्राकरालानीति । दंष्ट्राकरालानि दंष्ट्राभिः करालानि विकृतानि ते तव मुखानि दृष्ट्वैवोपलभ्य कालानलसन्निभानि प्रलयकाले लोकानां दाहकोऽग्निः कालानलसन्निभानि कालानलसदृशानि दृष्ट्वेत्येतद्दिशः पूर्वापरविवेकेन न जाने दिङ्मूढोऽस्म्यतो न लभे न चोपलभे च शर्म्म सुखमतः प्रसीद प्रसन्नो भव देवेश ! जगन्निवास ! ॥ २५ ॥

व्या० टी० । एवमस्मिन्नपि भगवद्दर्शने परितोषाद्यभावे कारणान्तरं प्रश्नपूर्वकमाह कस्मादिति । दृष्ट्वैवेत्येवकारेण प्राप्तिर्व्यावर्त्त्यते ॥ २५ ॥

स्वा० टी० । दंष्ट्रेति । हे देवेश ! तव मुखानि दृष्ट्वा भयातिशयेन दिशो न जानामि शर्म्म च सुखं न लभे, भो जगन्निवास प्रसन्नो भव, कीदृशानि मुखानि दृष्ट्वा, दंष्ट्राभिः करालानि कालानलः प्रलयाग्निस्तत्सदृशानि ॥ २५ ॥

**अमी च त्वां धृतराष्ट्रस्य पुत्राः**
**सर्वे सहैवावनिपालसंघैः**
**भीष्मो द्रोणः सूतपुत्रस्तथासौ**
**सहास्मदीयैरपि योधमुख्यैः ॥ २६ ॥**

येभ्यो मम पराजयशङ्का प्रागेव आसीत् सा चापगता यतः अमी चेति । अमी च त्वां धृतराष्ट्रस्य पुत्राः दुर्यो-

धनप्रभृतयस्त्वरमाणा विशन्तीति व्यवहितेन सम्बन्धः सर्वे सहैव संहताः अवनिपालसङ्घैः अवनिं पृथ्वीं पालयन्तीत्यवनिपालास्तेषां सङ्घैः किञ्च भीष्मो द्रोणः सूतपुत्रः कर्णस्तथासौ सहास्मदीयैरपि धृष्टद्युम्नप्रभृतिभिर्योधमुख्यैः योधानां मुख्यैः प्रधानैः सह ॥ २६ ॥

व्या० टी० । अस्माकं जयं परेषां पराजयञ्च दिदृक्षन्तं पश्यामीत्याह येभ्य इति । तत्र हेतुत्वेन श्लोकमवतारयति यत इति ॥ २६ ॥

स्वा० टी० । यच्चान्यद्द्रष्टुमिच्छसीत्यनेनास्मिन् संग्रामे भाविजयपराजयादिकं मम देहे पश्येति यद्भगवतोक्तं तदिदानीं पश्यन्नाह अमी चेति पञ्चभिः । अमी धृतराष्ट्रस्य पुत्रा दुर्योधनादयः सर्वेऽवनिपालानां जयद्रथादीनां राज्ञां सङ्घैः समूहैः सहैव तव वक्त्राणि विशन्तीत्युत्तरेणान्वयः, तथा भीष्मश्च द्रोणश्चासौ सूतपुत्रश्च कर्णः, न केवलं त एव विशन्ति अपि तु प्रतियोद्धारोऽस्मदीया ये योधमुख्याः शिखण्डिधृष्टद्युम्नादयस्तैः सह ॥ २६ ॥

**वक्त्राणि ते त्वरमाणा विशन्ति**
**दंष्ट्राकरालानि भयानकानि ।**
**केचिद्विलग्ना दशनान्तरेषु**
**संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥ २७ ॥**

किञ्च वक्त्राणीति । वक्त्राणि मुखानि ते तव त्वरमाणास्त्वरायुक्ताः सन्तो विशन्ति किं विशिष्टानि दंष्ट्राकरालानि मुखानि भयानकानि भयङ्कराणि किञ्च केचिन्मुखानि प्रविष्टानां मध्ये विलग्ना दशनान्तरेषु दन्तान्तरेषु मांसमिव भक्षितं संदृश्यन्ते उपलभ्यन्ते चूर्णितैश्चूर्णीकृतैरुत्तमाङ्गैः शिरोभिः ॥ २७ ॥

आ० टी० । न केवलं दुर्य्योधनादीनामेव पराजयः किन्तु भीष्मादीनामपीत्याह किञ्चेति । भगवद्रूपस्योग्रत्वे हेत्वन्तरमाह किञ्चेति । प्रविष्टानां मध्ये केचिदिति सम्बन्धः ॥ २७ ॥

स्वा० टी० । वक्त्राणीति । एते सर्वे त्वरमाणा धावन्तस्तव दंष्ट्राभिः विकृतानि करालानि भयङ्कराणि वक्त्राणि विशन्ति, तेषां मध्ये केचिच्चूर्णितैरुत्तमाङ्गैः शिरोभिरुपलक्षिता दन्तसन्धिषु संश्लिष्टाः संदृश्यन्ते ॥ २७ ॥

**यथा नदीनां बहवोऽम्बुवेगाः**
**समुद्रमेवाभिमुखा द्रवन्ति ।**
**तथा तवामी नरलोकवीरा**
**विशन्ति वक्त्राण्यभितो ज्वलन्ति ॥ २८ ॥**

कथं प्रविशन्ति मुखानीत्याह यथा नदीनामिति । यथा नदीनां स्रवन्तीनां बहवोऽनेकेऽम्बूनां वेगाऽम्बुवेगास्त्वराविशेषाः समुद्रमेवाभिमुखाः प्रतिमुखाः द्रवन्ति प्रविशन्ति तथा तद्वत्तव अमी भीष्मादयो नरलोकवीरा मनुष्यलोकपाला विशन्ति वक्त्राण्यभितो ज्वलन्ति प्रकाशमानानि ॥ २८ ॥

आ० टी० । उभयोरपि सेनयोरवस्थितानां राज्ञां भगवन्मुखप्रवेशनं निदर्शनेन विशदयति कथमित्यादिना ॥ २८ ॥

स्वा० टी० । प्रवेशने दृष्टान्तमाह यथेति । नदीनामनेकमार्गप्रवृत्तानां बहवोऽम्बूनां वारीणां वेगाः प्रवाहाः समुद्राभिमुखाः सन्तो यथा समुद्रमेव द्रवन्ति विशन्ति तथा अमी ये नरलोकवीरास्तेऽभितो ज्वलन्ति सर्वतः प्रदीप्यमानानि तव वक्त्राणि प्रविशन्ति ॥ २८ ॥

**यथा प्रदीप्तं ज्वलनं पतङ्गा-**
**विशन्ति नाशाय समृद्धवेगाः ।**
**तथैव नाशाय विशन्ति लोका-**
**स्तवापि वक्त्राणि समृद्धवेगाः ॥ २९ ॥**

ते किमर्थं प्रविशन्ति कथञ्चेत्याह यथेति । यथा प्रदीप्तं ज्वलनं अग्निं पतङ्गाः पक्षिणो विशन्ति नाशाय विनाशाय समृद्धवेगाः समृद्धः उद्भूतो वेगो गतिर्येषां ते समृद्धवेगाः तथैव नाशाय विशन्ति लोकाः प्राणिनस्तवापि वक्त्राणि समृद्धवेगाः ॥ २९ ॥

आ० टी० । प्रवेशप्रयोजनं तत्प्रकारविशेषञ्चोदाहरणान्तरेण स्फोरयति ते किमर्थमित्यादिना ॥ २९ ॥

स्वा० टी० । अवशत्वेन प्रवेशे नदीजलदृष्टान्त उक्तो बुद्धिपूर्वकप्रवेशे दृष्टान्तमाह यथेति । प्रदीप्तं ज्वलन्तमग्निं पतङ्गाः शलभा बुद्धिपूर्वकं समृद्धो वेगो येषां ते यथा नाशाय मरणायैव विशन्ति तथैव लोका एते जना अपि भवन्मुखानि प्रविशन्ति ॥ २९ ॥

**लेलिह्यसे ग्रसमानः समन्ता-**
**ल्लोकान् समग्रान् वदनैर्ज्वलद्भिः ।**
**तेजोभिरापूर्य्य जगत् समग्रं**
**भासस्तवोग्राः प्रतपन्ति विष्णो ! ॥३०॥**

त्वं पुनः लेलिह्यस इति । लेलिह्यसे आस्वादयसि ग्रसमानोऽन्तःप्रवेशयन् समन्तात् समन्ततो लोकान् समग्रान् समस्तान् वदनैर्वक्त्रैर्ज्वलद्भिर्दीप्यमानैस्तेजोभिरापूर्य्य संव्याप्य जगत् समग्रं सहाग्रेण समस्तमित्येतत् किञ्च

भासो दीप्तयस्तवोग्राः क्रूराः प्रतपन्ति प्रतापं कुर्वन्ति हे विष्णो ! व्यापनशील ! ॥ ३० ॥

आ० टी०। योद्धुकामानां राज्ञां भगवन्मुखप्रवेशप्रकारं प्रदर्श्य तस्यां दशायां भगवतस्तद्भासाञ्च प्रवृत्तिप्रकारं प्रत्याययति त्वं पुनरिति। भगवत्प्रवृत्तिमेव प्रत्याय तदीयभासां प्रवृत्तिं प्रकटयति किञ्चेति ॥३०॥

स्वा० टी०। ततः किमत आह लेलिह्यसे इति। ग्रसमानोऽपि सन् समग्रान् लोकान् सर्वानेतान् वीरान् सर्वतो लेलिह्यसे अतिशयेन भक्षयसि, कैः, ज्वलद्भिर्वदनैः, किञ्च हे विष्णो ! तव भासो दीप्तयस्तेजोभिर्विस्फुरणैः समग्रं जगदाप्य तीव्राः सत्यः प्रतपन्ति सन्तापयन्ति ॥३०॥

**आख्याहि मे को भवानुग्ररूपो**
**नमोऽस्तु ते देववर ! प्रसीद।**
**विज्ञातुमिच्छामि भवन्तमाद्यं**
**न हि प्रजानामि तव प्रवृत्तिम् ॥ ३१ ॥**

यत एवमुग्रस्वभावोऽतः आख्याहीति। आख्याहि कथय मे मह्यं को भवानेवमुग्ररूपः अतिक्रूराकारो नमोऽस्तु ते तुभ्यं हे देववर ! देवानां प्रधान ! प्रसीद प्रसादं कुरु विज्ञातुं विशेषेण ज्ञातुमिच्छामि भवन्तमाद्यमादौ भवमाद्यं न हि यस्मात् प्रजानामि तव त्वदीयां प्रवृत्तिं चेष्टाम् ॥ ३१ ॥

आ० टी०। भगवद्रूपस्यार्जुनेन दृष्टपूर्वत्वात्तस्य तत्स्वरूपजिज्ञासेत्याशङ्क्याह यत इति। उपदेशं शुश्रूषमाणे नोपदेशकर्तुः पराङ्मुखीभवनं कर्त्तव्यमिति सूचयति नमोऽस्त्विति। क्रौर्य्यत्यागं समर्थयते प्रसादमिति। त्वमेव मां जानीषे किमर्थमित्थमिदानीमर्थयसे मदीयां चेष्टां दृष्ट्वा तयैव प्रतिपद्यस्वेत्याशङ्क्याह न हीति ॥ ३१ ॥

स्वा० टी०। यत एवं तस्मात् आख्याहीति। भवानुग्ररूपः क इत्याख्याहि कथय तुभ्यं नमोऽस्तु हे देववर! प्रसीद प्रसन्नो भव भवन्तमाद्यं पुरुषं विशेषेण ज्ञातुमिच्छामि यतस्तव प्रवृत्तिं चेष्टां किमर्थमेवं प्रवृत्तोऽसीति न जानामि, एवंभूतस्य तव प्रवृत्तिं वार्त्तामपि न जानामीति वा ॥ ३१ ॥

श्रीभगवानुवाच।

कालोऽस्मि लोकक्षयकृत् प्रवृद्धो
लोकान् समाहर्त्तुमिह प्रवृत्तः।
ऋतेऽपि त्वां न भविष्यन्ति सर्वे
येऽवस्थिताः प्रत्यनीकेषु योधाः ॥ ३२ ॥

कालोऽस्मीति। कालोऽस्मि लोकक्षयकृत् लोकानां क्षयं करोतीति लोकक्षयकृत् प्रवृद्धो वृद्धिं गतो यदर्थं प्रवृद्धस्तच्छृणु लोकान् समाहर्त्तुं संहर्त्तुं इह अस्मिन् काले प्रवृत्तः ऋतेऽपि विनापि त्वा त्वां न भविष्यन्ति भीष्मद्रोणकर्णप्रभृतयः सर्वे येभ्यस्तवाशङ्का येऽवस्थिताः प्रत्यनीकेष्वनीकमनीकं प्रति प्रत्यनीकेषु प्रतिपक्षभूतेषु अनीकेषु योधा एव योद्धारः ॥ ३२ ॥

स्वा० टी०। यदर्थी च स्वप्रवृत्तिं तत सर्वं भगवानुक्तवानित्याह भगवानिति। कालः क्रियाशक्त्युपहितः परमेश्वरः अस्मीति वर्त्तमानयुद्धोपलक्षितत्वं कालस्य विवक्षितम्। लोकसंहारार्थं त्वत्प्रवृत्तावपि नाशावर्थवती प्रतिपक्षाणां भीष्मादीनां मत्प्रवृत्तिं विनापि संहर्त्तुमशक्यत्वादित्याशङ्क्याह ऋतेऽपीति ॥ ३२ ॥

स्वा० टी०। एवं प्रार्थितः सन् श्रीभगवानुवाच काल इति त्रिभिः। लोकानां क्षयकर्त्ता प्रवृद्धोऽत्युत्कटः कालोऽस्मि लोकान्

प्राणिनः संहर्तुमिह लोके प्रवृत्तोऽस्मि अत ऋते त्वां हन्तारं विना न भविष्यन्ति, जीविष्यन्ति, के ते, प्रत्यनीकेषु अनीकानि अनीकानि प्रति भीष्मद्रोणादीनां सर्वासु सेनासु ये योद्धारोऽवस्थितास्ते सर्वेऽपि ॥ ३२ ॥

**तस्मात्त्वमुत्तिष्ठ यशो लभस्व**
**जित्वा शत्रून् भुङ्क्ष्व राज्यं समृद्धम् ।**
**मयैवैते निहताः पूर्वमेव**
**निमित्तमात्रं भव सव्यसाचिन् ॥ ३३ ॥**

यस्मादेवं तस्मात्त्वमिति । तस्मात्त्वमुत्तिष्ठ भीष्मद्रोणप्रभृतयोऽतिरथा अजेया देवैरप्यर्जुनेन जिता इति यशो लभस्व केवलपुण्यैर्हि तत् प्राप्यते जित्वा शत्रून् दुर्योधनप्रभृतीन् भुङ्क्ष्व राज्यं समृद्धं असपत्नमकण्टकं मया एवैते निहता निश्चयेन हताः प्राणैर्वियोजिताः पूर्वमेव निमित्तमात्रं भव त्वं हे सव्यसाचिन् सव्येन वामेन हस्तेन शराणां क्षेपात् सव्यसाचीत्युच्यतेऽर्जुनः ॥ ३३ ॥

आ० टी० । तर्ह्यौदासीन्येऽपि प्रतिकूलानीकस्थानामप्रातिकूल्यादव भविष्यन्तीत्येव यस्मान्निश्चितं तस्मात्त्वदौदासीन्यमाकिञ्चित्करमित्याह तस्मादिति । उत्तिष्ठ युद्धाय उन्मुखो भवेत्यर्थः । यशोलाभमभिनयति भीष्मेति । किं तेनापुमर्थेनेत्याशङ्क्याह पुण्यैरिति । राज्यभोगोऽपेक्षित किमनपेक्षितेनेत्याशङ्क्याह जित्वेति । भीष्मादिष्वतिरथेषु कुतो जयाशङ्का इत्याशङ्क्याह मयैवेति । तर्हि कृतकारित्वान्न मे प्रवृत्तिरित्याह निमित्तेति । सव्यसाचिपदं विभजते वामेनेति ॥ ३३ ॥

स्वा० टी० । तस्मादिति । यस्मादेवं तस्मात्त्वं युद्धायोत्तिष्ठ देवैरपि दुर्जया भीष्मादयोऽर्जुनेन निर्जिता इत्येवंभूतं यशो लभस्व प्राप्नुहि अयत्नतश्च शत्रून् जित्वा समृद्धं राज्यं भुङ्क्ष्व एते च तव शत्रवस्तदीय-

युद्धात् पूर्वमेव मयैव कालात्मना निहतप्रायास्तथापि त्वं निमित्तमात्रं भव, हे सव्यसाचिन् सव्येन वामेन हस्तेन साचितुं शरान् सन्धातुं शीलं यस्येति व्युत्पत्त्या वामेनापि बाणक्षेपात् सव्यसाचीत्युच्यते ॥३३॥

**द्रोणञ्च भीष्मञ्च जयद्रथञ्च**
**कर्णं तथान्यानपि योधवीरान् ।**
**मया हतांस्त्वं जहि मा व्यथिष्ठा**
**युध्यस्व जेतासि रणे सपत्नान् ॥ ३४ ॥**

द्रोणञ्चेति । द्रोणञ्च येषु येषु योधेषु अर्जुनस्याशङ्कासीत् तांस्तान् सर्वान् व्यपदिशति भगवान् मया हतानिति, तत्र द्रोणभीष्मयोस्तावत् प्रसिद्धमाशङ्काकारणं द्रोणो धनुर्वेदाचार्य्यो दिव्यास्त्रसंपन्नः आत्मनश्च विशेषतो गुरुर्गरिष्ठो भीष्मः स्वच्छन्दमृत्युर्दिव्यास्त्रसम्पन्नश्च परशुरामेण द्वन्द्वयुद्धमगमन्न च पराजितः तथा जयद्रथोऽपि यस्य पिता तपश्चरति मम पुत्रस्य शिरोभूमौ पातयिष्यति यस्तस्यापि शिरः पतिष्यतीति कर्णोऽपि वासवदत्तया शक्त्या त्वमोघया सम्पन्नः सूर्य्यपुत्रः कानीनो यतोऽतस्तन्नाम्नैव निर्देशः मया हतांस्त्वं जहि निमित्तमात्रेण मा व्यथिष्ठास्तेभ्यो भयं मा कार्षीः युद्धस्व जेतासि दुर्य्योधनप्रभृतीन् रणे युद्धे सपत्नान् शत्रून् ॥ ३४ ॥

श्रा० टी० । मयैवेत्यादिनोक्तं प्रपञ्चयति द्रोणञ्चेति । किमिति कतिचिद्देशात्र द्रोणादयो गण्यन्ते तत्राह येष्विति । द्रोणादिषु कुतः शङ्केत्याशङ्क्य द्वयोः शङ्कानिमित्तत्वमाह तत्रेत्यादिना । जयद्रथेऽपि शङ्कानिमित्तत्वमाह तथेति । दिव्यास्त्रसंपन्न इति सम्बन्धः । तत्र शङ्कायां

कारणान्तरमाह यस्येति । कर्णोऽपि तत्कारणत्वं कथयति कर्णोऽपीति । पर्वन्दे: सम्बन्धः । हेत्वन्तरमाह वासवेति । सा खल्वमोघा पुरुषमेकमत्यन्तसमर्थं वा हत्वैव निवर्त्तते । जन्मनापि तस्य शङ्कनीयत्वमाह सूर्येति । कुन्ती हि कन्यावस्थायां मन्त्रप्रभावं ज्ञातुमादित्यमाजुहाव ततस्तस्यामेवावस्थायां स्वयमुद्बभूव तदाह कानीन इति । एतदेवाभिप्रेत्य कर्णग्रहणमित्याह यत इति । उक्तेष्वन्येषु च न त्वया शङ्कितव्यमित्याह मयेति ॥ ३४ ॥

स्वा० टी० । न चैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुरिति या आशङ्का सापि न कार्येत्याह द्रोणमिति । येषां त्वं शङ्कसे तान् द्रोणादीन् मयैव हतांस्त्वं जहि घातय मा व्यथिष्ठा भयं मा कार्षीः सपत्नान् शत्रून् रणे युद्धे निश्चितं जेतासि जेष्यसि ॥ ३४ ॥

## सञ्जय उवाच ।

**एतच्छ्रुत्वा वचनं केशवस्य**
**कृताञ्जलिर्वेपमानः किरीटी ।**
**नमस्कृत्य भूय एवाह कृष्णं**
**सगद्गदं भीतभीतः प्रणम्य ॥ ३५ ॥**

एतच्छ्रुत्वेति । एतत् श्रुत्वा वचनं केशवस्य पूर्वोक्तं कृताञ्जलिः सन् वेपमानः कम्पमानः किरीटी नमस्कृत्य भूयः पुनरेवाहोक्तवान् कृष्णं सगद्गदं सह गद्गदया वाचा मन्दशब्देन भयाविष्टस्य दुःखाभिघातात् स्नेहाविष्टस्य च हर्षोद्भवात् अश्रुपूर्णनेत्रत्वे सति श्लेष्मणा कण्ठावरोधः ततश्च वाचोऽपाटवं मन्दशब्दत्वं यत् स गद्गदस्तेन सह वर्त्तत इति । सगद्गदं वचनमाहेति वचनं क्रियाविशेषणमेतत् भीतभीतः पुनर्भयाविष्टचेताः सन् प्रणम्य

प्रह्वीभूत्वाहेति व्यवहितेन सम्बन्धः, अत्रावसरे सञ्जयवचनं साभिप्रायं कथं द्रोणादिष्वर्जुनेन निहतेष्वजेयेषु चतुर्षु निराश्रयो दुर्य्योधनो निहत एवेति मत्वा धृतराष्ट्रो जयं प्रति निराशः सन् सन्धिं करिष्यतीति ततः शान्तिरुभयेषां भविष्यतीति तदपि नाश्रौषीत् धृतराष्ट्रो भवितव्यवशात् ॥ ३५ ॥

आ॰ टी॰। पराजयाभावात् करिष्यति सन्धिमिति बुध्वा सञ्जयो राज्ञे वृत्तान्तमुक्तवानित्याह सञ्जय इति। पूर्वोक्तवचनं कालोऽस्मीत्यादि विश्वरूपदर्शनदशायामर्जुनस्य भगवता संवादवचनं किमिति सञ्जयो राज्ञे व्यज्ञापयदित्याशङ्क्य तदुक्तेस्तात्पर्य्यमाह तत्रेति। तमेवाभिप्राय प्रश्नद्वारा विशदयति कथमित्यादिना। तर्हि सञ्जयवचनं श्रुत्वा किमिति राजा सन्धिं न कारयामासेति तत्राह तदपीति ॥ ३५ ॥

स्वा॰ टी॰। ततो यद्वृत्तं तदेव धृतराष्ट्रं प्रति सञ्जय उवाच एतदिति। एतत् पूर्वोक्तश्लोकत्रयात्मकं केशवस्य वचनं श्रुत्वा वेपमानः कम्पमानः किरीटी अर्जुनः कृताञ्जलिः सपुटीकृतहस्तः कृष्णं नमस्कृत्य पुनरप्याह उक्तवान्, कथमाह, भयहर्षाद्यावेगवशात् गद्गदेन कण्ठकम्पेन सह वर्त्तत इति सगद्गदं यथा स्यात्तथा, किञ्च भीतादपि भीतः सन् प्रणम्य अवनतो भूत्वा आह ॥ ३५ ॥

अर्जुन उवाच।

स्थाने हृषीकेश! तव प्रकीर्त्त्या
जगत् प्रहृष्यत्यनुरज्यते च।
रक्षांसि भीतानि दिशो द्रवन्ति
सर्वे नमस्यन्ति च सिद्धसङ्घाः ॥ ३६ ॥

स्थान इति। स्थाने युक्तं किं तव प्रकीर्त्त्या त्वन्मा-

हात्म्यकीर्त्तनेन श्रुतेन हृषीकेश! यज्जगत् प्रहृष्यति प्रहर्षमुपैति तत् स्थाने युक्तमित्यर्थः अथवा विषयविशेषणं स्थान इति युक्तो हर्षादिविषयो भगवान् यत ईश्वरः सर्वात्मा सर्वभूतसुहृच्चेति तथा अनुरज्यते अनुरागञ्चोपैति तच्च विषय इति व्याख्येयं किञ्च रक्षांसि भीतानि भयाविष्टानि दिशो द्रवन्ति गच्छन्ति तच्च स्थाने विषये सर्वे नमस्यन्ति नमस्कुर्वन्ति च सिद्धसङ्घाः सिद्धानां समुदायाः कपिलादीनां तच्च स्थाने ॥ ३६ ॥

आ० टी०। किं तदर्जुनो भगवन्तं प्रति सगद्गदं वचनमुक्तवानिति तदाह अर्जुन इति। विषयविशेषणत्वमेव व्यनक्ति युक्त इति। भगवतो हर्षादिविषयत्वं युक्तमित्यत्र हेतुमाह यत इति। तव प्रकीर्त्त्या हर्षवदनुरागञ्च गच्छति जगदित्याह तथेति। तच्चेत्यनुरागगमनम्। रक्षःसु जगदेकदेशभूतेषु प्रतिपक्षेषु कुतो जगतो भगवति हर्षानुरागावित्याशङ्क्याह किञ्चेति। इतश्च जगतो भगवति हर्षादि युक्तमित्याह सर्व इति३६

आ० टी०। स्थाने इत्येकादशभिरर्जुनोक्तिः। स्थाने इत्यव्ययं युक्तमित्यस्मिन्नर्थे, हे हृषीकेश! यत एवं त्वमद्भुतप्रभावो भक्तवत्सलश्चातस्तव प्रकीर्त्त्या माहात्म्यसङ्कीर्त्तनेन न केवलमहमेव प्रहृष्यामीति किन्तु जगत् सर्वं प्रहृष्यति प्रकर्षेण हर्षं प्राप्नोति एतत् स्थाने युक्तमित्यर्थः, तथा जगदनुरज्यते च अनुरागमुपैति इति यत्, तथा रक्षांसि भीतानि सन्ति दिशः प्रति द्रवन्ति पलायन्ते इति यत्, सर्वे योगतपोमन्त्रादिसिद्धानां सङ्घा नमस्यन्ति प्रणमन्तीति यत् एतच्च स्थाने युक्तमेव न चित्रमित्यर्थः ॥ ३६ ॥

कस्माच्च ते न नमेरन्महात्मन्!
गरीयसे ब्रह्मणोऽप्यादिकर्त्रे।

**अनन्त ! देवेश ! जगन्निवास !**
**त्वमक्षरं सदसत्तत्परं यत् ॥ ३७ ॥**

भगवतो हर्षादिविषयत्वे हेतुं दर्शयति कस्माच्चेति। कस्माच्च हेतोस्ते तुभ्यं न नमेरन् न नमस्कुर्य्युः हे महात्मन्! गरीयसे गुरुतराय यतो ब्रह्मणो हिरण्यगर्भस्याप्यादिकर्त्ता कारणमतस्तस्मात् आदिकर्त्रे कथमेव ते न नमस्कुर्य्युः अतो हर्षादीनां नमस्कारस्य च स्थानं त्वमर्हो विषय इत्यर्थः हे अनन्त! देवेश! हे जगन्निवास! त्वमक्षरं तत्परं यद्वेदान्तेषु श्रूयते किं तत् सदसत् यत् विद्यमानं तत् सत् असच्च यत् नास्तीति बुद्धिस्ते उपधानभूते सदसती यस्याक्षरस्य यद्‌द्वारेण सदसदित्युपचर्य्यते परमार्थतस्तु सदसतः परं तत् यदक्षरं वेदविदो वदन्ति तत्त्वमेव नान्यदित्यभिप्रायः ॥ ३७ ॥

आ॰ टी॰। उक्तोऽर्थे हेत्वर्थत्वेनोत्तरश्लोकमवतारयति भगवत इति। महात्मत्वमहद्‌चेतस्त्वम्। गुरुतरत्वान्नमस्कारादियोग्यत्वमाह गुरुतरायेति। तत्रैव हेत्वन्तरमाह यत इति। महात्मत्वादिहेतूनामुक्तानां फलमाह अत इति। तत्रैव हेत्वन्तराणि सूचयति हे अनन्तेति। अनवच्छिन्नत्वं सर्वदेवनियन्तृत्वं सर्वजगदाश्रयत्वञ्च तव नमस्कारादियोग्यत्वे कारणमित्यर्थः। तत्रैव हेत्वन्तरमाह त्वमिति। तत्र मानमाह यदिति। कथमेकस्यैव सदसद्रूपत्वं तत्राह ते इति। कथं सतोऽसतश्चाक्षरं प्रत्युपाधित्वं तदाह यद्द्वारेणेति। तत् परं यदित्येतद्‌व्याचष्टे परमार्थतस्त्विति। अनन्तत्वादिना भगवतो नमस्कारादियोग्यत्वमुक्तम् ३७

स्वा॰ टी॰। तत्र हेतुमाह कस्मादिति। हे महात्मन्! हे अनन्त! हे देवेश! हे जगन्निवास! कस्माद्धेतोस्ते तुभ्यं न नमेरन् न नमस्कारं कुर्य्युः, कथंभूताय ब्रह्मणोऽपि गरीयसे गुरुतराय आदि-

कर्त्रे च ब्रह्मणोऽपि जनकाय, किञ्च सद्व्यक्तं असदव्यक्तञ्च ताभ्यां परं मूलकारणं यदक्षरं ब्रह्म तञ्च त्वमेव, एतैर्नवभिर्हेतुभिस्त्वां सर्वे नमस्यन्तीति न चित्रमित्यर्थः॥ ३७॥

**त्वमादिदेवः पुरुषः पुराण-**
**स्त्वमस्य विश्वस्य परं निधानम्।**
**वेत्तासि वेद्यञ्च परञ्च धाम**
**त्वया ततं विश्वमनन्तरूप!॥ ३८॥**

पुनरपि स्तौति त्वमिति। त्वमादिदेवो जगतः स्रष्टृत्वात् पुरुषः पुरि शयनात् पुराणश्चिरन्तनस्त्वमेवास्य विश्वस्य परं प्रकृष्टं निधानं निधीयतेऽस्मिन् जगत् सर्वं महाप्रलयादाविति किञ्च वेत्तासि वेदितासि सर्वस्यैव वेद्यजातस्य यच्च वेद्यं वेदनार्हं तच्चासि परञ्च धाम परमं पदं वैष्णवं त्वया ततं व्याप्तं विश्वं समस्तं हे अनन्तरूप! अन्तो न विद्यते तव रूपाणाम्॥ ३८॥

स्वा॰ टी॰। सम्प्रति जगत्स्रष्टृत्वादिनापि तद्योग्यत्वमस्तीति स्तुतिद्वारा दर्शयति पुनरपीति। जगतः द्रष्टा पुरुषो हिरण्यगर्भ इति पक्षं प्रत्याह पुराण इति। स्रष्टृत्वं निमित्तमेवेति तटस्थेश्वरवादिनस्तान् प्रत्युक्तं त्वमेवेति। महाप्रलयादावित्यादिपदमवान्तरप्रलयार्थम्। ईश्वरस्योभयथा कारणत्वं सर्वज्ञत्वेन साधयति किञ्चेति। वेद्यवेदितृभावेन अद्वैतानुपपत्तिमाशङ्क्याह यच्चेति। शुक्त्यालम्बनस्य ब्रह्मणोऽर्थान्तरत्वं आशङ्क्योक्तं परञ्चेति। यत् परमं पदं तदपि च त्वमेवेति सम्बन्धः। तस्य पूर्णत्वमाह त्वयेति। व्याप्यव्यापकत्वेन भेदं शङ्कित्वा कल्पितत्वात्तस्य नैवमित्याह अनन्तेति॥ ३८॥

स्वा॰ टी॰। किञ्च त्वमादिदेव इति। त्वं आदिदेवो देवाना-

मादिः यतः पुराणोऽनादिः पुरुषस्त्वं अतएव त्वमस्य विश्वस्य परं निधानं लयस्थानं, तथा विश्वस्य वेत्ता ज्ञाता त्वं यच्च वेद्यं वस्तुजातं परञ्च धाम वैष्णवं पदं तदपि त्वमेवासि अतएव हे अनन्तरूप! त्वयैवेदं विश्वं ततं व्याप्तं, एतैश्च सप्तभिर्हेतुभिस्त्वमेव नमस्कार्य्य इत्यर्थः ॥३८॥

**वायुर्यमोऽग्निर्वरुणः शशाङ्कः**
**प्रजापतिस्त्वं प्रपितामहश्च।**
**नमो नमस्तेऽस्तु सहस्रकृत्वः**
**पुनश्च भूयोऽपि नमो नमस्ते ॥ ३९ ॥**

किञ्च वायुरिति। वायुस्त्वं यमश्चाग्निर्वरुणोऽपां पतिः शशाङ्कश्चन्द्रमाः प्रजापतिस्त्वं कश्यपादिः प्रपितामहश्च पितामहस्यापि पिता प्रपितामहो ब्रह्मणोऽपि पिता इत्यर्थः नमो नमस्ते तुभ्यमस्तु सहस्रकृत्वः पुनश्च भूयोऽपि नमो नमस्ते बहुशो नमस्कारक्रियाभ्यासावृत्ति-गणनं कृत्वसुचोच्यते पुनश्च भूयोऽपीति श्रद्धाभक्त्यतिशयाद-परितोषमात्मनो दर्शयति ॥ ३९ ॥

व्या० टी०। तस्य सर्वात्मत्वे हेत्वन्तरमाह किञ्चेति। कश्यपादि-शब्देन विराड्दक्षादयो गृह्यन्ते। पितामहो ब्रह्मा तस्य पिता सूत्रा-त्मान्तर्यामी चेत्याह ब्रह्मणोऽपीति। सर्वदेवतास्त्वमेवेत्युक्ते फलितमाह नम इति। सहस्रकृत्व इति कृत्वसुचो विवक्षितमर्थमाह बहुश इति। पुनरुक्तितात्पर्य्यमाह पुनश्चेति। श्रद्धाभक्त्योरतिशयात् कृतेऽपि नमस्कारे परितोषाभावो बुद्धेरात्मनोऽलं प्रत्ययराहित्यं तद्दर्शनार्थं पुनरुक्ति-रित्यर्थः ॥ ३९ ॥

स्वा० टी०। इतश्च सर्वैस्त्वमेव नमस्कार्य्यः सर्वदेवात्मकत्वादिति सूचयन् स्वयमपि नमस्करोति वायुरिति। वाय्वादिरूपस्त्वमिति सर्व-

देवात्मकत्वोपलक्षणार्थमुक्तं प्रजापतिः पितामहस्तस्यापि जनकत्वात् प्रपितामहस्त्वं अतस्ते तुभ्यं सहस्रकृत्वः सहस्रशो नमोऽस्तु पुनः सहस्रकृत्वो नमोऽस्तु भूयोऽपि पुनरपि सहस्रकृत्वो नमो नम इति ॥३९॥

नमः पुरस्तादथ पृष्ठतस्ते
नमोऽस्तु ते सर्वत एव सर्व ! ।
अनन्तवीर्यामितविक्रमस्त्वं
सर्वं समाप्नोषि ततोऽसि सर्वः ॥ ४० ॥

तथा नमः पुरस्तादिति । नमः पुरस्तात् पूर्वस्यां दिशि तुभ्यमथ पृष्ठतोऽपि च नमोऽस्तु ते सर्वत एव सर्वासु दिक्षु सर्वत्र स्थिताय हे सर्व ! अनन्तवीर्य्यामितविक्रमः अनन्तं वीर्य्यमस्य अमितो विक्रमो यस्य वीर्य्यं सामर्थ्यं विक्रमः पराक्रमः वीर्य्यवानपि कश्चित् शस्त्रादिविषये न पराक्रमते मन्दपराक्रमो वा त्वं तु अनन्तवीर्य्योऽमितविक्रमश्चेत्यनन्तवीर्य्यामितविक्रमः सर्वं समस्तं जगत् समाप्नोषि सम्यगेकेनात्मना व्याप्नोषि अतस्तस्मादसि भवसि सर्वस्त्वया विनाभूतं न किञ्चिदस्तीत्यर्थः ॥ ४० ॥

आ° टी° । विद्यान्तरेण भगवन्तं स्तुत्वा नमस्कुर्वन्नभिमुखीकरोति तथेति । यस्यां दिशि सवितोदेति सा पूर्वा दिगुच्यते तस्यां व्यवस्थितं सर्वं त्वमेव तस्मै ते तुभ्यं नमोऽस्त्वित्याह नम इति । अथशब्दः समुच्चये । पश्चादपि स्थितं सर्वं त्वमेव तस्मै ते तुभ्यं नमोऽस्त्वित्याह अथेति । किं बहुना यावन्तो दिशस्तत्र सर्वत्र यद्वर्त्तते तदशेषं त्वमेव तस्मै तुभ्यं प्रह्वीभावः स्यादित्याह नमोऽस्त्विति । फलितं सर्वात्मत्वं सूचयति हे सर्वेति । वीर्य्यविक्रमयोर्न पौनरुक्त्यमित्याह वीर्य्यमित्यादिना । वीर्य्यवतो विक्रमाव्यभिचारादर्थपौनरुक्त्यमाशङ्क्याह वीर्य्यवा-

निति। भगवति श्लोकतो विशेषमाह त्वं त्विति। उक्तं सर्वात्मत्वं प्रप ञ्चयति सर्वमिति। समपञ्चत्वं व्याप्तवानसि त्वयेति॥ ४०॥

स्वा॰ टी॰। भक्तिश्रद्धाद्यादरातिशयेन नमस्कारेषु तृप्तिमनधिगच्छन् पुनरपि बहुशः प्रणमति नम इति। हे सर्वसर्वात्मन्! सर्वोः दिक्षु तुभ्यं नमोऽस्तु, सर्वात्मत्वमुपपादयन्नाह अनन्तं वीर्यं सामर्थ्यं यस्य तथा अमितो विक्रमः पराक्रमो यस्य स एवंभूतस्त्वं सर्वं विश्वं सम्यग न्तर्बहिश्च समाप्नोषि व्याप्नोषि सुवर्णमिव कनककुण्डलादि स्वकार्यं व्याप्य वर्त्तसे ततः सर्वस्वरूपोऽसि॥ ४०॥

सखेति मत्वा प्रसभं यदुक्तं
हे कृष्ण! हे यादव! हे सखेति।
अजानता महिमानं तवेदं
मया प्रमादात् प्रणयेन वापि॥ ४१॥

यतोऽहं त्वन्माहात्म्यापरिज्ञानादपराधाद्भीतः सखेति सखा समानवया इति मत्वा ज्ञात्वा विपरीतबुद्ध्या प्रसभमभिभूय प्रसह्य यदुक्तं हे कृष्ण! हे यादव! हे सखेति च अजानता अज्ञानिना मूढेन किमजानतेत्याह महिमानं माहात्म्यं तदेवमीश्वरस्य विश्वरूपं तवेदं महिमानमजानतेति वैयधिकरण्येन सम्बन्धस्तवेममिति पाठो यद्यस्ति तदा सामानाधिकरण्यमेव मया प्रमादात् विक्षिप्तचित्ततया प्रणयेन वापि प्रणयो नाम स्नेहस्तन्निमित्तो विश्रम्भस्तेनापि कारणेन यदुक्तवानस्मि॥४१

स्वा॰ टी॰। अज्ञाननिमित्तमपराधं क्षमयति यत इति। इदं शब्दार्थमाह विश्वरूपमिति। न चेदमित्यस्य महिमानमित्यस्य च सामानाधिकरण्यं लिङ्गव्यत्ययादित्याह तवेति। पाठान्तरसम्भावनायां सा-

सामानाधिकरण्योपपत्तिमाह तवेत्यादिना । यदुक्तवानस्मि तदहं क्षामये त्वामिति सम्बन्धः ॥ ४१ ॥

श्रा॰ टी॰ । इदानीं भगवन्तं क्षमापयति सखेति द्वाभ्याम् । त्वां प्राकृतः सखेत्येवं मत्वा प्रसभं हठात् तिरस्कारेण यदुक्तं तत्क्षामये त्वामित्युत्तरेणान्वयः, किं तत्, हे कृष्ण ! हे यादव ! हे सखेति च सम्बोधनार्थः । प्रसभोक्तौ हेतुः तव महिमानमिदञ्च विश्वरूपमजानता मया प्रमादात् प्रणयेन स्नेहेन वा यदुक्तमिति ॥ ४१ ॥

यच्चावहासार्थमसत्कृतोऽसि
विहारशय्यासनभोजनेषु ।
एकोऽथवाप्यच्युत ! तत्समक्षं
तत् क्षामये त्वामहमप्रमेयम् ॥ ४२ ॥

यच्चेति । यच्च अवहासार्थं परिहासप्रयोजनाय असत्कृतः परिभूतोऽसि भवसि क्व च विहारशय्यासनभोजनेषु विहरणं विहारः पादव्यायामः शयनं शय्या आसनं आस्थायिका भोजनमदनमित्येतेषु विहारशय्यासनभोजनेषु एकः परोक्षः सन् असत्कृतोऽसि परिभूतोऽसि अथवा हे अच्युत । तत्समक्षं तच्छब्दः क्रियाविशेषणार्थः प्रत्यक्षं वा असत्कृतोऽसि तत्सर्वमपराधजातं क्षामये क्षमां कारये त्वामहमप्रमेयं प्रमाणातीतं यतस्त्वम् ॥ ४२ ॥

श्रा॰ टी॰ । यदयुक्तमुक्तं तत् क्षन्तव्यमित्येव न किन्तु यत्परीहासार्थं क्रीडादिषु त्वयि तिरस्करणं कृतं तदपि सोढ़व्यमित्याह यच्चेति । विहरणं क्रीड़ा व्यायामो वा शयनं तल्पादिकं आसनं आस्थायिका सिंहासनादेरुपलक्षणमेतेषु विषयभूतेष्विति यावत् । एकशब्दो रहसि स्थितमे-

कालिकं कथयतीत्याह परोक्षः सन्निति। प्रत्यक्षं परोक्षं वा तदसत्करणं परिभवनं यथा स्यात्तथा यन्मया त्वमसत्कृतोऽसि तत् सर्वमिति योजना- मङ्गीकृत्याह तत्क्षमे इति। क्षमाकारयितव्ये त्वत्वापरिमितत्वं हेतुमाह अप्रमेयमिति। वाचनिकं मदीयमपराधजातं त्वया क्षन्तव्यमित्युक्तं इदानीं मदीयोऽपराधो न त्वया गृहीतव्यो गृहीतोऽपि सोढव्य इत्याह यत इति ॥ ४२ ॥

स्वा॰ टी॰। किञ्च यच्चेति। हे अच्युत! यच्च परिहासार्थं क्रीड़ादिषु तिरस्कृतोऽसि एकः केवलः सखीन् विना रहसि स्थित इत्यर्थः अथवा तत्समक्षं तेषां परिहसतां सखीनां समक्षं पुरतोऽपि तत्सर्वमपराधजातं त्वामप्रमेयं अचिन्त्यप्रभावं क्षामये क्षमां कारयामि ॥ ४२ ॥

**पितासि लोकस्य चराचरस्य**
**त्वमस्य पूज्यश्च गुरुर्गरीयान्।**
**न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो**
**लोकत्रयेऽप्यप्रतिमप्रभाव! ॥ ४३ ॥**

पितासीति। पितासि जनयितासि लोकस्य प्राणिजातस्य चराचरस्य स्थावरजङ्गमस्य न केवलं त्वमस्य जगतः पिता पूज्यश्च पूजार्हो यतो गुरुर्गरीयान् गुरुतरः कस्माद्गुरुतरस्त्वमित्याह न च त्वत्समस्त्वत्तुल्योऽन्योऽस्ति न हीश्वरादरं सम्भवत्यनेकेश्वरत्वव्यवहारानुपपत्तेः त्वत्सम एव तावदन्यो न सम्भवति कुत एवान्योऽभ्यधिकः स्यात् कस्माल्लोकत्रयेऽपि सर्वस्मिन्नप्रतिमप्रभाव! प्रतिमीयते यया सा प्रतिमा न विद्यते प्रतिमा यस्य तव प्रभावस्य स त्वमप्रतिमप्रभावः हे अप्रतिमप्रभाव! निरतिशयप्रभाव! इत्यर्थः ॥ ४३ ॥

आ॰ टी॰ । गुणाधिक्यात् पूजार्हत्वं धर्मब्रह्मज्ञानसंप्रदायप्रवर्तकत्वेन शिक्षयितृत्वात् गुरुत्वं गुरूणामपि ब्रह्मादीनां गुरुत्वाद्गरीयस्त्वं तदेव प्रश्नद्वारा साधयति कस्मादिति । ईश्वरान्तरं तुल्यं भविष्यतीत्याशङ्क्याह न हीति । ईश्वरभेदे प्रत्येकं स्वातन्त्र्यात्तदैकमत्ये हेत्वभावान्नानामतित्वे चैकस्य सिसृक्षायामन्यस्य संजिहीर्षासम्भवादव्यवहारलोपादयुक्तमीश्वरनानात्वमित्यर्थः । अभ्यधिकासत्त्वं कैमुतिकन्यायेन दर्शयति त्वत्सम इति । तत्र हेतुमप्रतार्थं व्याकरोति अप्रतिमेत्यादिना ॥ ४३ ॥

स्वा॰ टी॰ । अचिन्त्यप्रभावत्वमेवाह पितेति । न विद्यते प्रतिमा उपमा यस्य सोऽप्रतिमस्तथाविधः प्रभावो यस्य हे अप्रतिमप्रभाव ! त्वमस्य चराचरस्य लोकस्य पिता जनकोऽसि अतएव पूज्यश्च गुरुश्च गुरोरपि गरीयांश्च गुरुतरः यतो लोकत्रयेऽपि त्वत्सम एव तावदन्यो नास्ति परमेश्वरान्तरस्याभावात् त्वत्तोऽधिकः पुनः कुतः स्यात् ॥ ४३ ॥

**तस्मात् प्रणम्य प्रणिधाय कायं**
**प्रसादये त्वामहमीशमीड्यम् ।**
**पितेव पुत्त्रस्य सखेव सख्युः**
**प्रियः प्रियायार्हसि देव! सोढुम् ॥ ४४ ॥**

यत एवं तस्मादिति । तस्मात् प्रणम्य नमस्कृत्य प्रणिधाय प्रकर्षेण नीचैर्धृत्वा कायं शरीरं प्रसादये प्रसादं कारये त्वामहमीशमीशितारमीड्यं स्तुत्यं त्वं पुनः पुत्रस्यापराधं पिता यथा क्षमते सर्वं सखा इव सख्युरपराधं यथा वा प्रियः प्रियाया अपराधं क्षमते एवमर्हसि हे देव ! सोढुं प्रसहितुं क्षन्तुमित्यर्थः ॥ ४४ ॥

आ॰ टी॰ । निरतिशयप्रभावत्वं हेतुं कृत्वाप्रतिमेत्यादिना प्रसादये प्रणामपूर्वकं त्वामित्याह यत इति । प्रसादनानन्तरं भगवता

कर्त्तव्यं प्रार्थयते त्वं पुनरिति। प्रिय इव प्रियाया इत्यत्रेवकारोऽनुषज्यते प्रियायार्हसीति छान्दसः सन्धिः क्षन्तुं मदपराधजातमिति शेषः ॥४४॥

स्वा० टी०। यस्मादेवं तस्मादिति। तस्मात्त्वामीशं जगत ईड्यं स्तुत्यं प्रसादयामि, कथं कायं प्रणिधाय दण्डवन्निपात्य प्रणम्य प्रकर्षेण नत्वा, अतस्त्वं ममापराधं सोढुं क्षन्तुमर्हसि, कस्य क इव पुत्रस्यापराधं कृपया पिता यथा सहते, सख्युर्मित्रस्यापराधं सखा निरुपाधिबन्धुर्यथा सहते, प्रियश्च प्रियस्यापराधं तत्प्रियार्थं यथा सहते ॥ ४४ ॥

**अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा**
**भयेन च प्रव्यथितं मनो मे।**
**तदेव मे दर्शय देव! रूपं**
**प्रसीद देवेश! जगन्निवास! ॥ ४५ ॥**

अदृष्टपूर्वमिति। अदृष्टपूर्वं न कदाचिदपि दृष्टपूर्वमिदं विश्वरूपं तव मयान्यैर्वा तदहं दृष्ट्वा हृषितोऽस्मि भयेन च प्रव्यथितं मनो मेऽतस्तदेव मे मम दर्शय हे देव! रूपं यस्मात्सुखं प्रसीद देवेश! जगन्निवास! जगतो निवासो जगन्निवासः हे जगन्निवास! ॥ ४५ ॥

आ० टी०। हेतूक्तिपूर्वकं विश्वरूपोपसंहारं प्रार्थयते अदृष्टेति। हृषितो हृष्टस्तुष्ट इति यावत्, भयेन तद्वेतुविकृतदर्शनेनेत्यर्थः ॥ ४५ ॥

स्वा० टी०। एवं क्षमयित्वा प्रार्थयते अदृष्टेति द्वाभ्याम्। हे देव! पूर्वमदृष्टं तव रूपं दृष्ट्वा हृषितो हृष्टोऽस्मि तथा भयेन च मनः प्रव्यथितं प्रचलितं तस्मान्मम व्यथानिवृत्तये तदेव रूपं दर्शय हे देवेश! हे जगन्निवास! प्रसन्नो भव ॥ ४५ ॥

**किरीटिनं गदिनं चक्रहस्त-**
**मिच्छामि त्वां द्रष्टुमहं तथैव।**

तेनैव रूपेण चतुर्भुजेन
सहस्रबाहो ! भव विश्वमूर्त्ते ! ॥ ४६ ॥

किञ्च किरीटिनमिति । किरीटिनं किरीटवन्तं तथा गदिनं गदावन्तं चक्रहस्तमिच्छामि त्वां प्रार्थये त्वां द्रष्टुमहं तथैव पूर्ववदित्यर्थः यत एवं तस्मात् तेनैव रूपेण वसुदेवपुत्ररूपेण चतुर्भुजेन सहस्रबाहो वार्त्तमानिकेन विश्वरूपेण भव विश्वमूर्त्ते उपसंहृत्य विश्वरूपं तेनैव रूपेण वसुदेवपुत्ररूपेण भवेत्यर्थः ॥ ४६ ॥

व्या० टी०। तदेव दर्शयेत्युक्तं किं तदित्यपेक्षायामाह किरीटिनमितीति । चक्रं हस्ते यस्य तमिति व्युत्पत्तिं स्पष्टीस्याह चक्रेति । मदीयेच्छाफलपर्य्यन्ता कर्त्तव्येत्याह यत इति । चतुर्भुजत्वे कथं सहस्रबाहुत्वं तत्राह वार्त्तमानिकेनेति । सति विश्वरूपे कथं पूर्वरूपभाक्त्वं तत्राह उपसंहृत्येति ॥ ४६ ॥

स्वा० टी० । तदेव रूपं विशेषयन्नाह किरीटिनमिति । किरीटवन्तं गदावन्तं चक्रहस्तञ्च त्वां द्रष्टुमिच्छामि यथा पूर्वं दृष्टोऽसि तथैव अतः हे सहस्रबाहो ! हे विश्वमूर्त्ते ! इदं विश्वरूपं उपसंहृत्य तेनैव किरीटादियुक्तेन चतुर्भुजेन रूपेण भव आविर्भव, तदनेन श्रीकृष्णमर्जुनः पूर्वमपि किरीटादियुक्तमेव पश्यतीति गम्यते, यत्तु पूर्वमुक्तं विश्वरूपदर्शने किरीटिनं गदिनं चक्रिणञ्च पश्यामीति तद्वस्तुकिरीटाद्यभिप्रायेण, यद्वा एतावन्तं कालं यं त्वां किरीटिनं गदिनं चक्रिणञ्च सुप्रसन्नमपश्यं तमेवेदानीं तेजोराशिं दुर्निरीक्ष्यं पश्यामीत्येवमस्य वचनस्य व्यक्तिरित्यविरोधः ॥ ४६ ॥

श्रीभगवानुवाच ।

मया प्रसन्नेन तवार्जुनेदं
रूपं परं दर्शितमात्मयोगम् ।

तेजोमयं विश्वमनन्तमाद्यं
यन्मे त्वदन्येन न दृष्टपूर्वम् ॥ ४७ ॥

अर्जुनं भीतमुपलभ्य उपसंहृत्य विश्वरूपं प्रियवचने-नाश्वासयन् श्रीभगवान् मयेति। मया प्रसन्नेन प्रसादो नाम त्वय्यनुग्रहबुद्धिस्तद्वता प्रसन्नेन मया तव हे अर्जुन ! इदं परं रूपं विश्वरूपं दर्शितमात्मयोगात् आत्मन ऐश्वर्य्यस्य सामर्थ्यात्तेजोमयं तेजःप्रायं विश्वं समस्तमनन्तं अन्तरहितं आदौ भवमाद्यं यद्रूपं मे मम त्वदन्येन त्वत्तोऽन्येन केनचिन्न दृष्टपूर्वम् ॥ ४७ ॥

आ० टी० । अर्जुनेन स्थाने हृषीकेशेत्यादिनोक्तस्य भगवतो वचन मवतारयति अर्जुनमिति । भगवत्प्रसादैकोपायलभ्यं तद्दर्शनमित्याशये-नाह मयेति ॥ ४७ ॥

स्वा० टी० । एवं प्रार्थितः संत्रस्तमाश्वासयन् श्रीभगवानुवाच मयेति त्रिभिः । हे अर्जुन ! किमिति त्वं बिभेषि यतो मया प्रसन्नेन कृपया तवेदं परमुत्तमं रूपं दर्शितं आत्मनो मम योगात् योगमायासामर्थ्यात्, परत्वमेवाह तेजोमयं विश्वात्मकमनन्तमाद्यञ्च यन्मम रूपं त्वदन्येन त्वादृशाद्भक्तादन्येन पूर्वं न दृष्टम् ॥ ४७ ॥

न वेदयज्ञाध्ययनैर्न दानै-
र्न च क्रियाभिर्न तपोभिरुग्रैः ।
एवंरूपः शक्योऽहं नृलोके
द्रष्टुं त्वदन्येन कुरुप्रवीर ! ॥ ४८ ॥

आत्मनो मम रूपदर्शनेन कृतार्थ एव त्वं संहृत इति ततः स्तौति नेति। न वेदयज्ञाध्ययनैर्न दानैस्तुला-

मपि वेदानामध्ययनैर्यथावत् यज्ञाध्ययनैश्च वेदाध्ययनैरेव यज्ञाध्ययनस्य सिद्धत्वात् पृथक् यज्ञाध्ययनग्रहणं यज्ञविज्ञानोपलक्षणार्थं तथा न दानैः तुलापुरुषादिभिर्न च क्रियाभिरग्निहोत्रादिभिः श्रौतादिभिर्नापि तपोभिरुग्रैश्चान्द्रायणादिभिरुग्रैर्घोरैः एवं रूपो यथा दर्शितं विश्वरूपं यस्य सोऽहमेवंरूपः शक्यो न शक्यः अहं नृलोके मनुष्यलोके द्रष्टुं त्वदन्येन कुरुप्रवीर ! ॥ ४८ ॥

आ० टी० । तच्छब्देन प्रकृतं दर्शनं परामृश्यते वेदाध्ययनात् पृथक् यज्ञाध्ययनग्रहणं पुनरुक्तं रयुक्तमित्याशङ्क्याह न वेदेति । न च वेदाध्ययनग्रहणादेव यज्ञविज्ञानमपि गृहीतमध्ययनस्यार्थावबोधान्तत्वादिति वाच्य तस्यान्तरग्रहणान्ततया शब्दैः साधितत्वादिति भावः । श्लोकपूरणार्थमसंहितकरणं त्वत्तोऽन्येन मदनुग्रहविहीनेनेति शेषः ॥ ४८ ॥

स्वा० टी० । एतद्दर्शनमतिदुर्लभं लब्ध्वा त्वं कृतार्थोऽसीत्याह न वेदेति । वेदाध्ययनव्यतिरेकेण यज्ञाध्ययनस्याभावात् यज्ञशब्देन यज्ञविद्याः कल्पसूत्रादयो लक्ष्यन्ते वेदानां यज्ञविद्यानाञ्चाध्ययनैरित्यर्थः, न च दानैः न च क्रियाभिरग्निहोत्रादिभिर्न चोग्रैस्तपोभिश्चान्द्रायणादिभिरेवंरूपोऽहं त्वत्तोऽन्येन मनुष्यलोके द्रष्टुं शक्यः अपि तु त्वमेव केवलं मत्प्रसादेन दृष्टा कृतार्थोऽसि ॥ ४८ ॥

मा ते व्यथा मा च विमूढभावो
दृष्ट्वा रूपं घोरमीदृङ्ममेदम् ।
व्यपेतभीः प्रीतमनाः पुनस्त्वं
तदेव मे रूपमिदं प्रपश्य ॥ ४९ ॥

मा ते व्यथेति । मा ते व्यथा माभूत्ते भयं मा च विमूढभावो विमूढचित्तता दृष्ट्वोपलभ्य रूपं घोरमीदृक्

यथावद्दर्शितं ममेदं व्यपेतभीर्विगतभयः प्रीतमनाश्च सन् पुनर्भूयस्त्वं तदेव चतुर्भुज रूपं शङ्खचक्रगदाधरं तवेष्टं रूपमिदं प्रपश्य ॥ ४९ ॥

आ० टी० । विश्वरूपदर्शनमेव स्तुत्वा यद्यस्माद् दृश्यमानाद्रूपाद्बिभेषि तर्हि तदुपसंहरामीत्याह मा ते व्यथेति । चक्रादिमच्चतुर्भुजत्वमभिप्रेत्य तदेवेत्युक्तं रूपमिति ॥ ४९ ॥

स्वा० टी० । एवमपि चेत्तवेदं घोरं रूपं दृष्ट्वा व्यथा भवति तर्हि तदेव रूपं दर्शयामीत्याह मा ते इति । ईदृक् ईदृशं घोरं मदीयं रूपं दृष्ट्वा ते व्यथा मास्तु विमूढभावो विमूढत्वञ्च मास्तु विगतभयः प्रीतमनाश्च सन् पुनस्त्वं तदेवेदं मम रूप प्रकर्षेण पश्य ॥ ४९ ॥

सञ्जय उवाच ।

इत्यर्जुनं वासुदेवस्तथोक्त्वा
स्वकं रूपं दर्शयामास भूयः ।
आश्वासयामास च भीतमेनं
भूत्वा पुनः सौम्यवपुर्महात्मा ॥ ५० ॥

इत्यर्जुनमिति । इत्येवमर्जुनं प्रति वासुदेवस्तथाभूतं वचनं उक्त्वा स्वकं वसुदेवगृहे जातं रूपं दर्शयामास दर्शितवान् भूयः पुनराश्वासयामास चाश्वासितवान् भीतमेनं भूत्वा पुनः सौम्यवपुः प्रसन्नदेहो महात्मा ॥ ५० ॥

आ० टी० । प्रत्ययोग्यत्वं तदिदं वृत्तं राज्ञे सूतो निवेदितवानित्याह सञ्जय इति । तथाभूतं वचनं यथा प्रसन्नेनेत्यादिचतुर्भुजं रूपं किं तस्य रूपस्य परिचितपूर्वस्य प्रदर्शनेन प्रसन्नदेहत्वेन चार्जुनं प्रत्याश्वासन भगवतो युक्तमित्यत्र हेतुमाह महात्मेति ॥ ५० ॥

स्वा० टी० । एवमुक्त्वा प्राक्तनमेव रूपं दर्शितवानिति सञ्जय उवाच

इतीति । वासुदेवोऽर्जुनमित्युक्त्वा यथापूर्वमासीत्तथैव किरीटगदादि-युक्तं चतुर्भुजं स्वीयं रूपं पुनर्दर्शयामास, एवमर्जुनं भीतमेवं प्रसन्न-वपुर्भूत्वा पुनरप्याश्वासितवान् महात्मा विश्वरूपः कृपालुरिति वा ॥५०॥

## अर्जुन उवाच ।

**दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ।**
**इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥५१॥**

दृष्ट्वेदमिति । दृष्ट्वेदं मानुषं रूपं मत्सुखं प्रसन्नं भव सौम्यं जनार्दनेत्यर्दतेर्गतिकर्म्मणोऽसुराणां देवप्रतिपक्षजनानां प्राणवियोगजनरकाद्यर्थप्रयोजनं सर्वैर्जनैर्याच्यत इति वा गमयितृत्वाच्च जनार्दनः अभ्युदयनिःश्रेयसपुरुषार्थाय इदानीमधुनास्मि संवृत्तः सञ्जातः किं सचेताः प्रसन्नचित्तः प्रकृतिं स्वभावं गतश्चास्मि ॥ ५१ ॥

व्या॰ टी॰ । एवं भगवदाश्वासितः सन्नर्जुनस्तं प्रत्युक्तवानित्याह अर्जुन इति ॥ ५१ ॥

स्वा॰ टी॰ । ततो निर्भयः सन्नर्जुन उवाच दृष्ट्वेदमिति । सचेताः प्रसन्नचित्त इदानीं संवृत्तो जातोऽस्मि प्रकृतिं स्वास्थ्यञ्च प्राप्तोऽस्मि, शेषं स्पष्टम् ॥ ५१ ॥

## श्रीभगवानुवाच ।

**सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।**
**देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ॥५२॥**

सुदुर्दर्शमिति । सुदुर्दर्शं सुष्ठु दुःखेन दर्शनमस्येति सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम देवादयोऽप्यस्य मम रूपस्य नित्यं सर्वदा दर्शनकाङ्क्षिणो दर्शनेप्सवोऽपि न त्वमिव दृष्टवन्तो न द्रक्ष्यन्ति चेत्यभिप्रायः ॥ ५२ ॥

श्रा॰ टी॰ । उपास्यत्वाय विश्वरूपं स्तौति भगवद्भक्तिं अत्यायर्थति भगवानिति । त्वद्व्यतिरिक्तानामिदं रूपं द्रष्टुमशक्यमित्येतद्विशदयति देवादय इति ॥ ५२ ॥

स्वा॰ टी॰ । स्वकृतस्यानुग्रहस्यातिदुर्लभत्वं दर्शयन् श्रीभगवानुवाच सुदुर्दर्शमिति । यन्मम विश्वरूपं दृष्टवानसि इदं सुदुर्दर्शमत्यन्तं द्रष्टुमशक्यं अतो देवा अप्यस्य रूपस्य नित्यं सर्वदा दर्शनमिच्छन्ति केवलं न पुनरिदं पश्यन्ति ॥ ५२ ॥

**नाहं वेदैर्न तपसा न दानेन न चेज्यया ।**
**शक्य एवंविधो द्रष्टुं दृष्टवानसि यन्मम ॥५३॥**

कस्मात् नाहमिति । नाहं वेदैः ऋग्यजुःसामाथर्ववेदैश्चतुर्भिरपि न तपसोग्रेण चान्द्रायणादिना न दानेन गोभूहिरण्यादिना न चेज्यया यज्ञेन पूजया वा शक्य एवं विधो यथादर्शितप्रकारो द्रष्टुमन्यैरशक्यो दृष्टवानसि मां यथा त्वम ॥ ५३ ॥

श्रा॰ टी॰ । दर्शनोपायाभावात् दुर्दर्शत्वमिति शङ्कते कस्मादिति । वेदादिषूपायेषु सत्स्वपि भगवानुक्तरूपो न शक्यो द्रष्टुमित्याह नाहमिति । तर्हि दर्शनायोग्यत्वात् द्रष्टुमशक्यत्वमित्याशङ्क्याह दृष्टवानिति ॥ ५३ ॥

स्वा॰ टी॰ । तत्र हेतुमाह नाहमिति । स्पष्टार्थम् ॥ ५३ ॥

**भक्त्या त्वनन्यया शक्यो ह्यहमेवंविधोऽर्जुन ! ।**
**ज्ञातुं द्रष्टुञ्च तत्त्वेन प्रवेष्टुञ्च परन्तप ! ॥५४॥**

कथं पुनः शक्य इत्युच्यते भक्त्येति । भक्त्या तु किं विशिष्टयेत्याह अनन्यया अपृथग्भूतया भगवतोऽन्यत्र पृथक् न कदाचिदपि भवति सा त्वनन्या भक्तिः सर्वैरपि करणैर्वासुदेवादन्यन्न लभ्यते यया सानन्या भक्तिस्तया शक्योऽह-

मेवंविधो विश्वरूपप्रकारो हे अर्ज्जुन! ज्ञातुं शास्त्रतो न केवलं ज्ञातुं शास्त्रतो द्रष्टुञ्च साक्षात् कर्त्तुं तत्त्वेन तत्त्वतः प्रवेष्टुञ्च मोक्षञ्च गन्तुं परन्तप! ॥ ५४ ॥

श्रा० टी०। केनोपायेन तर्हि द्रष्टुं शक्यो भगवानिति पृच्छति कर्थामति। शास्त्रीयज्ञानद्वारा तद्दर्शनं सफलं सिध्यतीत्याह इच्यत इति। न भक्तिमात्रं तत्र हेतुरिति तुशब्दार्थं स्फुटयति किमित्यादिना। अनन्यभक्तिमेव व्यनक्ति सर्वैरिति ॥ ५४ ॥

म्या० टी०। तर्हि केनोपायेन द्रष्टुं शक्यसे तत्राह भक्त्या त्विति। अनन्यया मदेकनिष्ठया भक्त्या तु एवंभूतो विश्वरूपोऽहं तत्त्वेन परमार्थतो ज्ञातुं शक्यः शास्त्रतो द्रष्टुं प्रत्यक्षतः प्रवेष्टुञ्च तादात्म्येन शक्यो नान्यैरुपायैः ॥ ५४ ॥

मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव! ॥५५॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां
वैयासिक्यां भीष्मपर्वणि श्रीभगवद्गीतासूप-
निषत्सु ब्रह्मविद्यायां योगशास्त्रे श्री-
कृष्णार्जुनसंवादे विश्वरूपदर्शनो
नामैकादशोऽध्यायः।

अधुना सर्वस्य गीताशास्त्रस्य सारभूतोऽर्थो निःश्रेयसार्थोऽनुष्ठेयत्वेन समुच्चित्योच्यते मत्कर्मकृदिति। मत्कर्म्म कृन्मदर्थं कर्म्म मत्कर्म्म तत् करोतीति मत्कर्म्मकृत् मत्परमः करोति भृत्यः स्वामिकर्म न त्वात्मनः परमा प्रेत्य गन्तव्या गतिरिति स्वामिनं प्रतिपद्यते अयन्तु मत्कर्म

युगपत् स्यातां क्रमेण वा युगपत्तावद्विरोधान्न सम्भवतः स्थितिगती इवैकस्मिन् क्रमभावित्वे च निर्निमित्तत्वे निर्मोक्षप्रसङ्गोऽन्यनिमित्तत्वे च स्वतोभावादपरमार्थत्वप्रसङ्गस्तथा च सत्यभ्युपगमहानिः किञ्च बन्धमुक्तावस्थयोः पौर्वापर्य्यनिरूपणायां बन्धावस्थापूर्वं प्रकल्प्य अनादिमत्यन्तवती च तच्च प्रमाणविरुद्धं तथा मोक्षावस्थासादिमत्यनन्तवती च

---

शङ्कते नन्विति। विद्यावस्थायामविद्यावस्थायां वा शास्त्रानर्थक्यमिति विकल्प्याद्यं प्रत्याह न सर्वैरिति। विदुषो मुक्तस्य संसारतदाधारत्वयोरभावस्य सर्ववादिसम्मतत्वात्तत्र शास्त्रानर्थक्यादि चोद्यं मयैव न प्रतिविधेयमित्यर्थः। संप्रहव कथं विद्वानिति सर्वैरिति। अभिप्रायाज्ञानात् प्रश्ने स्वाभिप्रायमाह कथमित्यादिना। तर्हि मुक्तान् प्रति विधिशास्त्रस्याध्यक्षादेश्चानर्थक्यमित्याशङ्क्याह न चेति। न हि व्यवहारातीतेषु तेषु गुणदोषाशङ्केत्यर्थः। द्वैतिनां मते मुक्तात्मस्विवात्मत्वेऽपि क्लेशसम्बन्धित्वे तं प्रति च शास्त्राद्यानर्थक्यं विद्यावस्थायामास्थितमिति फलितमाह तथेति। द्वितीयं दूषयति अविद्येति तदेव दृष्टान्तेन विद्वानिति यथेति। एवमद्वैतिनामपि विद्योदयात् प्रागर्थवत्त्वं शास्त्रादेरिति शेषः द्वैतिभिरद्वैतिनाञ्च साम्यमिति शङ्कते नन्विति। अवस्थयोर्वस्तुत्वे तन्मते शास्त्राद्यर्थवत्त्वे फलितमाह अत इति। सिद्धान्ते तु नावस्थयोर्वस्तुतेति वैषम्यमाह अद्वैतिनामिति। व्यवहारिकं द्वैतं तत्तन्मतेऽपि स्वीकृतमित्याशङ्क्याह अविद्येति। कल्पितद्वैतेन व्यवहाराच्च तस्य वस्तुतेत्यर्थः। बन्धावस्थायाः वस्तुत्वाभावे दोषान्तरमाह बन्धेति। आत्मनस्तत्त्वतोऽवस्थाभेदो द्वैतिनामपि नास्तीति परिहरति नेति। अनुपपत्तिं दर्शयितुं विकल्पयति यदीति। तत्राद्यं दूषयति युगपदिति। द्वितीयेऽपि क्रमभाविन्योरवस्थयोर्निर्निमित्तत्वं सनिमित्तत्वं वेति विकल्प्याद्ये सदा प्रसङ्गाद्बन्धमोक्षयोरव्यवस्था स्यादित्याह क्रमेति। कल्पान्तरं निरस्यति अन्येति। बन्धमोक्षावस्थे न परमार्थे अस्वाभाविकत्वात् स्फटिकलौहि-

तावत् प्रमाणविरुद्धैवाभ्युपगम्यते न चावस्थावतोऽवस्थान्तरं गच्छतो नित्यत्वमुपपादयितुं शक्यमथानित्यत्वदोषपरिहाराय बन्धमुक्तावस्थाभेदो न कल्पतेऽतोऽद्वैतिनामपि शास्त्रानर्थक्यदोषोऽपरिहार्य्य एवेति समानत्वान्नाद्वैतवादिना परिहर्त्तव्यो दोषः न च शास्त्रानर्थक्यं यथा प्रसिद्धाविद्वत्पुरुषविषयत्वात् शास्त्रस्य अविदुषां हि फलहेत्वोरनात्मनोरात्मदर्शनं न विदुषां विदुषां हि फलहेतुभ्यामात्मनोऽन्यत्वदर्शने सति तयोरहमित्यात्मदर्शनानुपपत्तेः

---

त्ववदिति स्थिते फलितमाह तथा चेति। अवस्थयोर्वस्तुतत्त्वोपगमादित्यर्थः। इतश्चावस्थयोर्न वस्तुत्वमित्याह किञ्चेति अवस्थयोर्वस्तुत्वमिच्छता तयोर्यौगपद्यायोगाद्धाव्ये क्रमे बन्धस्य पूर्वत्वं मुक्तेश्च पाश्चात्यमिति स्थिते बन्धस्यादित्वकृतं दोषमाह बन्धेति। तस्याश्चाकृताभ्यागमकृतविनाशनिवृत्तयेऽनादित्वमेष्टव्यमनन्तवत्त्वञ्च मुक्तमर्थमास्थेयं तच्च यदनादिभावरूपं तन्नित्यं यथात्मेति व्याप्तिविरुद्धमित्यर्थः। मोक्षस्य पाश्चात्यकृतं दोषमाह तथेति। सा हि ज्ञानादिसाध्यत्वादादिमती पुनरावृत्त्यनङ्गीकारादनन्ता च तच्च यदादिभावं रूपं तदन्तवद्यथा घटादीति व्याप्त्यन्तरविरुद्धमित्यर्थः। किञ्च क्रमभाविनीभ्यामवस्थाभ्यामात्मा सम्बध्यते न वा प्रथमे पूर्वावस्थया सम्बद्धोत्तरावस्थां गच्छति चेदुत्तरावस्थायामपि पूर्वावस्थावस्थानादनिर्मोक्षः यदि पूर्वावस्थां त्यक्त्वोत्तरावस्थां गच्छति तदापूर्वत्यागोत्तराश्रयोरात्मनः सातिशयत्वादनित्यत्वानुपपत्तिरित्याह न चेति। आत्मनोऽवस्थाद्वयसम्बन्धो नास्तीति द्वितीयमनूद्य दूषयति अथेत्यादिना। तर्हि पक्षद्वयेऽपि दोषाविशेषान्नाद्वैतमतानुरागे हेतुरित्याशङ्क्याविद्याविषये चेत्युक्तं विद्यणोति न चेति। तदेव स्फुटयति। अविदुषां हीति। फलं भोक्तृत्वं कर्तृत्वे हेतुः यद्वा फलं देहविशेषो हेतुरदृष्टं तयोरनात्मनो भोक्ताहं कर्त्ताहं मनुष्योऽहमित्यादावात्मदर्शनमधिकारकं तेनाविद्वद्विषयं

न ह्यत्यन्तमूढ उन्मत्तादिरपि जलाग्न्योः छायाप्रकाशयोर्वैकात्म्यं पश्यन्ति किमुत विवेकी तस्मान्न विधिप्रतिषेधशास्त्रं तावत् फलहेतुभ्यामात्मनोऽन्यत्वदर्शिनो भवति न हि देवदत्त ! त्वमिदं कुर्विति कस्मिंश्चित् कर्मणि नियुक्ते विष्णुमित्रोऽहं नियुक्त इति तत्रस्थो नियोगं शृण्वन्नपि प्रतिपद्यते नियोगविषयविवेकाग्रहणात्तूपपद्यते प्रतिपत्तिस्तथा फलहेत्वोरपि ननु प्राकृतसम्बन्धापेक्षया युक्तैवाप्रतिपत्तिः शास्त्रार्थविषयाफलहेतुभ्यामन्यात्मत्वदर्शनेऽपि

---

विधिनिषेधशास्त्रमित्यर्थः । विदुषामपि मनुष्योऽहमित्यादिव्यवहारात्तद्विषयं शास्त्रं किं न स्यादित्याशङ्क्याह नेति । भोक्तृत्वकर्तृत्वाभ्यां अशनायादिमतो देहधर्मेभ्य आत्मनोऽन्यत्वं पश्यतो न विधिनिषेधाधिकारित्वमुक्तफलादावात्मीयाभिमानाभावादित्यर्थः । आत्मनो देहादेरन्यत्वदर्शिनो न फलादावात्मधीरित्येतदुपपादयति न हीति । विदुषो न विधिनिषेधाधिकारितेत्युक्तमुपसंहरति तस्मादिति । शास्त्रस्याविद्वद्विषयत्वमिव विद्वद्विषयत्वमपि मन्तव्यमुभयोरपि शास्त्रश्रवणाविशेषादित्याशङ्क्याह न हीति । तत्रस्थो यस्मिन् देशे देवदत्तः स्थितस्तत्रैव वर्त्तमानः सन्नित्यर्थः । ननु देवदत्ते नियुक्ते विष्णुमित्रोऽपि कदाचिन्नियुक्तोऽस्मीति प्रतिपद्यते सत्यं नियोगविषयान्नियोज्यादात्मनो विवेकाग्रहणान्नियोज्यत्वभ्रान्तेरित्याह नियोगेति । अविवेकिनो नियोज्यधीर्भवतीति दृष्टान्तमुक्त्वा फले हेतौ चात्मदृष्टिविशिष्टस्याविदुषः सम्भवत्येव विधिनिषेधाधिकारित्वमेवं दार्ष्टान्तिकमाह तथेति । विधिनिषेधशास्त्रमविद्वद्विषयमिति वदता शास्त्रानर्थक्यं समाहितं सम्प्रति शास्त्रस्य विद्वद्विषयत्वेनैवार्थवत्त्वं शक्यसमर्थनमिति शङ्कते नन्विति । प्रकृतिरविद्या ततो जातो यो देहाद्यभिमानात्मा सम्बन्धो विद्योदयात् प्रागनुभूतस्तदपेक्षया विधिना प्रवर्त्तितो निषेधेन निवर्त्तितोऽस्मीति विधिनिषेध-

सति इष्टफलहेतोः प्रवर्त्तितोऽस्म्यनिष्टफलहेतोश्च निवर्त्तितोऽस्मीति यथा पितृपुत्रादीनामितरेतरात्मान्यत्वदर्शने सत्यप्यन्योन्यनियोगप्रतिषेधार्थप्रतिपत्तिर्न व्यतिरिक्तात्मदर्शनप्रतिपत्तेः प्रागेव फलहेत्वोरात्माभिमानस्य सिद्धत्वात् प्रतिपन्ननियोगप्रतिषेधार्थो हि फलहेतुभ्यामात्मनोऽन्यत्वं प्रतिपद्यते न पूर्वं तस्माद्विधिप्रतिषेधशास्त्रमविद्वद्विषयमिति सिद्धम्। ननु स्वर्गकामो यजेत कलञ्जं न भक्षयेदित्यादावात्मव्यतिरेकदर्शिनामप्रवृत्तौ केवलदेहाद्यात्मदृष्टी-

---

विषया सत्यामपि विद्यायां धीर्युक्तैवेत्यर्थः विदुषोऽपि पूर्वमाविद्यकं सम्बन्धमपेक्ष्य विधिनिषेधविषयाभिधयुक्तामेव व्यक्तीकरोति दृष्टेति। नन्वविदुषो मिथ्याभिमानवन्न विदुषः सोऽनुवर्त्तते तथा चाविद्यासम्बन्धापेक्षया विदुषो यथोक्ता धीरिति तत्राह यथेति। पिता पुत्रो भ्रातेत्यादीनां मिथोऽन्यत्वदृष्टावप्यन्योन्यनियोगार्थस्य निषेधार्थस्य च धीर्दृष्टा पितरमधिकृत्य विधौ निषेधे वा तस्य तदनुष्ठानाशक्तौ पुत्रस्य तद्विषया धीरिष्टा यथातः सम्प्रति यदा प्रैष्यन्मन्यतेऽथ पुत्रमाह त्वं ब्रह्म त्वं यज्ञः त्वं लोक इत्यादि सम्प्रतिपत्त्या स्तुत्याशेषानुष्ठानस्य पुत्रकार्य्यताप्रतिपादनात् पुत्रञ्चाधिकृत्य विधिनिषेधप्रवृत्तौ तस्य तदशक्तौ पितुस्तथा धीरूपमता तथा भ्रात्रादिष्वपि द्रष्टव्यं एवं विदुषो हेतुफलाभ्यामन्यत्वदर्शनेऽपि प्राक्कालीनाविद्यकदेहादिसम्बन्धादविरुद्धा विधिनिषेधार्था धीरित्यर्थः। पुत्रादीनां मिथ्याभिमानान्मिथो नियोगधीर्युक्ता तत्त्वदर्शिनस्तु तदभावान्न देहादिसम्बन्धाधीना नियोगधीरिति परिहरति नेत्यादिना। किञ्च सर्वापेक्षा यज्ञादिश्रुतेरश्ववदिति सर्वापेक्षाधिकरणे सम्यग्ज्ञानस्य दृष्टसाध्यत्वोक्तेर्विधिनिषेधार्थानुष्ठानं सम्यग्ज्ञानात् पूर्वमिति कुतो विदुषस्तदनुष्ठानमित्याह प्रतिपन्नेति। सत्यदृष्टेः सम्यग्धीदृष्टेरसति चाशुद्धबुद्धेस्तदभावादन्वयव्यतिरेकाभ्यां विविदिषावाक्याच्च विधिनिषेधानुष्ठानात्

नान्यातः कर्त्तुरभावाच्छास्त्रानर्थक्यमिति चेन्न यथा प्रसिद्धित एव प्रवृत्तिनिवृत्त्युपपत्तेः ईश्वरश्चेदवश्यैकत्वदर्शी ब्रह्मवित्तावन्न प्रवर्त्तते तथा नैरात्म्यवाद्यपि नास्ति परलोक इति न प्रवर्त्तते यथा प्रसिद्धस्तु विधिप्रतिषेधशास्त्रश्रवणान्यथानुपपत्त्यानुमितात्मास्तित्व आत्मविशेषानभिज्ञः कर्मफलसञ्जाततृष्णः श्रद्दधानतया च प्रवर्त्तत इति सर्वेषां नः प्रत्यक्षमतो न शास्त्रानर्थक्यं विवेकिनामप्रवृत्तिदर्शनात्तदनुगामिनामप्रवृत्तौ शास्त्रानर्थक्यमिति चेन्न कस्यचिदेव

---

पूर्वं न सम्यग्धीरित्याह न पूर्वमिति। विधिनिषेधयोर्विद्वद्विषयत्वायोगे फलितमाह तस्मादिति। शास्त्रस्याविद्वद्विषयत्वेनोक्तमर्थं वत्समाक्षेपसमाधिभ्यां प्रपञ्चयितुमाक्षिपति नन्विति। चकाराद्दुर्मप्रवृत्तिरिति सम्बध्यते। आत्मनो देहाद्व्यतिरेकं पश्यतां देहाद्यभिमानरूपाधिकारहेत्वभावाद्विहितो यागादावप्रवृत्तिर्निषेधाच्चाभक्ष्यभक्षणादेर्न निवृत्तिरतस्तेषां प्रवृत्तिनिवृत्त्योरभावे देहादावात्मत्वमनुभवतामपि न ते युक्ते तेषां पारलौकिकभोक्तृप्रतिपत्त्यभावादित्यर्थः। विदुषामविदुषाञ्च प्रवृत्तिनिवृत्त्यभावे फलितमाह अत इति। आत्मनो देहाद्यतिरिक्तं परोक्षमपरोक्षञ्च देहाद्यात्मत्वं पश्यतः शास्त्रानुरोधादेव प्रवृत्तिनिवृत्त्युपपत्तेर्न शास्त्रानर्थक्यमित्युत्तरमाह नेत्यादिना। प्रसिद्धिरत्र शास्त्राभिमता। एतदेव विवृण्वन् ब्रह्मविदो वा नैरात्म्यवादिनो वा परोक्षज्ञानवतो वा प्रवृत्तिनिवृत्ताविह वक्ष्यतीति विकल्प्याद्यं दूषयति ईश्वरेति। न निवर्त्तते चेत्यपि द्रष्टव्यम्। द्वितीयं निरस्यति तथेति। पूर्ववदत्रापि सम्बन्धः। तृतीयमङ्गीकरोति यथेति। विधिनिषेधाधीनां प्रसिद्धिमनुरुन्धानः सन्निति यावत्, चकारान्निवर्त्तते चेत्यनुकृष्यते। ब्रह्मविदं नैरात्म्यवादिनञ्च व्यक्त्वा देहाद्व्यतिरिक्तमात्मानं परोक्षमपरोक्षञ्च देहाद्यात्मत्वं पश्यतो विधिनिषेधाधिकारित्वे सिद्धे फलमाह अत इति। विध्य-

विवेकोपपत्तेरनेकेषु हि प्राणिषु कश्चिदेव विवेकी स्याद्यथेदानीं न च विवेकिनमनुवर्त्तन्ते मूढा रागादिदोषतन्त्रत्वात् प्रवृत्तेरभिचरणादौ च प्रवृत्तिदर्शनात् स्वाभाव्याच्च प्रवृत्तेः स्वभावस्तु प्रवर्त्तत इति उक्तं तस्मादविद्यामात्रं संसारो यथादृष्टविषय एव न क्षेत्रज्ञस्य केवलस्याविद्यातत्कार्य्यञ्च न च मिथ्याज्ञानं परमार्थवस्तु दूषयितुं समर्थं नह्यूषरदेशं स्नेहेन पङ्कीकर्त्तुं शक्नोति मरीच्युदकन्तथाविद्या क्षेत्र-

---

न्तरेण शास्त्रार्थानर्थक्यञ्चोदयति विवेकिनामिति । दृष्टा हि तेषां विधिनिषेधयोरप्रवृत्तिर्न हि देहादिभ्यो निष्कृष्टमात्मानं दृष्टवतां तयोरधिकारस्तेन तान् प्रति शास्त्रं नार्थवन्न च देहाद्यात्मत्वदृशस्तत्राधिक्रियन्ते तेषां यद्यदाचरतीति न्यायेन विवेकिनोऽनुगच्छतां विध्यादावप्रवृत्तेरतोऽधिकार्य्यभावाद्विध्यादिशास्त्रस्य तदनुसारिशिष्टाचारस्य चानर्थक्यमित्यर्थः । किं सर्वेषां विवेकित्वादधिकार्य्यभावादानर्थक्यं शास्त्रस्योच्यते किं वा कस्यचिदेव विवेकित्वेऽपि तदनुवर्त्तित्वादन्येषामप्रवृत्तेरानर्थक्यं चोद्यते तत्र प्रथमं प्रत्याह न कस्यचिदिति । मनुष्याणां सहस्रेष्विति न्यायेनोक्तमेव स्फुटयति अनेकेष्विति । तत्रानुभवानुरोधेन दृष्टान्तमाह यथेति । द्वितीयं दूषयति न चेति । किञ्च विवेकिनामप्रवृत्तावन्येषामप्रवृत्तिरित्याशङ्कां निरसितुं श्येनादौ तदप्रवृत्तावपि इतरप्रवृत्तेरित्याह रित्याह·अभिचरणादौ चेति । अविवेकिनां रागादिद्वारा प्रवृत्तास्तदर्थं संग्रहीतुमादिपदम् । इतश्च विवेकिनां प्रवृत्त्यभावेऽपि नाज्ञस्याप्रवृत्तिरित्याह स्वाभाव्याच्चेति । प्रवृत्तेः स्वभावाख्याज्ञानकार्य्यत्वे भगवद्वाक्यमनुकूलयति स्वभावस्त्विति । प्रवृत्तेरज्ञानजन्यत्वे विधिनिषेधाधीनप्रवृत्तिनिवृत्त्यात्मकबन्धस्याविद्यामात्रत्वादविद्वद्विषयत्वं शास्त्रस्य सिद्धमिति फलितमाह तस्मादिति । दृष्टमेवानुसरन्नविद्वानयथादृष्टस्तद्विषयस्तदाश्रयः संसारस्तथा च प्रवृत्तिनिवृत्त्यात्मकसंसारस्याविद्वद्विषयत्वात्तद्धेतुविधिशास्त्र-

स्य न किञ्चित् कर्त्तुं शक्नोत्यतश्चेदमुक्तं क्षेत्रज्ञञ्चापि मां विद्धि अज्ञानेनावृतं ज्ञानमिति च अथ किमिदं संसारिणामिवाहमेवं ममैवेदमिति पण्डितानामपि शृणु इदं तत् पाण्डित्यं यत् क्षेत्र एवात्मदर्शनं यदि पुनः क्षेत्रज्ञमविक्रियं पश्येयुस्ततो न भोगं कर्म्म वाकाङ्क्षेयुर्मम स्यादिति विक्रियैव भोगकर्म्मणी अथैवं सति फलार्थित्वादविद्वान् प्रवर्त्तते विदुषः पुनरविक्रियात्मदर्शिनः फलार्थित्वाभावात् प्रवृत्त्यनुपपत्तौ कार्य्यकारणसङ्घातव्यापारोपरमे निवृत्तिरु-

---

स्यापि तद्विषयत्वमित्यर्थः। नन्वविद्या क्षेत्रज्ञमाश्रयन्ती स्वकार्य्यं संसारमपि तस्मिन्नाधत्ते तेनास्यैव शास्त्राधिकारित्वं नेत्याह नेति। अविद्यादेः एवं क्षेत्रज्ञे वस्तुतोऽसम्बन्धेऽपि तस्मिन्नारोपितं तमेव दुःखीकरोतीत्यत्राह न चेति। तदेव दृष्टान्तेन दर्शयति न हीति। क्षेत्रज्ञस्य वस्तुतोऽविद्यासम्बन्धे भगवद्वचोऽपि द्योतकमित्याह अत इति क्षेत्रज्ञेश्वरयोरैक्ये किमित्यसावात्मानमहमिति बध्यमानोऽपि स्वस्येश्वरत्वमीश्वरोऽस्मीति न बुध्यते तत्राह अज्ञानेनेति। आत्मनो वस्तुतः संसारासंस्पर्शे विद्वदनुभवविरोधः स्यादिति चोदयति अथेति। एवमित्यभिजात्यादिवैशिष्ट्यमुक्तं, इदमात्मकलत्रापि पण्डितानामपि प्रतीत संसारित्वमिति शेषः। किं पाण्डित्यं देहादावात्मदर्शनं किंवा कूटस्थात्मदृष्टिराद्यो संसारित्वादिधीरिति विकल्प्याद्यं निराकुर्वन्नाह शृण्विति। तच्च वस्तुतो संसारित्वाविरोधि प्रातिभासिकन्तु संसारित्वमिष्टमिति शेषः। द्वितीयं दूषयति यदीति। न हि कूटस्थात्मविषयं संसारित्वं प्रतीयते येन वस्तुतो संसारित्वं विरुध्यते कूटस्थात्मधीविरुद्धायाः संसारित्वबुद्धेरनवकाशत्वादित्यर्थः। आत्मानमक्रियं पश्यतोऽपि कुतो भोगकर्म्मणी न स्यातामित्याशङ्क्याह विक्रियेति। अविक्रियात्मबुद्धे भोगकर्म्माकाङ्क्षयोरभावे ... शास्त्रे प्रवृत्तिरित्याशङ्क्याह अथेति। फलार्थित्वाभावाद्विदुषो न

पश्यथ्येते इदञ्चान्यत् पाण्डित्यं कस्यचिदस्तु क्षेत्रज्ञ ईश्वर एव क्षेत्रञ्चान्यत् क्षेत्रज्ञस्य विषयः अहन्तु संसारी सुखी दुःखी मूढो जातो मृतो वियुक्तः क्षीणो वृद्धोऽहं ममैवेत्येवमादयः सर्वे आत्मनि अध्यारोप्यन्ते संसारोपरमश्च मम कर्त्तव्यः क्षेत्रक्षेत्रज्ञविज्ञानेन ध्यानेन चेश्वरं क्षेत्रज्ञं साक्षात् कृत्वा तत्स्वरूपावस्थानेनेति यश्चैवं बुध्यते यश्च बोधयति नासौ क्षेत्रज्ञ इत्येवं मन्वानो यः स पण्डितापसदः संसारमोक्षयोः शास्त्रस्यचार्थवत्त्वं करोमीत्यात्महा स्वयं मूढोऽन्यांश्च व्यामोहयति शास्त्रार्थसम्प्रदायरहितत्वात् श्रुतं-

---

कर्मणि प्रवृत्तिरित्येवं स्थिते तत्यनन्तरमविद्वान् फलार्थित्वात्तदुपाये कर्मणि प्रवर्त्तते शास्त्रेऽधिकारीत्यर्थः । विदुषो वैधप्रवृत्त्यभावेऽपि निषेधाधीननिवृत्तेरपि दुर्वचत्वात्तस्य निवृत्तिनिष्ठत्वासिद्धिरित्याशङ्क्याह विदुष इति । तृतीयमुत्थापयति इदञ्चेति । सिद्धान्तादविशेषमाशङ्क्य क्षेत्रस्य क्षेत्रज्ञात् वस्तुतोभिन्नत्वेन तद्विषयत्वाङ्गीकारान्नैवमित्याह क्षेत्रञ्चेति । अहं धीवेद्यस्यात्मनो वस्तुतः संसारित्वस्वीकाराच्च सिद्धान्ताद्भेदोऽस्तीत्याह अहन्त्विति । संसारित्वमेव स्फोरयति सुखीति । संसारित्वस्य वस्तुत्वे तदनिवृत्त्या पुमर्थासिद्धिरित्याशङ्क्याह संसारेति । कथं तदुपरमस्य हेतुं विना कर्त्तव्यत्वमित्याशङ्क्याह क्षेत्रेति । क्षेत्रं ज्ञात्वा ततो निकृष्टस्य क्षेत्रज्ञस्य ज्ञानं कथं संसारोपरतिमुत्पादयेदित्याशङ्क्याह ध्यानेनेति । संसारित्वमात्मनो बुध्यमानस्य तद्रहितादीश्वरादन्यत्वं वक्तव्यमिति वक्तुमितिशब्दः । तदेव व्यक्तमुपपादयति यश्चेति । मम संसारिणोऽसंसारीश्वरत्वं कर्त्तव्यमित्येवं यो बुध्यते यो वा तथाविधं ज्ञानं तव कर्त्तव्यमित्युपदिशति स क्षेत्रज्ञादीश्वरादन्यो ज्ञेयोऽन्यथोपदेशानर्थक्यादित्यर्थः । आत्मा संसारी परस्मादात्मनोऽन्यस्तस्य ध्यानाधीनाज्ज्ञानेनेश्वरत्वं कर्त्तव्यमित्येतद् ज्ञानं पाण्डित्यमिति मतं दूषयति एवमिति । अयमात्मा ब्रह्मे-

हानिमश्रुतकल्पनाञ्च कुर्वंस्तस्मादसम्प्रदायवित् सर्वशास्त्रविदपि मूर्खवदेवोपेक्षणीयः तत्तूक्तमीश्वरस्य क्षेत्रज्ञैकत्वे संसारित्वं प्राप्नोति क्षेत्रज्ञानाञ्चेश्वरैकत्वे संसारिणोऽभावात् संसाराभावप्रसङ्ग इत्येतौ दोषौ प्रत्युक्तौ विद्याविद्ययोर्वैलक्षण्याभ्युपगमादिति कथमविद्यापरिकल्पितदोषेण तद्विषयं वस्तु पारमार्थिकं न दूष्यतीति तथा च दृष्टान्तो दर्शितो मरीच्यम्भसोषरदेशो न पङ्कीक्रियत इति संसारिणोऽभावात् संसाराभावप्रसङ्गदोषोऽपि संसारसंसारिणोरविद्याकल्पितत्वोपपत्त्या प्रत्युक्तो नन्वविद्यावत्त्वमेव क्षेत्रज्ञस्य संसारित्वदोषमुक्तन्तत्कृतञ्च दुःखित्वादिप्रत्यक्ष-

---

त्यात्मनो ब्रह्मत्वश्रुतिविरोधादित्यर्थः। ननु संसारस्य वस्तुत्वाङ्गीकारात्तत्प्रतीत्यवस्थायां कर्मकाण्डस्यार्थवत्त्वं संसारित्वनिरासेनात्मनो ब्रह्मत्वे श्रवणादिना साधिते मोक्षावस्थायां ज्ञानकाण्डस्यार्थवत्त्वं तत्कथं यथोक्तज्ञानवान् पण्डितापसदत्वेनाक्षिप्यते तत्राह संसारेति। करोमीति मन्यमानो यः स पण्डितापसद इति पूर्वेण सम्बन्धः। कर्मकाण्डं हि कल्पितं संसारित्वमधिकृत्य साध्यसाधनसम्बन्धबोधपदार्थवदिष्टं ज्ञानकाण्डमपि तथाविधं संसारित्वं पराकृत्याखण्डैकरसे प्रत्यग् ब्रह्मणि पर्य्यवस्यदर्थवद्भवेदित्यर्थः। किञ्चात्मनः शास्त्रसिद्धं ब्रह्मत्वं त्यक्त्वा अब्रह्मत्वं कल्पयन्नात्महा भूत्वा लोकद्वयबहिर्भूतः स्यादित्याह आत्महेति। ननु क्षेत्रज्ञञ्चापि मां विद्धीत्यनेन सर्वक्षेत्रान्तर्यामी परो जीवादन्यो निरूप्यते न जीवस्येश्वरत्वमत्र प्रतिपाद्यते तत् कथमित्यमाक्षिप्यते तत्राह स्वयमिति। किञ्च तत्त्वमसीतिवत् प्रसिद्धक्षेत्रज्ञानुवादेनाप्रसिद्धं तस्येश्वरत्वमिहोपदेशतः श्रुतं तस्य हानिमश्रुतस्य च जीवेश्वरयोस्तात्त्विकभेदस्य कल्पनां कुर्वन् कथं व्यामूढो न स्यादित्याह श्रुतेति। ननु केचन व्याख्यातारो यथोक्तं पाण्डित्यं पुरस्कृत्य क्षेत्रज्ञञ्चापीत्यादिश्लोकं व्याख्यात-

मुपलभ्यते न ज्ञेयस्य क्षेत्रधर्मत्वात् ज्ञातुः क्षेत्रज्ञस्य तत्कृतदोषानुपपत्तेः यावत् किञ्चित् क्षेत्रज्ञस्य दोषजातमविद्यमानमासञ्जयति तस्य ज्ञेयत्वोपपत्तेः क्षेत्रधर्मत्वमेव न क्षेत्रज्ञधर्मत्वं न च तेन क्षेत्रज्ञो दुष्यति ज्ञेयेन ज्ञातुः संसर्गानुपपत्तेः यदि हि संसर्गः स्यात् ज्ञेयत्वमेव नोपपद्येत यद्यात्मनो धर्मोऽविद्यावत्त्वं दुःखित्वादि च कथं भोः प्रत्यक्षमुपलभ्यते कथं वा क्षेत्रज्ञधर्मः ज्ञेयञ्च सर्वं क्षेत्रं ज्ञातैव क्षेत्रज्ञ इत्यवधारितेऽविद्यादुःखित्वादेः क्षेत्रज्ञविशेषणत्वं क्षेत्रज्ञधर्मत्वं तस्य च प्रत्यक्षोपलभ्यत्वमिति विरुद्धमुच्यतेऽविद्यामात्रावष्टम्भात् केवलं अत्राह

---

यन्तः ननु कथमुक्तं पाण्डित्यमास्थाय व्यामूढत्वं तत्राह तथापीति । क्षेत्रज्ञञ्चापीत्यत्र क्षेत्रज्ञेश्वरयोरैक्यं स्वाभीष्टं स्पष्टयितुं प्रत्युक्तमेव चोद्यमनूद्य यत्तूक्तमिति । तात्त्विकमेकत्वमतात्त्विकं संसारित्वमित्यङ्गीकृत्योक्तमेव समाधिं स्मारयति एताविति । ईश्वरस्य संसारित्वं संसार्यभावेन संसाराभावश्चेत्युक्तौ दोषौ विद्याविद्ययोर्वैलक्षण्येऽपि कथं प्रत्युक्ताविति पृच्छति कथमिति । कल्पितसंसारेण कल्पनाधिष्ठानमद्वयं वस्तु वस्तुतो न सम्बध्यमिति परिहरति अविद्येति । तद्विषयं कल्पनास्पदमधिष्ठानमिति यावत् । कल्पितेनाधिष्ठानस्य वस्तुतोऽसंसर्गे दृष्टान्तं स्मारयति तथा चेति । ईश्वरस्य संसारित्वाप्रसङ्गं प्रकटीकृत्य प्रसक्तान्तरनिरासमनुसारयति संसारिण इति । न तावदविद्या संसारं संसारिणश्च कल्पयन्ती स्वतन्त्रा तत्त्वव्याघातात् पारतन्त्र्ये चाश्रयान्तराभावात् क्षेत्रज्ञस्य तद्वत्त्वे संसारित्वमिति शङ्कते नन्विति । न चाविद्यावत्त्वमविद्याकृतमनवस्थानादिति भावः । यत्तूत्खातदंष्ट्रोरगवदविद्या किं करिष्यतीति तत्राह तत्कृतश्चेति । अविद्यातत्कार्ययोर्ज्ञेयत्वात् क्षेत्रधर्मतेत्युत्तरमाह नेत्यादिना । तदेव प्रपञ्चयति यावदिति । ज्ञेयस्य क्षेत्रधर्मत्वेऽपि

साविद्या कस्येति यस्य दृश्यते तस्यैव कस्य दृश्यत इत्य-
वोच्यते अविद्या कस्य दृश्यत इति प्रश्नो निरर्थकः
कथं दृश्यते चेदविद्या तद्वन्तमपि पश्यसि न च तद्वत्यु-
पलभ्यमाने सा कस्येति प्रश्नो युक्तो न हि गोमत्युपलभ्य-
माने गावः कस्येति प्रश्नो युक्तोऽर्थवान् भवेत् ननु विषमो
दृष्टान्तो गवां तद्वतश्च प्रत्यक्षत्वात् सम्बन्धोऽपि प्रत्यक्ष इति
प्रश्नो निरर्थकः न तथा विद्या तद्वांश्च प्रत्यक्षौ यतः प्रश्नो
निरर्थकः स्यादप्रत्यक्षेणाविद्यावता विद्यासम्बन्धे ज्ञाते
किन्तव स्यादविद्याया अनर्थहेतुत्वात् परिहर्त्तव्या
स्याद्यस्याविद्या सता परिहर्त्तव्येति ननु ममैवाविद्या

---

क्षेत्रद्वारा क्षेत्रज्ञस्य तत्कृतदोषवत्त्वमित्याशङ्क्याह न चेति । क्षेत्रस्यापि
ज्ञेयत्वाच्च तेन चिता वस्तुतः स्पर्शोऽस्तीत्युपपादयति यदीति । धर्मधर्मि-
त्वेन संसर्गेऽपि ज्ञेयत्वे का क्षतिरित्याशङ्क्याह यदीति । आत्मधर्मस्या-
त्मना ज्ञेयत्वे स्वस्यापि ज्ञेयत्वापत्त्या कर्तृकर्मविरोधः स्यादित्यर्थः। किञ्च
विमतं न क्षेत्रज्ञाश्रितं तद्दृश्यत्वाद्रूपादिवदित्याह कथं वेति । किञ्च
महाभूतानीत्यादिना ज्ञेयमात्रस्य क्षेत्रान्तर्भावाच्चाविद्यादेस्तद्धर्मतेत्याह
ज्ञेयस्येति । किञ्चैतद्यो वेत्तीत्युक्तत्वात् क्षेत्रज्ञस्य ज्ञातृत्वनिर्णयाच्च तस्य
ज्ञेयं किञ्चित् प्रविशतीत्याह ज्ञातैवेति । क्षेत्रक्षेत्रज्ञयोरेवं स्वाभाव्ये
सिद्धे सिद्धं क्षेत्रधर्मत्वमविद्यादेरिति फलितमाह इत्यवधारित इति ।
विरोधाच्च न क्षेत्रज्ञधर्मत्वं अविद्यादेरित्याह क्षेत्रज्ञेति । विरुद्धवादित्वे
मूलं दर्शयति अविद्येति । मात्रपदस्य व्यावर्त्त्यमाह युक्त्याख्यमदृष्ट-
आन्तरमिति वक्तुं केवलपदम् । यया विद्यया विरुद्धमपि निर्वोढुं
शक्यते तस्याः स्वातन्त्र्याभावाच्चितोऽन्यस्याविद्यकत्वेन तदाश्रयत्वात्त-
स्याविद्यास्वभावतया तदाश्रयत्वव्याघातादाश्रयजिज्ञासया पृच्छति सता-
केति । आश्रयमात्रं पृच्छते तद्विशेषो वा, प्रथमे प्रश्नस्यानवकाशित्वं

जानासि तर्ह्यविद्यावन्तमात्मानं जानामि न तु प्रत्यक्षे-णानुमानेन चेज्जानासि कथं सम्बन्धग्रहणं न हि तव ज्ञातुर्ज्ञेयभूतयाविद्यया तत्काले सम्बन्धो ग्रहीतुं शक्यते अविद्याया विषयत्वेनैव ज्ञातुरुपयुक्तत्वान्न च ज्ञातुरविद्यायाश्च सम्बन्धस्य यो ग्रहीता ज्ञानञ्चान्यत् तद्विषयं सम्भव-त्यनवस्थाप्राप्तेर्यदि ज्ञात्रापि ज्ञेयसम्बन्धो ज्ञायेतान्योऽ-ज्ञाता कल्प्यः स्यात्तस्याप्यन्यस्तस्याप्यन्य इत्यनवस्था परि-हार्य्या यदि पुनरविद्या ज्ञेयान्यद्वा ज्ञेय ज्ञेयमेव तथा

---

मत्वाह यस्येति । अविद्या दृश्यादृश्या वा दृश्यत्वे पारतन्त्र्यात् कि-ञ्चिन्निष्ठत्वेन तद्दृष्टेनाश्रयमात्रं प्रष्टव्यमदृष्टत्वे वा अप्रकाशत्वादसिद्धि-रेव स्यादित्यर्थः । द्वितीयमालम्बते कस्येति । अविद्यया दृश्यमान-त्वादाश्रयविशेषस्यात्मनोऽपि स्वानुभवसिद्धत्वात् प्रश्नस्य निरवकाशतेत्युत्त-रमाह अत्रेति । प्रश्नानर्थक्यं प्रश्नद्वारा स्फोरयति कथमित्यादिना । तथापि कथं प्रश्नाभिप्रवृत्तस्तत्राह न चेति । तदेव दृष्टान्तेन स्पष्टयति न हीति । दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यं चोदयति नन्विति । अज्ञानाश्रयस्य परोक्षत्वेऽपि प्रश्नैरर्थक्यमित्याह अप्रत्यक्षेणेति । अविद्यावतोऽप्रत्य-क्षत्वेऽपि तेनाविद्यासम्बन्धे सिद्धे प्रष्टुरत्र प्रश्नानर्थक्यसमाधिर्न कश्चि-दित्यर्थः । अबुद्धपराभिसन्धिः शङ्कते अविद्याया इति । अविद्याव-तस्तत्परिहाराय नान्येन प्रयतितव्यमित्याह यस्येति । ममैवाविद्याव-त्त्वात्तत्परिहारे मया प्रयतितव्यमिति शङ्कते नन्विति । तर्हि प्रश्नान-र्थक्यमिति सिद्धान्ते स्वाभिसन्धिमाह जानासीति । आत्मानमविद्यावन्तं जानन्नपि तद्विषयपृच्छाभावात् पृच्छामीति शङ्कते जानासीति । अवि-द्यावतोऽप्रत्यक्षत्वं वदता तस्याहमविद्यावानविद्याकार्यवत्त्वव्यतिरेकेण सुखात्मवदित्यनुमेयत्वमिष्टमित्युपेत्य दूषयति अनुमानेनेति । आत्मनो विद्यासम्बन्धग्रहे कानुपपत्तिरित्याशङ्क्य ज्ञातैवात्मा स्वस्याविद्यासम्बन्धं

ज्ञातापि ज्ञातैव न ज्ञेयम्भवति यदा चैवमविद्या दुःखित्वा-द्यैर्न ज्ञातुः क्षेत्रज्ञस्य किञ्चित् दुष्यति नन्वयमेव दोषो यत् दोषवत् क्षेत्रविज्ञातृत्वं न विज्ञानस्वरूपस्यैवाविक्रि-यस्य विज्ञातृत्वोपचारात् यथोष्णतामात्रेणाग्नेस्तप्तिक्रियो-पचारस्तद्वद्यथात्र भगवता क्रियाकारकफलात्मत्वाभाव आत्मनि स्वत एव दर्शितः अविद्याध्यारोपितैरेव क्रिया-कारकाद्यात्मन्युपचर्यते तथा तत्र तत्र य एनं वेत्ति हन्तारं प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः नादत्ते कस्य-चित् पापमित्यादिप्रकरणेषु दर्शितस्तथैव च व्याख्यातम-स्माभिरुत्तरेषु च प्रकरणेषु दर्शयिष्यामो हन्त तर्ह्यात्मनि

---

बुध्यतेऽन्यो वा ज्ञातेति विकल्पमाद्यं दूषयति नेति। तत्कार्य-स्याविद्यां प्रति ज्ञातृत्वावस्थायामिति यावत्। अविद्याविषयत्वेन गृहीतत्वात् तज्ज्ञातृत्वेनोपयुक्तस्यात्मनस्तस्याः स्वात्मनि ज्ञान सम्बन्ध-ज्ञातृत्वमेकस्य कर्मकर्तृत्वविरोधादित्याह अविद्ययेति। द्वितीयं निरस्यति न चेति। यो गृहीता स न सम्भवतीति सम्बन्धः, तद्विषयमिति ज्ञातु-रविद्यायाश्च सम्बन्धस्तच्छब्दार्थः। अनवस्थामेव प्रपञ्चयति यदीति। आत्मनः स्वपरताद्योगात्लक्षित विद्यासम्बन्धस्य प्रमाणिकत्वाद्विनानुभव-गम्यत्वे स्थिते फलितमाह यदि पुनरिति। यदा चैवं तदैतदध्याहार्यं ज्ञातुरात्मनो न किञ्चिद् दूषयति ते तद्दूषयमाणं शङ्कते नन्विति। किं ज्ञातृत्वं ज्ञानक्रियाकर्तृत्वं ज्ञानस्वरूपत्वं वा नाद्यस्तदनभ्युपगमात्तत्-प्रयुक्तदोषाभावात् द्वितीये ज्ञातृत्वस्यौपचारिकत्वान्न तत्कृतो दोषोऽस्ती-त्याह नेत्यादिना। असत्यामपि क्रियायां क्रियोपचारं दृष्टान्तेन स्फुट-यति। यथेति। आत्मनि वस्तुतोऽविक्रियाभावे भगवदनुमतिं दर्शयति यथात्रेति। गीताशास्त्रं सप्तम्यर्थः, स्वत एवात्मनि क्रियाद्यात्मत्वा-भावो भगवता शास्त्रे यथोक्तस्तथैव व्याख्यातमस्माभिरिति सम्बन्धः।

क्रियाकारकफलात्मतायाः स्वतोऽभावेऽविद्यया चाध्यारोपितत्वे कर्माण्यविद्वत्कर्त्तव्यान्येव न विदुषामिति प्राप्तं सत्यमेवं प्राप्तमेतदेव च न हि देहभृता शक्यमित्यत्र दर्शयिष्यामः सर्वशास्त्रार्थोपसंहारप्रकरणे च समासेनैव कौन्तेय! निष्ठा ज्ञानस्य यापरेत्यत्र विशेषतो दर्शयिष्यामः अलमिह बहुप्रपञ्चेनेत्युपसंह्रियते ॥ २ ॥

कथं तर्हि क्रियादिरात्मनि भाति तत्राह अविद्ययेति । यथा वस्तुतो नास्त्यात्मनि क्रियादिरुपचारात्तु भाति तथा तत्र तत्रातीतप्रकरणेषु उक्तो भगवता अतो यत्र इत्याह तथेति । न केवलमतीतेष्वेव प्रकरणेषु वास्तवक्रियाद्यभावादात्मन्याध्यासिकी तत्र तत्रोक्ता किन्तु वक्ष्यमाणप्रकरणेष्वपि तथैव भगवदभिप्रायदर्शनं भविष्यतीत्याह उत्तरेषु चेति । आत्मनि वास्तवक्रियाद्यभावेऽध्यासाच्च तदभिज्ञो कर्मकाण्डस्याविद्वदधिकारित्वप्राप्तौ विद्वान्यजेत ज्ञात्वा कर्माणि कुर्वीतेत्यादिशास्त्रविरोधः स्यादिति शङ्कते कर्मेति । भाष्यस्य देहव्यतिरेकविज्ञानवतां प्रामाण्यदर्शनायाद्यतीतात्मधीविदुषस्यैव कर्मकाण्डाधिकारित्वमङ्गीकरोति सत्यमिति । कथमस्यैव कर्माधिकारित्वमुपपन्नमित्याशङ्क्याह एतदेव चेति । ज्ञानिनो ज्ञाननिष्ठायामेवाधिकारो निष्ठान्तरे त्वसम्बन्ध इत्युपसंहारप्रकरणे विशेषतो भविष्यतीत्याह सर्वेति । तदेवानुक्रामति समासेनेति । जीवब्रह्मणोरैक्याभ्युपगमेन किञ्चिदालम्ब्योपसंहरति अलमिति ॥ २ ॥

स्वा० टी० । तदेवं संसारिणः स्वरूपमुक्तमिदानीं तस्यैव पारमार्थिकमसंसारिस्वरूपमाह क्षेत्रज्ञमिति । तं च क्षेत्रज्ञं संसारिणं जीवं वस्तुतः सर्वक्षेत्रेष्वनुगतं मामेव विद्धि तत्त्वमसीति श्रुत्युपलक्षितेन चिदंशेन मद्रूपत्वात् आदरार्थमेतत् ज्ञानं स्तौति क्षेत्रक्षेत्रज्ञयोर्यद्वैलक्षण्येन ज्ञानं तदेव मोक्षहेतुत्वात् ज्ञानं मम मतं अन्यत्तु वृथापाण्डित्यं बन्धहेतुत्वादित्यर्थः तदुक्तं तत् कर्म यन्न बन्धाय सा विद्या या च मुक्तये । आयासायापरं कर्म विद्यान्या शिल्पनैपुणमिति ॥ २ ॥

**तत् क्षेत्रं यच्च यादृक् च यद्विकारि यतश्च यत् ।**
**स च यो यत् प्रभावश्च तत्समासेन मे शृणु ॥३॥**

इदं शरीरमित्यादिश्लोकोपदिष्टस्य क्षेत्राध्यायार्थस्य संग्रहश्लोकोऽयमुपन्यस्यते तत् क्षेत्रं यच्चेत्यादि व्याचिख्यासितस्य ह्यर्थस्य संग्रहोपन्यासो न्याय्य इति यन्निर्दिष्टमिदं शरीरं इति तत् क्षेत्रमिति तच्छब्देन परामृशति यच्चेदं निर्दिष्टं क्षेत्रं तद्यादृक् यादृशं स्वकीयैर्धर्मैश्च शब्दः समुच्चयार्थो यद्विकारि यो विकारो यस्य तद्यद्विकारि यतो यस्मात् यत् कार्य्यमुत्पद्यते इति वाक्यशेषः स च यः क्षेत्रज्ञो निर्दिष्टः स यत्प्रभावः ये प्रभावा उपाधिकृताः शक्तयो यस्य स यत्प्रभावश्च तत् क्षेत्रक्षेत्रज्ञयाथात्म्यं यथाविशेषितं तत् समासेन संक्षेपेण मे मम वाक्यतः शृणु श्रुत्वावधारयेत्यर्थः ॥ ३ ॥

आ० टी० । एवं श्लोकद्वयं व्याख्याय श्लोकान्तरमवतारयति इदमिति । कुत्र संग्रहश्लोकोपयुज्यते तत्राह व्याचिख्यासितस्येति । प्रतिपत्तिसौकर्य्यार्थं संग्रहश्लोकोऽर्थवानित्यर्थः । वक्ष्यमाणेऽर्थे श्रोतुर्मनःसमाधानार्थं सूत्रितो वाक्यार्थोपायविवरणप्रतिज्ञामभिप्रेत्याह यन्निर्दिष्टमिति । इदं शरीरमिति यन्निर्दिष्टं तच्छरीरं तच्छब्देन परामृशति प्रकृतार्थत्वात्तस्येति योजना. तत् क्षेत्रं ज्ञातव्यमित्यध्याहारः यच्चेति येन रूपेण रूपवदिति तदेव क्षेत्रं विशिष्यते तस्य क्षेत्रस्य स्वकीयाद्धर्म्मा जन्मादयस्तैर्विशिष्टस्य ज्ञेयत्वे हेयत्वं फलति । चशब्दपञ्चकस्येतरेतरसमुच्चयार्थत्वमाह चशब्द इति । विकारित्वेनापि हेयत्वं सूचयति यद्विकारीति । यत् कार्य्यं तत्सर्वं यस्मादुत्पद्यते तत्कारणत्वादज्ञातव्यमित्याह यत इति । क्षेत्रमिव क्षेत्रज्ञं ज्ञातव्यं दर्शयति स चेति । ज्ञातव्यमिति सम्बन्धः चक्षुराद्युपाधिकृतदृष्ट्यादिशक्तिवशात्तस्य ज्ञातव्यत्वं सूचयति

यत्प्रभाव इति। तेनोक्तेन प्रभावेण तस्य ज्ञातव्यनेति शेषः कथं यथा विशेषितं क्षेत्रं क्षेत्रज्ञो वा शक्यो ज्ञातुमित्याशङ्क्य भगवद्वाक्यादित्याह तदिति॥ ३॥

व्या० टी०। तत्र यद्यपि चतुर्विंशतिभेदभिन्ना प्रकृतिः क्षेत्रमित्यभिहितं तथापि देहरूपेणैव परिणतायामेव तस्यामहं भावनाविवेकः स्फुट इति तद्विवेकार्थमिदं शरीरं क्षेत्रमित्युक्तं तदेव प्रपञ्चयिष्यन् प्रतिजानीते तदिति। यदुक्तं मया तत् क्षेत्रं यत्स्वरूपतो जडदृश्यादिस्वभावं यादृक् यादृशञ्च इच्छादिधर्मकं यद्विकारि यैरिन्द्रियादिविकारैर्युक्तं इतश्च प्रकृतिपुरुषसंयोगाद्भवति यदिति यैः प्रकारैः स्थावरजङ्गमादिभेदैर्भिन्नमित्यर्थः। स च क्षेत्रज्ञो यत्स्वरूपतो यत् प्रभावश्च अचिन्त्यैश्वर्ययोगेन यैः प्रभावैः तत्सर्वं संक्षेपतो मत्तः शृणु॥ ३॥

# ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक्। ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः॥ ४॥

तत् क्षेत्रक्षेत्रज्ञयोर्याथात्म्यं विवक्षितं स्तौति श्रोतृबुद्धिप्ररोचनार्थं ऋषिभिरिति ऋषिभिर्वशिष्ठादिभिर्बहुधा बहुप्रकारं गीतं कथितं छन्दोभिः छन्दांसि ऋगादीनि तैर्मन्त्रच्छन्दोभिर्विविधैर्नानाप्रकारैः पृथक् विवेकतो गीतं किञ्च ब्रह्मसूत्रपदैश्च एव ब्रह्मणः सूचकानि वाक्यानि ब्रह्मसूत्राणि तैः पद्यते गम्यते ज्ञायते ब्रह्मेति तानि ब्रह्मसूत्रपदेन सूच्यन्ते तैरेव च क्षेत्रक्षेत्रज्ञयोर्याथात्म्यं गीतमिति अनुवर्त्तते आत्मेत्येवोपासीतेत्यादिभिर्हि ब्रह्मसूत्रपदैरात्मा ज्ञायते हेतुमद्भिर्युक्तियुक्तैर्विनिश्चितैर्न संशयरूपैर्निश्चितप्रत्ययोत्पादकैरित्यर्थः॥ ४॥

व्या० टी०। श्लोकान्तरस्य तात्पर्यमाह तदित्यादिना। विवक्षितं जिज्ञासितमित्यर्थः। स्तुतिफलमाह श्रोत्रेति। न केवलमाप्तोक्तेरेव

क्षेत्रादियाथात्म्यं सम्पादितं किन्तु वेदवाक्यादपीत्याह छन्दोभिश्चेति। ऋगादीनां चतुर्णामपि वेदानां नानाप्रकारत्वं शाखाभेदादुद्दिष्टं न केवलं श्रुतिस्मृतिसिद्धमुक्तं याथात्म्यं किन्तु यौक्तिकञ्चेत्याह किञ्चेति। कानि तानि सूत्राणीत्याशङ्क्याह आत्मेत्येवेति। आदिपदेन ब्रह्मविदाप्नोति परमथ योऽन्यां देवतामित्यादीनि विद्याविद्यासूत्राण्युक्तानि आत्मेति क्षेत्रज्ञोपादानं तच्च क्षेत्रोपलक्षणं अथातो ब्रह्मजिज्ञासेत्यादीन्यपि सूत्राण्यत्र गृहीतान्यन्यथा छन्दोभिरित्यादिना पौनरुक्त्यादिति मत्वा विशिनष्टि हेतुमद्भिरिति ॥ ४ ॥

म्वा० टी०। कैः विस्तरेणोक्तस्यार्थं संक्षेप इत्यपेक्षायामाह ऋषिभिरिति ऋषिभिर्वसिष्ठादिभिर्योगशास्त्रेषु ध्यानधारणादिविषयत्वेन वैराजादिस्वरूपेण बहुधा गीतं निरूपितम्। विविधैर्विचित्रैर्नित्यनैमित्तिककाम्यकर्मादिविषयैश्छन्दोभिर्वेदैर्नानापूजनीयदेवतारूपेण गीतं ब्रह्मसूत्रैः पदैश्च ब्रह्म सूत्र्यते सूच्यते एभिरिति ब्रह्मसूत्राणि यतो वा इमानि भूतानि जायन्त इत्यादीनि तटस्थलक्षणपराणि उपनिषद्वाक्यानि। तथा ब्रह्म पद्यते साक्षात् ज्ञायते एभिरिति पदानि स्वरूपलक्षणपराणि सत्यं ज्ञानमनन्तं ब्रह्मेत्यादीनि तैश्च बहुधा गीतम्। किञ्च हेतुमद्भिः सदेव सोम्येदमग्र आसीत् कथमसतः सज्जायेत इति। को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात् एष ह्येवानन्दयातीत्यादियुक्तिमद्भिः। अन्यात् अपानचेष्टां कः कुर्यात् प्राण्यात् प्राणव्यापारं वा कः कुर्यादिति श्रुतिपदयोरर्थः। विनिश्चितैरुपक्रमोपसंहारैकवाक्यतया असन्दिग्धार्थप्रतिपादकैरित्यर्थः। तदेवमेतैर्विस्तरेणोक्तं दुःसम्पादं संक्षेपतस्तुभ्यं कथयिष्यामि मत् शृण्वित्यर्थः। यद्वा अथातो ब्रह्मजिज्ञासेत्यादीनि ब्रह्मसूत्राणि गृह्यन्ते तान्येव ब्रह्म पद्यते निश्चीयते एभिरिति पदानि तैर्हेतुमद्भिरीक्षतेर्नाशब्दं आनन्दमयोऽभ्यासादित्यादियुक्तिमद्भिर्विनिश्चितार्थैः शेषं समानम् ॥ ४ ॥

**महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च।**
**इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचराः ॥ ५ ॥**

स्तुत्याभिमुखीभूतायार्जुनायाह भगवान् महाभूतानीति। महाभूतानि महान्ति च तानि भूतानि सर्वविकारव्यापकत्वाद्भूतानि च सूक्ष्माणि न स्थूलानि स्थूलानि त्विन्द्रियगोचरशब्देनाभिधायिष्यन्तेऽहङ्कारो महाभूतकारणमहं प्रत्ययलक्षणोऽहङ्कारकारणं बुद्धिरध्यवसायलक्षणा तत्कारणमव्यक्तमेव च न व्यक्तमव्यक्तमव्यक्तमव्याकृतमीश्वरशक्तिः मम माया दुरत्ययेत्युक्तं एवशब्दः प्रकृत्यवधारणार्थः एतावत्येवाष्टधा भिन्ना प्रकृतिः, चशब्दो भेदसमुच्चयार्थः, इन्द्रियाणि दश श्रोत्रादीनि पञ्च बुद्ध्युतपादकत्वात् बुद्धीन्द्रियाणि वाक्पाण्यादीनि पञ्चकर्मनिर्वर्त्तकत्वात् कर्मेन्द्रियाणि तानि दशैकञ्च किं तत् मन एकादशं सङ्कल्पाद्यात्मकं पञ्च चेन्द्रियगोचराः शब्दादयो विषयास्तान्येतानि सङ्घातश्चतुर्विंशतितत्त्वानि आचक्षते ॥ ५ ॥

व्या° टी°। क्षेत्रादियाथात्म्यश्रुत्या प्रतोभिताय किन्तदिति जिज्ञासवे यथोद्देशं क्षेत्रं निर्दिशति स्तुत्येति। महत्त्वे हेतुमाह सर्वेति। भूतशब्देन स्थूलानामपि विशेषाभावाद्ग्रहे का हानिरित्याशङ्क्याह स्थूलानीति। अहङ्कारोऽहंप्रत्ययलक्षण इति सम्बन्धः। भूतानां प्रातीतिकत्वेनाभिमानमात्रात्मत्वं मत्वाहङ्कारं विशिनष्टि महाभूतेति। महतः परमित्यादौ प्रसिद्धं महच्छब्दार्थमहङ्कारहेतुमाह अहङ्कारेति। ईश्वरशक्तिरित्युक्ते चैतन्यमपि शङ्क्यते तदर्थमाह ममेति। अवधारणफलमर्थमेव स्फुटयति एतावत्येवेति। पञ्चतन्मात्राण्यहङ्कारो महदव्यक्तमित्यष्टधाभिन्नत्वं मूलप्रकृत्या सह तन्मात्रादिभेदानां समुच्चयश्चकारार्थः। दशेन्द्रियाण्येव विभज्य व्युत्पादयति श्रोत्रेत्यादिना। तदेव प्रश्नद्वारा स्फुटयति किन्तदिति। शब्दादिविषयशब्देन

स्थूलानि भूतानि स्टजन्ते। उक्तेषु तन्मात्रादिषु तदान्तरीय सम्मति-माह तानीति॥ ५॥

स्वा॰ टी॰। तत्र चेत्रस्वरूपमाह महाभूतानीति द्वाभ्याम्। महाभूतानि भूम्यादीनि पञ्च अहङ्कारस्तत्कारणभूतः बुद्धिर्ज्ञानात्मकं महत्तत्त्वं अव्यक्तं मूलप्रकृतिः इन्द्रियाणि दश बाह्यानि ज्ञानकर्मेन्द्रियाणि एकञ्चमनः इ-न्द्रियगोचराश्च पञ्चतन्मात्ररूपा एव शब्दादय आकाशादिविशेषगुणतया व्यक्ताः सन्त इन्द्रियविषयाः पञ्च तदेवं चतुर्विंशतितत्त्वान्युक्तानि॥ ५॥

**इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः।**
**एतत् क्षेत्रं समासेन सविकारमुदाहृतम्॥६॥**

अथेदानीं आत्मगुणा इति यानाचक्षते वैशेषिकास्तेऽपि क्षेत्रधर्मा एव न तु क्षेत्रज्ञस्येत्याह भगवान् इच्छाद्वेष इति। इच्छा यज्जातीयं सुखहेतुमर्थमुपलब्धवान् पूर्वं पुनस्तज्जातीयमुपलभ्यमानस्तमादातुमिच्छति सुखहेतु-रिति सेयमिच्छान्तःकरणधर्मो ज्ञेयत्वात् क्षेत्रं तथा द्वेषो यज्जातीयमर्थं दुःखहेतुत्वेनानुभूतवान् पूर्वं पुनस्तज्जाती-यमुपलभ्यमानस्तं द्वेष्टि सोऽयं द्वेषो ज्ञेयत्वात् क्षेत्रमेव तथा सुखमनुकूलं प्रसन्नं सत्त्वात्मकं ज्ञेयत्वात् क्षेत्रमेव दुःखं प्रतिकूलात्मकं ज्ञेयत्वात्तदपि क्षेत्रं सङ्घातो देहेन्द्रि-याणां संहतिस्तस्यामभिव्यक्तान्तःकरणवृत्तिः तप्त इव लौह-पिण्डेऽग्निरात्मचैतन्याभासरसविद्धा चेतना सा च क्षेत्रं ज्ञेयत्वात् धृतिर्ययावसादं प्राप्तानि देहेन्द्रियाणि ध्रियन्ते सा च ज्ञेयत्वात् क्षेत्रं सर्वान्तःकरणधर्मोपलक्षणार्थमि-च्छादिग्रहणं यत उक्तं तदुपसंहरति एतत् क्षेत्रं समासेन सविकारं सह विकारेण महदादिनोदाहृतमुक्तं यस्य

क्षेत्रभेदजातस्य संहतिरिदं शरीरं क्षेत्रं इत्युक्तं तत् क्षेत्रं व्याख्यातं महाभूतादिभेदभिन्नं धृत्यन्तम् ॥ ६ ॥

आ०टी०। मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त षोडशकश्च विकार इति पठन्ति अव्यक्ताहङ्कारादीनाञ्च गुणत्वाभिमानादिधर्मकत्वं प्रसिद्धमिति। शब्दादीनामेव ग्रहणे कर्मेन्द्रियाणां विषयानुक्तेर्वैरूप्यप्रसङ्गात् क्षेत्रनिरूपणस्य च प्रकृतत्वात् स्वरूपनिर्देशेनैव तत्क्षेत्रं यच्च यादृक् चेति व्याख्यातमिदानीमिच्छादीनामात्मविकारत्वनिवृत्तये क्षेत्रविकारत्वनिरूपणेन यादृकारीत्यं तन्निरूपयन्मतान्तरनिवृत्तिपरत्वेन श्लोकमवतारयति अथेति। सर्वज्ञोक्तिविरोधाद्धेयं वैशेषिकमतमिति मत्वोक्तं भगवानिति। उपलब्धजातीयस्योपलभ्यमानस्यास्वादानेच्छायां हेतुमाह सुखेति। इतिशब्दो हेत्वर्थः सुखहेतुत्वात्सुखविच्छेत्यर्थः। इच्छां सुखतद्धेतुविषयत्वेन व्याख्यायात्मधर्मत्वं तस्याव्युदस्यति सेयमिति। तथापि कथं क्षेत्रान्तर्भूतत्व तत्राह ज्ञेयत्वादिति। इच्छावत् द्वेषोऽपि द्वेषोऽपि धर्मो बुद्धेरित्याह तथेति। कोऽसौ द्वेषो यस्य बुद्धिधर्मत्वं तत्राह यज्जातीयमिति। तस्यापीच्छावत्क्षेत्रान्तर्भावमाह सोऽयमिति इच्छाद्वेषवद्बुद्धिधर्मः सुखमपीत्याह तथेति। तस्यापि स्वरूपोक्त्या क्षेत्रान्तःपातित्वमाह अनुकूलमिति। दुःखस्यापि स्वरूपोक्त्या क्षेत्रमध्यवर्त्तित्वमाह दुःखमिति। देहेन्द्रियात्मवादौ व्युदसितुं क्षेत्रान्तर्भूतमेव सङ्घातं विभजते देहेति। विज्ञानवादं प्रत्याह तस्यामिति। तप्ते लौहपिण्डे वह्नेरभिव्यक्तिवदुक्तसंहतौ बुद्धिवृत्तिरभिव्यज्यते तत्र चाग्निरभिव्यक्तो लोहपिण्डमेवाग्नितुल्यत्वमापादयति तथात्मचैतन्यं बुद्धिवृत्तावभिव्यक्तं तामेवात्मतया बोधयत्यतस्तदाभासानुविद्धा सैव चेतनेत्युच्यते सा च सुख्यचेतनं प्रति ज्ञेयत्वात्तद्रूपत्वात् क्षेत्रमेवेत्यर्थः। धृतिस्वरूपोक्त्या क्षेत्रत्वं तस्यादर्शयति धृतिरित्यादिना। नन्वन्येऽपि सङ्कल्पादयो ये मनोधर्माः सन्ति ते किमित्यत्र क्षेत्रत्वेन नोच्यन्ते तत्राह सर्वेति। तस्योपलक्षणार्थत्वे हेतुमाह यत इति। इच्छादिवदस्मिन्नवसरे सङ्कल्पादीनामपि दर्शितत्वं सिद्धवत् कृत्य प्रकरणविभागार्थं

यतो भगवदुक्तं क्षेत्रमुपसंहरत्यतो युक्तमिच्छादिग्रहणस्य सर्वानुक्तबुद्धि-धर्मोपलक्षणार्थत्वमित्यर्थः। विरक्तस्य ज्ञानाधिकाराय वैराग्यार्थं क्षेत्रं व्याख्यातमित्यनुवदति यस्येति। क्षेत्रभेदजातस्य व्यष्टिदेहविभागस्य सर्वस्येत्यर्थः, संहतिः समष्टिः शरीरम्॥ ६॥

स्वा० टी०। इच्छेति। इच्छादयः प्रसिद्धाः संघातः शरीरं चेतना ज्ञानात्मिका मनोवृत्तिः धृतिर्धैर्य्यं एते चेच्छादयो द्रष्टृत्वान्नात्मधर्म्माः अपितु मनो धर्माः अतः क्षेत्रान्तःपातिन एवोपलक्षणञ्चैतत्सङ्कल्पादीनां तथा च श्रुतिः। कामः सङ्कल्पो विचिकित्सा श्रद्धा अश्रद्धा धृतिरधृति-र्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवेति। अनेन यादृगिति प्रतिज्ञातः क्षेत्रधर्मा दर्शिताः। एतत् क्षेत्रं सविकारमिन्द्रियादिविकारसहितं सं-क्षेपेण तुभ्यं मयोक्तमिति क्षेत्रोपसंहारः॥ ६॥

**अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम्।**
**आचार्य्योपासनं शौचं स्थैर्य्यमात्मविनिग्रहः॥७॥**

क्षेत्रज्ञो वक्ष्यमाणविशेषणो यस्य सप्रभावस्य क्षेत्र-ज्ञस्य परिज्ञानादमृतत्वं भवति तं ज्ञेयं तत् प्रवक्ष्या-मीत्यादिना सविशेषणं स्वयमेव वक्ष्यति भगवानधुना तु तत्ज्ञानसाधनगुणममानित्वादिलक्षणं यस्मिन् सति तत् ज्ञेयविज्ञानयोग्योऽधिकृतो भवति यत्परः स-न्न्यासी ज्ञाननिष्ठ उच्यते तममानित्वादिगुणं ज्ञानसाधन-त्वात् ज्ञानशब्दवाच्यं विदधाति भगवान् अमा-नित्वमिति। अमानित्वं मानिनोऽभावोऽमानित्वं आत्मनः श्लाघनन्तदभावोऽमानित्वमदम्भित्वं स्वधर्मप्रकटी-करणं दम्भित्वं तदभावोऽदम्भित्वमहिंसा अहिंसनं प्राणि-नामपीडनं क्षान्तिः परापराधप्राप्तावविक्रियार्जवमृजु-भावोऽवक्रत्वमाचार्य्योपासनं मोक्षसाधनोपदेष्टुराचार्य्यस्य

शुश्रूषादिप्रयोगेण सेवनं शौचं कायमलानां मृज्जलाभ्यां प्रक्षालनमन्तश्च मानसः प्रतिपक्षभावनया रागादिमलाना-मपनयनं शौचं स्थैर्य्यं स्थिरभावो मोक्षमार्गे एव कृतव्यव-सायित्वमात्मविनिग्रह आत्मन उपकारकस्यात्मशब्दवाच्यस्य कार्य्यकारणसङ्घातस्य विनिग्रहः स्वभावेन सर्वतः प्रवृ-त्तस्य सन्मार्गे एव निरोध आत्मविनिग्रहः ॥ ७ ॥

आ० टी० । ननु उक्तौ चेत् क्षेत्रक्षेत्रज्ञौ वक्तव्यस्तं हित्वा किमित्य-न्यदुच्यते तत्राह क्षेत्रज्ञ इति । अनादिमदित्यादिना वक्ष्यमाणविशेषणं क्षेत्रज्ञं स्वयमेव भगवान् विशिष्टविशेषणसहितं ज्ञेयं यत्तदित्यादिना वक्ष्यतीति सम्बन्धः । किमिति क्षेत्रज्ञो वक्ष्यते तत्राह यस्येति । ज्ञेयं यत्तदित्यतः प्राक्तनग्रन्थस्य तात्पर्य्यमाह अधुनेति । अमानित्वादिलक्षणं विदधातीत्युत्तरत्र सम्बन्धः । ज्ञानसाधनसमुदायबोधनं कुत्रोपयुज्यते तत्राह यस्मिन्निति । योग्यमधिकृतमेव विवृणोति यत्पर इति । एतत् ज्ञानमिति वचनात् कथमिदं ज्ञानसाधनमित्याशङ्क्याह तमिति । तद्विधा-नस्य वक्तृद्वारा दार्ढ्यं सूचयति भगवानिति । अमानित्वादिनिष्ठस्यान्त-र्धियो ज्ञानमिति नियमार्थमाह अमानित्वमिति । मानस्तिरोहितो विक्षेपः स चात्मन्युत्कर्षारोपहेतुः सोऽस्येति मानी न मान्यमानी तस्य भावो मानित्वमिति व्याकरोति अमानित्वमित्यादिना । प्रतियोगिमुखे-नादम्भित्वं विवृणोति अदम्भित्वमिति । वाङ्मनोदेहैरपीडनं प्राणि-नामहिंसनम् । तदेवाहिंसेत्याह अहिंसेति । परापराधस्य चित्तवि-कारकारणस्य प्राप्तावेवाविकृतचित्तत्वेनापकारसहिष्णुत्वं क्षान्तिरित्याह क्षान्तिरिति । अवक्रत्वमकौटिल्यं यथा हृदयव्यवहारः सदैकरूपप्रवृत्ति-निमित्तत्वं चेत्यर्थः । उपनीय तु यः शिष्यमित्यादिनोक्तमाचार्य्यं व्यव-च्छिनत्ति मोक्षेति । शुश्रूषादि इत्यादिपदं नमस्कारादिविषयम् । बाह्य-माभ्यन्तरञ्च द्विःप्रकारं शौचं क्रमेण विभजते शौचमित्यादिना । मनसो रागादिमलानामिति सम्बन्धः । तदपनयोपायमुपदिशति प्रतिपक्षेति ।

रागादिप्रतिकूलस्य भावनाविषयेषु दोषदृष्ट्या प्रवृत्तस्यैव यावत्। स्थिरभावमेव विशदयति मोक्षेति। आत्मनो नित्यविज्ञानाधेयातिशयस्य कतो विनिग्रहस्तस्मादृ आत्मन इति ॥ ७ ॥

स्वा॰ टी॰। इदानीममानित्वमित्यादिपञ्चभिरक्षलक्षणात् क्षेत्राद-तिरिक्ततया ज्ञेयं शुद्धं क्षेत्रज्ञं विस्तरेण वर्णयिष्यन् तत्त्वज्ञानसाधना-न्याह अमानित्वमिति। अमानित्वं स्वगुणश्लाघाराहित्यं अदम्भित्वं दम्भराहित्यं अहिंसा परपीडावर्जनं क्षान्तिः सहिष्णुत्वं आर्जवमव-क्रता आचार्योपासनं सद्गुरुसेवनं शौचं बाह्यमाभ्यन्तरञ्च तत्र बाह्यं मृज्जलादिना आभ्यन्तरञ्च रागादिमलक्षालनम्। तथा च स्मृतिः। शौचञ्च द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा। मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथान्तरमिति। स्थैर्यं सन्मार्गप्रवृत्तस्य तदेकनिष्ठता आत्म-विनिग्रहः शरीरसंयमः एतज्ज्ञानमिति प्रोक्तमिति पञ्चमेनान्वयः ॥७॥

## इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च।
## जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥८॥

किञ्च इन्द्रियेति। इन्द्रियार्थेषु शब्दादिषु दृष्टादृष्टेषु भोगेषु विरागभावो वैराग्यमनहङ्कारोऽहङ्काराभाव एव च जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनं जन्म च मृत्युश्च जरा च व्याधयश्च दुःखानि च तेषु जन्मादिदुःखान्तेषु प्रत्येकं दोषानुदर्शनं आलोचनं जन्मनि गर्भवासयोनिद्वारा निःसरणं दोषस्तस्यानुदर्शनं आलोचनं तथा मृत्यौ दोषा-नुदर्शनं तथा जरायां प्रज्ञाशक्तितेजोनिरोधदोषानुद-र्शनं आलोचनं परिभूतता चेति तथा व्याधिषु शिरो-रोगादिषु दोषानुदर्शनं तथा दुःखेष्वध्यात्माधिभूताधि-दैवनिमित्तेष्वथ वा दुःखान्येव दोषो दुःखदोषस्तस्य जन्मा-

दिषु पूर्ववदनुदर्शनं दुःखं जन्मदुःखं जरादुःखं मृत्यु-दुःखं व्याधयो दुःखनिमित्तत्वाज्जन्मादयो दुःखं दुःखानि न पुनः स्वरूपेणैव दुःखमित्येवं जन्मादिषु दुःखदोषानुद-र्शनात् देहेन्द्रियविषयभोगेषु वैराग्यमुपजायते ततः प्रत्य-गात्मनि प्रवृत्तिः करणानामात्मदर्शनाय एवं ज्ञानहेतु-त्वात् ज्ञानमुच्यते जन्मादिदुःखदोषानुदर्शनम् ॥ ८ ॥

न केवलममानित्वादीन्येव ज्ञानस्यान्तरङ्गसाधनानि किन्तु वैराग्या-दीन्यपि तथाविधानि सन्तीत्याह किञ्चेति । दृष्टादृष्टेष्वनेकार्थेषु रागे तत्प्रतिबन्धं ज्ञानं नोत्पद्यते इति मत्वा व्याकरोति इन्द्रियेति । आवि-र्भूतो गर्वोऽहङ्कारस्तदभावोऽपि ज्ञानहेतुरित्याह अनहङ्कार इति । इन्द्रियार्थेषु वैराग्यमुक्तमुपपादयति जन्मेति । प्रत्येकं दोषानुदर्शनमित्युक्तं तत्र जन्मनि दोषानुदर्शनं विशदयति जन्मनीति । यथा जन्मनि दोषानु-सन्धानन्तथा मृत्यौ दोषस्य सर्वमर्मनिकृन्तनादेरालोचनं कार्य्यमित्याह तथेति । जन्मनि मृत्यौ च दोषानुसन्धानवज्जरादिष्वपि दोषानुसन्धानं कर्त्तव्यमित्याह तथेति । व्याधिषु दोषस्यासह्यतारूपस्यानुसन्धानं दुःखेषु त्रिविधेष्वपि दोषानुसन्धानं प्रसिद्धं व्याख्यानान्तरमाह अथवेति । यथा जन्मादिषु दुःखान्तेषु दोषदर्शनमुक्तं तथा तेष्वेव दुःखाख्यदोषस्य दर्शनं स्फुटयति दुःखमित्यादिना । कथं जन्मादीनां बाह्येन्द्रियग्राह्याणां दुः-खत्वं तत्राह दुःखेति । जन्मादिषु दोषानुदर्शनकृतं फलमाह एवमिति । वैराग्ये सत्यात्मदृष्ट्यर्थं करणानां तदाभिमुख्येन प्रवृत्तिरिति वैराग्य-फलमाह तत इति । जन्मादिदुःखदोषानुदर्शनं ज्ञानहेतुषु किमित्युपसं-ख्यातमित्याशङ्क्य वैराग्यादिद्वारा धीहेतुत्वादित्याह एवमिति ॥ ८ ॥

स्वा॰ टी॰ । किञ्च इन्द्रियार्थेष्विति । जन्मादिषु दुःखदोषयोर-नुदर्शनं पुनः पुनरालोचनं दुःखरूपस्य दोषस्यानुदर्शनमिति वा स्पष्ट-मन्यत् ॥ ८ ॥

**असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु।**
**नित्यञ्च समचित्तत्वमिष्टानिष्टोपपत्तिषु॥ ९॥**

किञ्च असक्तिरिति। असक्तिः सक्तिः सङ्गनिमित्तेषु विषयेषु प्रीतिमात्रं तदभावोऽसक्तिरनभिष्वङ्गोऽभिष्वङ्गाभावोऽभिष्वङ्गो नाम शक्तिविशेष एवानन्यात्मभावनालक्षणो यथा अन्यस्मिन् सुखिनि दुःखिनि चाहमेव सुखी दुःखी च जीवति मृते चाहमेव जीवामि मरिष्यामि चेति क्व त्याह पुत्रदारगृहादिषु पुत्रेषु दारेषु आदिग्रहणादन्येष्वप्यत्यन्तेष्टेषु दासवर्गादिषु तच्चोभयं ज्ञानार्थत्वात् ज्ञानमुच्यते नित्यञ्च समचित्तत्व तुल्यचित्तता क्व इष्टानिष्टोपपत्तिषु इष्टानामनिष्टानां चोपपत्तयः संप्राप्तयस्तास्विष्टानिष्टोपपत्तिषु नित्यमेव तुल्यचित्तता इष्टोपपत्तिषु न हृष्यति न कुप्यति चानिष्टोपपत्तिषु तच्चैतन्नित्यं समचित्तत्वं ज्ञानम्॥ ९॥

आ॰ टी॰। ज्ञानस्यान्तरङ्गमेव हेत्वन्तरमाह किञ्चेति। नन्वसक्तेरेवाभिष्वङ्गाभावस्तथा च पुनरुक्तिरित्याशङ्क्याभिष्वङ्गोक्तिद्वारा निरस्यति अभिष्वङ्गो नामेति। अन्यस्मिन्नेव पुत्रादावनन्यत्वधिया तद्गते सुखादावात्मनि तद्भावनाख्यं शक्तिविशेषमेवोदाहरति यथेति। उक्तविशेषणयोराकाङ्क्षाद्वारा विषयमाह क्वेत्यादिना। उक्तविशेषणयोर्ज्ञानशब्दस्योपपत्तिमाह तच्चेति। यदा हर्षविषादशून्यमनस्तदपि ज्ञानहेतुरित्याह नित्यञ्चेति। तदेव विभजते इष्टेति। तस्य ज्ञानहेतुत्वञ्चिगमयति तच्चैतदिति॥ ९॥

स्वा॰ टी॰। किञ्च असक्तिरिति। पुत्रदारादिषु असक्तिः प्रीतित्यागः अनभिष्वङ्गः पुत्रादीनां सुखे दुःखे वा अहमेव सुखी दुःखी चेत्यध्यासातिरेकाभावः, इष्टानिष्टयोरुपपत्तिषु प्राप्तिषु नित्यं सर्वदा समचित्तत्वम्॥ ९॥

**मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।**
**विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ १० ॥**

किञ्च मयि चेति । मयि चेश्वरेऽनन्ययोगेनापृथक् समाधिना नान्यो भगवतो वासुदेवात् परोऽस्त्यतः स एव नो गतिरित्येवं निश्चिताऽव्यभिचारिणी बुद्धिरनन्ययोगस्तेन भजनं भक्तिर्न व्यभिचरणशीला अव्यभिचारिणी सा च ज्ञानं विविक्तदेशसेवित्वं विविक्तः स्वभावतः संस्कारेण वा शुच्यादिभिः सर्पव्याघ्रादिभिश्च रहितः अरण्यनदीपुलिनदेवगृहादिर्भिर्विविक्तो देशस्तं सेवितुं शीलमस्येति विविक्तदेशसेवी तद्भावो विविक्तदेशसेवित्वं विविक्तेषु हि देशेषु चित्तं प्रसीदति यतस्तत आत्मादिभावना विविक्ते उपजायतेऽतो विविक्तदेशसेवित्वं ज्ञानमुच्यते अरतिररमणं च जनसंसदि तज्जनानां प्राकृतानां संस्कारशून्यानामविनीतानां कलहोन्मुखितदिच्छानां संसत् समवायाजनसंसन्न संस्कारवतां विनीतानां संसत्तस्या ज्ञानोपकारकत्वात् अतः प्राकृतजनसंसद्यरतिर्ज्ञानार्थत्वात् ज्ञानम् ॥ १० ॥

आ० टी० । साधनान्तरमाह किञ्चेति । अनन्ययोगमेव संक्षिप्य व्यनक्ति नेत्यादिना । उक्तधीद्वारा जाताया भक्तेर्भगवति स्थैर्यं दर्शयति नेति । तत्रापि ज्ञानशब्दस्तद्धेतुत्वादित्याह सा चेति । देशस्य विविक्तत्वं द्विविधमुदाहरति विविक्त इति । तदेव स्पष्टयति अरण्येति । उक्तदेशसेवित्वं कथं ज्ञाने हेतुस्तत्राह विविक्तेष्विति । आत्मादीत्यादिशब्देन परमात्मा वाक्यार्थश्चोच्यते । नन्वरतिर्विषयत्वेनाविशेषतो जन-

संसन्मात्रं किमिति न रुच्यते तत्राह तस्य इति । सन्तः सङ्गस्तु भेषज-मित्युपलम्भादित्यर्थः ॥ १० ॥

व्या० टी० । मयीति । मयि परमेश्वरेऽनन्ययोगेन सर्वात्मदृष्ट्या अव्यभिचारिणी एकान्ता भक्तिः, विविक्तं शुद्धंचित्तप्रसादकरत्वं देशं सेवितुं शीलं यस्य तस्य भावस्तत्त्वं प्राकृतानां जनानां संसदि सभायाम-रतीरत्यभावः ॥ १० ॥

## अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।
## एतज् ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥११॥

किञ्च अध्यात्मेति । अध्यात्मज्ञाननित्यत्वमात्मादिविषयं ज्ञानमध्यात्मज्ञानं तस्मिन् नित्यभावो नित्यत्वममानित्वादीनां ज्ञानसाधनानां भावानां परिपाकनिमित्तं तत्त्वज्ञानं तस्यार्थो मोक्षः संसारोपरमस्तस्यालोचनं तत्त्वज्ञानार्थदर्शनं तत्त्वज्ञानफलालोचने हि तत्साधनानुष्ठाने प्रवृत्तिः स्यादिति एतदमानित्वादितत्त्वज्ञानार्थदर्शनान्तमुक्तं, ज्ञानमिति प्रोक्तं ज्ञानार्थत्वात् अज्ञानपदे तस्मात यथोक्तादन्यथाविपर्य्ययेण मानित्वं दम्भित्वं हिंसा क्षान्त्यनार्ज्जवमित्याद्यज्ञानं विज्ञेयं परिहरणाय संसारप्रवृत्तिकारणत्वादि ॥ ११ ॥

व्या० टी० । साधनान्तरमाह किञ्चेति । आत्मादीत्यादिशब्दोऽनात्मार्थस्तद्विषयं ज्ञानं विवेकस्तत्रत्यत्व तत्रैव निष्ठावत्त्वं विवेकनिष्ठो हि वाक्यार्थज्ञानसमर्थो भवति तेषां भावनापरिपाको नाम यत्नेन साधितानां प्रकर्षपर्य्यन्तत्वं तन्निमित्तं तत्त्वज्ञानमैक्यसाक्षात्कारस्तत्फलालोचनं किमर्थमित्याशङ्क्याह तत्त्वेति । प्रवृत्तिः स्यादित्यतस्तत्त्वज्ञानार्थदर्शनमर्थवदिति शेषः । ज्ञानस्यान्तरङ्गहेतुत्वात्तदुपसंहरति एतदिति । किमिति

तस्य विज्ञेयत्वमित्याशङ्क्याह परिहरणायेति। तत्र हेतुः संसारेति। तस्य प्रवृत्तिरुत्पत्तिस्तद्धेतुत्वाज्ज्ञानित्वादि त्याज्यं ज्ञाते च त्याज्यत्वं तेन तस्य ज्ञेयतेत्यर्थः इतिशब्दः साधनाधिकारसमाप्त्यर्थः॥ ११॥

स्वा० टी०। किञ्च अध्यात्मेति। आत्मानमधिकृत्य वर्त्तमानं ज्ञानं तस्मिन्नित्यत्वं नित्यभावः तत्त्वम्पदार्थशुद्धिनिष्ठत्वमित्यर्थः, तत्त्वज्ञानस्यार्थः प्रयोजनं मोक्षस्तस्य दर्शनं मोक्षस्य सर्वोत्कृष्टत्वालोचनमित्यर्थः, एतदमानित्वमदम्भित्वमित्यादिविंशतिसंख्याकं यदुक्तमेतज्ज्ञानमिति प्रोक्तं वशिष्ठादिभिर्ज्ञानसाधनत्वात् अतोऽन्यथा अस्माद्विपरीतं मानित्वादि यत्तदज्ञानमिति ज्ञानविरोधित्वात् अतः सर्वथा त्याज्यमित्यर्थः॥ ११॥

**ज्ञेयं यत्तत् प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते।**
**अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते॥ १२॥**

यथोक्तेन ज्ञानेन ज्ञातव्यं किमित्याकाङ्क्षायामाह ज्ञेयं यत्तदित्यादिति। ननु यमानियमाश्चामानित्वादयो न तैर्ज्ञेयाः, ते न ह्यमानित्वादिकस्य चिद्वस्तुनः परिच्छेदकं दृष्टं, सर्वत्रैव यद्विषयं ज्ञानं तदेव तस्य ज्ञेयस्य परिच्छेदकं दृश्यते, नह्यन्यविषयेण ज्ञानेनान्यदुपलभ्यते यथा घटविषयेण ज्ञानेनाग्निर्न दोषः ज्ञाननिमित्तत्वात् ज्ञानमुच्यते इति ह्यवोचाम ज्ञानसहकारिकारणत्वाच्च ज्ञेयमिति ज्ञेय ज्ञातव्यं यत्तत् प्रवक्ष्यामि प्रकर्षेण यथावद्वक्ष्यामि किं फलं तदिति प्ररोचनेन श्रोतुरभिमुखीकरणायाह यत् ज्ञेयं ज्ञात्वा अमृतत्वमश्नुते न पुनर्म्रियत इत्यर्थः, अनादिमत् आदिरस्यास्तीत्यादिमत् न आदिमदनादिमत् किं तत् परं निरतिशयं ब्रह्म ज्ञेयमिति प्रकृतमत्र केचित् अनादिमत् परमिति पदं छिन्दन्ति बहुव्रीहि-

षोक्तोऽर्थे मतुप् आनर्थक्यमनिष्टं स्यादित्यर्थविशेषञ्च दर्शयन्नाह वासुदेवाख्या परा शक्तिर्यस्य तन्मत्परमिति मत्यमेवमपुनरुक्तं स्यादर्थश्चेत् सम्भवति नत्वर्थः सम्भवति ब्रह्मणः सर्वविशेषप्रतिषेधेनैव विजिज्ञापयिषितत्वान्न सत्तन्नासदुच्यत इति विशिष्टशक्तिमत्त्वप्रदर्शनं विशेषप्रतिषेधश्चेति विप्रतिषिद्धः तस्मान्मतुपो बहुव्रीहिणा समा-

---

आ० टी०। उत्तरग्रन्थमवतारयति यथोक्तेति। अमानित्वादीना ज्ञानत्वमाक्षिपति नन्विति। वस्तुपरिच्छेदकत्वात् ज्ञानत्वमाशङ्क्याह नहीति। परिच्छेदकत्वात् ज्ञानत्वं ज्ञानत्वात् परिच्छेदकत्वमित्यन्योन्याश्रयमित्यभिप्रेत्याह यस्मेति। स्वार्थस्यैव ज्ञानं परिच्छेदकमित्येतद्व्यतिरेकद्वारा विशदयति न हीति। व्यतिरेकदृष्टान्तमाह यथेति। अमानित्वादीनां ज्ञानत्वमाक्षिप्तं प्रतिक्षिपति नैष दोष इति। तत्र हेतुत्वेनोक्तं स्मारयति ज्ञानेति। तेन ज्ञानशब्दे हेत्वन्तरमाह ज्ञानेति। अमानित्वादीनां ज्ञानत्वमुक्त्वा ज्ञातव्यमवतारयति ज्ञेयमिति। प्रश्नद्वारा ज्ञेयप्रवचनस्य फलमुक्त्वा प्ररोचनं कृत्वा तेन श्रोतुराभिमुख्यमापादयितुं प्ररोचनफलोक्तिपरमनन्तरवाक्यमित्याह किमित्यादिना। तदेव विशिनष्टि अनादिमदिति। आदिमत्त्वराहित्यमव्याकृतस्यापि ततो विशेषं दर्शयति किन्त्विति। भोक्तुरपि भोग्यात् परत्वमित्यतो विशिनष्टि ब्रह्मेति। अनादीत्येकं पदं मत्परमिति पदच्छेदाच्च पुनरुक्तिरिति मतान्तरमभ्यापयति अत्रेति। एकपदत्वसम्भवे किमिति पदद्वयमित्याशङ्क्याह बहुव्रीहिणेति। आदिरस्य नास्तीति यो बहुव्रीहिणोक्तोऽर्थस्तस्यैवादिमत्त्वनिषेधे नास्ति मतुपोऽर्थवत्त्वमिति। मतुपानर्थक्यमनिष्टं स्यादिति मतुत्वा पदं छिन्दन्तीति पूर्वेण सम्बन्धः। आदिरस्य नास्तीत्यनादीत्युक्तं मत्परमित्युच्यमाने कोऽर्थः स्यादित्याशङ्क्याह अर्थेति। उक्तव्याख्यानस्यायुक्तत्वाच्चायं पुनरुक्तिसमाधिरित्याह सत्यमिति। अर्थासम्भवं समर्थयते ब्रह्मण इति। तथापि विशिष्टशक्तिमत्त्वं किं न स्यादित्या-

नार्थत्वेऽपि प्रयोगः श्लोकपूरणार्थः अमृतत्वफलं ज्ञेयं मयोच्यत इति प्ररोचनेनाभिमुखीकृत्याह न सत्तत् ज्ञेयमुच्यत इति नाप्यसत्तदुच्यते ननु महता परिकरबन्धेन कण्ठरवेणोद्घोष्य ज्ञेयं प्रवक्ष्यामीत्यननुरूपमुक्तं न सत्तन्नासदुच्यते इति न अनुरूपमेवोक्तं कथं सर्वासु उपनिषत्सु ज्ञेयं ब्रह्म नेति नेत्यस्थूलमनण्वित्यादिविशेषप्रतिषेधेनैव निर्दिश्यते नेदं तदिति वाचोऽगोचरत्वान्ननु तदस्ति यद्वस्त्वस्तिशब्देनोच्यते अथास्तिशब्देन नोच्यते यत् नास्ति तत् ज्ञेयं विप्रतिषिद्धञ्च ज्ञेयं तदस्तिशब्देन नोच्यत इति च न तावन्नास्ति नास्तिबुद्ध्यविषयत्वान्ननु सर्वा बुद्धयोऽस्तिनास्तिबुद्ध्यनुगता एव तत्रैव सति ज्ञेयमप्यस्तिबुद्ध्यनुगत-

---

शङ्कयाह विशिष्टेति तथापि मतुपो बहुव्रीहिणो तुल्यस्यार्थस्य कथं नानर्थक्यं तत्राह तस्मादिति। अनादिमत्परं ब्रह्मेत्यत्र पक्षान्तरं प्रतिक्षिप्य स्वपक्षं समर्थितं सम्प्रति ब्रह्मणो ब्रह्मत्वादेव कार्यकारणात्मकत्वप्राप्तावुक्तानुवादद्वारा न सदित्याद्यवतारयति अमृतत्वेति। सत्कार्य्यमभिव्यक्तनामरूपत्वादसत्कारणं तद्विपर्ययादिति भागः ज्ञेयप्रवचनमनिर्वाच्यविषयत्वात् प्रक्रमप्रतिकूलमित्याक्षिपति नन्विति। निर्विशेषस्य वस्तुनो ज्ञेयत्वात्तद्विषयं प्रवचनं प्रक्रमानुकूलमित्युत्तरमाह नेत्यादिना। अनिर्वाच्यत्वे न सत्तन्नासदित्युच्यमाने कथमिदमनुरूपमिति पृच्छति कथमिति। ब्रह्मात्मप्रकाशस्य सिद्धत्वात्तदर्थं विधिमुखेनोपदेशायोगादध्यस्तात्तद्धर्मनिवृत्तये निषेधद्वारोपदेशस्य वेदान्तेषु प्रसिद्धेरारोपितसर्वविशेषनिषेधरूपमिदं प्रवचनमुचितमिति परिहरति सर्वास्विति। ज्ञेयस्य ब्रह्मणो विधिमुखोपदेशायोगे हेतुमाह वाच इति। ब्रह्मणोऽस्ति शब्दवाच्यत्वे नरविषाणवन्नास्तित्वमित्यानिष्टमाशङ्कते नन्विति। एवमुत्सर्गेऽपि ब्रह्मणि किमायातमित्याशङ्क्याह सर्वेति। ज्ञेयस्यास्तिशब्दावाच्यत्वे व्याघातश्चेत्याह

प्रत्ययविषयं वास्यान्नास्तिबुद्ध्यनुगतप्रत्ययविषयं वास्या-
न्नातीन्द्रियत्वेनोभयबुद्ध्यनुगतप्रत्ययविषयत्वात् यद्धीन्द्रिय-
गम्यं वस्तु घटादिकं तदस्तिबुद्ध्यनुगतप्रत्ययविषयं वास्या-
न्नास्तिबुद्ध्यनुगतप्रत्ययविषयं वा इदन्तु ज्ञेयमतीन्द्रियत्वेन
शब्दैकप्रमाणगम्यत्वान्न घटादिवदुभयबुद्ध्यनुगतप्रत्ययविष-
यमित्यतो न सत्तन्नासदित्युच्यते यत्तूक्तं विरुद्धमुच्यते ज्ञेयं
यन्न सत्तन्नासदुच्यते इति न विरुद्धमन्यदेव तद्विदितादथो
अविदितादधीति श्रुतेः श्रुतिरपि विरुद्धार्थेति चेत् यथा
यज्ञाय शालामारभ्य को हि तद्वेद यद्यमुष्मिन् लोकेऽस्ति
वा नवेतीत्येवमिति चेत् न विदिताविदिताभ्यामन्यत्वश्रुते
रवश्यविज्ञेयार्थप्रतिपादनपरत्वात् यद्यमुष्मिन्नित्यादि तु
विधिशेषोऽर्थवाद उपपत्तेश्च सदादिशब्दैः ब्रह्म नोच्यत इति
सर्वो हि शब्दोऽर्थप्रकाशनाय प्रयुक्तः श्रूयमाणश्च श्रोतृभि-

---

विप्रतिषिद्धञ्चेति । अस्तिशब्दवाच्यत्वादवस्तु ब्रह्म त्वत्वाप्रयोजकत्वमाह
न तावदिति । नास्तिबुद्धिविषयत्वमेवावस्तुत्वे निमित्तमतस्तदभावात्
ब्रह्मणो नावस्तुतेत्येतदेव व्यक्तीकर्त्तुं चोदयति नन्विति । सर्वसामान्य-
यामस्तिधीत्वेन नास्तिधीत्वेन वानुगतत्वेऽन्यतरधीगोचरत्वाभावे
ब्रह्मणो निर्वाच्यं दुर्वारमिति फलितमाह नेति ब्रह्मणो घटादिवै-
लक्षण्यादुभयबुद्ध्यविषयत्वेऽपि नानिर्वाच्यतेत्याह नेत्यादिना । घटादे-
रिन्द्रियग्राह्यस्योभयबुद्धिविषयत्वेऽपि ब्रह्मणस्तद्ग्राह्यस्य नोभयधीविष-
यत्वं तथापि तथापि नानिर्वाच्यत्वं सच्चिदेकतानस्य शब्दप्रमाणादविषय-
त्वेन दृष्टत्वादित्युक्तमेव प्रपञ्चयति यद्धीति । परोक्तं विरोधमनुवदति
यत्त्विति । मुख्यवृत्त्यान निराचष्टे न विरुद्धमिति । सापि विरुद्धार्थ-
त्वात्तमानं बोधकस्याविरोधापेक्षत्वादिति शङ्कते श्रुतिरिति । तस्याविरुद्धा-

जातिक्रियागुणसम्बन्धद्वारेण सङ्केतग्रहणं सव्यपेक्षार्थं प्रत्याययति नान्यथा दृष्टत्वात् तत् यथा गौरश्व इति वा जातितः पचतीति वा क्रियातः शुक्लः कृष्ण इति वा गुणतो धनी गोमानिति च सम्बन्धतो न तु ब्रह्म जातिमदतो न सदादिशब्दवाच्यं नापि गुणवत् येन गुणशब्देनोच्येत निर्गुणत्वान्नापि क्रियाशब्दवाच्यं निष्क्रियत्वान्निष्कलं निष्क्रियं शान्तमिति श्रुतेः। न च सम्बन्ध्येकत्वादद्वयत्वादविषयत्वा-दात्मत्वाच्च न केनचिच्छब्देनोच्यत इति युक्तं यतो वाचो निवर्त्तन्त इत्यादिश्रुतिभिश्च॥ १२॥

---

धत्वेनाप्रामाण्ये दृष्टान्तमाह यथेति। प्राचीनवंशं करोतीति पारलौ-किकफलयज्ञानुष्ठानार्थं प्राग्वंशनिर्माणं प्रस्तुत्य को हि तद्वेदेत्याद्या पर-लोकसत्त्वे सन्दिहाना यथा विरुद्धार्था श्रुतिरप्रमाणमेवं विदिताविदि-तान्यत्वश्रुतिरपीत्यर्थः। नेयं श्रुतिर्विरुद्धार्थत्वेनामानतया ज्ञातव्या ब्रह्मणस्त्वर्थान्तरप्रत्यक्त्वप्रतिपादनेन मानत्वादित्युत्तरमाह न विदितेति। यत्तु विरुद्धार्थत्वे को हीत्युदाहृतं तदसदर्थवादस्य विधिशेषस्य स्वार्थे तात्पर्याभावादित्याह यदीति। यत्र जात्यादिमत्त्वं तत्र वाच्यत्वं यथा गवादौ न ब्रह्मणि जात्यादिमत्त्वमतस्तस्यावाच्यत्वान्निषेधेनैव बोध्यत्वमि-त्याह उपपत्तेश्चेति। नोच्यत इति निषेधेनैव तस्योपदेश इति शेषः। जात्यादिमतोऽर्थस्यैव वाच्यत्वं तत्रैव सङ्गतिग्रहादिति प्रपञ्चयति सर्वो हीति। अश्रुतस्य जात्यादिद्वारेणाज्ञातसङ्गतेर्वा शब्दस्य न बोधकत्वमदृष्टे-रित्याह नान्यथेति। जात्यादेः सच्छब्दविषयत्वमुदाहरति तद्यथेत्या-दिना। ब्राह्मणस्त्वगोत्रमवर्णमित्यादिश्रुतेः जात्यादिमत्त्वाभावान्न शब्दवा-च्यतेत्याह न त्विति। केवलो निर्गुणश्चेति श्रुतेः गुणद्वारा ब्रह्मणो न वाच्यतेत्याह न त्विति। केवलो निर्गुणमिति निष्क्रियत्वे मानमाह निष्कलमिति। ब्रह्मणो द्वितीयस्याशेषोपनिषत्सु सिद्धत्वाद्विशिष्टस्य सम्ब-

सर्वदेहावयवत्वेन गम्यमानाः पाणिपादादयो ज्ञेयशक्तिसद्भावनिमित्तकार्या इति ज्ञेयसद्भावे लिङ्गानि ज्ञेयस्येत्युपचारत उच्यन्ते तथा व्याख्येयमन्यत् सर्वतः पाणिपादं तत् ज्ञेयं सर्वतोऽक्षिशिरोमुखं सर्वतोऽक्षीणि शिरांसि मुखानि च यस्य तत् सर्वतोऽक्षिशिरोमुखं सर्वतः श्रुतिमत् सर्वत्र श्रुतिमच्छ्रुतिः श्रवणेन्द्रियं तत् यस्य तत् श्रुतिमल्लोके प्राणिनिकाये सर्वमावृत्य संव्याप्य तिष्ठति स्थितिं लभते ॥ १३ ॥

व्या० टी० । सर्वविशेषरहितस्यावाङ्मनसगोचरस्यादृष्टेः दृष्टेषु विपरीतस्य प्राप्तं ब्रह्मणः शून्यत्वं प्रत्यक्षेन्द्रियप्रवृत्त्यादिहेतुत्वेन कल्पितद्वैतसत्तास्फूर्तिप्रदत्वं नश्वरत्वं न च सत्त्वं दर्शयन्नादौ देहादीनां प्रवृत्तिमतां रथादिवदचेतनानां प्रतिनियतप्रवृत्तिमत्त्वात् चेतनाधिष्ठितत्वमनुमिमानस्तत् प्रत्यक्चेतनं ब्रह्मेत्याह सर्वत इति तदस्तित्वमिति तच्छब्दो ज्ञेयब्रह्मार्थः सदाशङ्केति तच्छब्देनासत्त्वमुच्यते । ननु सर्वदेहेषु पाणिपादाद्यस्तीति कथं पाणीनां पादानां च देहस्थत्वेनात्मधर्मत्वं तत्राह सर्वेति । करणप्रवृत्तेरथादिप्रवृत्तिवत् चेतनाधिष्ठानपूर्वकप्रवृत्तिमत्त्वाच्चेति नाधिष्ठातृपूर्विकेत्यर्थः । एवं प्रवृत्त्या चेतनास्तित्वसिद्धावपि कथं ज्ञेयस्यास्तित्वमित्याशङ्क्य चेतनस्यैव सर्वोपाधिना चैतन्यत्वाच्चेतनास्तित्वं तदस्तित्वमेवेत्याह चैतन्यस्येति । तस्य सर्वोपाधित्वेऽपि कथं पाणिपादाक्षिशिरोमुखादिमत्त्वमित्याशङ्क्याह क्षेत्रस्येति । अतश्चोपाधितस्तस्मिन् विशेषोक्तिरिति शेषः । कथं तर्हि न सत्तन्नासदिति निर्विशेषत्वोक्तिरित्याशङ्क्याह ज्ञेयेति । पाणिपादादिमत्त्वमौपाधिकं मिथ्या चेत् ज्ञेयप्रवचनाधिकारे कथं तदुक्तिरित्याशङ्क्याह उपाधीति । मिथ्यारूपमपि ज्ञेयवस्तुज्ञानोपयोगीत्यत्र वृद्धसम्मतिमाह तथा हीति । पाणिपादादीनामन्यगतानामात्मधर्मत्वेनारोप्य व्यपदेशो हेतुरिति चेत् तत्राह सर्वत्रेति । ज्ञेयस्य ब्रह्मणः शक्तिविशेषविशिष्टत्वेन प्राणिनिकायमध्ये तत्त्वं निमित्तीकृत्य स्वकार्यैर्न्यो

भवन्ति पाण्यादय इति कृत्स्नेति योजना। सर्वतोऽक्षीत्यादावुक्तमति-दिशति तद्वेति। तत् ज्ञेयं यथा सर्वतः पाणिपादमिति व्याख्यातं तथे-त्युक्तमेव स्पष्टयति सर्वत इति। सर्वतोऽक्षीत्यादेरक्षरार्थमाह सर्वतो-ऽक्षीति। अक्षिश्रवणवत्त्वमवशिष्टज्ञानेन्द्रियवत्त्वस्य पाणिपादमुखवत्त्व-ञ्चावशिष्टकर्मेन्द्रियवत्त्वस्य मनोबुद्ध्यादिमत्त्वस्य चोपलक्षणम्। एकस्य सर्वत्र पाण्यादिमत्त्वं साधयति सर्वमिति॥ १३॥

स्वा० टी०। नन्वेवं ब्रह्मणः सदसद्विलक्षणत्वे सति सर्वं खल्विदं ब्रह्मैवेदं सर्वमित्यादिश्रुतिर्विरुध्येतेत्याशङ्क्य परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेत्यादिश्रुतिप्रसिद्धया अचिन्त्यशक्त्या सर्वात्मत्वं तस्य दर्शयन्नाह सर्वत इति पञ्चभिः। सर्वतः सर्वत्र पाणयः पादाश्च यस्य तत्, सर्वतोऽक्षीणि शिरांसि मुखानि च यस्य तत्, सर्वतः श्रुतिमत् श्रवणेन्द्रिययुक्तं सत् लोके सर्वमावृत्य व्याप्य तिष्ठति सर्वप्राणि-प्रवृत्तिभिः पाण्यादिभिरुपाधिभिः सर्वव्यवहारास्पदत्वेन तिष्ठतीत्यर्थः॥१३

## सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम्।
## असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च॥ १४॥

उपाधिभूतपाणिपादादीन्द्रियाध्यारोपणात् ज्ञेयस्य तद्वत्ताशङ्का माभूदित्येवमर्थः श्लोकारम्भः सर्वेन्द्रियेति। सर्वेन्द्रियगुणाभासं सर्वाणि च तानीन्द्रियाणि श्रोत्रादीनि बुद्धीन्द्रियकर्मेन्द्रियाख्यान्यन्तःकरणे च बुद्धिमनसी ज्ञेयो-पाधित्वस्य तुल्यत्वात् सर्वेन्द्रियग्रहणेन गृह्यन्ते अपि चान्तः-करणोपाधिद्वारेणैव श्रोत्रादीनामपि उपाधित्वमित्यतोऽ-न्तःकरणबहिःकरणोपाधिभूतैः सर्वेन्द्रियगुणैरध्यवसायस-ङ्कल्पश्रवणवचनादिभिरवभासत इति सर्वेन्द्रियगुणाभासं सर्वेन्द्रियव्यापारैर्व्यापृतमिव तत्ज्ञेयमित्यर्थः ध्यायतीव लेलायतीवेति श्रुतेः कस्मात् पुनः कारणान्न व्यापृतमेवेति

गृह्यत इत्यत आह सर्वेन्द्रियविवर्जितं सर्वकरणरहितमित्यर्थः अतो न करणव्यापारैर्व्यापृतं तत् ज्ञेयं यस्त्वयं मन्त्रोऽपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स शृणोत्यकर्ण इत्यादि सर्वेन्द्रियोपाधिगुणानुगुण्यभजनशक्तिमत् तत् ज्ञेयमित्येवं प्रदर्शनार्थः न तु साक्षादेव जवनादिक्रियामत्त्वप्रदर्शनार्थः। अन्धो मणिमविन्ददित्यादिमन्त्रार्थवत्तस्यमन्त्रस्यार्थो यस्मात् सर्वकरणवर्जितं ज्ञेयं तस्मादसक्तं सर्वसंश्लेषवर्जितं यद्यप्येवं तथापि सर्वभृच्च एव सदास्पदं हि सर्वं सर्वत्र सतबुद्ध्यनुगमात् न हि मृगतृष्णिकादयोऽपि निरास्पदा भवन्त्यतः सर्वभृत् सर्वं बिभर्त्ति इति किञ्चान्यत् ज्ञेयस्य सत्त्वादिगुणसारं निर्गुणं सत्त्वरजस्तमांसि गुणास्तैर्वर्जितं तत् ज्ञेयं तथापि गुणभोक्तृ च गुणानां सत्त्वरजस्तमसां शब्दादिद्वारेण सुखदुःखमोहाकारपरिणतानां भोक्तृ चोपलब्धृ तत् ज्ञेयमित्यर्थः ॥ १४ ॥

व्या० टी०। व्यारोपाद्दर्त साक्षादेव ज्ञेयस्य पाण्यादिमत्त्वमाशङ्क्याह उपाधीति। इन्द्रियविशेषणीभूतसर्वशब्दात् ज्ञेयावाचित्वव्यावृत्तिमाशङ्क्य बुद्ध्यादेरपि ग्रहणमित्याह अन्तःकरणे चेति। श्रोत्रादीनां ज्ञेयाद्याधिकस्य मनोबुद्धिद्वारत्वादपि तयोरिह ग्रहणमित्याह अपि चेति। तयोरपीहोपादाने फलितमाह इत्यत इति। अक्षरार्थमुक्त्वा वाक्यार्थमाह सर्वेति। उपाधिद्वारा कल्पितव्यापारवत्त्वे मानमाह ध्यायतीति। कल्पितमेवास्य व्यापारवत्त्वं न वास्तवमित्यत्र भगवतोऽपि सम्मतिमाह क.-श्लाहारा दर्शयति कस्मादित्यादिना। सर्वकरणराहित्ये फलितमाह अत इति। साक्षादेव ज्ञेयस्य वेगवद्विहरणादिक्रियावत्तायां मान्त्रवर्णिकत्वात् कुतोऽस्य करणव्यापारैरव्यापारैरव्यापृतत्वमित्याशङ्कानुवादपूर्वकं मन्त्रस्य प्रकृतानुगुणत्वमाह यस्त्विति। करणगुणानुगुण्यभजनमन्त्रस्य

बहिश्चान्तश्च तदेव सुवर्णमिव कटककुण्डलादीनां जलतरङ्गानामन्तर्बहि-र्जलमिव अचरं स्थावरं चरञ्च जङ्गमं भूतजातं तदेव कारणात्मकत्वात् कार्य्यस्य। एवमपि सूक्ष्मत्वात् रूपादिहीनत्वात्तदविज्ञेयं इदं तदिति स्पष्टं नाहं न भवति। एतदविदुषां योजनलक्षान्तरित मव दूरस्थञ्च अविकारायाः प्रकृतेः परत्वात्। विदुषां पुनः प्रत्यगात्मत्वादन्तिके च तत् नित्यसन्निहितम्। तथा च मन्त्रः। तदेजति तन्नैजति तद्दूरे तदन्तिके। तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यत इति। एजति चलति नैजति न चलति तत् अन्तिके इति च्छेदः॥ १५ ॥

## अविभक्तञ्च भूतेषु विभक्तमिव च स्थितम्।
## भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥१६॥

किञ्च अविभक्तमिति। अविभक्तञ्च प्रतिदेहं व्योमवत् तदेकं भूतेषु सर्वप्राणिषु विभक्तमिव च स्थितं देहेष्वेव विभाव्यमानत्वात् भूतभर्तृ च भूतानि बिभर्त्तीति तत ज्ञेयं भूतभर्तृ च स्थिति काले प्रलयकाले ग्रसिष्णु ग्रसन शीलं उत्पत्तिकाले प्रभविष्णु च प्रभवनशीलं यथा रज्ज्वादिः सर्पादेर्मिथ्याकल्पितस्य ॥ १६ ॥

व्या० टी०। ज्ञेयस्यास्तित्वे हेत्वन्तरमाह किञ्चेति। तद्धि प्रति-देहं नभोवदेकं तद्भेदे मानाभावात् भिन्नत्वे च घटपटनात्मत्वापातादतो-ऽद्वितीयं सर्वत्र प्रत्यगभूतं ज्ञेयं नास्तीत्यतिसाहसमित्याह अविभक्तञ्चेति। कथं तर्हि देहभेदे भेदधीरित्याशङ्क्य कल्पनयेत्याह भूतेष्विति। तत्र हेतुः देहेष्विति। कार्य्याणां स्थितिहेतुत्वाच्च ज्ञेयमस्तीत्याह भूतेति। निमित्तोपादानतया तेषां प्रलये प्रभवे च कारणत्वाच्च तदस्तीत्याह प्रल-येति। तर्हि कार्य्यकारणत्वस्य वस्तुत्वाद्द्वैतमित्याशङ्क्याह यथेति ॥१६॥

स्वा० टी०। किञ्च अविभक्तमिति। भूतेषु स्थावरजङ्गमात्मकेष्व-विभक्तं कारणात्मनाऽभिन्नं कार्य्यात्मना विभक्तं भिन्नमिव स्थितं च

समुद्राज्जातं फेनादि समुद्रादन्यन्न भवति तत् स्वरूपमेवोक्तं ज्ञेयं भूतानां भर्तृ च पोषकं स्थितिकाले प्रलयकाले च ग्रसिष्णु ग्रसनशीलं सृष्टिकाले च प्रभविष्णु नानाकार्य्यात्मना प्रभवनशीलम् ॥ १६ ॥

## ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
## ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥१७

किञ्च सर्वत्र विद्यमानं सन्नोपलभ्यते चेत् ज्ञेयत्वम-स्तर्हि न, किं तर्हि ज्योतिषामपीति । ज्योतिषां आदि-त्यादीनामपि तत् ज्ञेयं ज्योतिरात्मचैतन्यज्योतिषेद्धानि हि आदित्यादीनि ज्योतींषि दीप्यन्ते येन सूर्य्यस्तपति तेजसेद्धस्तस्य भासा सर्वमिदं विभातीत्यादि श्रुतिभ्यः स्मृतेश्च इहैव यदादित्यगतं तेज इत्यादेस्तमसोऽज्ञानात् परमस्पृष्टमुच्यते ज्ञानमिति । ज्ञानादेर्बुद्ध्या सम्पादनबुद्ध्या प्राप्तावसादस्योत्तम्भनार्थमाह ज्ञानममानित्वादि ज्ञेयं ज्ञेयं यत् तत् प्रवक्ष्यामीत्यादिनोक्तं ज्ञानगम्यं ज्ञेयमेव ज्ञातं सत् ज्ञानफलमिति ज्ञानगम्यमुच्यते ज्ञायमानन्तु ज्ञेयं तदेतत्त्रयमपि हृदि बुद्धौ सर्वस्य प्राणिजातस्य विष्ठितं विशेषेण स्थितम् ॥ १७ ॥

व्या० टी० । इतोऽपि ज्ञेयस्यास्तित्वमित्याह किञ्चेति । हेत्वन्तरमेव स्फोरयितुं शङ्कयति सर्वत्रेति । न तत्तमो मन्तव्यमित्याह नेति । तर्हि किन्तस्य रूपमिति पृच्छति किं तर्हीति । ततोत्तरं ज्योतिषामिति । सूर्य्यादीनां बुद्ध्यादीनाञ्च प्रकाशकत्वात् अस्ति ज्ञेयं ब्रह्मेत्याह ज्योतिषामिति । तदेवोपपादयति आत्मेति । तत्र श्रुतिद्वय प्रमाणयति येनेति । उक्तेऽर्थे वाक्यशेषमपि दर्शयति स्मृतेश्चेति । ज्ञेयस्यात्मनः तमस्त्वेऽपि तमसहत्वमाशङ्क्योक्तं तमस इति उत्तरार्द्धस्य तात्पर्य्यमाह ज्ञानादे-

दिति। उत्तम्भनमुद्दीपनं प्रकटीकरणमिति यावत्, ज्ञानममानित्वादि करणाव्यत्यस्त्येति शेषः। ज्ञानगम्यं ज्ञेयमपि पुनरुक्तिं शङ्कित्वोक्तं ज्ञेयमिति। उक्तत्रयस्य बुद्धिस्थतया प्राकट्यं प्रकटयति तदेतदिति ॥ १७ ॥

स्वा॰ टी॰। किञ्च ज्योतिषामपीति ज्योतिषां सूर्य्यादीनामपि तत् ज्योतिः प्रकाशकं, येन सूर्य्यस्तपति तेजसेद्धः न तत्र सूर्य्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निस्तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभातीत्यादिश्रुतेः। अतएव तमसोऽज्ञानात् परं तेनासंस्पृष्टमुच्यते, आदित्यवर्णं तमसः परस्तादित्यादिश्रुतेः। ज्ञानञ्च तदेव बुद्धिवृत्तावभिव्यक्तं तदेव रूपाद्याकारेण ज्ञेयञ्च ज्ञानगम्यञ्च तदेव अमानित्वादिलक्षणेन पूर्वोक्तेन साधनेन प्राप्यमित्यर्थः, ज्ञानगम्यं विशिनष्टि सर्वस्य प्राणिमात्रस्य हृदि धिष्ठितं विशेषेणावस्थितम् तत्स्वरूपेण नियन्तृतया स्थितम्। धिष्ठितमिति पाठे अधिष्ठायावस्थितमित्यर्थः ॥ १७ ॥

**इति क्षेत्रं तथा ज्ञानं ज्ञेयञ्चोक्तं समासतः।**
**मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ १८ ॥**

तदेव हि एवं त्रिभिः उच्यते यथोक्तार्थोपसंहारार्थोऽयं श्लोक आरभ्यते इति क्षेत्रमिति। इत्येवं क्षेत्रं महाभूतादि धृत्यन्तं तथा ज्ञानममानित्वादि तत्त्वज्ञानार्थदर्शनपर्य्यन्तं ज्ञेयञ्च ज्ञेयं यत्तदित्यादि तमसः परमुच्यत इत्येवमन्तमुक्तं समासतः सङ्क्षेपत एतावान् सर्वो हि वेदार्थो गीतार्थश्चोपसंहृत्योक्तोऽस्मिन् सम्यक् दर्शने कोऽधिक्रियत इत्युच्यते मद्भक्तो मयीश्वरे सर्वज्ञे परमगुरौ वासुदेवे समर्पितसर्वात्मभावो यत् पश्यति शृणोति स्पृशति वा सर्वमेव भगवान् वासुदेव इत्येव ग्रहाविष्टबुद्धिर्मद्भक्तः स एतत् यथोक्तं सम्यक् दर्शनं विज्ञाय मद्भावाय मम भावो मद्भावः

परमात्मभावस्तस्मै परमात्मभावायोपपद्यते युज्यते घटते मोक्षं गच्छति ॥ १८ ॥

आ० टी० । तत्त्वानुभवमनुकूलयति तत्त्वेति । तदर्थमुक्तार्थं सविकारं चेत्यं पदवाक्यार्थविवेकसाधनममानित्वादि तत्पदार्थश्च सूत्रं तद्वाक्यार्थमुक्ता तस्य फलमुपसंहरति यथोक्तेति । पूर्वोक्तं विभजते इत्येवमिति । वक्ष्यमाणे सति किमिति त्रितयमेव संक्षिप्योपसंहृतं तत्राह एतावानिति । उत्तरार्द्धं साकाङ्क्षत्वादवतारयति कश्चिदिति । ईश्वरे कर्मसंन्यासमात्मभावमेवाभिनयति यत् पश्यतीति । विज्ञाय लब्ध्वेत्यर्थः ॥ १८ ॥

व्या० टी० । उक्तं क्षेत्रादिकमधिकारिफलसहितमुपसंहरति इतीति । इत्येवं क्षेत्रं महाभूतादिधृत्यन्तं तथा ज्ञानञ्च अमानित्वादितत्त्वज्ञानार्थदर्शनान्तं ज्ञेयञ्च अनादिमत् परं ब्रह्मेत्यादि निर्दिष्टमित्यन्वयः मद्भक्तिर्भक्तिमान् भक्तो मम परमेश्वरस्य कश्चिदेवेदं, एतच्च विज्ञायेत्-लक्षणो मद्भक्तो मद्भाय मद्भावाय ब्रह्मत्वायोपपद्यते योग्यो भवति ॥१८॥

**प्रकृतिं पुरुषञ्चैव विद्ध्यनादी उभावपि ।**
**विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् ॥१९॥**

तत्र सप्तमे ईश्वरस्य द्वे प्रकृती उपन्यस्ते परापरे क्षेत्रक्षेत्रज्ञलक्षणे एतद्योनीनि भूतानीति चोक्तं क्षेत्रक्षेत्रज्ञप्रकृतिद्वययोनित्वं कथं भूतानामित्ययमर्थोऽधुनोच्यते प्रकृतिमिति । प्रकृतिं पुरुषञ्चेश्वरस्य प्रकृती तौ प्रकृतिपुरुषावुभावप्यनादी न विद्यते आदिर्ययोस्तावनादी नित्यत्वादीश्वरस्य तत्प्रकृत्योरपि युक्तं नित्यत्वेन भवितुं प्रकृतिद्वयवत्त्वमेव हि ईश्वरस्येश्वरत्वं याभ्यां प्रकृतिभ्यां ईश्वरो जगदुत्पत्तिस्थितिप्रलयहेतुस्ते द्वे अनादी सत्यौ संसारस्य कारणं न आदी अनादी इति तत्पुरुषसमासं केचिद्वर्ण-

यन्ति तेन हि केवलेश्वरस्य कारणत्वं सिध्यति यदि पुनः प्रकृतिपुरुषावेव नित्यौ स्यातां तत्कृतमेव जगन्नेश्वरस्य जगतः कर्तृत्वं तदसत् प्राक् प्रकृतिपुरुषयोरुत्पत्तेरीशितव्याभावात् ईश्वरस्यानीश्वरत्वप्रसङ्गात् संसारस्य निर्निमित्तत्वे निर्मोक्षत्वप्रसङ्गात् शास्त्रानर्थक्यप्रसङ्गात् बन्धमोक्षाभावप्रसङ्गाच्च नित्यत्वे पुनरीश्वरप्रकृत्योः सर्वमेतदुपपन्नं भवेत् कथं विकारांश्च गुणांश्चैव वक्ष्यमाणान् बुद्ध्यादिदेहेन्द्रियान्तान् गुणांश्च सुखदुःखमोहप्रत्ययाकारपरिणतान् विद्धि जानीहि प्रकृतिसम्भवान् प्रकृतिरीश्वरस्य विकारकारणं शक्तिः गुणात्मिका माया सा सम्भवो येषां विकाराणां गुणानाञ्च तान् विकारान् गुणांश्च विद्धि जानीहि प्रकृतिसम्भवान् प्रकृतिपरिणामान् ॥ १९ ॥

व्या० टी० । प्रकृतिमित्यादि वक्ष्यमाणमनन्तरग्रन्थस्य सम्बन्धीत्याशङ्क्य व्यवहितेन सम्बन्धार्थं व्यवहितमनुवदति तत्रेति । तयोश्च प्रकृत्योरुक्तम्भूतकारणत्वमित्याह एतदिति । भूतानामिव प्रकृत्योरपि प्रकृत्यन्तरापेक्षायामनवस्थानाच्च भूतयोनित्वेति शङ्कते चेदिति । तत्राकृताभ्यागमादिनिरासाय बन्धस्य निदानज्ञानार्थमात्मनो निष्क्रियत्वाद्यादिदोषनिरासार्थञ्च प्रकृतिपुरुषयोरनादित्वं क्षेत्रत्वेनोक्ता प्रकृतिं प्रकृतिविकारभावत्वञ्च दर्शयति अयमर्थ इति । स च यो यत्स्वभावस्तत्त्वमुद्दिष्टं व्याचष्टे प्रकृतिमिति । ईश्वरस्यापरा प्रकृतिरत्र प्रकृतिशब्देनोक्ता परा तु प्रकृतिर्जीवाख्या पुरुषशब्देन विवक्षितेति व्याकरोति ईश्वरस्येति । तयोरनादित्वं व्युत्पादयति नेत्यादिना । तत्र युक्तिमाह नित्यत्वादीश्वरस्येति । ईश्वरस्योक्तप्रकृतिद्वयवत्त्वं कथमित्याशङ्क्याह प्रकृतीति । तस्य जगज्जन्मादौ स्वातन्त्र्यमेव ईश्वरत्वं न प्रकृतिद्वयवत्त्वमित्याशङ्क्याह याभ्यामिति । प्रकृत्योरनादित्वं कुतोपयुक्तमित्याशङ्क्याह ते इति । मतान्तरमाह नेत्यादिना ।

तयोर्मूलकारणत्वाभावे कस्य तदेष्टव्यमित्याशङ्क्याह तेन हीति। प्रकृत्यो-रेव मूलकारणत्वे श्रुतिस्मृतिसिद्धमीश्वरस्य तथात्वं न स्यादित्याह यदीति। प्रकृतिद्वयस्य कार्य्यत्वपक्षं प्रत्याह तदसदिति। किञ्च प्रकृतिद्वयमनपेक्ष्य ईश्वरस्य संसारहेतुत्वे स्वातन्त्र्यान्मुक्तानामपि ततः संसाराप्तेरनिर्मोक्षा-न्मोक्षशास्त्राप्रामाण्याच्च तस्यैव संसारहेतुतेत्याह संसारस्येति। निमि-त्तत्वं प्रकृतिद्वयापेक्षमस्तु परस्यैव निमित्तत्वमिति यावत्। किञ्च कार्य्यत्वे प्रकृत्योः स्वोदयात् पूर्वं बन्धाभावे तद्विश्लेषात्मनो मोक्षस्याभावात् कदाचिदुभयाभावे पुनस्तदापत्तेश्च प्रकृतिद्वयस्य कार्य्यतेत्याह बन्धेति। प्रकृत्योर्मूलकारणत्वे नानुपपत्तिरित्याह नित्यत्व इति। स्वपक्षे दोषा-भावं प्रसङ्गात् प्रपञ्चयति कथमित्यादिना। सम्भवः सत्ताप्रापको हेतुः। प्रकृतेरनादित्वे विकाराणां गुणानाञ्च तत्कार्य्यत्वादात्मनो निर्विकारत्वं निर्गुणत्वञ्च सिध्यतीति भावः॥ १९॥

स्वा० टी०। तदेवं तत् क्षेत्रं यच्च यादृक् चेत्यादि तावत् प्रपञ्चितमिदा-नीन्तु यद्विकारि यतश्च यत् स च यो यत्प्रभावश्चेत्येतत् पूर्वप्रतिज्ञातमेव प्रकृतिपुरुषयोः संसारहेतुत्वकथनेन प्रपञ्चयति प्रकृतिमिति पञ्चभिः। तत्र प्रकृतिपुरुषयोरादिमत्त्वे तयोरपि प्रकृत्यन्तरेण भाव्यमित्यनवस्थापत्तेः स्यादनयोरुभावनादी विद्धि अनादेरीश्वरस्य शक्तित्वात् प्रकृतेरनादित्वं पुरुषोऽपि तदंशत्वादनादिरेव अत एव परमेश्वरस्य तच्छक्तिमत्त्वादनादित्वं संसारस्याङ्कुरभङ्गाद्यसङ्गैरतिप्रसङ्गो नोपपादितमिति मन्यथाकुल्याचा-र्याणि प्रपञ्च्यते, विकारांश्च देहेन्द्रियादीन् गुणांश्च गुणपरिणामान् सुखदुःखमोहादीन् प्रकृतेः सम्भूतान् विद्धि॥ १९॥

**कार्य्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते।**
**पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते॥ २०॥**

के पुनस्ते विकारा गुणाश्च प्रकृतिसम्भवाः कार्य्येति। कार्य्यकारणकर्तृत्वे कार्य्यं शरीरं कारणानि तत्स्थानि त्रयोदश देहस्यारम्भकाणि भूतानि विषयाश्च प्रकृतिसम्भवा-

विकाराः पूर्वोक्ता इह कार्य्यग्रहणेन गृह्यन्ते गुणाश्च प्रकृतिसम्भवाः सुखदुःखमोहात्मकाः कारणाश्रयत्वात् कारणग्रहणेन गृह्यन्ते तेषां कार्य्यकारणानां कर्त्तृत्वमुत्पादकत्वं यत्तत् कार्य्यकारणकर्तृत्वं तस्मिन् कार्य्यकारणकर्तृत्वे हेतुः कारणमारम्भकत्वेन प्रकृतिरुच्यते एवं कार्य्यकारणकर्तृत्वेन संसारस्य कारणं प्रकृतिः कार्य्यकारणयोः कर्तृत्व इत्यस्मिन्नपि पाठे कार्य्यं यद्यस्य विपरिणामस्तस्य कार्य्यं विकारः विकारिकारणं तयोर्विकारविकारिणोः कार्य्यकारणयोः कर्तृत्व इति तान्येव कार्य्यकारणान्युच्यन्ते अथवा षोडशविकाराः कार्य्यं सप्त प्रकृतिविकृतयः कारणन्तान्येव कार्य्यकारणानि उच्यन्ते तेषां कर्तृत्वे हेतुः प्रकृतिरुच्यते आरम्भकत्वेनैव पुरुषश्च संसारस्य कारणं यथा स्यात्तदुच्यते पुरुषः जीवः क्षेत्रज्ञः भोक्ता इति पर्य्यायः सुखदुःखानां भोग्यानां भोक्तृत्व उपलब्धृत्वे हेतुरुच्यते कथं पुनरनेन कार्य्यकारणकर्तृत्वेन सुखदुःखभोक्तृत्वेन च प्रकृतिपुरुषयोः संसारकारणत्वमुच्यत इति अत्रोच्यते कार्य्यकारणसुखदुःखरूपेण हेतुफलात्मना प्रकृतेः परिणामाभावे पुरुषस्य चेतन्यस्यासति तदुपलब्धृत्वे कुतः संसारः स्यात् यदा पुनः कार्य्यकारणहेतुफलात्मना परिणतया तया प्रकृत्या भोग्यया पुरुषस्य तद्विपरीतस्य भोक्तृत्वेनाविद्यारूपः संयोगः स्यात्तदा संसारः स्यादित्यतो यत् प्रकृतिपुरुषयोः कार्य्यकारणकर्तृत्वेन सुखदुःखभोक्तृत्वेन च संसारकारणत्वमुक्तं तद् युक्तमुक्तम्। कः पुनरयं संसारो नाम सुखदुःखसं

भोगः संसारः पुरुषस्य च सुखदुःखानां सम्भोक्तृत्वं संसारित्वमिति ॥ २० ॥

व्या० टी० । विकाराणां गुणानां प्रकृतेश्च स्वरूपमाकाङ्क्षाद्वारा निर्णेतुमुत्तरश्लोकपूर्वार्द्धं पातयति के पुनरिति । पुरुषस्यानादित्वकृत-बन्धहेतुत्वमाह पुरुष इति । पूर्वार्द्धं व्याचष्टे कार्य्यमित्यादिना । ज्ञाने-न्द्रियपञ्चकं कर्म्मेन्द्रियपञ्चकं मनो बुद्धिरहङ्कारश्चेति त्रयोदशकरणानि तथापि भूतानां विषयाणाञ्चाग्रहणात् कथमेषां प्रकृतिकार्य्यतेत्याश-ङ्क्याह देहेति । तथापि गुणानामिहाग्रहणात्र प्रकृतिकार्य्यत्वं तत्राह गुणाश्चेति । उक्तरीत्या निष्पन्नमर्थमाह एवमिति । पाठान्तरमनूद्य व्याख्यापूर्वकमर्थभेदमाह कार्य्येत्यादिना । व्याख्यान्तरमाह अथवेति । एकादशेन्द्रियाणि पञ्च विषया इति षोड़शसंख्यकविकारोऽत्र कार्य्य-शब्दार्थः महदहङ्कारौ भूततन्मात्राणीति प्रकृतिविकृतयः सप्त कारणं तेषां व्यारम्भकत्वेन कर्तृत्वेन हेतुराश्रयो मूलप्रकृतिरित्यर्थः । उत्तरा-र्द्धस्य तात्पर्य्यमाह पुरुषश्चेति । तस्य परमात्मत्वं व्यवच्छिनत्ति जीव इति । तस्य प्राणधारणनिमित्तस्य तदर्थञ्चेतनमाह चेतन इति । तस्यानौपाधिकत्वं वारयति भोक्तेति । तयोः संसारकारणत्वमुपपादयितुं शङ्कयति कथमिति । अन्वयव्यतिरेकाभ्यां तयोस्तथात्वमित्याह अत्रेति । तत्र व्यतिरेकं दर्शयति कार्य्येति । न हि नित्यशुद्धस्यात्मनः स्वतः संसा-रोऽस्तीत्यर्थः । इदानीमन्वयमाह यदेति । अन्वयादिफलमुपसंहरति अत इति । आत्मनोऽविक्रियस्य संसरणं नोचितमित्याक्षिपति कः पुन-रिति । सुखदुःखान्यतरसाक्षात्कारो भोगः स चाक्रियस्यैव द्रष्टुः संसारः तथाविधं भोक्तृत्वमस्य संसारित्वमित्युत्तरमाह सुखेति । श्लोकव्याख्या-समाप्ताविति शब्दः ॥ २० ॥

स्वा० टी० । विकाराणां प्रकृतिसम्भवत्वं दर्शयन् पुरुषस्य संसार-हेतुत्वं दर्शयति कार्य्येति । कार्य्यं शरीरं कारणानि सुखदुःखसाध-नानीन्द्रियाणि तेषां कर्तृत्वे तदाकारपरिणामे प्रकृतिर्हेतुरुच्यते कपि-लादिभिः, पुरुषो जीवस्तु तत्कृतसुखदुःखानां भोक्तृत्वे हेतुरुच्यते ।

अयं भावः, यद्यप्यचेतनायाः प्रकृतेः स्वतः कर्तृत्वं न सम्भवति तथा पुरुषस्याप्यविकारिणो भोक्तृत्वं न सम्भवति तथापि कर्तृत्वं नाम क्रियानिर्वर्त्तकत्वं तच्चाचेतनस्यापि चेतनादृष्टवशात् चैतन्याधिष्ठितत्वात् सम्भवति यथा वह्नेरूर्द्ध्वज्वलनं वायोस्तिर्य्यग्गमनं वत्सादृष्टवशात् स्तन्य-पयसः क्षरणमित्यादि, अतः पुरुषसन्निधानात् प्रकृतेः कर्तृत्वमुच्यते भोक्तृत्वञ्च सुखदुःखसंवेदनं तच्च चेतनधर्म एवेति प्रकृतिसन्निधानात् पुरु-षस्य भोक्तृत्वमुच्यत इति ॥ २० ॥

**पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् ।**
**कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥२१॥**

यत् पुरुषस्य सुखदुःखानां भोक्तृत्वं संसारित्वमित्युक्तं तस्य तत् किन्निमित्तमित्युच्यते पुरुष इति। पुरुषो भोक्ता प्रकृतिस्थः प्रकृतावविद्यालक्षणायां कार्य्यकारणरूपेण परिणतायां स्थितः प्रकृतिस्थः प्रकृतिमात्मत्वेन गत इत्येवं हि यस्मात् तस्मात् भुङ्क्ते उपलभत इत्यर्थः प्रकृतिजान् प्रकृतितो जातान् सुखदुःखमोहाकाराभिव्यक्तान् गुणान् सुखी दुःखी मूढः पण्डितोऽहमित्येवं सत्यामप्यविद्यायां सुखदुःखमोहेषु गुणेषु भुज्यमानेषु यः सङ्ग आत्मभावः संसारस्य स प्रधानं कारणं जन्मनः स यथाकामो भवति तत्क्रतुर्भवतीत्यादिश्रुतेः तदेतदाह कारणं हेतुर्गुणसङ्गः गुणेषु सङ्गोऽस्य भोक्तुः सदसद्योनिजन्मसु सतश्चासतश्च योनयः सदसद्योनयस्तासु सदसद्योनिषु जन्मानि तानि सदसद्योनिजन्मानि तेषु सदसद्योनिजन्मसु विषयभूतेषु कारणं गुणसङ्गोऽथ वा सदसद्योनिजन्मसस्य संसारस्य कारणं गुणसङ्ग इति संसारपदमध्याहार्य्यं

सद्योनयो देवादियोनयः असद्योनयः पश्वादियोनयः सामर्थ्यात् सदसद्योनयो मनुष्ययोनयोऽप्यविरुद्धा द्रष्टव्याः । एतदुक्तं भवति प्रकृतिस्थत्वाख्याविद्या गुणेषु च सङ्गः कामः संसारस्य कारणमिति तच्च परिवर्जनायोच्यते अस्य च निवृत्तिकारणं ज्ञानवैराग्ये ससन्न्यासे गीताशास्त्रे प्रसिद्धं तच्च ज्ञानं पुरस्तादुपन्यस्तं क्षेत्रक्षेत्रज्ञविषयं यत् ज्ञात्वामृतमश्नुत इत्युक्तमन्यापोहेनातद्धर्माध्यारोपेण च ॥ २१ ॥

व्या० टी० । श्लोकान्तरं प्रश्नोत्तरत्वेनावतारयति यदिति । निमित्तं वक्तुमादौ संसारित्वमव्याविद्यैक्याध्यासादित्याह पुरुष इति । यस्मात् प्रकृतिमात्मत्वेन गतस्तस्माद्भुङ्क्त इति योजना । गुणविषयं भोगमभिनयति सुखेति । अविद्याया भोगहेतुत्वात् किं कारणान्वेषणायेत्याशङ्क्याह सत्यामपीति । सङ्गस्य जन्मादौ संसारे प्रधानहेतुत्वे मानमाह स यथेति । उक्तेऽर्थे द्वितीयार्द्धमवतार्य व्याचष्टे तदेतदित्यादिना । साध्याहारं योजनान्तरमाह अथवेति । सदसद्योनीर्विविच्य व्याचष्टे सद्योनय इति । योनिद्वयनिर्देशात् मध्यवर्तिन्यो मनुष्ययोनयोऽपि ध्वनिता इत्याह सामर्थ्यादिति । सङ्गस्य संसारकारणत्वे नाविद्यायास्तत्कारणत्वमेकस्मादेव हेतोस्तदुपपत्तेरित्याशङ्क्याह एतदिति । अविद्योपादानं सङ्गो निमित्तमित्युभयोरपि कारणत्वं सिध्यतीत्यर्थः । द्विविधहेतूक्तेर्विवक्षितं फलमाह तच्चेति । संसारस्यानर्थस्य ततो निवृत्तेस्तन्निवृत्तिर्किं साध्यमित्याशङ्क्याह अस्येति । वैराग्ये सति सन्न्यासस्तत्पूर्वकञ्च ज्ञानं साक्षाज्ज्ञाननिवर्त्तकमित्यर्थः । उक्ते ज्ञाने मानमाह गीतेति । अध्यायादौ चोक्तं ज्ञानमनूदितमित्याह तच्चेति । तदेव ज्ञानं यज्ज्ञात्वेत्यादिना न सत्तन्नासदित्यनेनान्यनिषेधेन सर्वतः पाणिपादमित्यादिना चातद्धर्माध्यारोपेणोक्तमित्याह यज्ज्ञात्वेति ॥ २१ ॥

व्या० टी० । तथाऽधिकारिणो जन्मरहितस्य च भोक्तृत्वं कथमित्यताह पुरुष इति । हि यस्मात् प्रकृतिस्थस्तत्कार्ये देहे तादा-

त्वेन स्थितः पुरुषः अतस्तज्जनितान् सुखदुःखादीन् भुङ्क्ते अस्य च पुरुषस्य सतीषु देवादियोनिषु असतीषु तिर्य्यगादियोनिषु यानि जन्मानि तेषु गुणसङ्गो गुणैः शुभाशुभकर्म्मकारिभिरिन्द्रियैः सङ्गःकारणमित्यर्थः ॥ २१ ॥

**उपद्रष्टानुमन्ता च भर्त्ता भोक्ता महेश्वरः।**
**परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः २२**

तस्यैव पुनः साक्षान्निर्देशः क्रियते उपद्रष्टेति। उपद्रष्टा समीपस्थः सन् द्रष्टा स्वयमव्यापृतो यथा ऋत्विग्यजमानेषु यज्ञकर्म्मव्यापृतेषु तटस्थो नोऽव्यापृतो यज्ञविद्याकुशलः ऋत्विग्यजमानव्यापारगुणदोषाणामीक्षिता तद्वत् कार्य्यकारणव्यापारेषु अव्यापृतोऽन्यो विलक्षणस्तेषां कार्य्यकारणानां सव्यापाराणां सामीप्येन द्रष्टृत्वादुपद्रष्टा अथवा देहचक्षुर्मनोबुद्ध्यात्मानो द्रष्टारस्तेषां बाह्यो द्रष्टा देहस्तत आरभ्यान्तरतमश्च प्रत्यक् समीपे आत्मा द्रष्टा यतः परोऽन्तरो नास्ति द्रष्टा सोऽतिशयसामीप्येन द्रष्टृत्वादुपद्रष्टा स्यात् यज्ञोपद्रष्टृवद्वा सर्वविषयीकरणादुपद्रष्टा अनुमन्ता च अनुमोदनमनुमननं कुर्वत्सु तत्क्रियासु परितोषस्तत्कर्त्तानुमन्ता चाथवा अनुमन्ता कार्य्यकारणप्रवृत्तिषु स्वयमप्रवृत्तोऽपि प्रवृत्त इव तदनुकूलो विभाव्यते तेनानुमन्ताथवा प्रवृत्तान् स्वव्यापारेषु तत्साक्षिभूतः कदाचिदपि न निवारयतीत्यनुमन्ता भर्त्ता भरणं नाम देहेन्द्रियमनोबुद्धीनां संहतानां चैतन्यात्मपरार्थेन निमित्तभूतेन चैतन्याभासानां यत् स्वरूपधारणं तच्चै-

तत्स्वात्मभूतमेवेति भर्त्तात्मेत्युच्यते भोक्ताग्निरुष्णवन्नित्यचैतन्यस्वरूपेण बुद्धेः सुखदुःखमोहात्मकाः प्रत्ययाः सर्वविषयाश्चैतन्यात्मग्रस्ता इव जायमाना विभक्ता विभाव्यन्त इति भोक्तात्मोच्यते महेश्वरः सर्वात्मत्वात्स्वतन्त्रत्वाच्च महान् ईश्वरश्चेति महेश्वरः परमात्मा देहादीनां बुद्ध्यन्तानां प्रत्यगात्मत्वेन कल्पितानामविद्यया परम उपद्रष्टृत्वादिलक्षण आत्मेति परमात्मा सोऽतः परमात्मेत्यनेन शब्देन चाप्युक्तः कथितः श्रुतौ क्वासौ अस्मिन् देहे पुरुषः परोऽव्यक्तादुत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत इति यो वक्ष्यमाणः क्षेत्रज्ञञ्चापि मां विद्धि इत्युपन्यस्तो व्याख्यायोपसंहृतश्च तमेतं यथोक्तलक्षणमात्मानम् ॥ २२ ॥

आ॰ टी॰ । प्रकृतस्यैव मोक्षहेतोर्ज्ञानस्य साक्षान्निर्देशायोत्तरश्लोकमुत्थापयति तस्येति । कार्य्यकारणानां व्यापारवतां समीपे स्थित्वा सन्निधिमात्रेण तेषां साक्षित्वेन समर्थत्वेन उपद्रष्टेति पदं व्याचष्टे समीपस्थ इति । लौकिकस्येव द्रष्टुरस्यापि स्वव्यापाराविष्टतया निष्क्रियत्वविरोधमाशङ्क्याह स्वयमिति । स्वव्यापारादृते सन्निधिरेव द्रष्टृत्वं दृष्टान्तेन स्पष्टयति यथेति । उपद्रष्टृत्वस्यार्थान्तरमाह अथवेति । बहूनां द्रष्टृत्वेऽपि कस्योपद्रष्टृत्वं तत्राह तेषामिति । उपोपसर्गस्य सामीप्यार्थत्वेन प्रत्यगर्थत्वात्तत्रैव सामीप्यावसानात् प्रत्यगात्मा च द्रष्टा चेत्युपद्रष्टा सर्वसाक्षी प्रत्यगात्मेत्यर्थः । उक्तमेव व्यनक्ति यत इति । यथा यजमानस्य ऋत्विजाञ्च यज्ञकर्मणि गुणं वा दोषं वा सर्वयज्ञाभिज्ञः सन्नुपद्रष्टा विषयीकरोति तथायमात्मा चिन्मात्रस्वभावः सर्वं गोचरयतीत्युपद्रष्टेति पक्षान्तरमाह यज्ञेति । अनुमन्ता चेत्येतद् व्याकरोति अनुमन्तेति । ये स्वयं कुर्वन्तो व्यापारयन्तो भवन्ति तेषु कुर्वत्सु सत्सु यास्तेषां क्रियास्तासु पार्श्वस्थस्य परितोषोऽनुमननन्तच्चानुमोदनं तस्य सन्निधिमात्रेण कर्त्ता यः

सोऽनुमन्तेत्यर्थः। व्याख्यान्तरमाह अथवेति। तदेव स्फुटयति कार्येति। अर्थान्तरमाह अथवेत्यादिना। भर्त्तेति पदमादाय भरणं किं नामेति पृच्छति भर्त्तेति। तद्रूपं निरूपयन्नात्मनो भर्तृत्वं साधयति देहेति। भोक्तेत्युक्तं क्रियावत्त्वे प्राप्ते भोगश्चिद्रूपतानेति व्याख्येन विभजते आत्मेति। विशेषणान्तरमादाय व्याचष्टे महेश्वर इति। परमात्मत्वमुपपादयति देहादीनामिति। अविद्यया कल्पितानामिति सम्बन्धः, परमत्वं प्रकृष्टत्वं सः पूर्वोक्तविशेषणवानिति यावत्। परमात्मशब्दस्य प्रकृतात्मविषयत्वे श्रुतिमनुकूलयति अत इति। तस्य तादृश्यं प्रश्नद्वारा प्रपञ्चयति केति। कस्मात् परत्वमित्याह अव्यक्तादिति। तस्यैव वाक्यशेषानुकूल्यमाह उत्तम इति। सोऽस्मिन् देहे परः पुरुष इति सम्बन्धः। शोधितार्थयोरैक्यज्ञानं प्रागुक्तं फलोक्त्या स्तौति य एवमिति॥ २२॥

श्रा० टी०। तदनेन प्रकारेण प्रकृत्यविवेकादेव पुरुषस्य संसारो न तु स्वरूपत इत्याशयेन तस्य स्वरूपमाह उपद्रष्टेति। अस्मिन् प्रकृतिकार्ये देहे वर्त्तमानोऽपि पुरुषः परो भिन्न एव न तद्गुणैर्युज्यत इत्यर्थः, तत्र हेतवः, यस्मादुपद्रष्टा पृथग्भूत एव समीपे स्थित्वा द्रष्टा साक्षीत्यर्थः तथा अनुमन्ता अनुमोदितैव सन्निधिमात्रेणानुग्राहकः साक्षी चेता केवलो निर्गुणश्चेत्यादिश्रुतेः तथा ऐश्वरेण रूपेण भर्त्ता विधायकः भोक्ता पालक इति च, महांश्चासावीश्वरश्चेति ब्रह्मादीनामपि पतिरिति च परमात्मा अन्तर्यामी चेत्युक्तः श्रुत्या, तथा च श्रुतिः, एष सर्वेश्वर एष भूताधिपतिरेष लोकपाल इत्यादि॥ २२॥

**य एवं वेत्ति पुरुषं प्रकृतिञ्च गुणैः सह।**
**सर्वथा वर्त्तमानोऽपि न स भूयोऽभिजायते॥२३॥**

य एवमिति। य एवं यथोक्तप्रकारेण वेत्ति पुरुषं साक्षादात्मभावेनायमहमिति प्रकृतिञ्च यथोक्तामविद्यालक्षणां गुणैः स्वविकारैः सह निवर्त्तितामभावमापादितां

विद्यया सर्वथा सर्वप्रकारेण वर्त्तमानोऽपि स भूयः पुनः पतितेऽस्मिन् विद्वच्छरीरे देहान्तराय नाभिजायते नोत्पद्यते देहान्तरं न गृह्णातीत्यर्थः अपिशब्दात् किमु वक्तव्यं स्ववृत्तस्थो न जायत इत्यभिप्रायः ननु यद्यपि ज्ञानोत्पत्त्यनन्तरं पुनर्जन्माभाव उक्तस्तथापि प्राक् ज्ञानोत्पत्तेः कृतानां कर्मणामुत्तरकालभाविनाञ्च यानि चातिक्रान्तान्यनेकजन्मकृतानि तेषां फलमदत्त्वा नाशो न युक्त इति स्युस्त्रीणि जन्मानि कृतविप्रनाशो हि न युक्त इति यथा फले प्रवृत्तानामारब्धजन्मनां कर्मणां न च कर्मणां विशेषोऽवगम्यते तस्मात् त्रिप्रकाराण्यपि कर्माणि त्रीणि जन्मान्यारभेरन् संहतानि वा सर्वाण्येकं जन्मारभेरन् अन्यथा कृतविनाशे सति सर्वत्रानाश्वासप्रसङ्गः शास्त्रानर्थक्यञ्च

---

व्या० टी०। यथोक्तेन प्रकारेण जीवेश्वरादिसर्वकल्पनाधिष्ठानत्वेनेत्यर्थः, साक्षादपरोक्षत्वेनेति यावत, यथोक्तामनाद्यनिर्वाच्यां सर्वाभर्यौपाधिभूतामित्यर्थः, विद्यया प्रागुक्तैकत्वगोचरया प्रकृतिमविद्याख्यां सकार्यामभावमापादितां यो वेत्तीति सम्बन्धः, सर्वप्रकारेण विच्छिन्नेन निषेधेन चेत्यर्थः पुनःकारोऽन्वयार्थः। निपातसूचितं न्यायमाह अपीति। न स भूयोऽभिजायत इत्युक्तमाक्षिपति नन्विति। ज्ञानोत्पत्त्यनन्तरं जन्माभावस्योक्तत्वात पुनर्देहारम्भमुपेत्य नाक्षेपः स्यादित्याशङ्क्याह यद्यपीति। तथापि स्युस्त्रीणि जन्मानीति सम्बन्धः, वर्त्तमाने देहे ज्ञानात् पूर्वोत्तरकालीनानां कर्मणां फलमदत्त्वा नाशायोगाज्जन्मद्वयमावश्यकमतीतानेकदेहेष्वपि कृतकर्मणां नाभुक्तं क्षीयते कर्मेति स्मृतेः अदत्त्वा फलमनाशादस्ति तृतीयमपि जन्मेत्याह यानीति। फलदानं विनापि कर्मनाशे दोषमाह कृतेति। न युक्त इति कृत्वा फलमदत्त्वा कर्मनाशो नेति शेषः, विमतानि कर्माणि फलमदत्त्वा न क्षीयन्ते वैदिककर्मत्वादा-

स्यादित्यत इदमयुक्तमुक्तं न स भूयोऽभिजायत इति न
क्षीयन्ते चास्य कर्माणि ब्रह्म वेद ब्रह्मैव भवति तस्य ताव-
देव चिरमिषीकातूलवत् सर्वकर्माणि प्रदूयन्ते इत्यादि-
श्रुतिशतेभ्य उक्तो विदुषः सर्वकर्मदाहः इहापि चोक्तो
यथैधांसीत्यादिना सर्वकर्मदाहो वक्ष्यति चोपपत्तेश्चावि-
द्याकामक्लेशबीजनिमित्तानि हि कर्माणि फलारम्भकाणि
जन्मान्तराङ्कुरमारभन्ते इहापि च साहङ्काराभिसन्धीनि
कर्माणि फलारम्भकाणि नेतराणीति तत्र तत्र भगवतोक्तं
बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः ज्ञानदग्धैस्तथा
क्लेशैर्नात्मा सम्पद्यते पुनरिति अस्तु तावत् ज्ञानोत्पत्त्यु-
त्तरकालकृतानां कर्मणां ज्ञानेन दाहो ज्ञानसहभावित्वात्

---

रब्धकर्मवदिति मत्वाह यथेति । नाशो न ज्ञानादिति शेषः । नन्वना-
रब्धकर्मणां ज्ञानान्नाशो युक्तोऽप्रवृत्तफलत्वप्रारब्धकर्मणान्तु प्रवृत्त-
फलत्वेन बलवत्त्वादज्ञानात् तन्निवृत्तिर्नेत्याह न चेति । अज्ञानोत्थ-
त्वेन ज्ञानविरोधित्वाविशेषात् प्रवृत्ताप्रवृत्तफलत्वमनुपयुक्तमिति भावः ।
कर्मणां फलमदत्त्वा नाशाभावे फलितमाह तस्मादिति । ननु कर्मणां
बहुत्वात्तत्फलेषु जन्मसु कुतस्त्रित्वमारम्भककर्मणां त्रिःप्रकारत्वादिति
चेन्नानारब्धत्वेनैकप्रकारत्वसम्भवात् तत्राह संहतानीति । नास्ति ज्ञान-
स्यैकान्तिकफलत्वमिति शेषः । उक्तकर्मणां जन्मनारम्भकत्वे प्रागुक्तं दोष-
मनुभाष्य तस्यातिप्रसङ्गकत्वमाह अन्यथेति । सर्वत्रेत्यारब्धकर्मस्वपीति
यावत् । फलजनकत्वानिश्चयोऽनाश्वासः कर्मणां जन्मनारम्भकत्वे कर्म-
काण्डानर्थक्यं दोषान्तरमाह शास्त्रेति । अनारब्धकर्मणां सत्यपि ज्ञाने
जन्मान्तरारम्भकत्वध्रौव्ये फलितमाह इष्यत इति । श्रुत्यवष्टम्भेन परि-
हरति नेत्यादिना । ज्ञानादनारब्धकर्मदाहे भगवतोऽपि सम्मतिमाह
इहापीति । ज्ञानाधीनसर्वकर्मदाहे सर्वधर्मान् परित्यज्येति वाक्यशेषो-

न त्विह जन्मनि ज्ञानोत्पत्तेः प्राक् कृतानां ज्ञानेन दाहो न त्वतीतानामनेकजन्मान्तरकृतानां दाहो युक्तः न सर्वकर्माणीति विशेषणात्। ज्ञानोत्तरकालभाविनामेव सर्वकर्मणामिति चेन्न सङ्कोचत्वे कारणानुपपत्तेः यत्तूक्तं यथा वर्त्तमानशरीरजन्मारम्भकाणि कर्माणि न क्षीयन्ते फलदानाय प्रवृत्तान्येव सत्यपि ज्ञाने तथा अनारब्धफलानामपि कर्मणां क्षयो न युक्त इति तदसत् कथं तेषां मुक्तेषुवत् प्रवृत्तफलत्वात् यथा पूर्वं लक्ष्यवेधाय मुक्त इषुर्धनुषो लक्ष्यवेधोत्तरकालमपि आरब्धवेगक्षयात् पतनेनैव

ऽपि प्रमाणैर्भवतीत्याह वक्ष्येति चेति। ज्ञानादनारब्धाशेषकर्मक्षये युक्तिरपि वक्तुं शक्येत्याह उपपत्तेश्चेति। तामेव विवृणोति अविद्येति। अत्रत्याविद्यास्मितारागद्वेषाभिनिवेशाख्यक्लेशात्मकानि यानि बीजानि तानि निमित्तीकृत्य यानि धर्माधर्मकर्माणि तानि जन्मान्तरारम्भकाणि यानि तु विदुषो विद्याग्निदग्धक्लेशांशस्य प्रतीतिमात्रशरीराणि कर्माणि न तानि शरीरारम्भकाणि दग्धपटवदर्थक्रियासामर्थ्याभावादित्यर्थः। प्रतीतिमात्रदेहानां कर्माभासानां फलारम्भकत्वाभावेऽर्थे भगवतोऽपि सम्मतिमाह इहापीति। तत्त्वज्ञानादूर्ध्वं प्रातीतिकक्लेशानां कर्मद्वारा देहानारम्भकत्वे वाक्यान्तरमपि प्रमाणयति बीजानीति। ज्ञानानन्तरभाविकर्मणां ज्ञानेन दाहमङ्गीकरोति अस्त्विति। विरोधिप्रसक्तानामेवोत्पत्तिरिति हेतुमाह ज्ञानेति। अस्मिन् जन्मनि जन्मान्तरे वा ज्ञानात् पूर्वभाविकर्मणां न ततो दाहो विरोधिनं विनाप्रवृत्तिरित्याह नत्विति। श्रुतिस्मृतिविरोधान्नैवमिति परिहरति नेत्यादिना। सर्वशब्दश्रुतेः सङ्कोचं शङ्कते ज्ञानेति। प्रकरणादिसङ्कोचकाभावान्नैवमित्याह नेति। आक्षेपदशायामुक्तमनुमानमनुवदति यत्त्विति। आभासत्वादिदमबाधकमिति दूषयति तदसदिति। व्याप्त्यादिमत्त्वे कथमाभासत्वमिति पृच्छति

ध्यानेनेति। ध्यानेन ध्यानं नाम शब्दादिभ्यो विषयेभ्यः श्रोत्रादीनि करणानि मनस्युपसंहृत्य मनश्च प्रत्यक्चेतयितर्य्येकाग्रतया यच्चिन्तनं तद्ध्यानं तथा ध्यायतीव कः ध्यायतीव पृथिवी ध्यायन्तीव पर्व्वताः इत्युपमोपादानात् तैलधारावत् सन्ततोऽविच्छिन्नप्रत्ययो ध्यानन्तेन ध्यानेनात्मनि बुद्धौ पश्यन्त्यात्मानं प्रत्यक्चेतनमात्मना ध्यानसंस्कृतेनान्तःकरणेन केचित् योगिनः अन्ये सांख्येन योगेन सांख्यं नाम इमे सत्वरजस्तमांसि गुणा मया दृश्या अहन्तेभ्योऽन्यस्तद्व्यापारस्य साक्षिभूतो नित्यो गुणविलक्षण आत्मेति चिन्तनमेव सांख्यो योगस्तेन पश्यन्त्यात्मानमात्मनेति वर्त्तते कर्म्मयोगेन कर्म्मैव योग ईश्वरार्पणबुद्ध्यानुष्ठीयमानं घटनरूपत्वं योगार्थात् योग उच्यते गुणतस्तेन सत्त्वशुद्धिज्ञानोत्पत्तिद्वारेण चापरे ॥ २४ ॥

व्या० टी०। ज्ञेयं यत्तदित्यादिना तत्पदार्थस्त्वंपदार्थश्चानन्तरमेव बोधितौ तयोरैक्यञ्च क्षेत्रज्ञञ्चापि मां विद्धीत्युक्तमिदानीं तद्दृष्टिहेतून् यथाधिकारं कथयति ध्यानेति। ध्यानाख्यसाधनं किंरूपमिति पृच्छति ध्यानं नामेति। तद्रूपं वदन्नुत्तरमाह शब्दादिभ्य इति। एकाग्रतयोपसंहृत्येति सम्बन्धः, यच्चिन्तनं प्रत्यक्चेतयितरि इति पूर्व्वेणान्वयः। किं तच्चिन्तनमित्युक्ते दृष्टान्तद्वारा स्वन्यवच्छेदेन ध्यानं प्रपञ्चयति तथेति। विवक्षितध्यानानुरोधेनेति यावत्, आत्मानं पश्यन्ति परमात्मतयेति शेषः, केचिदित्युत्तमाधिकारिणो दृष्टान्ते। मध्यमाधिकारिणो निर्दिशति अन्य इति। सांख्यशब्दितं साधनं किन्नामेत्युक्ते विचारजन्यं ज्ञानन्तदेव ज्ञानहेतुतपोयोगतुल्यत्वाद्योगशुद्धिहेतोरनेन गौण्या वृत्त्या योगशब्दितं कर्म्मेत्याह सांख्यमिति। अधमानधिकारिणः संस्मरते कर्म्मेति। चित्तैकाग्र्यं योगः तादर्थ्यं कर्म्मणः शुद्धिहेतोरस्ति तेन गौण्या वृत्त्या योग-

र्भाद्गुतं कर्मेत्याह गुणत इति। अपरे पश्यन्त्यात्मानमात्मनेति पूर्ववदनु-षङ्गमङ्गीकृत्याह तेनेति॥ २४॥

श्रा० टी०। एवमधिकारितार्तम्यात्मसाधनविकल्पमाह ध्यानेनेति द्वाभ्याम्। ध्यानेनात्माकारप्रत्ययावृत्त्या आत्मनि देह एव आत्मना मनसा एवमात्मानं केचित् पश्यन्ति अन्ये तु सांख्येन प्रकृतिपुरुषवैलक्षण्यालोचनेन योगेनाष्टाङ्गेनापरे च कर्मयोगेन पश्यन्तीति सर्वत्रानु-षङ्गः। एतेषाञ्च ध्यानादीनां यथायोगं क्रमसमुच्चये सत्यपि तत्तन्निष्ठा-भेदाभिप्रायेण विकल्पोक्तिः॥ २४॥

# अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते।
# तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः॥२५॥

अन्ये त्विति। अन्ये त्वेतेषु विकल्पेषु अन्यतरेणाप्येवं यथोक्तमात्मानमजानन्तोऽन्येभ्य आचार्य्येभ्यः श्रुत्वा इदमेव चिन्तयेतेत्युक्ता उपासते श्रद्दधानाः सन्तश्चिन्तयन्ति तेऽपि चातितरन्त्ये वातिक्रामन्त्येव मृत्युं मृत्युयुक्तं संसारमित्ये-तत् श्रुतिपरायणाः श्रुतिः श्रवणं परमयनं गमनं मोक्ष-मार्गप्रवृत्तौ परं साधनं येषां ते श्रुतिपरायणाः केवलपरोपदेशप्रमाणाः स्वयं विवेकरहिता इत्यभिप्रायः किमु वक्तव्यं प्रमाणं प्रति स्वतन्त्रा विवेकिनो मृत्युमतितरन्ती-त्यभिप्रायः॥ २५॥

श्रा० टी०। अधमतमानधिकारिणो मोक्षमार्गे प्रवृत्तिं प्रतिलम्भ-यति अन्ये त्विति। आचार्य्यादीनां श्रुतिमेवाभिनयति इदमिति। उपा-सनमेव विवृणोति श्रद्दधाना इति। परोपदेशात् प्रवृत्तानामपि प्रवृत्तेः फलवत्त्वमाह तेऽपीति। तेषां मुख्याधिकारित्वं व्यावर्त्तयति श्रुतीति। तेऽपीत्यादिना सूचितमर्थमाह किमिति॥ २५॥

आ० टी० । अतिमन्दाधिकारिणां निस्तारोपायमाह अन्ये त्विति । अन्ये तु सांख्ययोगादिमार्गेण एवमुपद्रष्टृत्वादिलक्षणमात्मानं साक्षात्कर्तुमजानन्तोऽन्येभ्य आचार्येभ्य उपदेशतः श्रुत्वा उपासते ध्यायन्ति तेऽपि च श्रद्धया उपदेशश्रवणपरायणाः सन्तो मृत्युं संसारं शनैरतितरन्त्येव ॥ २५ ॥

**यावत् संजायते किञ्चित् सत्त्वं स्थावरजङ्गमम् ।**
**क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ! ॥ २६ ॥**

अत्र क्षेत्रज्ञेश्वरैकत्वविषयं ज्ञानं मोक्षसाधनं यत् ज्ञात्वामृतमश्नुत इत्युक्तं तत् कस्माद्धेतोरिति तद्धेतुप्रदर्शनार्थं श्लोक आरभ्यते यावदिति । यावत् यत्किञ्चित् सञ्जायते समुत्पद्यते सत्त्वं वस्तु किमविशेषेणेत्याह स्थावरं जङ्गमञ्च क्षेत्रक्षेत्रज्ञसंयोगात् तज्जायते इत्येवं विद्धि जानीहि हे भरतर्षभ ! कः पुनरयं क्षेत्रक्षेत्रज्ञयोः संयोगोऽभिप्रेतो न तावत् रज्ज्वेव घटस्यावयवसंश्लेषद्वारकः सम्बन्धविशेषः संयोगः क्षेत्रेण क्षेत्रज्ञस्य सम्भवति आकाशवन्निरवयवत्वान्नापि समवायलक्षणः तन्तुपटयोरिव क्षेत्रक्षेत्रज्ञयोरितरेतरकार्य्यकारणभावानभ्युपगमादित्युच्यते क्षेत्रक्षेत्रज्ञयोर्विषयविषयिणोर्भिन्नस्वरूपयोरितरेतरतद्धर्माध्यासलक्षणः संयोगः क्षेत्रक्षेत्रज्ञस्वरूपविवेकाभावनिबन्धनो रज्जुशुक्तिकादीनां तद्विवेकज्ञानाभावादध्यारोपितसर्परजतादिसंयोगवत् सोऽयमध्यासस्वरूपः क्षेत्रक्षेत्रज्ञसंयोगो मिथ्याज्ञानलक्षणो यथाशास्त्रं क्षेत्रक्षेत्रज्ञलक्षणभेदपरिज्ञानपूर्वकं प्राक् दर्शितरूपात् क्षेत्रात् मुञ्जादिवेषीकां यथोक्तलक्षणं क्षेत्रज्ञं प्रविभज्य न सत्तन्नासदु-

च्यते इत्यनेन निरस्तसर्वोपाधिविशेषं ज्ञेयं ब्रह्मस्वरूपेण यः पश्यति क्षेत्रञ्च मायानिर्मितहस्तिस्वप्नदृष्टवस्तुगन्धर्वनगरादिवदसदेव सदिवावभासते इति। एवं निश्चितविज्ञानो यस्तस्य यथोक्तसम्यग्दर्शनविरोधादपगच्छति मिथ्याज्ञानं तस्य जन्महेतोरपगमात् य एवं वेत्ति पुरुषं प्रकृतिञ्च गुणैः सह इत्यनेन विद्वान् भूयो नाभिजायत इति यदुक्तं तदुपपन्नमुक्तं न स भूयोऽभिजायत इति सम्यग्दर्शनफलमविद्याया निवर्त्तकं सम्यग्दर्शनं फलमविद्यादिसंसारवीजनिवृत्तिद्वारेण जन्माभाव उक्तः जन्मकारणञ्चाविद्यानिमित्तकः क्षेत्रक्षेत्रज्ञसंयोग उक्तः ॥ २६ ॥

आ॰ टी॰। ऐक्यधीर्मुक्तिहेतुरिति प्रागुक्तमनूद्य प्रश्नपूर्वकं जिज्ञासितहेतुपरत्वेन श्लोकमवतारयति क्षेत्रेति। सर्वस्य प्राणिजातस्य क्षेत्रक्षेत्रज्ञसम्बन्धाधीना यस्मादुत्पत्तिस्तस्मात् क्षेत्रज्ञात्मकपरमात्मातिरेकेण प्राणिनिकायस्याभावादैक्यज्ञानादेव मुक्तिरित्याह कस्मादिति। क्षेत्रक्षेत्रज्ञसम्बन्धमुक्तमाक्षिपति कः पुनरिति। क्षेत्रज्ञस्य क्षेत्रेण सम्बन्धः संयोगो वा समवायो वेति विकल्पाद्यं दूषयति न तावदिति। द्वितीयं निरस्यति नापीति। वास्तवसम्बन्धाभावेऽपि तयोरध्यासरूपः सोऽस्तीति परिहरति उच्यत इति। भिन्नस्वभावत्वे हेतुमाह विषयेति। इतरेतरत्र क्षेत्रे क्षेत्रज्ञे वा तद्धर्मस्य क्षेत्रानधिकरणस्य क्षेत्रज्ञगतस्य चैतन्यस्य क्षेत्रज्ञानाधारस्य च क्षेत्रनिष्ठस्य जाड्यादेरारोपरूपो योगस्तयोरित्याह इतरेति। तत्र निमित्तमाह क्षेत्रेति। अविवेकादारोपितसंयोगे दृष्टान्तमाह रज्ज्विति। उक्तं सम्बन्धं निगमयति सोऽयमिति। तस्य निवृत्तयोग्यत्वं सूचयति मिथ्येति। कथं तर्हि मिथ्याज्ञानस्य निवृत्तिरित्याशङ्क्याह यथेति। योऽयं विज्ञानमयः प्राणेष्वित्यादि तं पदार्थविषयं शास्त्रमनुसृत्य विवेकज्ञानमापाद्य महाभूतादिरूपात् क्षेत्रादुपद्रष्ट्रत्वादिलक्षणं प्रागुक्तं क्षेत्रज्ञं इषीकामुञ्जन्यायेन

विविच्य सर्वोपाधिविनिर्मुक्तब्रह्मस्वरूपेण ज्ञेयं योऽनुभवति तस्य मिथ्या-ज्ञानमपगच्छतीति सम्बन्धः। कथमस्य निर्विशेषवस्तुत्वं क्षेत्रस्य सवि-शेषत्वहेतोः सत्त्वादित्यागश्चास्य क्षेत्रस्येति। बहुदृष्टान्तोक्तेर्बहुविधत्वं क्षेत्रस्य द्योत्यते। उक्तज्ञानान्मिथ्याज्ञानापगमे हेतुमाह यथोक्तेति। तथापि कथं प्रकृतार्थसिद्धिः कालान्तरे तुल्यजातीयमिथ्याज्ञानोदयसम्भ-वादित्याशङ्क्याह तस्येति। सम्यग्ज्ञानादज्ञानतत्कार्यनिवृत्त्या सुतरामिति स्थितं फलितमाह य एवमिति। उत्तरग्रन्थमवतारयितुं व्यवहितं वृत्तं कीर्त्तयति नेत्यादिना। अविद्यानाद्यनिर्वाच्यमज्ञानं मिथ्याज्ञानं तत्-संस्कारश्चादिशब्दार्थः। व्यवहितमनुद्याव्यवहितमनुवदति जन्मेति ॥२६॥

स्वा० टी०। तत्र कर्मयोगस्य तृतीयचतुर्थपञ्चमेषु प्रपञ्चितत्वात् ध्यानयोगस्य च षष्ठाष्टमयोः प्रपञ्चितत्वात् ध्यानादेश्च सांख्यविवेकात्म-विषयत्वात् सांख्यमेव प्रपञ्चयन्नाह यावदिति, यावदध्यायसमाप्ति। यावत् यत्किञ्चित् वस्तुमात्रं समुत्पद्यते तत्सर्वं क्षेत्रक्षेत्रज्ञयोर्योगाद-विवेककृततादात्म्याध्यासाद्भवतीति जानीहि ॥ २६ ॥

**समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्।**
**विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥२७॥**

अतस्तस्या अविद्याया निवर्त्तकं सम्यग्दर्शनमुक्तमपि पुनः शब्दान्तरेणोच्यते समं सर्वेष्वित्यादि। सममिति समं निर्विशेषं तिष्ठन्तं स्थितिं कुर्वन्तं क्व? सर्वेषु भूतेषु ब्रह्मादिस्थावरान्तेषु प्राणिषु, कम्? परमेश्वरं देहे-न्द्रियमनोबुद्ध्यव्यक्तात्मनोऽपेक्ष्य परं परमश्चासावीश्वरश्च ईशनशीलत्वेति परमेश्वरस्तं सर्वेषु भूतेषु समं तिष्ठन्तं तानि विशिनष्टि विनश्यत्स्विति तञ्च परमेश्वरमविन-श्यन्तं इति भूतानां परमेश्वरस्य चात्यन्तवैलक्षण्यप्रदर्श-नार्थः कथं सर्वेषां हि भावविकाराणां जनिलक्षणो भाव-

विकारो मूलं जन्मोत्तरभाविनोऽन्ये सर्वे भावविकारा विनाशान्ता विनाशात् परो न कश्चिदस्ति भावविकारः भावाभावात् सति हि धर्मिणि धर्मा भवन्त्यतोऽन्त्यभावविकारानुवादेन पूर्वभाविनः सर्वे भावविकाराः प्रतिषिद्धा भवन्ति सहकार्य्यैः तस्मात् सर्वभूतैर्वैलक्षण्यमत्यन्तमेव परमेश्वरस्य सिद्धं निर्विशेषत्वमेकत्वञ्च कथञ्च य एवं यथोक्तं परमेश्वरं पश्यति स पश्यति, ननु सर्वोऽपि लोकः पश्यति किं विशेषेणेति सत्यं पश्यति किन्तु विपरीत पश्यन्यतो विशिनष्टि स एव पश्यतीति यथा तिमिरदृष्टिरनेकं चन्द्रं पश्यति तमपेक्ष्यैकचन्द्रदर्शी विशिष्यते स एव पश्यतीति तथैवेहाप्येकमविभक्तं यथोक्तमात्मानं यः पश्यति स विभक्तानेकात्मविपरीतदर्शिभ्यो विशिष्यते स एव पश्यतीति इतरे पश्यन्तोऽपि न पश्यन्ति विपरीतदर्शित्वादनेकचन्द्रदर्शिवदित्यर्थः ॥ २१ ॥

आ० टी०। व्यवधानाव्यवधानाभ्यां सर्वार्थमुक्तत्वादज्ञानस्य तन्निवर्त्तकं सम्यग्ज्ञानं वक्तव्यमित्याह अत इति। तस्याभक्तदुक्तत्वात् तदुक्तार्थसङ्कीर्णं चेत्याशङ्क्यातस्तत्त्वार्थस्य शब्दभेदेन पुनः पुनर्वचनमधिकारिभेदादनुग्रहार्थेति मत्वाह उक्तमिति। सर्वत्र परस्यैकत्वात् नोत्कर्षापकर्षवत्त्वमित्याह समर्मिति। परमत्वमीश्वरत्वञ्चोपपादयति देहेति। आत्मा जीवस्तमित्यादिनान्वयोक्तिः। आश्रयनाशादाश्रितस्यापि नाशमाशङ्क्याह नश्येति। अविनश्यन्तमिति विशिनष्टि इति सम्बन्धः उभयत्र विशेषणद्वयस्य तात्पर्यमाह भूतानामिति। नाशानाशाभ्यां वैलक्षण्येऽपि कथमत्यन्तवैलक्षण्यं सविशेषत्वाविशेषत्वयोस्तुल्यत्वादिति शङ्कते कथमिति। भूतानां सविशेषत्वादिभावेऽपि परस्य तदभावादत्यन्तवैलक्षण्यमिति पक्षं जन्मनोभावविकारेत्यादित्वमाह सर्वेषामिति। तत्र हेतुमाह जन्मेति।

न हि जन्मान्तरेणोत्तरे विकारा युज्यन्ते जन्मवतस्तदुपलम्भादित्यर्थः । विनाशानन्तरभाविनोऽपि विकारस्य कस्यचिदुपलब्धेर्न तस्यान्त्यविकारत्वमित्याशङ्क्याह विनाशादिति । तस्यान्त्यविकारत्वे सिद्धे फलितमाह अत इति । तेषां जन्मादीनां कार्य्याणि कदाचित्करत्वानि तदधिकरणानि तैः सहेति यावत् । परमेश्वरस्य भूतेभ्योऽत्यन्तवैलक्षण्यमुक्तमुपसंहरति तस्मादिति । निर्विशेषत्वं सर्वभावविकारवर्जितत्वं कूटस्थत्वमेकत्वमद्वितीयत्वम् । यः पश्यतीत्यादि व्याचष्टे य एवमिति । उक्तविशेषणमीश्वरं पश्यन्नेव पश्यतीत्युक्तमाक्षिपति नन्विति । ईश्वरपराङ्मुखस्यानात्मनिष्ठस्य तद्दर्शित्वेऽपि विपरीतदर्शित्वादीश्वरप्रवणस्यैव सम्यग्दर्शित्वमिति विवक्षित्वा विशेषणमिति परिहरति सत्यमिति । उक्तमेव दृष्टान्तेन विवृणोति यथेत्यादिना । यः पश्यतीत्यादेरर्थमनुवदति इतर इति परवस्तुनिष्ठेभ्यो व्यतिरिक्ता इत्यर्थः ॥ २७ ॥

स्वा० टी० । अविवेककृत संसारोद्भवमुक्त्वा तन्निवृत्तये विविक्तात्मविषयं सम्यग्दर्शनमाह सममिति । स्थावरजङ्गमात्मकेषु भूतेषु निर्विशेषरूपेण समं यथा भवत्येवं तिष्ठन्तं परमात्मानं यः पश्यति अतएव तेषु विनश्यत्स्वप्यविनश्यन्तं यः पश्यति स एव सम्यक् पश्यति नान्य इत्यर्थः ॥ २७ ॥

**समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम् ।**
**न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् २८**

यथोक्तस्य सम्यग्दर्शनस्य फलवचनेन स्तुतिः कर्त्तव्येति श्लोक आरभ्यते समं पश्यन्निति । समं पश्यन्नुपलभमानो हि यस्मात् सर्वत्र सर्वभूतेषु समवस्थितं तुल्यतयावस्थितमीश्वरं अतीतानन्तरश्लोकोक्तलक्षणमित्यर्थः समं पश्यन् किम् हिनस्ति हिंसां न करोति आत्मना स्वेनैव स्वमात्मानं ततस्तस्मात् अहिंसनात् याति परां प्रकृष्टां गतिं मोक्षाख्यां ननु नैव कश्चित् प्राणी स्वयं स्वमात्मानं हिनस्ति ।

कथमुच्यतेऽप्राप्तं न हिनस्तीति यथा न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे इत्यादि नैष दोषः अज्ञानामात्मतिरस्कारोपपत्तेः। सर्वो ह्यज्ञोऽत्यन्तप्रसिद्धं साक्षादपरोक्षादात्मानं तिरस्कृत्यानात्मानमात्मत्वेन परिगृह्य तमपि धर्माधर्मैः कृत्वोपात्तमात्मानं हत्वान्यमात्मानमुपादत्ते नवन्तञ्चैवं हत्वान्यमेवन्तमपि हत्वान्यमित्येव नवमुपात्तमुपात्तमात्मानं हन्तीत्यात्महा सर्वोऽज्ञो यस्तु परमार्थात्मा असावपि सर्वदाऽविद्यया हत इव विद्यमानफलाभावादिति सर्वे आत्महन एवाविद्वांसो यस्त्वितरो यथोक्तात्मदर्शी स तु उभयथात्मनात्मानं न हिनस्ति ततो याति परां गतिं यथोक्तं फलं तस्य भवतीत्यर्थः॥ २८॥

आ॰ टी॰। प्रकृतसम्यग्ज्ञानेन किमित्यपेक्षायां तत्फलोक्त्या तस्यैव स्तुत्या तद्धेतौ प्रकर्षं प्रदर्शयितुं श्लोकान्तरमित्याह यथोक्तेति। यस्मादित्यस्य ततःशब्देन सम्बन्धः। सर्वभूतेषु तुल्यतया स्थितं पूर्वोक्तलक्षणमीश्वरं निर्विशेषं पश्यन्नात्मानमात्मना यस्मान्न हिनस्ति ततस्तस्मान्मोक्षाख्यां परां गतिं याति इति योजना तत्र पादत्रयेण ध्यानादज्ञानध्वस्त्या ध्वस्त्यनर्थस्योक्तात्मज्ञानमिथ्याज्ञानयोरावरणयोर्नाशे स लोकोत्कृष्टां गतिं परमपुरुषार्थं परमानन्दमनुभवति विद्वानिति चतुर्थपादार्थः। न हिनस्त्यात्मनात्मानमिति यथाश्रुतमादाय चोदयति नन्विति। न पृथिव्यामिति प्राप्तिद्वारा निषेधस्यान्तरिक्षेण दर्शितः प्राप्त्यभावाच्च यस्मिन्नग्नौ मुख्या नेष्यते तद्वदिहापि प्राप्तिं विना निषेधो न युक्त इत्याह यथेति। अज्ञानामात्मतिरस्कारसम्भवादिहापि तद्धानोक्तिर्युक्तेति समाधत्ते नैष दोष इति। सङ्ग्रहवाक्यं विवृणोति सर्वो हीति। अनात्मशब्दो देहादिविषयः। अविदुषामारोपितात्महन्तृत्वं निगमयति इत्यात्महेति। तथापि पारमार्थिकस्यात्मनो हननाभावाद्धि तेषां सर्वेषां आत्महन्तृत्वमित्याशङ्क्याह यस्त्विति। उक्तरीत्या सर्वेषा-

मविदुषामात्महननत्वं सिद्धं इत्युपसंहरति सर्वं इति। आत्मनैवात्म-हननमविदुषां दृष्टं नहि तद्विद्वद्विषये शक्यं निषेद्धुमित्याह यस्त्विति इति। उभयथापीत्यारोपानारोपाभ्यामित्यर्थः। अज्ञानादनर्थस्तथाच यो पूर्वोक्तपरमानन्दप्राप्त्या परित्यक्तं युक्तमित्याह तत इति ॥ २८ ॥

स्वा°टी°। कुत इत्यत आह समं पश्यन्निति। सर्वत्र भूतमात्रे समं सम्य-क्प्रच्युतस्वरूपेणावस्थितं परमात्मानं पश्यन् हि यस्मादात्मना स्वेनैवा-त्मानं न हिनस्ति अविद्यया सच्चिदानन्दरूपमात्मानं तिरस्कृत्य न विना-शयति ततश्च परां गतिं मोक्षं प्राप्नोति, यस्त्वेवं न पश्यति स हि देहात्मदर्शी देहे न स्वात्मानं हिनस्ति, तथा च श्रुतिः असुर्या नाम ते लोका अन्धेन तमसावृताः। तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जना इति ॥ २८ ॥

**प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः।**
**यः पश्यति तथात्मानमकर्त्तारं स पश्यति ॥२९॥**

सर्वभूतस्थमीशं समं पश्यन्न हिनस्त्यात्मनात्मानमित्युक्तं तदनुपपन्नं सगुणकर्मवैलक्षण्यभेदभिन्नेष्वात्मसु इत्ये-तदाशङ्क्याह प्रकृतैवेति। प्रकृत्या प्रकृतिर्भगवतो माया त्रिगुणात्मिका, मायान्तु प्रकृतिं विद्यादिति मन्त्रवर्णात्तया प्रकृत्यैव च नान्येन महदादिकार्य्यकारणाकारपरिणतया तान्येव कर्माणि वाङ्मनःकायारभ्यानि क्रियमाणानि निर्व्व-र्त्यमानानि सर्वशः सर्वप्रकारैर्यः पश्यत्युपलभते तथा-त्मानं क्षेत्रज्ञमकर्त्तारं सर्वोपाधिविवर्जितं पश्यति स परमार्थदर्शीत्यभिप्रायः निर्गुणस्याकर्त्तुर्निर्विशेषस्याकाश-स्येव भेदे प्रमाणानुपपत्तिरित्यर्थः ॥ २९ ॥

आ° टी°। श्लोकान्तरं शङ्कोत्तरत्वेनावतारयितुमनुवदति सर्वेति। प्रतिदेहं धर्म्माधर्म्मादिमत्त्वेनात्मनो भेदभानाच्च समत्व दर्शनमिति

प्रकृते तदिति । स्वगुणैः सुखदुःखादिभिः स्वकर्मभिश्च धर्माधर्माख्यै-र्वैलक्षण्यात् प्रतिदेहं भेदे नाद्वयदृष्टिरात्मसु कथं साम्येन दर्शनमित्येतदा-शङ्क्य परिहरतीत्याह एतदिति । प्रकृतिशब्दस्य स्वभाववाचित्वं व्याव-र्तयति प्रकृतिरिति । मायाशब्दस्य सवितृपर्य्यायत्वं प्रत्याह त्रिगुणेति । उक्तपरस्य शक्तिर्मायेत्यत्र श्रुतिसम्मतिमाह मायान्त्विति । अन्येन केनचित् क्रियमाणानि न भवन्ति कर्म्माणीत्येवकारार्थमाह नान्येनेति । किन्त-दन्यविशेष्यमित्युक्ते संख्याभिप्रेता प्रधानाख्या प्रकृतिरित्याह महदा-दीति । सर्वप्रकारत्वं कार्य्यत्वनिमित्तत्वादिना प्रकारबाहुल्यमात्मान-मकर्त्तृविशेषणं यः पश्यतीति पूर्वेण सम्बन्धः । स पश्यतीत्ययुक्तं पुन-रुक्तेरित्याशङ्क्याह स परमार्थेति । आत्मनां प्रतिदेहं भिन्नत्वे तेषु समदर्शनमयुक्तमित्युक्तस्य कः समाधिरित्याशङ्क्याह निर्गुणस्येति ॥२९॥

श्री॰ टी॰ । ननु शुभाशुभकर्मकर्तृत्वेन वैषम्ये दृश्यमाने कथमा-त्मनः समत्वमित्याशङ्क्याह प्रकृत्यैवेति । प्रकृत्यैव देहेन्द्रियाकारेण परि-णतया सर्वशः सर्वैः प्रकारैः क्रियमाणानि कर्माणि यः पश्यति तथा-त्मानञ्च कर्त्तारं देहाभिमानेनैवात्मनः कर्तृत्वं न स्वत इत्येवं यः पश्यति स एव सम्यक् पश्यति नान्य इत्यर्थः ॥ २९ ॥

**यथा भूतपृथग्भावमेकस्थमनुपश्यति ।**
**अतएव च विस्तारं ब्रह्म सम्पद्यते तदा ॥ ३० ॥**

पुनरपि तदेव सम्यग्दर्शनं शब्दान्तरेण प्रप-ञ्चयते यदेति । यदा यस्मिन् काले भूतपृथक्-भावं भूतानां पृथग्भावं पृथक्त्वमेकस्मिन्नात्मनि स्थितमेकस्थमनुपश्यति शास्त्राचार्य्योपदेशतो मत्वात्मानं प्रत्यक्षत्वेन पश्यत्यात्मैव इदं सर्वमिति अतएव च तस्मादेव च विस्तारमुत्पत्तिमनुपश्यति आत्मनः प्राण आत्मन आशा आत्मनः स्मर आत्मन आकाश आत्मनस्तेज आत्मनः आप

आत्मन आविर्भावतिरोभावौ आत्मनो भूतात्मनोऽन्नमित्येवमादिप्रकारैर्विस्तारं यदा पश्यति तदा ब्रह्म संपद्यते ब्रह्मैव भवति तदा तस्मिन् काले इत्यर्थः ॥ ३० ॥

श्रा० टी०। प्रकृतेर्विकारा यास्तु सांख्यवत् पुरुषाद्न्यत्वप्रसक्तौ सत्याह पुनरपीति। उपदेशजनितं प्रत्यक्षदर्शनमनुवर्तते आत्मैवेति। भूतानां विकाराणां नानात्वं प्रकृत्या सत्तात्ममात्रतया प्रलीनं पश्यति न हि भूतपृथक्त्वं सत्यां प्रकृतौ केवले परस्मिन्विलापयितुं शक्यत इत्यर्थः। परिपूर्णादात्मन एव प्रकृत्यादेर्विशेषान्तस्य स्वरूपलाभमुपलभ्य तन्मात्रतां पश्यतीत्याह अतएवेति। उक्तमेव विस्तारं सुव्यवस्थेन स्पष्टयति आत्मन इति। ब्रह्मसंपत्तिनाम पूर्णत्वेनाभिव्यक्तिरपूर्णत्वहेतोः सर्वव्यात्मत्वात् कारणादित्याह ब्रह्मैवेति। ज्ञानसमानकाले मुक्तिरिति सूचयति तदेति ॥ ३० ॥

श्या० टी०। इदानीं भूतानामपि प्रकृतितादात्म्यात्मत्वे नाभेदाद्भूतभेदकृतमप्यात्मनो भेदमपश्यन् ब्रह्मत्वमुपैतीत्याह यदेति। यदा भूतानां स्थावरजङ्गमानां पृथग्भावं भेदं एकस्थं एकस्यामेवेश्वरशक्तिरूपायां प्रकृतौ प्रलये स्थितमनुपश्यति आलोचयति अतएव तस्या एव प्रकृतेः सकाशाद्भूतानां विस्तारं सृष्टिसमये अनुपश्यति तदा प्रकृतितादात्म्यात्मत्वेन भूतानामप्यभेदं पश्यन् परिपूर्णं ब्रह्म संपद्यते ब्रह्मैव भवतीत्यर्थः ॥ ३० ॥

**अनादित्वान्निर्गुणत्वात् परमात्मायमव्ययः।**
**शरीरस्थोऽपि कौन्तेय! न करोति न लिप्यते ३१**

एकस्यात्मनः सर्वदेहात्मत्वे तद्दोषसम्बन्धे प्राप्तमिदमुच्यते अनादीति। अनादित्वादनादेर्भावोऽनादित्वमादिः कारणं यद्यस्य नास्ति तदनादि यद्ध्यादिमत् तत् स्वेनात्मना व्येत्ययन्त्वनादित्वान्निरवयव इति कृत्वा नव्येति तथा निर्गुणत्वात् सगुणो हि गुणव्ययाद्व्येत्ययन्तु निर्गुणत्वान्न

नव्येतीति परमात्मायमव्ययो नास्य व्ययो विद्यत इत्यव्ययो यत एवमतः शरीरस्थोऽपि शरीरेष्वात्मन उपलब्धिर्भवतीति शरीरस्थ उच्यते तथापि न करोति तदकरणाच्च तत्फलेन न लिप्यते यो हि कर्त्ता स कर्मफलेन लिप्यते अयन्त्वकर्त्ता अतो न फलेन लिप्यत इत्यर्थः कः पुनर्देहेषु करोति लिप्यते च यदि तावदन्यः परमात्मनो देही करोति लिप्यते च तत इदमनुपपन्नमुक्तं क्षेत्रज्ञेश्वरैकत्वं क्षेत्रज्ञञ्चापि मां विद्धीत्यादाथ नास्तीश्वरादन्यो देही कः करोति लिप्यते चेति वाच्यं परो वा नास्तीति सर्वथा दुर्विज्ञेयं दुर्बोध्यञ्चेति भगवत्प्रोक्तमौपनिषदं दर्शनं परित्यक्तं वैशेषिकैः सांख्यार्हतबौद्धैश्च तत्रायं परिहारो भगवता स्वेनैवोक्तः स्वभावस्तु प्रवर्त्तत इत्यविद्यामात्रं स्वभावो हि करोति लिप्यत इति व्यवहारो भवति न तु परमार्थत एकस्मिन् परमात्मनि तदस्त्यत एकस्मिन् परमार्थसांख्यदर्शने स्थितानां ज्ञाननिष्ठानां परमहंसपरिव्राजकानां तिरस्कृताविद्याव्यवहाराणां कर्माधिकारे नास्तीति तत्र तत्र दर्शितं भगवता ॥ ३१ ॥

आ० टी०। परिपूर्णत्वेन सर्वात्मत्वे प्राप्तमात्मनो देहादिगतेन कर्तृत्वादिना तद्वत्त्वं दृष्टं हि पवित्रस्यापि पञ्चगव्यादेरपवित्रसंसर्गात् तद्दोषेण दुष्टत्वमित्याशङ्कामनूद्योत्तरत्वेन श्लोकमवतारयति एकस्येति। अनादित्वमेव साधयति अनादेरिति। तथापि किं स्यादित्याशङ्क्य कार्यत्वकृतव्ययाभावः सिध्यतीत्याह यदीति। तथापि गुणापकर्षद्वारको व्ययो भविष्यति नेत्याह तथेति। निरवयवत्वादेव सावयवद्वारकस्य निर्गुणत्वाद्गुणद्वारकस्य च व्ययस्याभावेऽपि स्वभावतो व्ययः स्यादित्याशङ्क्याह

परमात्मेति । परमात्मनः स्वतः परतो वा व्ययाभावे फलितमाह यत इति । स्वतश्चिन्मात्रस्य कथं शरीरस्थत्वं तत्राह शरीरस्थोऽपीति । सर्वगतत्वेन सर्वात्मत्वेन च देहादौ स्थितोऽपि स्वतो देहाद्यात्मना वा न करोति कूटस्थत्वाद्देहादेश्च कल्पितत्वादित्यर्थः । कर्तृत्वाभावेऽपि । भोक्तृत्वं स्यादित्याशङ्क्याह तदकरणादिति । तदेवोपपादयति यो हीति । परस्य कर्तृत्वादेरभावे कस्य तदिष्टमिति पृच्छति कः पुनरिति । परस्मादन्यस्य कस्यचिज्जीवस्य कर्तृत्वादीत्याशङ्कामनुवदति इतीति । तस्मिन् पक्षे प्रतिज्ञाभङ्गः स्यादिति दूषयति तत इति । ईश्वरातिरिक्तजीवानङ्गीकारादुपक्रमविरोधोऽस्तीति शङ्कते अथेति । तर्हि प्रतीतकर्तृत्वादेरधिकरणं वक्तव्यमिति पृच्छति क इति । परस्यैव कर्तृत्वाद्याधारत्वमास्थि वक्तव्यमित्याशङ्क्याह परो वेति । नास्तीति वाच्यमिति पूर्वेण सम्बन्धः, न हि कर्तृत्वादिभाक्त्वं परस्यास्मदादिवदीश्वरत्वमिति भावः । परस्यान्यस्य वा कर्तृत्वाद्यविशिष्टे शरीरस्थोऽपीत्यादि श्रुतिमूलमपि शास्त्रं वक्तुमशक्यत्वात् त्याज्यमेवेति परीक्षकधर्मत्वोपहसन्ति सर्वदेति । परस्य वस्तुतो कर्तुरभोक्तुश्चाविद्यया तदारोपादादेयमेव भगवन्मतमिति परिहरति तत्रेति । तमेव परिहारं प्रपञ्चयति अविद्येति । व्यावहारिके कर्तृत्वाद्यविशिष्टे पारमार्थिके किमिष्यते तत्राह न त्विति । वास्तवकर्तृत्वाद्यभावे निङ्गनुदन्यस्येत्यत इति ॥ ३१ ॥

स्वा०टी०। तथापि संसारस्यास्य देहसम्बन्धनिमित्तैः कर्मभिस्तत्फलैश्च सुखदुःखादिभिरस्य दुष्परिहारमिति कुतः समदर्शनं तत्राह अनादित्वादिति । यदुत्पत्तिमत् तदेव हि व्येति यच्च गुणवद्वस्तु तस्य गुणनाशे व्ययो भवति अयं तु परमात्मा अनादिर्निर्गुणश्च अतोऽव्ययः अविकारीत्यर्थः, अस्मात् शरीरे स्थितोऽपि न किञ्चित् करोति न च कर्मफलैर्लिप्यते ॥३१॥

**यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।**
**सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥३२॥**

किमिव न करोति न लिप्यत इत्यत्र दृष्टान्तमाह यथा सर्वगतमिति । यथा सर्वगतं सर्वव्याप्यपि सत् सौक्ष्म्यात्

सूक्ष्मभावादाकाशं खं नोपलिप्यते न सम्बध्यते सर्वत्र अवस्थितो देहे तथात्मा नोपलिप्यते ॥ ३२ ॥

आ० टी० । सौक्ष्म्यादित्यस्य सूक्ष्मभावत्वादित्यर्थः, न सम्बध्यते पङ्कादिभिरिति शेषः ॥ ३२ ॥

स्वा० टी० । तत्र हेतुं दृष्टान्तमाह यथेति । यथा सर्वगतं पङ्कादिष्वपि स्थितमाकाशं सौक्ष्म्यादसङ्गत्वात् पङ्कादिभिर्नोपलिप्यते तथा सर्वत्र उत्तमे मध्यमे अधमे वा देहे स्थितोऽप्यात्मा नोपलिप्यते देहिकैर्गुणदोषैर्न युज्यत इत्यर्थः ॥ ३२ ॥

**यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।**
**क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ ३३ ॥**

किञ्च यथा प्रकाशयतीति । यथा प्रकाशयत्यवभासयत्येकः कृत्स्नं लोकमिमं रविः सवितादित्यः तथा महाभूतादिधृत्यन्तं क्षेत्रमेकः सन् प्रकाशयति कः क्षेत्री परमात्मेत्यर्थः । रविदृष्टान्तोऽत्रात्मन उभयार्थोऽपि भवति रविवत् सर्वक्षेत्रेष्वेकः आत्मा अलेपकश्चेति ॥ ३३ ॥

आ० टी० । न करोति न लिप्यते चेत्यत्र दृष्टान्तेन दृश्यधर्मशून्यत्वं हेतुमाह किञ्चेति । दृष्टान्तेन विवक्षितमर्थं दर्शयति रवीति । उभयविधमर्थमेव स्फुटयति रविवदिति ॥ ३३ ॥

स्वा० टी० । असङ्गत्वाल्लेपो नास्तीत्याकाशदृष्टान्तेन दर्शितं प्रकाशकत्वाच्च प्रकाश्यगुणैर्न युज्यत इति रविदृष्टान्तेनाह यथा प्रकाशयतीति । स्पष्टोऽर्थः ॥ ३३ ॥

**क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।**
**भूतप्रकृतिमोक्षञ्च ये विदुर्यान्ति ते परम् ॥ ३४ ॥**

**इति श्रीमहाभारते शतसाहस्र्यां संहितायां**

**वैयासिक्यां भीष्मपर्वणि श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे प्रकृतिपुरुषविवेकयोगो नाम त्रयोदशोऽध्यायः।**

समस्ताध्यायार्थोपसंहारार्थोऽयं श्लोकः क्षेत्रक्षेत्रज्ञयोरिति। क्षेत्रक्षेत्रज्ञयोर्यथाव्याख्यातयोरेवं यथाप्रदर्शितप्रकारेण अन्तरमितरेतरवैलक्षण्यविशेषं ज्ञानचक्षुषा शास्त्राचार्योपदेशजनितमात्मप्रत्ययिकं ज्ञानं चक्षुस्तेन ज्ञानचक्षुषा भूतप्रकृतिमोक्षञ्च भूतानां प्रकृतिरविद्यालक्षणाव्यक्ताख्या तस्या भूतप्रकृतेर्मोक्षणमभावगमनञ्च ये विदुर्विजानन्ति यान्ति गच्छन्ति ते परं परमार्थतत्त्वं ब्रह्म न पुनर्देहमाददत इत्यर्थः॥ ३४॥

इति श्रीभगवद्गीताभाष्ये त्रयोदशोऽध्यायः।

आ० टी०। अध्यायार्थं सफलमुपसंहरति क्षेत्रेति। विशेषः कौटस्थ्यादिरमानित्वादि तज्ज्ञानं देहमानित्वादिमत्तया क्षेत्रक्षेत्रज्ञयाथात्म्यविज्ञानवतः सर्वानर्थनिवृत्त्या परिपूर्णपरमानन्दाविर्भावलक्षण पुरुषार्थसिद्धिरिति विवक्षितम्॥ ३४॥

इति त्रयोदशोऽध्यायः।

स्वा० टी०। अध्यायार्थमुपसंहरति क्षेत्रक्षेत्रज्ञयोरिति। एवमुक्तप्रकारेण क्षेत्रक्षेत्रज्ञयोरन्तरं भेदं विवेकज्ञानलक्षणेन चक्षुषा ये विदुः तथा ये अयमुक्ता भूतानां प्रकृतिस्तस्याः सकाशात् मोक्षं मोक्षोपायं ध्यानादिकञ्च ये विदुस्ते परं पदं यान्ति। विविक्तौ येन तत्त्वेन मिश्रौ प्रकृतिपुरुषौ। तं वन्दे परमानन्दं नन्दनन्दनमीश्वरम्॥ ३४॥

इति त्रयोदशोऽध्यायः।

# चतुर्दशोऽध्यायः।

---

## श्रीभगवानुवाच।

परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम्।
यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥१

सर्वमुत्पद्यमानं क्षेत्रक्षेत्रज्ञसंयोगादुत्पद्यत इति उक्तं तत् कथमिति तत्प्रदर्शनार्थं परं भूय इत्यादिरध्याय आरभ्यते अथवा ईश्वरपरतन्त्रयोः क्षेत्रक्षेत्रज्ञयोर्जगत्कारणत्वं न तु सांख्यानामिव स्वतन्त्रयोरित्येवमर्थं प्रकृतिस्थत्वं गुणेषु च सङ्गः संसारकारणमित्युक्तं कस्मिन् गुणे कथं सङ्गः के वा गुणाः कथं वा बध्नन्तीति गुणेभ्यश्च मोक्षणं कथं स्यात् मुक्तस्य च लक्षणं वक्तव्यमित्येवमर्थञ्च श्रीभगवानुवाच परमिति। परं ज्ञानमिति व्यवहितेन सम्बन्धः भूयः पुनः पूर्वेषु सर्वेषु अध्यायेषु असकृदुक्तमपि प्रवक्ष्यामि तच्च परं परवस्तुविषयत्वात् किं तत् ज्ञानं सर्वेषां ज्ञानानामुत्तमं उत्तमफलत्वात् ज्ञानानामिति, नामानित्वादीनां किं तर्हि यज्ञादिज्ञेयवस्तुविषयाणामिति तानि न मोक्षायेदन्तु मोक्षायेति परोत्तमशब्दाभ्यां स्तौति श्रोतृबुद्धिरुच्युत्पादनार्थं यत् ज्ञात्वा यत् ज्ञानं ज्ञात्वा प्राप्य मुनयः सन्न्यासिनो मननशीलाः सर्वे परां सिद्धिं मोक्षाख्यां इतोऽस्माद्देहबन्धनादूर्द्धं गताः प्राप्ताः ॥ १ ॥

शा० टी० । क्षेत्रक्षेत्रज्ञसंयोगस्य सर्वोत्पत्तिनिमित्तत्वमज्ञातं ज्ञापयितुमध्यायान्तरमवतारयन्नध्याययोरुत्थाप्योत्थापकत्वरूपां सङ्गतिमाह सर्वमिति । विघ्नान्तरेणाध्यायारम्भं सूचयति अथवेति । तदेव वस्तु सूक्तमनुवदति ईश्वरेति । प्रकृतिस्थत्वं पुरुषस्य प्रकृत्या सहैक्याध्यासः तस्यैव गुणेषु सङ्गोऽभिनिवेशः। वक्ष्यमाणाकाङ्क्षां निक्षिप्य तदुत्तरत्वेनाध्यायारम्भो पूर्ववदेव पूर्वाध्यायसम्बन्धसिद्धिरित्याह कथमिति । पूर्वोक्तेनार्थेनास्याध्यायस्य समुच्चयार्थश्चकारः । परमित्यस्य भाविकालार्थत्वं व्यावर्तयितुं सङ्गतिमाह परमिति । भूयःशब्दस्याधिकार्थत्वमिह नास्तीत्याह पुनरिति । पुनःशब्दार्थमेव विवृणोति पूर्वमिति । पुनरुक्तिस्तर्ह्येत्याशङ्क्य सूक्ष्मत्वेन दुर्बोधत्वात् पुनर्वचनमर्थवदित्याह तच्चेति । विशेष्यं प्रश्नद्वारा निर्दिशति किन्तदिति । निर्धारणार्थां षष्ठीमादाय तस्य प्रकर्षं दर्शयति । सर्वेषामिति । परमुत्तममिति पुनरुक्तिमाशङ्क्य विषयफलभेदान्मैवमित्याह उत्तमेति । ज्ञानं ज्ञेयमित्यादौ ज्ञानशब्देनामानित्वादीनामुक्तत्वात्तन्मध्ये च ज्ञानस्य ज्ञानानामिति साध्यत्वेनोत्तमत्वाच्च तस्य वक्तव्यतेत्याशङ्क्याह ज्ञानिनामिति । ज्ञानिनामिति नामानित्वादीनां ग्रहणमिति शेषः । इतिशब्दादूर्ध्वं पूर्ववदेव शेषो द्रष्टव्यः । यथोक्तज्ञानापेक्षया कृतस्तज्ज्ञानस्य प्रकर्षस्तत्राह तानीति । स्तुतिफलमाह यं तु बुद्ध्वेति । ज्ञानं ज्ञात्वा ज्ञानस्य ज्ञेयत्वोपगमादनवस्थेत्याशङ्क्याह प्राप्येति । मुनिशब्दस्य चतुर्थाश्रमविषयत्वे तन्मात्रादेव ज्ञानायोगात् कुतस्तेषां मुक्तिरित्याशङ्क्याह मननेति । सिद्धिगतत्वं परामिति विशेषणाद्दुरावर्त्यमुक्तत्वमाह मोक्षाख्यामिति । देहाख्यस्य बन्धनस्याध्याहार्यत्वमाह अस्मादिति ॥ १ ॥

शा० टी० । पुंप्रकृत्योः स्वतन्त्रत्वं वारयन् गुणसङ्गतः । प्राह संसारवैचित्र्यं विस्तरेण चतुर्दशे ॥ यावत् संजायते किञ्चित् सत्त्वं स्थावरजङ्गमम् । क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धीत्युक्तं स च क्षेत्रक्षेत्रज्ञयोः संयोगो निरीश्वरः साङ्ख्यानामिव न स्वातन्त्र्येण किन्त्वीश्वरेच्छयैवेति कथनपूर्वकं कारणं गुणसंयोगोऽस्य सदसद्योनिजन्मस्वित्यनेनोक्तं सत्त्वादिगुणकृतं संसारवैचित्र्यं प्रपञ्चयिष्यन्नेवं भूतं वक्ष्यमाणमर्थं स्तौति परं भूय इति द्वाभ्याम् । परं परमात्मनिष्ठं ज्ञायतेऽनेनेति ज्ञानमुपदेशं भूयोऽपि

तुभ्यं प्रकर्षेण वक्ष्यामि । कथंभूतं ज्ञानिनां तपःकर्म्मादिविषयाणां मध्ये उत्तमं मोक्षहेतुत्वात् । तदेवाह यज्ज्ञात्वा मुनयो मननशीलाः सर्वे इतो देहबन्धनात् परां सिद्धिं मोक्षं प्राप्ताः ॥ १ ॥

**इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।**
**सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥२॥**

तस्याश्च सिद्धेरैकान्तिकत्वं दर्शयति इदमिति । इदं ज्ञानं यथोक्तमुपाश्रित्य ज्ञानसाधनमनुष्ठायेत्येतन्मम परमेश्वरस्य साधर्म्यं मत्स्वरूपतामागताः प्राप्ता इत्यर्थो न तु समानधर्मतां साधर्म्यं क्षेत्रज्ञेश्वरयोर्भेदानभ्युपगमात् गीताशास्त्रे फलवादश्चायं स्तुत्यर्थमुच्यते सर्गेऽपि सृष्टिकालेऽपि नोपजायन्ते नोत्पद्यन्ते प्रलये ब्रह्मणोऽपि विनाशकाले न व्यथन्ति च व्यथां नापद्यन्ते न च्यवन्तीत्यर्थः ॥२॥

आ० टी० । ज्ञानफलस्य कर्मफलवैलक्षण्यमाह तस्याश्चेति । कथं ज्ञानाश्रयणं तद्धेतुश्रवणादिसम्पत्तिद्वारेत्याह ज्ञानेति । साधर्म्यं भोगयोरिव विद्वदीश्वरयोरपि भेदः स्यादित्याशङ्क्याह मत्स्वरूपतामिति । साधर्म्यस्य मुख्यत्वे भेदध्रौव्याद्गीताशास्त्रविरोधः स्यादित्याह न त्विति । ज्ञानस्तुतये तत्फलस्य विवक्षितत्वाच्च नात्र सारूप्यमित्याह फलेति । सारूप्ये धीफलं हित्वा ध्यानफलमप्रस्तुतं प्रसज्येतेत्यर्थः । ईश्वरात्मतां गतानामेव क्षयान्तरसर्गादौ जन्माद्यभावेऽपि महासर्गादौ तद्भविष्यतीत्याशङ्क्याह सर्गेऽपीति ॥ २ ॥

स्वा० टी । किञ्च इदमिति । इदं वक्ष्यमाणं ज्ञानमुपाश्रित्य ज्ञानसाधनमनुष्ठाय मम साधर्म्यं मद्रूपत्वं प्राप्ताः सन्तः सर्गेऽपि ब्रह्मादिषूत्पद्यमानेष्वपि नोत्पद्यन्ते तथा प्रलयेऽपि न व्यथन्ति प्रलयदुःखं नानुभवन्ति पुनर्नावर्त्तन्त इत्यर्थः ॥ २ ॥

**मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्।**
**सम्भवः सर्वभूतानां ततो भवति भारत ! ॥ ३ ॥**

क्षेत्रक्षेत्रज्ञसंयोग ईदृशो भूतकारणमित्याह ममेति। मम स्वभूता मदीया माया त्रिगुणात्मिका प्रकृतिर्योनिः सर्वभूतानां सर्वकार्य्येभ्यो महत्त्वात् भरणाच्च स्वविकाराणां महद्ब्रह्मेति योनिरेव विशिष्यते तस्मिन् महति ब्रह्मणि योनौ गर्भं हिरण्यगर्भस्य जन्मनो वीजं सर्वभूतजन्मकारणं वीजं दधामि निक्षिपामि क्षेत्रक्षेत्रज्ञप्रकृतिद्वयशक्तिमानीश्वरोऽहमविद्याकामकर्मोपाधिस्वरूपानुविधायिनं क्षेत्रज्ञं क्षेत्रेण संयोजयामीत्यर्थः सम्भव उत्पत्तिः सर्वभूतानां हिरण्यगर्भोत्पत्तिद्वारेण ततस्तस्मात् योनिमूलकारणाद्गर्भाधानात् भवति ॥ ३ ॥

आ॰ टी॰। ज्ञानस्तुत्या तदभिमुखतयाऽव्यवहितचेतसे विवक्षितमर्थमाह क्षेत्रेति। स्वरूपत्वेन स्वभूतत्वं वारयति मदीयेति। ईश्वरीं चिच्छक्तिं व्यावर्त्तयति त्रिगुणात्मिकेति। सांख्यीयप्रकृतिरपि मदीयेति व्यावर्त्तिता योनिशब्देन सर्वाणि भवनयोग्यानि कार्य्याणि प्रत्युपादानत्वमभिप्रेतमित्याह सर्वभूतानामिति। प्रकृतेर्महत्त्वं साधयति सर्वेति। सर्वकार्य्यव्याप्तिमादाय योनावेव ब्रह्मशब्दः न लिङ्गवैषम्यान्महद्ब्रह्मेत्यर्थान्तरं किञ्चिदित्याशङ्क्याह योनिरिति। तस्मिन्नित्यादि व्याचष्टे तस्मिन्निति। ईदृशस्य क्षेत्रक्षेत्रज्ञसंयोगस्य भूतकारणत्वमिति वक्तुमुपक्रम्य किमिदमन्यदादर्शितमित्याशङ्क्याह क्षेत्रेति। गर्भशब्देनोक्तसंयोगस्य फलं दर्शयति सम्भव इति। आदिकर्त्ता स भूतानां इति स्मृत्या हिरण्यगर्भकार्य्यत्वावगमाद्भूतानां कथं यथोक्तगर्भाधाननिमित्तत्वमित्याशङ्क्याह हिरण्यगर्भेति ॥ ३ ॥

स्वा॰ टी॰। तदेवं प्रशंसया श्रोतारमभिमुखीकृत्य परमेश्वरः

र्योनयोः प्रकृतिपुरुषयोः सर्वभूतोत्पत्तिं प्रति हेतुत्वं न तु स्वतन्त्रयो-रितीमं विवक्षितमर्थं कथयति ममेति। देशतः कालतश्चापरिच्छिन्न-त्वान्महत् दृंहितत्वात् स्वकार्य्याणां वृद्धिहेतुत्वाद्वा ब्रह्म प्रकृतिरित्यर्थः। तन्महद्ब्रह्म मम परमेश्वरस्य योनिर्गर्भाधानं स्थानं तस्मिन्नहं गर्भं जगद्विस्तारहेतुं चिदाभासं दधामि निःक्षिपामि प्रलये मयि लीनं सन्तमविद्याकामकर्म्मानुशयवन्तं क्षेत्रज्ञं सृष्टिसमये भोग्येन क्षेत्रेण संयोजयामीत्यर्थः, ततो गर्भाधानात् सर्वभूतानां ब्रह्मादीनां सम्भव उत्पत्तिर्भवतीति ॥ ३ ॥

## सर्वयोनिषु कौन्तेय! मूर्त्तयः सम्भवन्ति याः।
## तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥४॥

सर्वयोनिष्विति। देवपितृमनुष्यपशुमृगादिसर्वयोनिषु कौन्तेय! मूर्त्तयो देहसंस्थानलक्षणामूर्च्छिताङ्गावयवा मूर्त्तयः सम्भवन्ति यास्तासां मूर्त्तीनां ब्रह्म महत सर्वावस्थं योनिः कारणमहमीशो बीजप्रदो गर्भाधानस्य कर्त्ता पिता ॥ ४ ॥

श्रा० टी०। ननु कथमुक्तकारणानुरोधेन हिरण्यगर्भोद्भवमभ्युपेत्य भूतानामुत्पत्तिरुच्यते देवादिजातिविशेषेषु देहविशेषाणां कारणान्तरसम्भ-वात्तत्राह सर्वयोनिष्विति। तत्र तत्र हेत्वन्तरप्रतिभासे कुतोऽस्य हेतु-त्वमित्याशङ्क्य न तद्रूपेणास्यैवावस्थानादित्याह सर्वावस्थमिति ॥ ४ ॥

स्वा० टी०। न केवलं सृष्ट्युपक्रम एव, मदधिष्ठानेनाभ्यां प्रकृति-पुरुषाभ्यामयं भूतोत्पत्तिप्रकारोऽपि तु सर्वदैवेत्याह सर्वेति। सर्वासु योनिषु मनुष्याद्यासु या मूर्त्तयः स्थावरजङ्गमात्मिका उत्पद्यन्ते तासां मूर्त्तीनां महद्ब्रह्म प्रकृतिर्योनिर्मातृस्थानीया अहञ्च बीजप्रदः पिता गर्भाधानकर्त्ता पिता ॥ ४ ॥

## सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः।

**निबध्नन्ति महाबाहो ! देहे देहिनमव्ययम् ॥५॥**

के गुणाः कथं निबध्नन्तीत्युच्यते सत्त्वमिति। सत्त्वं रजस्तम इत्येवं नामानो गुणा इति पारिभाषिकः शब्दो न रूपादिवत् द्रव्याश्रिताः न च गुणगुणिनोरन्यत्वमत्र विवक्षितं तस्माद्गुणा इव नित्यपरतन्त्राः क्षेत्रज्ञं प्रत्यविद्यात्मकत्वात् क्षेत्रज्ञं निबध्नन्तीव तमास्पदीकृत्यात्मानं प्रतिलभत इति निबध्नन्तीत्युच्यते। ते च प्रकृतिसम्भवा भगवन्मायासम्भवा निबध्नन्तीव हे महाबाहो! महान्तौ समर्थतराबाजानुप्रलम्बौ बाहू यस्य स महाबाहुः हे महाबाहो! देहे शरीरे देहिनं देहवन्तं अव्ययमव्ययत्वञ्चोक्तमनादित्वादिश्लोके ॥ ५ ॥

व्या॰ टी॰। एवं क्षेत्रक्षेत्रज्ञसंयोगाज्जगदुत्पत्तिं दर्शयता क्षेत्रज्ञो वाविद्यया बध्यतीत्युक्तं इदानीमध्यायादावुक्तमाकाङ्क्ष्य पूर्वमनूद्यानन्तरश्लोकेनोत्तरमाह के गुणा इति। सत्त्वादिषु कथं गुणशब्दप्रवृत्तिरित्याशङ्क्य परतन्त्रत्वादित्याह गुणा इति। रूपादिष्वेव गुणशब्दः सत्त्वादिषु द्रव्याश्रितत्वं निमित्तीकृत्य किं न स्यादित्याशङ्क्याह पारिभाषिक इति। प्रकृत्यात्मकानां तेषां सर्वाश्रयत्वाद्वैधर्म्यादाह न रूपादिवदिति। गुणानां प्रकृतेश्च पृथग्गुणेरन्यत्वे कुतस्तेषां प्रकृत्यात्मकत्वमित्याशङ्क्याह न च गुणेति। अत्यन्तभेदे गवाश्वयत्कुणाबाभावादित्यर्थः। भेदाभेदे च तद्भावाद्भावादित्यर्थः। कुतस्तेषु गुणपरिभाषेत्याशङ्क्याह तस्मादिति। क्षेत्रज्ञं प्रतिनित्यपारतन्त्र्ये हेतुमाह अविद्येति। के गुणा इत्यस्योत्तरमुक्तं कथं बध्नन्तीत्यस्योत्तरमाह क्षेत्रज्ञमिति। तदेवोपपादयति तमास्पदीकृत्येति। सम्भवन्त्यस्मादिति सम्भवः प्रकृतिः सम्भवो येषां ते तथेति। प्राकृतानां गुणानां प्रकृत्यात्मकत्वमाह ते चेति। शास्त्रीयाशक्तिं प्रधानाख्यां व्यावर्तयति भगवदिति। इवकारानुरक्त्यान निबद्ध

सक्तमिव करोति सुखिनं सुखिनमिव तथा ज्ञानसङ्गेन च देहिनं ज्ञानिमिति सुखसाहचर्यात् चित्तस्यैवान्तःकरणस्य धर्मो नात्मनः आत्मधर्मत्वे सङ्गानुपपत्तेर्बन्धानुपपत्तेश्च सुख इव ज्ञानेऽपि सङ्गो मन्तव्यः अनघ! अव्यसन! ॥ ६ ॥

भा॰ टी॰। लिप्यते न स पापेन त्विति निरुक्तमर्थं निबध्नातीति बन्धनमिति यद्वद्गृह्यते तन्न। इत्यकारानुबन्धेन क्रियापद व्याचष्टे। आभिरस्य क्षेत्रज्ञस्य परिच्छिन्नत्वाभिमानमाह परिच्छिन्नमिति। किंलक्षणा गुणाः केन बध्नन्तीत्यपेक्षायामाह तत्रेति। निर्धारणार्थेनया सप्तमी व्याचष्टे तत्र सत्त्वादीनामिति। पुनरुक्तेत्यनुवादमात्रं निर्मलत्वं स्वच्छत्वमावरणाभावत्वमत्त्वं तस्मात् प्रकाशकत्वं नन्यादिवयुक्तं निरुपद्रवमिति निर्मलं सत् सुखस्याभिव्यञ्जकमित्यर्थः। केन द्वारेण तद् त्वां निबध्नातीति पृच्छति कथमिति। इत्यपेक्षायां बध्नातीत्युत्तरत्वादेव विवृणोति सुखसङ्गेनेत्यादिना। सुखसङ्गभिव्यञ्जकत्वात्तस्य विषयभूतं सुखमुच्यते। श्लेषादिवैलक्षण्यमिव दर्शयति इतीति। किमिति वदतीति विशेषणं सुखस्य वस्तुत्वसम्भावादित्य आशङ्क्याह वैषेति। न स्वच्छत्वमात्रेऽनिनिवेशानसक्तोऽर्थस्तत्रेच्छादेरात्मधर्मत्वात् किञ्चिद्रूपेत्याशङ्क्य मनोधर्मत्वादिच्छादेर्नात्मधर्मतेत्याह नेति। इच्छादेरनात्मधर्मत्वे किं प्रमाणमित्याशङ्क्याह इच्छादि चेति। तस्य त्वधर्मत्वे सम्बन्धं फलितमाह अत इति। संजयतीव यथात्व भीति शेषः। इवकारप्रयोगे हेतुमाह अविद्ययेति। तस्य वस्तुतो नास्ति सम्बन्धस्तथापि सम्बन्धान्तराभावादस्वातन्त्र्याच्च आत्मधर्मत्वमापाद्य इदमाचष्टे सक्तीति। ज्ञानिमदन्तःकरणस्य विषयत्वदात्मनः साधकत्वेन तद्विषयत्वेऽपि तदविवेकरूपाविद्येति तत्स्वरूपमाह विषयेति। यथोक्ताविद्यामात्राश्रयमिदं तत्स्वरूपमे तत्र च श्लिष्टमात्मनमित्याह अस्येति। तदेव स्फुटयति इत्यर्थः निवेति। प्रकारान्तरेण स त्वं निबध्नातीत्याह तथेति। ज्ञायतेऽनेनेति ज्ञानं त्वपरिणामो ज्ञानं तेन ज्ञानवानहमिति विपरीताभिमानेन सत्त्वकार्यं निबध्नातीत्याह ज्ञानमित्यादिना। विपक्षे दोषमाह आत्मेति। स्वाभाविकत्वेन प्राप्तत्वा-

अत एव अतः संयोगात्तद्द्वारा बध्नाति च तद्विरहस्य सुखपदस्य सत्त्वमित्यर्थः। ज्ञानैश्वर्यादावपि च सत्त्वधर्मे सङ्गस्य पूर्ववदाविद्यकत्वं सूचयति सुख इवेति। पापादिदोषहीनस्यैवात्र शास्त्रेऽधिकार इति द्योतयति अनघेति ॥ ६ ॥

व्या° टी°। तत्र सत्त्वस्य लक्षणं बन्धकत्वप्रकारश्चाह तत्रेति। तत्र तेषां गुणानां मध्ये सत्त्वं निर्मलत्वात् स्वच्छत्वात् स्फटिकमणिरिव प्रकाशकं भास्वरं अनामयञ्च निरुपद्रवं शान्तमित्यर्थः। अतः शान्तत्वात् स्वकार्येण सुखेन यः सङ्गस्तेन बध्नाति प्रकाशकत्वाच्च स्वकार्येण ज्ञानेन यः सङ्गस्तेन च बध्नाति हे अनघ! अपाप! अहं सुखी ज्ञानी चेति मनोधर्मो स्व आत्मनि संयोजयतीत्यर्थः ॥ ६ ॥

# रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम्।
# तन्निबध्नाति कौन्तेय! कर्मसङ्गेन देहिनम् ॥७॥

रजो रागात्मकं इति रजो रागात्मकं रञ्जनाद्रागो गैरिकादिवद्रागात्मकं विद्धि जानीहि तृष्णासङ्गसमुद्भवं तृष्णा अप्राप्ताभिलाषः आसङ्गः प्राप्ते विषये मनसः प्रीतिलक्षणं संश्लेषः तृष्णासङ्गसमुद्भवं तृष्णासङ्गयोः समुद्भवं तृष्णासङ्गसमुद्भवं तन्निबध्नाति तद्रजः कौन्तेय! कर्मसङ्गेन दृष्टादृष्टार्थेषु कर्मसु सञ्जनं तत्परता कर्मसङ्गस्तेन निबध्नाति रजो देहिनम् ॥ ७ ॥

व्या° टी°। रजस्तु किंलक्षणं वा पुरुषं निबध्नातीत्यपेक्षायामाह रज इति। रज्यते संश्लिष्यतेऽनेन पुरुषो दृश्यैरिति रागोऽभिलाषात्मा-ऽस्येति रागात्मकं रजो जानीहीत्याह रञ्जनादिति। समुद्भवत्यस्मादिति समुद्भवः तृष्णा चासङ्गश्च तृष्णासङ्गौ तयोः समुद्भवः तदिति विग्रहं गृहीत्वा कार्यद्वारा रजो विशिनष्टि तृष्णासङ्गयोरर्थभेदमाह तृष्णेत्यादिना। रजसो बन्धनप्रकारं निबध्नात्यस्य प्रकारमाह तद्रज इति। कर्मसङ्गं विभजते दृष्टेति। अकर्तारमेव पुरुषं करोमि इत्यभिमानेन प्रवर्तयती-त्यर्थः ॥ ७ ॥

स्वा० टी०। रजसो लक्षणं बन्धकत्वञ्चाह रज इति। रजः-संज्ञकं गुणं रागात्मकमनुरञ्जनरूपं विद्धि अतएव तृष्णासङ्गसमुद्भवं तृष्णा अप्राप्ताभिलाषः सङ्गः प्राप्तेऽर्थे प्रीतिविशेषेणासक्तिस्तयोस्तृष्णा-सङ्गयोः समुद्भवो यस्मात् तद्रजो देहिनं दृष्टादृष्टार्थेषु कर्मसु सङ्गेना-सक्त्या नितरां बध्नाति तृष्णासङ्गाभ्यां हि कर्मस्वासक्तिर्भवति इत्यर्थः ॥७॥

**तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम्।**
**प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत !॥८॥**

तमस्त्विति। तमस्तृतीयो गुणोऽज्ञानजमज्ञानाज्जात-मज्ञानजं विद्धि मोहनं मोहकरमविवेककरं सर्वदेहिनां सर्वेषां देहवतां प्रमादालस्यनिद्राभिः प्रमादश्चालस्यञ्च निद्रा च प्रमादालस्यनिद्रास्ताभिस्तमो निबध्नाति भारत !॥ ८ ॥

आ० टी०। तमस्तर्हि किंलक्षणं कथं वा पुरुषं निबध्नाति तत्राह तमस्त्विति। गुणानां प्रकृतिसम्भवत्वाविशेषेऽपि तमसोऽज्ञान-जत्वविशेषणं तद्विपरीतस्वभावानापत्तेरिति मत्वाह अज्ञानादिति। मुह्यति हिताहितेन विविच्यत्यनेन इति मोहनं विवेकप्रतिबन्धकमिति। कार्य्य-द्वारा तमो निर्दिशति मोहनमित्यादिना। लक्षणमुक्त्वा तमसो बन्धन-करत्वं दर्शयति प्रमादेति। कार्य्यान्तरासक्ततया चिकीर्षितस्य कर्त्तव्य-स्याकरणं प्रमादः निरीहतयोत्साहप्रतिबन्धस्त्वालस्यं स्वापो निद्रा ताभि-रात्मानमविकारमेव तमोऽपि विकारयतीत्यर्थः॥ ८ ॥

स्वा० टी०। तमसो लक्षणं बन्धकत्वञ्चाह तम इति। तमस्त्व-ज्ञानाज्जातं आवरणशक्तिप्रधानात् प्रकृत्यंशादुद्भूतं विद्धीत्यर्थः अतः सर्वेषां देहिनां मोहनं भ्रान्तिजनकं अतएव प्रमादेनालस्येन निद्रया च तत्तमो देहिनं निबध्नाति। अत्र प्रमादोऽनवधानं आलस्यमनुद्यमः निद्रा चित्तस्यावसादः लयः॥ ८ ॥

**सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत!।**
**ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत॥ ९॥**

पुनर्गुणानां व्यापारः संक्षेपत उच्यते सत्त्वमिति। सत्त्व सुखे सञ्जयति संश्लेषयति रजः कर्मणि हे भारत! सञ्जयतीति वर्त्तते ज्ञानं सत्त्वकृतं विवेकमावृत्याच्छाद्य तु तमः स्वेनावरणात्मना प्रमादे सञ्जयत्युत प्रमादो नाम प्राप्तकर्त्तव्याकरणम्॥ ९॥

व्या० टी०। उक्तानां मध्ये कस्मिन् कार्य्ये कस्य गुणस्योत्कर्षस्तत्राह पुनरिति। सुखसाध्ये विषये समुत्कृष्यते सत्त्वमित्याह सत्त्वमिति। सञ्जयतीत्यस्यार्थमाह संश्लेषयतीति। कर्मणि साध्ये रजः समुत्कृष्यत इत्याह रज इति। प्रमादे प्राधान्यन्तमसो दर्शयति ज्ञानमिति॥ ९॥

स्वा० टी०। सत्त्वादीनामेव स्वस्वकार्य्यकरणे सामर्थ्यातिशयमाह सत्त्वमिति। सतत्वं सुखे सञ्जयति संश्लेषयति दुःखशोकादिकारणे सत्यपि सुखाभिमुखमेव देहिनं करोतीत्यर्थः एवं दुःखादिकारणे सत्यपि रजः कर्मण्येव सञ्जयति, तमस्तु महत्सङ्गेनोत्पद्यमानमपि ज्ञान-माहृत्याच्छाद्य प्रमादे सञ्जयति महद्भिरुपदिश्यमानस्यार्थस्यानवधाने योजयति उत अपि आलस्यादावपि संयोजयतीत्यर्थः॥ ९॥

**रजस्तमश्चाभिभूय सत्त्वं भवति भारत!।**
**रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा॥१०॥**

उक्तं कार्य्यं कदा कुर्वन्ति गुणा इत्युच्यते रज इति। रजस्तमश्चोभावप्यभिभूय सत्त्वं भवत्युद्भवति वर्द्धते यदा तदा लब्धात्मकं सत्त्वं स्वकार्य्यं ज्ञानसुखाद्यारभते हे भारत! तत् तथा रजोगुणः सत्त्वं तमश्चैवोभावप्यभि-भूय वर्द्धते यदा तदा कर्मतृष्णादि स्वकार्य्यमारभते तम

आख्यो गुणः सत्त्वं रजस्तमोभावप्यभिभूय तथैव वर्द्धते यदा तदा ज्ञानावरणादि स्वकार्य्यमारभते ॥ १० ॥

इतरेतराविरोधेन वा सत्त्वादयो गुणा युगपदुत्कृष्यन्ते विरोधेन वा क्रमेण वेति सन्देहात् पृच्छति उक्तमिति। सत्त्वोत्कर्षार्थिनामितराभिभवार्थं क्रमपक्षमाश्रित्योत्तरमाह उच्यते इति। सत्त्वाभिवृद्धिमेव विवृणोति तदेति। रजस्तमसोस्तिरोधानदशायामिति यावत्। रजसो वृद्धिप्रकारन्तत्कार्य्यञ्च कथयति तथेति। तमसोऽपि वृद्धिन्तत्कार्य्यञ्च निर्दिशति तम इति ॥ १० ॥

स्वा० टी०। तत्र हेतुमाह रज इति। रजस्तमश्चेति गुणद्वयमभिभूय तिरस्कृत्य सत्त्वं भवति अदृष्टवशादुद्भवति अतः स्वकार्य्ये सुखादौ सञ्जयतीत्यर्थः। एवं रजोऽपि सत्त्वं तमश्चेति गुणद्वयमभिभूयोद्भवति अतः स्वकार्य्ये तृष्णासङ्गादौ सञ्जयति। एवं तमोऽपि सत्त्वं रजस्तोभावपि गुणावभिभूयोद्भवति अतः स्वकार्य्ये प्रमादालस्यादौ सञ्जयतीत्यर्थः ॥ १० ॥

सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते।
ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥११॥

यदा यो गुणः समुद्भूतो भवति तदा तस्य किं लिङ्गं उच्यते सर्वद्वारेषु इति। सर्वद्वारेष्वात्मन उपलब्धिद्वाराणि श्रोत्रादीनि सर्वाणि करणानि तेषु द्वारेषु अन्तःकरणस्य बुद्धेर्वृत्तिः प्रकाशो देहेऽस्मिन् प्रकाशशब्दवाच्यः सर्वद्वारेषु उपजायते तदेव ज्ञानं यदैवं प्रकाशो ज्ञानाख्य उपजायते तदा ज्ञानप्रकाशेन लिङ्गेन विद्याद्विवृद्धं उद्भूतं सत्त्वमित्युतापि ॥ ११ ॥

स्वा० टी०। उत्तरश्लोकत्रयस्याकाङ्क्षां दर्शयति यदेति। सत्त्वोद्भ-

वत्त्विद्दर्शनार्थमनन्तरं श्लोकत्रयात्पयति उच्यत इति। सर्वद्वारेष्वित्यादि सप्तमी निमित्ते नेतव्या, उतशब्दोऽपिशब्दपर्य्यायोऽप्यतिशयार्थः॥ ११॥

स्वा॰ टी॰। इदानीं सत्त्वादीनां विवृद्धानां लिङ्गान्याह सर्व-द्वारेष्विति त्रिभिः। अस्मिन्नात्मनो भोगायतने देहे सर्वेष्वपि द्वारेषु श्रोत्रादिषु यदा शब्दादिज्ञानात्मकः प्रकाश उपजायते उत्पद्यते तदानेन प्रकाशलिङ्गेन सत्त्वं विवृद्धं विद्यात् जानीयात्, उतशब्दात् सुखादि-लिङ्गेनापि जानीयादित्युक्तम्॥ ११॥

**लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा।**
**रजस्येतानि जायन्ते विवृद्धे भरतर्षभ!॥१२॥**

रजस उद्भूतस्येदं चिह्नं, लोभ इति। लोभः पर-द्रव्यादिष्विच्छा प्रवृत्तिः प्रवर्त्तनं सामान्यचेष्टा आरम्भः उद्यमः कस्य कर्मणामशमः अनुपशमः हर्षरागादिप्रवृत्तिः स्पृहा सर्वसामान्यवस्तुविषया तृष्णा रजसि गुणे विवृद्धे एतानि लिङ्गानि जायन्ते हे भरतर्षभ!॥ १२॥

आ॰ टी॰। अतिशयेनोद्भूतस्य रजसो लिङ्गमाह रजस इति। उपक्रमपर्य्यायस्यारम्भस्य विषयं पृच्छति कस्येति। काम्यानि निषिद्धानि च लौकिकानि कर्माणि विषयत्वेन निर्दिशति कर्मणामिति। अनुपशमो बाह्यान्तःकरणानामिति शेषः। लोभाद्युपलम्भाद्रजोवृद्धिर्बोद्धव्येति भावः॥ १२॥

स्वा॰ टी॰। किञ्च लोभ इति। लोभो धनाद्यागमे बहुधा जाय-मानेऽपि यः पुनः पुनर्वर्द्धमानोऽभिलाषः, प्रवृत्तिर्नित्यं कुर्वद्रूपता, कर्म-णामारम्भो महाल्लयादिनिर्म्माणोद्यमः, अशमः इदं कृत्वेदं करिष्यामी-त्यादिसङ्कल्पविकल्पानुपरमः, स्पृहा उच्चावचेषु दृष्टमात्रेषु वस्तुषु इतस्ततो जिघृक्षा, रजसि विवृद्धे सति एतानि लिङ्गानि जायन्ते एभिर्लिङ्गै रजोगुणस्य विवृद्धिं जानीयादित्यर्थः॥ १२॥

**अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।**
**तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ! ॥१३॥**

अप्रकाश इति । अप्रकाशोऽविवेकोऽत्यन्तमप्रवृत्तिश्च प्रवृत्त्यभावः तत्कार्य्यं प्रमादो मोह एव च अविवेको मूढ़त्वमित्यर्थः तमसि गुणे विवृद्धे एतानि लिङ्गानि जायन्ते हे कुरुनन्दन ! ॥ १३ ॥

श्रा० टी० । उद्भूतस्य तमसो लिङ्गमाह अप्रकाश इति । सर्वथैव ज्ञानकर्मणोरभावो विशेषणाभ्यामुक्तस्तत्कार्य्यमिति तच्छब्दो दर्शिताविवेकार्थः, प्रमादो व्याख्यातः, मोहो वेदितव्यस्यान्यथावेदनम् । तस्यैव मोहान्तरत्वमाह अविवेक इति । अविवेकातिशयादिना प्रवृद्धन्तमो ज्ञेयमिति भावः ॥ १३ ॥

स्वा० टी० । किञ्च अप्रकाश इति । अप्रकाशो विवेकभ्रंशः, अप्रवृत्तिरनुद्यमः, प्रमादः कर्त्तव्यार्थानुसन्धानराहित्यं, मोहो मिथ्याभिनिवेशः, तमसि प्रवृद्धे सत्येतानि लिङ्गानि जायन्ते एतैस्तमसो वृद्धिं जानीयादित्यर्थः ॥ १३ ॥

**यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।**
**तदोत्तमविदां लोकानमलान् प्रतिपद्यते ॥१४॥**

मरणद्वारेणापि यत् फलं प्राप्यते तदपि सङ्गरागहेतुकं सर्वेषामेवेति दर्शयन्नाह यदेति । यदा सत्त्वे प्रवृद्धे उद्भूते तु प्रलयं मरणं याति प्रतिपद्यते देहभृदात्मा तदा उत्तमविदाम् महदादितत्त्वविदामित्येतल्लोकानमलान् मलरहितान् प्रतिपद्यते प्राप्नोतीत्येतत् ॥ १४ ॥

श्रा० टी० । सात्त्विकादीनां भावानां पारलौकिकं फलविभागमुदाहरति मरणेति । सङ्गः सक्तो रागः तृष्णा तद्वलादनुष्ठानद्वारा

लभ्यमानमित्यर्थः। गौणं सत्त्वादिगुणप्रयुक्तमिति यावत्। तत्र सत्त्व-गुणवृद्धिकृतफलविशेषमाह यदेति। मलरहितान् रजस्तमसोरन्यतरस्योद्भवो मलं तेन रहितानागमविदुषान् ब्रह्मलोकादीनित्यर्थः॥ १४॥

स्वा० टी०। मरणसमये विवृद्धानां सत्त्वादीनां फलविशेषमाह यदेति द्वाभ्याम्। सत्त्वे विवृद्धे सति यदा जीवो मृत्युं प्राप्नोति तदा उत्तमान् हिरण्यगर्भादीन् विदन्त्युपासत इत्युत्तमविदस्तेषां ये अमलाः प्रकाशमया लोकाः सुखोपभोगस्थानविशेषास्तान् प्रतिपद्यते प्राप्नोति॥ १४॥

**रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते।**
**तथा प्रलीनस्तमसि मूढयोनिषु जायते॥१५॥**

रजसि गुणे विवृद्धे प्रलयं मरणं गत्वा प्राप्य कर्मसङ्गिषु सकर्मासक्तियुक्तेषु मनुष्येषु जायते तथा तद्वदेव प्रलीनो मृतस्तमसि विवृद्धे मूढयोनिषु पश्वादियोनिषु जायते॥ १५॥

आ० टी०। रजःसमुद्रेके मृतस्य फलविशेषं दर्शयति रजसीति। जायते शरीरं गृह्णातीत्यर्थः। यथा सत्त्वे रजसि च प्रवृद्धे मृतो ब्रह्मलोकादिषु मनुष्यलोके च जायते देवादिषु मनुष्येषु च जायते तथैवेत्याह तद्वदिति॥ १५॥

स्वा० टी०। किञ्च रजसीति। रजसि विवृद्धे सति मृत्युं प्राप्य कर्मसक्तेषु मनुष्येषु जायते, तथा तमसि विवृद्धे सति प्रलीनो मृतो मूढयोनिषु पश्वादिषु जायते॥ १५॥

**कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम्।**
**रजसस्तु फलं दुःखमज्ञानं तमसः फलम्॥१६॥**

अतीतश्लोकार्थस्यैव संक्षेप उच्यते कर्मणः सुकृतस्य सात्त्विकस्येत्यर्थः आहुः शिष्टाः सात्त्विकमेव निर्मलं फल-

मिति रजसस्तु फलं दुःखं राजसस्य कर्मण इत्यर्थः कर्माधिकारात् फलमपि दुःखमेव कारणानुरूप्याद्राजसमेव तथा ज्ञानन्तममस्तामसस्य कर्मणोऽधर्मस्य पूर्ववत्॥ १६॥

आ॰ टी॰। भावानां फलमुक्त्वा सात्त्विकादीनां कर्मणां फलमाह कर्मणेति। सुकृतस्य शोभनस्य कृतस्य पुण्यस्येत्यर्थः, सात्त्विकस्याशुद्धिरहितस्येति यावत्, सात्त्विकं सत्त्वेन निर्वृत्तं निर्मलं रजस्तमःसमुद्भवान्मलान्निष्क्रान्तम्। रजःशब्दस्य राजसे कर्मणि कुतो वृत्तिस्तत्राह कर्मेति। दुःखमेव दुःखबहुलं सुखमेवेत्यर्थः। कथमित्थं व्याख्यायते तत्राह कारणेति। पापमिश्रस्य पुण्यस्य रजोनिमित्तस्य कारणत्वात् तदनुरोधात् फलमपि रजोनिमित्तं यथोक्तं युक्तमित्यर्थः। अज्ञानमविवेकप्रायं दुःखं तामसाधर्मफलमित्याह तथेति॥ १६॥

स्वा॰ टी॰। इदानीं सत्त्वादीनां स्वानुरूपकर्मद्वारेण विचित्रफलहेतुत्वमाह कर्मण इति। सुकृतस्य सात्त्विकस्य कर्मणः सात्त्विकं सत्त्वप्रधानं निर्मलं प्रकाशबहुलं सुखं फलमाहुः कपिलादयः, रजस इति राजसस्य कर्मण इत्यर्थः, कर्मफलकथनस्य प्रकृतत्वात् तस्य दुःखं फलमाहुः तमस इति तामसस्य कर्मण इत्यर्थः, तस्याज्ञानं मूढत्वं फलमाहुः, सात्त्विकादिकर्मलक्षणञ्च नियतं सङ्गरहितमित्यादिनाऽष्टादशेऽध्याये वक्ष्यति॥ १६॥

सत्त्वात् सञ्जायते ज्ञानं रजसो लोभ एव च।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च॥१७॥

किञ्च गुणेभ्यो भवति सत्त्वादिति। सत्त्वात् लब्धात्मकात् सञ्जायते समुत्पद्यते ज्ञानं रजसो लोभ एव च प्रमादमोहौ चोभौ तमसो भवतोऽज्ञानमेव भवति॥ १७॥

आ॰ टी॰। विहितप्रतिषिद्धज्ञानकर्माणि सत्त्वादीनां लक्षणानि संक्षिप्य दर्शयति किञ्चेति। ज्ञानं सर्वकरणद्वारकं अज्ञानं विवेकाभावः॥१७

स्वा॰ टी॰। तत्रैव हेतुमाह सत्त्वादिति। सत्त्वाज्ज्ञानं संजायते अतः सात्त्विकस्य कर्मणः प्रकाशबहुलं सुखं फलं भवति, रजसो लोभो जायते तस्य च दुःखहेतुत्वात्तत्पूर्वकस्य कर्मणो दुःखं फलं भवति, तमसस्तु प्रमादमोहाज्ञानानि भवन्ति अतस्तामसस्य कर्मणोऽज्ञानमात्रं प्रायः फलं भवतीति युक्तमेवेत्यर्थः ॥ १७ ॥

**ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः।**
**जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥१८॥**

किञ्च ऊर्द्ध्वमिति। ऊर्द्ध्वं गच्छन्ति देवलोकादिषु उत्पद्यन्ते सत्त्वस्थाः सत्त्वगुणवृत्तस्था मध्ये तिष्ठन्ति मनुष्येषु उत्पद्यन्ते राजसाः जघन्यगुणवृत्तस्था जघन्यश्चासौ गुणश्च जघन्यगुणस्तमस्तस्य वृत्तं निद्रालस्यादि तस्मिन् स्थिता जघन्यगुणवृत्तस्था मूढ़ा अधो गच्छन्ति पश्वादिषु उत्पद्यन्ते तामसाः ॥ १८ ॥

आ॰ टी॰। सात्त्विकादिज्ञानकर्मफलान्युक्त्वानुक्तसंग्रहार्थं सामान्येनोपसंहरति किञ्चेति। वक्ष्यमाणफलद्वारापि सत्त्वादिषु ज्ञानमित्यर्थः, सत्त्वगुणस्य वृत्तं शोभनं ज्ञानं कर्म वा तत्र तिष्ठन्तीति, तथा राजसा रजोगुणनिमित्ते ज्ञाने कर्मणि वा निरताः ॥ १८ ॥

स्वा॰ टी॰। इदानीं सत्त्वादिवृत्तिशीलानां फलभेदमाह ऊर्द्ध्वमिति। सत्त्वस्थाः सत्त्ववृत्तिप्रधाना ऊर्द्ध्वं गच्छन्ति सत्त्वोत्कर्षतारतम्यादुत्तरोत्तरशतगुणानन्दान् मनुष्यगन्धर्वपितृदेवादिलोकान् सत्यलोकपर्य्यन्तान् प्राप्नुवन्तीत्यर्थः, राजसास्तु तृष्णाद्याकुला मध्ये तिष्ठन्ति मनुष्यलोक एवोत्पद्यन्ते, जघन्यो निकृष्टस्तमोगुणस्तस्य वृत्तिः प्रमादमोहादिः तत्र स्थिता अधो गच्छन्ति तमसो वृत्तितारतम्यात्तामिस्रादिषु निरयेषूत्पद्यन्ते ॥ १८ ॥

**नान्यं गुणेभ्यः कर्त्तारं यदा द्रष्टानुपश्यति।**

**गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥१९॥**

पुरुषस्य प्रकृतिस्थत्वरूपेण मिथ्याज्ञानेन युक्तस्य भोग्येषु गुणेषु सुखदुःखमोहात्मकेषु सुखी दुःखी मूढोऽहमस्मीत्येवंरूपो यः सङ्गस्तत्कारणं पुरुषस्य सदसद्योनिजन्मप्राप्तिलक्षणस्य संसारस्येति समासेन पूर्वाध्याये यदुक्तं तदिह सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवा इत्यत आरभ्य गुणस्वरूपं गुणवृत्तत्वं स्ववृत्तेन च गुणानां बन्धकत्वं गुणवृत्तनिबद्धस्य च पुरुषस्य या गतिरित्येतत् सर्वं मिथ्याज्ञानमज्ञानमूलं च बन्धकारणं विस्तरेणोक्ताधुना सम्यक् दर्शनात् मोक्षो वक्तव्य इत्याह भगवान् नान्यमिति। नान्यं कार्य्यकारणविषयाकारपरिणतेभ्यो गुणेभ्यः कर्त्तारमन्यं यदा द्रष्टा विद्वान् सन्नानुपश्यति गुणा एव सर्वावस्थाः सर्वकर्मणां कर्त्तार इत्येवं पश्यति गुणेभ्यश्च परं गुणव्यापारसाक्षीभूतञ्चेति मद्भावं मम भावं वासुदेवत्वं वासुदेवः सर्वमित्येवं पश्यन् स द्रष्टाधिगच्छति ॥१९॥

व्या॰ टी॰। कस्मिन् गुणे कथमित्यादि प्रश्नान् प्रत्याख्याय गुणेभ्यो मोक्षणं कथमिति प्रत्याख्यानार्थं वृत्तानुवादपूर्वकं मिथ्याज्ञाननिवर्त्तकं सम्यग्ज्ञानं प्रस्तौति पुरुषस्येत्यादिना। पुरुषस्य या गतिः सा चेति शेषः, मोक्षो गुणेभ्यो विश्लेषपूर्वको ब्रह्मभावः। सम्यग्ज्ञानोक्तिपरं श्लोकं व्याख्यातुं प्रतीकमादत्ते नान्यमिति। सत्त्वादिकार्य्यविषयस्य गुणशब्दस्य विवक्षितमर्थमाह कार्य्येति। विद्यानन्तर्य्यमनुशब्दार्थः। अक्षरार्थमुक्त्वा पूर्वोक्तं स्वार्थिकमर्थमाह गुणा एवेति। सर्वावस्थास्तत्कार्य्यकरणाकारपरिणता इति यावत्, सर्वकर्मणां कायिकवाचिकमानसानां विहितप्रतिषिद्धानामित्यर्थः, परं व्यतिरिक्तम्। व्यतिरेकमेव स्फोरयति

गुणेति । निर्गुणं ब्रह्मात्मानमित्यर्थः, मद्भावं ब्रह्मतामसौ प्राप्नोति ब्रह्मभावोऽस्याभिव्यज्यत इत्यर्थः ॥ १९ ॥

श्री० टी० । तदेवं प्रकृतिगुणसङ्गकृतं संसारप्रपञ्चमुक्त्वा इदानीं तद्व्यतिरेकेण मोक्षं दर्शयति नान्यमिति । यदा तु द्रष्टा विवेकी भूत्वा बुद्ध्याद्याकारपरिणतेभ्यो गुणेभ्योऽन्यं कर्त्तारं नानुपश्यति अपि तु गुणा एव कर्माणि कुर्वन्तीति पश्यति गुणेभ्यश्च परं व्यतिरिक्तं तत्साक्षिणमात्मानं वेत्ति स तु मद्भावं ब्रह्मत्वमधिगच्छति प्राप्नोति ॥ १९ ॥

**गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान् ।**
**जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥२०॥**

कथमधिगच्छतीत्युच्यते गुणेति । गुणानेतान् यथोक्तानतीत्य जीवन्नेवातिक्रम्य मायोपाधिभूतांस्त्रीन् देही देहसमुद्भवान् देहोत्पत्तिबीजभूतान् जन्ममृत्युजरादुःखैः जन्म च मृत्युश्च जरा च दुःखानि च तैर्जीवन्नेव मुक्तः सन् विद्वानमृतमश्नुते एवं मद्भावमधिगच्छतीत्यर्थः ॥ २० ॥

आ० टी० । अनर्थव्रातरूपमपोह्य विद्वान् ब्रह्मत्व प्राप्नोत्येतत्प्रश्नद्वारा विवृणोति कथमित्यादिना । यथोक्तानित्येतदेव व्याचष्टे मायेति । मायैवोपाधिस्तद्भूतान् तदात्मनः सत्त्वादीननर्थरूपानित्यर्थः । समुद्भवन्तीति समुद्भवाः देहस्य समुद्भवा देहसमुद्भवाः तानिति व्युत्पत्तिं गृहीत्वा व्याचष्टे देहोत्पत्तीति । यो विद्वान् अविद्यामयान् गुणान् जीवन्नेवातिक्रम्य स्थितस्तमेव विशिनष्टि जन्मेति । पुरस्ताद्विस्तरेणोक्तस्य प्रकरणादत्र संक्षिप्तस्य सम्यक्ज्ञानस्य फलमुपसंहरति एवमिति ॥ २० ॥

श्री० टी० । ततश्च गुणकृतसर्वानर्थनिवृत्त्या कृतार्थो भवतीत्याह गुणानिति । देहाद्याकारः समुद्भवः परिणामो येषां ते देहसमुद्भवास्तानेतान् त्रीनपि गुणानतीत्यातिक्रम्य तत्कृतैर्जन्मादिभिर्विमुक्तः सन्नमृतं परमानन्दं प्राप्नोति ॥ २० ॥

अर्जुन उवाच ।

**कैर्लिङ्गैस्त्रीन् गुणानेतानतीतो भवति प्रभो ! ।**
**किमाचारः कथं चैतांस्त्रीन् गुणानतिवर्त्तते ॥२१**

जीवन्नेव गुणानतीत्यामृतमश्नुत इति प्रश्नबीजं प्रतिलभ्य अर्जुन उवाच कैरिति । कैर्लिङ्गैश्चिह्नैस्त्रीनेतान् व्याख्यातान् गुणानतीतोऽतिक्रान्तो भवति प्रभो ! किमाचारः कोऽस्याचार इति किमाचारः कथं केन च प्रकारेण एतांस्त्रीन् गुणान् अतिवर्त्तते ॥ २१ ॥

आ० टी० । सम्यग्धीफलं गुणातिक्रममयपूर्वकममृतत्वमुक्तं श्रुत्वा मुक्तस्य लक्षणं वक्तव्यमिति प्रकृतं विवक्षितत्वात् प्रश्नमुत्थापयति जीवन्नेवेति । ये व्याख्याताः सत्त्वाद्यो गुणाः तत्परिणामभूतानध्यासानतिक्रान्तः सन् कैर्लिङ्गैर्ज्ञातो भवति इति तानि वक्तव्यानि विद्वदर्थं पूर्वमनुष्ठेयानि पश्चाद्यत्नलभ्यानि लिङ्गानि, कानि तानीति पृच्छति कैरिति । यथेष्टचेष्टाव्यावृत्त्यर्थं प्रश्नान्तरं किमाचार इति । त्रानस्य गुणात्ययोपायस्योक्तत्वादुपायप्रकारजिज्ञासया प्रश्नान्तरं कथमिति ॥ २१ ॥

स्वा० टी० । गुणानेतानतीत्यामृतमश्नुत इत्येतच्छ्रुत्वा गुणातीतस्य लक्षणं तदाचारञ्च गुणात्ययोपायञ्च सम्यग्बुभुत्सुरर्जुन उवाच कैरिति । हे प्रभो ! कैर्लिङ्गैः कीदृशैरात्मचिह्नैर्गुणातीतो देही भवतीति लक्षणः प्रश्नः, क आचारोऽस्येति किमाचारः कथं वर्त्तत इत्यर्थः, कथञ्च केनोपायेनैतांस्त्रीनपि गुणानतीत्य वर्त्तते तत् कथयेत्यर्थः ॥ २१ ॥

श्रीभगवानुवाच ।

**प्रकाशञ्च प्रवृत्तिञ्च मोहमेव च पाण्डव ! ।**
**न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति ॥२२॥**

गुणातीतस्य लक्षणं गुणातीतत्वोपायश्चार्जुनेन पृष्टोऽस्मिन् श्लोके प्रश्नद्वयार्थं प्रतिवचनं भगवान् यत्तावत् कैर्लिङ्गैर्युक्तो गुणातीतो भवति तच्छृणु प्रकाशमिति। प्रकाशञ्च सत्त्वकार्य्यं प्रवृत्तिञ्च रजःकार्यञ्च मोहमेव च तमःकार्यञ्चमित्येतानि न द्वेष्टि सम्प्रवृत्तानि सम्यग्विषयभावेनोद्भूतानि मम तामसः प्रत्ययो जातस्तेनाहं मूढ़स्तथा राजसी प्रवृत्तिर्ममोत्पन्ना दुःखात्मिका तेनाहं रजसा प्रवर्त्तितः प्रचलितः स्वरूपात् कष्टं मम वर्त्तते योऽयं मत्स्वरूपावस्थानात् भ्रंशस्तथा सात्त्विको गुणः प्रकाशात्मा मां विवेकित्वमापादयन् सुखेन च सञ्जनयन् मां बध्नातीति तानि द्वेष्टाऽसम्यग्दर्शित्वेन तदेवं गुणातीतो न द्वेष्टि सम्प्रवृत्तानि यथा च सात्त्विकादिपुरुषः सात्त्विकादिकार्य्याण्यात्मानं प्रति प्रकाश्य निवृत्तानि काङ्क्षति न तथा गुणातीतो निवृत्तानि काङ्क्षतीत्यर्थः॥ २२॥

व्या० टी०। प्रश्नस्वरूपमनूद्य तदुत्तरं दर्शयति गुणातीतस्येति। पृष्टो भगवानिति सम्बन्धः, किं वृत्तस्य त्रिधाप्रयोगदर्शनात् प्रश्नद्वयार्थमित्युपलक्षणं प्रश्नत्रयार्थमिति द्रष्टव्यम्। उत्तरमवतार्य्यानन्तरश्लोकतात्पर्य्यमाह यत्तावदिति। तानि सम्यग्दर्शी न द्वेष्टि इत्युक्तमेव स्पष्टयितुं निषेध्यमसम्यग्दर्शिनो द्वेषं तेषु प्रकटयति ममेत्यादिना। सम्यग्दर्शिनः सम्प्रवृत्तेषु प्रकाशादिषु द्वेषाभावमुपसंहरति तदेवमिति। न निवृत्तानि इत्यादि व्याचष्टे यथा चेति। तेषामनात्मीयत्वं सम्यक् पश्यन्नात्मानुकूलप्रतिकूलता आरोपणेन नोद्विजते तेभ्यश्च न स्पृहतीत्यर्थः॥ २२॥

स्वा० टी०। स्थितप्रज्ञस्य का भाषा इत्यादिना द्वितीयाध्याये पृष्टमेव दत्तोत्तरमपि पुनर्विशेषबुभुत्सया पृच्छतीति ज्ञात्वा प्रकारान्तरेण तस्य लक्षणादिकं श्रीभगवानुवाच प्रकाशञ्चेत्यादि पञ्चभिस्तत्रैकेन लक्षणमाह

प्रकाशमिति। प्रकाशञ्च सर्वद्वारेषु देहेऽस्मिन्निति पूर्वोक्तं सत्त्वकार्य्यं प्रवृत्तिञ्च रजःकार्य्यं मोहञ्च तमःकार्य्यं, उपलक्षणार्थमेतत् सत्त्वादीनां सर्वाख्यपि कार्य्याणि यथायथं संप्रवृत्तानि स्वतः प्रवृत्तानि सन्ति दुःखबुद्ध्या यो न द्वेष्टि निवृत्तानि च सन्ति सुखबुद्ध्या यो न काङ्क्षति गुणातीतः स उच्यत इति चतुर्थेनान्वयः॥ २२॥

# उदासीनवदासीनो गुणैर्यो न विचाल्यते।
# गुणा वर्त्तन्त इत्येवं योऽवतिष्ठति नेङ्गते॥२३॥

एतन्न परप्रत्यक्षं लिङ्गं किं तर्हि स्वात्मप्रत्यक्षत्वादात्मविषयमेव एतत् लक्षणं न हि स्वात्मविषयं द्वेषं आकाङ्क्षां चापरः पश्यति। अथेदानीं गुणातीतः किमाचार इति प्रश्नस्य प्रतिवचनमाह उदासीनेति। उदासीनवद्यथोदासीनो न कस्यचित् पक्षं भजते न तथायं गुणातीतत्वोपायमार्गेऽवस्थित आसीन आत्मवित्गुणैयः समासीनः विचाल्यते विवेकदर्शनावस्थातः तदेतत् स्फुटीकरोति गुणाः कार्य्यकारणविषयाकारपरिणता अन्योन्यस्मिन् वर्त्तन्त इति योऽवतिष्ठति छन्दोभङ्गभयात् परस्मैपदप्रयोगः योऽनुतिष्ठतीति पाठान्तरं नेङ्गते न चलति स्वरूपावस्थ एव भवतीत्यर्थः॥ २३॥

आ॰ टी॰। स्वानुभवसिद्धं गुणातीतस्य लक्षणमुक्तमित्याह एतन्नेति। परप्रत्यक्षत्वाभावं प्रपञ्चयति न हीति। आश्रयो विषयः। कैर्लिङ्गैरित्यादि परिहृत्य द्वितीयं प्रश्नं परिहरति अथेति। दृष्टान्तं व्याचष्टे यथेति। उभेयकस्य पक्षपातत्यायोगादित्यर्थः। आत्मविदात्मनः कौटस्थ्यज्ञानेनासीनो निवृत्तकर्तृत्वाभिमानो ऽप्रयतमानो भवतीति दार्ष्टान्तिकमाह तथेति। गुणातीतत्वोपायमार्गो ज्ञानमेव शब्दादिभि-

विषयैरस्य कूटस्थत्वज्ञानात् प्रच्यवनमाशङ्क्याह गुणैरिति। उपनतानां विषयाणां रागद्वेषद्वारा प्रवर्त्तकत्वमित्येतत् प्रपञ्चयति तदेतदिति। योऽवतिष्ठति स गुणातीत इत्युत्तरत्र सम्बन्धः। अवपूर्वस्य तिष्ठतेरात्मनेपदे प्रयोक्तव्ये कथं परस्मैपदमित्याशङ्क्याह छन्दोभङ्गेति। पाठान्तरे तु बाधितानुवृत्तिमात्रमनुष्ठानं करणाकारपरिणतानां गुणानां विषयाकारपरिणतेषु तेषु प्रवृत्तिर्न ममेति पश्यन् अचलतया कूटस्थदृष्टिमात्मनो न जहातीत्याह नेङ्गत इति॥ २३॥

स्वा॰ टी॰। तदेवं सुसंवेद्यं गुणातीतस्य लक्षणमुक्त्वा द्वितीयप्रश्नस्य किमाचार इत्यस्योत्तरमाह उदासीन इति त्रिभिः। उदासीनवत् साक्षितया आसीनः स्थितः सन् गुणैर्गुणकार्य्यैः सुखदुःखादिभिर्न यो विचाल्यते स्वरूपान्न प्रच्याव्यते अपि तु गुणा एव स्वकार्य्येषु वर्त्तन्ते एतैर्मम सम्बन्ध एव नास्तीति विवेकज्ञानेन यस्तूष्णीमवतिष्ठति परस्मैपदमार्षं नेङ्गते न चलति॥ २३॥

**समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः।**
**तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः॥२४**

किञ्च समदुःखेति। समदुःखसुखः समे दुःखसुखे यस्य स समदुःखसुखः स्वस्थः स्वात्मनि स्थितः प्रसन्नः अविक्रियः समलोष्टाश्मकाञ्चनः लोष्टञ्च अश्म च काञ्चनञ्च समानि यस्य स समलोष्टाश्मकाञ्चनः तुल्यप्रियाप्रियः प्रियञ्चाप्रियञ्च प्रियाप्रिये समे यस्य सोऽयं तुल्यप्रियाप्रियो धीरो धीमान् तुल्यनिन्दात्मसंस्तुतिः निन्दा च आत्मसंस्तुतिश्च तुल्ये निन्दात्मसंस्तुती यस्य यतः स तुल्यनिन्दात्मसंस्तुतिः॥ २४॥

स्वा॰ टी॰। गुणातीतस्य लिङ्गान्तरमाह किञ्चेति। तयोः समत्वं रागद्वेषानुत्पादकतया स्वकीयत्वाभिमानासदत्वं प्रसन्नत्वं स्वास्थ्याद-

प्रच्युतिरविक्रियत्वं विद्वद्दृष्ट्या प्रियाप्रिययोरसंभवेऽपि लोकदृष्टिमाश्रित्याह प्रियश्चेति। प्रियाप्रियपदग्रहणेन गृहीतानां काञ्चनादीनां ब्राह्मणपरिव्राजकवत् पृथक्ग्रहणं निन्दादौ धैर्यात्मनो गुणकीर्त्तनम् ॥ २४ ॥

स्वा॰ टी॰। अपि च समेति। समे दुःखसुखे यस्य, यतः स्वस्थः स्वरूप एव स्थितः, अतएव समानि लोष्टाश्मकाञ्चनानि यस्य, तुल्ये प्रियाप्रिये सुखदुःखहेतुभूते यस्य, धीरो धीमान्, तुल्या निन्दा च आत्मनः स्तुतिश्च यस्य ॥ २४ ॥

**मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः।**
**सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥२५॥**

किञ्च मानापमानयोरिति। मानापमानयोस्तुल्यः समो निर्विकारः तुल्यो मित्रारिपक्षयोः यद्यप्युदासीना भवन्ति केचित् स्वाभिप्रायेण तथापि पराभिप्रायेण मित्रारिपक्षयोरिव भवन्तीति अयन्तु तुल्यो मित्रारिपक्षयोरित्याह सर्वारम्भपरित्यागी दृष्टार्थानि कर्माण्यारभ्यन्त इत्यारम्भाः सर्वानारम्भान् परित्यक्तुं शीलं अस्येति सर्वारम्भपरित्यागी देहधारणमात्रनिमित्तव्यतिरेकेण सर्वकर्मपरित्यागीत्यर्थः गुणातीतः स उच्यते ॥ २५ ॥

आ॰ टी॰। इतश्च गुणातीतः शक्यो ज्ञातुमित्याह किञ्चेति। मानः सत्कारस्तिरस्कारोऽपमानः परदृष्ट्या यौ संभवतः तयोः पक्षयोर्निर्विशेषो न कस्यचित् पक्षे तिष्ठतीत्याह तुल्य इति। विदुषो मित्रादिबुद्ध्यभावात्तुल्यो मित्रारिपक्षयोरित्ययुक्तमित्याशङ्क्याह यद्यपीति। सर्वकर्मत्यागे देहधारणमपि निमित्ताभावान्न स्यादित्याशङ्क्याह देहेति। उक्तविशेषणो गुणातीतो ज्ञातव्य इत्याह गुणेति ॥ २५ ॥

स्वा॰ टी॰। अपि च मानेति। माने अपमाने च तुल्यः मित्र-

पक्षे अरिपक्षे च तुल्यः सर्वान् दृष्टादृष्टार्थानारम्भानुद्यमान् परित्यक्तु शीलं यस्य स एवं भूताचारयुक्तो गुणातीत उच्यते ॥ २५ ॥

**माञ्च योऽव्यभिचारेण भक्तियोगेन सेवते।**
**स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥२६**

उदासीनवदित्यादि गुणातीतः स उच्यते इत्येतदन्तमुक्तं यावद्यत्नसाध्यं तावत् सन्न्यासिनानुष्ठेयं गुणातीतत्वसाधनं मुमुक्षोः स्थिरीभूतन्तु स्वसंवेद्यं सद्गुणातीतस्य यतेर्लक्षणं भवतीति अधुना कथञ्च त्रीन् गुणान् अतिवर्त्तत इति प्रश्नस्य प्रतिवचनमाह माञ्चेति। माञ्चेश्वरं नारायणं सर्वभूतहृदयाश्रितं यो यतिः कर्म्मी वा अव्यभिचारेण कदाचित् यो व्यभिचरति न, भक्तियोगः भजनं भक्तिः सैव योगस्तेन विवेकज्ञानात्मकेन भक्तियोगेन ज्ञानसमुद्भवेन सेवते स गुणान् समतीत्य एतान् यथोक्तान् ब्रह्मभूयाय भवनं भूयः ब्रह्मभूयाय ब्रह्म भवनाय मोक्षाय कल्पते समर्थो भवतीत्यर्थः ॥ २६ ॥

आ॰ टी॰। यदुक्तमपेक्षकत्वादि तद्विद्योदयात् पूर्वं यत्नसाध्यं विद्याधिकारिणा ज्ञानसाधनत्वेनानुष्ठेयमुत्पन्नायान्तु विद्यायां जीवन्मुक्तस्योक्तधर्मजातं स्थिरीभूतं स्वानुभवसिद्धं लक्षणत्वेन तिष्ठतीत्युक्ते धर्मजाते विभागं दर्शयति उदासीनवदित्यादिना। प्रश्नद्वयमेवं परिहृत्य तृतीयं प्रश्नं परिहरति अधुनेति। मच्छब्दस्य संसारिविषयत्वं व्यावर्त्तयति ईश्वरमिति। तत्रैव नारायणशब्दान्मूर्त्तिभेदो व्यावर्त्त्यते। तस्य ताटस्थ्यं अवच्छिनत्ति सर्वेति। मुख्यामुख्याधिकारिभेदेन विकल्पः। भक्तियोगस्य यादृच्छिकत्वं व्यवच्छेत्तुमव्यभिचारेणेत्युक्तं तद्व्याचष्टेति। भजनं परमप्रेम स एव युज्यतेऽनेनेति योगः तेन सेवते पराक्

चिन्तां विना सदानुसन्दधातीत्यर्थः स भगवदनुग्रहं कृतसम्यगधीत्सम्यग्ज्ञो विद्वान् जीवन्नेवेत्यर्थः ॥ २६ ॥

स्वा॰ टी॰ । कथञ्चैतांस्त्रीन् गुणानतिवर्त्तत इत्यस्य प्रश्नस्योत्तरमाह माञ्चेति । चशब्दोऽवधारणार्थः मामेव परमेश्वरमव्यभिचारेण एकान्तेन भक्तियोगेन यः सेवते स एतान् गुणान् समतीत्य सम्यगतिक्रम्य ब्रह्मभूयाय ब्रह्मभावाय मोक्षाय कल्पते समर्थो भवति ॥ २६ ॥

**ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।**
**शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥२७॥**

**इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे गुणत्रयविभागयोगो नाम चतुर्दशोऽध्यायः ।**

---

कुत एतदित्यत आह ब्रह्मणः परमात्मनः हि यस्मात् प्रतिष्ठाहं प्रतितिष्ठत्यस्मिन्निति प्रतिष्ठाहं प्रत्यगात्मा कीदृशस्य ब्रह्मणः अमृतस्याविनाशिन अव्ययस्याविकारिणः शाश्वतस्य च नित्यस्य धर्मस्य ज्ञानयोगधर्मप्राप्यस्य सुखस्यानन्दरूपस्यैकान्तिकस्याव्यभिचारिणः अमृतादिस्वभावस्य परमानन्दरूपस्य परमात्मनः प्रत्यगात्मा प्रतिष्ठा सम्यक् ज्ञानेन परमात्मतया निश्चीयते इति तदेतद्ब्रह्मभूयाय कल्पते उक्तं यया चेश्वरशक्त्या भक्तानुग्रहादिप्रयोजनाय ब्रह्म प्रतिष्ठते प्रवर्त्तते सा शक्तिः ब्रह्मैवाहं शक्तिशक्तिमतो-

रनन्यत्वादित्यभिप्रायोऽथवा ब्रह्मशब्दवाच्यत्वात् सविकल्पकं ब्रह्म तस्य ब्रह्मणो निर्विकल्पकोऽहमेव नान्यः प्रतिष्ठाश्रयः किंविशिष्टस्यामरणधर्मकस्याव्ययस्य व्ययरहितस्य किञ्च शाश्वतस्य च नित्यस्य धर्मस्य ज्ञाननिष्ठालक्षणस्य सुखस्य तज्जनितस्यैकान्तनियतस्य च प्रतिष्ठाहमिति वर्त्तते॥ २७॥

इति चतुर्दशोऽध्यायः।

व्या० टी०। विद्वान् ब्रह्मैवेत्यत्र हेतुं पृच्छति कुत इति। तत्रोत्तरमाह उच्यत इति। ब्रह्मशब्दस्यासति बाधके मुख्यार्थग्रहणमभिप्रेत्याह परमात्मन इति। तं प्रति प्रत्यगात्मनो यत् प्रतिष्ठात्वं तदुपपादयति प्रतितिष्ठतीति यद्ब्रह्म प्रत्यगात्मनि प्रतितिष्ठतीति तत् किं विशेषणमित्यपेक्षायामुक्तममृतस्येत्यादि। तत्रामृतशब्देनाव्ययशब्दस्य पुनरुक्तिं परिहरति अविकारिण इति। नित्यत्वमपक्षयराहित्यं तेन पूर्वाभ्यामपौनरुक्त्यम्। प्रतिषिद्धार्थस्य धर्मशब्दस्य ब्रह्मण्यनुपपत्तिमाशङ्क्याह ज्ञानेति। अर्थेन्द्रियसम्बन्धोत्थं सुखं व्यावर्त्तयितुमैकान्तिकस्येत्युक्तम्। अक्षरार्थमुक्त्वा वाक्यार्थमाह अमृतादीति। प्रतिष्ठा यस्मादिति पूर्वेण सम्बन्धः तस्मात् प्रत्यगात्मा परमात्मतया निश्चीयते सम्यग्ज्ञानेनेति योजना। अस्य श्लोकस्य पूर्वश्लोकेनैकवाक्यतामाह तदेतदिति। विवक्षितं वाक्यार्थं प्रपञ्चयति यथेति। आसक्तिः ब्रह्मैवेति। कथं सामानाधिकरण्यं तत्राह शक्तीति। व्याख्यानान्तरमाह अथवेति। विशेषणानि पूर्ववदपौनरुक्तानि नेतव्यानि तदनेनाध्यायेन क्षेत्रक्षेत्रज्ञसंयोगस्य संसारकारणत्वं पञ्चप्रश्ननिरूपणद्वारेण च सम्यग्ज्ञानस्य सकलसंसारनिवर्त्तकत्वमित्येतत् उपपादयता मुमुक्षोः सुखसाध्यं गुणैरचाल्यत्वादि सज्ञाध्यायलिङ्गं लक्षणमिति निर्द्धारितः२७

इति चतुर्दशोऽध्यायः।

स्वा॰ टी॰। तत्र हेतुमाह ब्रह्मणो हीति। हि यस्माद्ब्रह्मणोऽहं प्रतिष्ठा प्रतिमा घनीभूतं ब्रह्मैवाहं यथा घनीभूतप्रकाश एव सूर्य-मण्डलं तद्वदित्यर्थः। तथा अव्ययस्य नित्यस्य अमृतस्य च मोक्षस्य नित्यमुक्तत्वात्, तथा तत्साधनस्य शाश्वतस्य धर्मस्य च शुद्धसत्त्वात्मकत्वात्, तथा ऐकान्तिकस्य अखण्डितस्य सुखस्य च प्रतिष्ठाहं परमानन्दरूपत्वात्, अतो मत्सेविनो मद्भावस्यावश्यम्भावित्वाद्युक्तमेवोक्तं ब्रह्मभूयाय कल्पत इति। कृष्णाधीनगुणासङ्गप्रसञ्जितभवाम्बुधिम्। सुखं तरति मद्भक्त इत्यभाषि चतुर्दशे॥ २७॥

इति चतुर्दशोऽध्यायः।

---

# पञ्चदशोऽध्यायः।

---

## श्रीभगवानुवाच।

**ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्।**
**छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित्॥१॥**

यस्मान्मदधीनं कर्मिणां कर्मफलं ज्ञानिनाञ्च ज्ञान-योगमधर्मप्राप्यं सुखञ्च ज्ञानफलमतो भक्तियोगेन मां ये सेवन्ते मत्प्रसादात् ज्ञानप्राप्तिक्रमेण गुणातीता मोक्षं गच्छन्ति किमु वक्तव्यमात्मनस्तत्त्वं सम्यक् विजानन्त इत्यतो भगवानर्जुनेनापृष्टमप्यात्मनस्तत्त्वं विवक्षुरुवाच

ऊर्द्ध्वमूलमित्यादि। तत्र तावद्वृक्षरूपककल्पनया वैराग्यहेतोः संसारस्वरूपं वर्णयति विरक्तस्य हि संसारात् भगवत्तत्त्वज्ञानेऽधिकारो नान्यस्येति ऊर्द्ध्वमूलमिति। ऊर्द्ध्वमूलं कालतः सूक्ष्मत्वात् कारणत्वात् नित्यत्वान्महत्त्वाच्चोर्द्ध्वमुच्यते ब्रह्म व्यक्तमायाशक्तिमत्तन्मूलस्येति सोऽयं संसारवृक्ष ऊर्द्ध्वमूलः श्रुतेश्च ऊर्द्ध्वमूलोऽवाक्‌शाख इति पुराणे चाव्यक्तमूलप्रभवस्तस्यैवानुग्रहोत्थितः, बुद्धिस्कन्धमयश्चैव इन्द्रियान्तरकोटरः, महाभूतप्रशाखश्च विषयैः पत्रवांस्तथा. धर्माधर्मसुपुष्पश्च सुखदुःखफलोदयः, आजीव्यः सर्वभूतानां ब्रह्मवृक्षः सनातनः, एतद्ब्रह्मवनश्चैव ब्रह्मा चरति नित्यशः, एतत् छित्वा च भित्वा च ज्ञानेन परमासिना, ततश्चात्मरतिं प्राप्य यस्मान्नावर्त्तते पुनः इत्यादि तमूर्द्ध्वमूलं संसारं मायामयं वृक्षमधःशाखं महदहङ्कारतन्मात्रादयः शाखा इवास्याधो भवन्तीति सोऽयमधःशाखस्तमधःशाखं न श्वोऽपि स्थास्यते इत्यश्वत्थस्तं क्षणप्रध्वंसिनमश्वत्थं प्राहुः कथयन्ति श्रुतिवादा इत्यश्चयं संसारं मायामयं अनादिकालप्रवृत्तत्वात् सोऽयं संसारवृक्षोऽव्ययः अनाद्यनन्तदेहादिसन्तानाश्रयो हि सुप्रसिद्धस्तमव्ययं तस्यैव संसारवृक्षस्य इदमन्यद्विशेषणान्तरं छन्दांसि यस्य पर्णानि छन्दांसि छादनादस्य ऋग्यजुःसामलक्षणानि यस्य संसारवृक्षस्य पर्णानीव पर्णानि यथा वृक्षस्य रक्षणार्थानि पर्णानि तथा वेदाः संसारवृक्षपरिरक्षणार्था धर्मतद्धेतुफलप्रकाशनार्थत्वात् यथा व्याख्यातं संसारवृक्षं समूलं यस्तं वेद स वेदविद्वेदार्थविदित्यर्थः ॥ १ ॥

आ॰ टी॰। ज्ञानेन गुणात्यये दर्शिते नाशित्वे तेषां विज्ञानेनात्ययादनाशित्वे तेनाऽपि तद्वयोऽभावाद् ज्ञानं गुणात्ययहेतुरित्याद्युक्तं निरस्य वाक्यादेव श्रवणादिहेतुं सन्न्यासं विधित्सुः अनुमत्य परमपुरुषार्थतात्त्विकत्वं चतुर्दशाध्यायान्तरमारभ्यते यस्मादिति। कर्मिणो ज्ञानिनश्च शास्त्रेऽधिकृताः तत्र कर्मिणां कर्मानुकूलं फलमीश्वरायत्तं फलमत उपपत्तेरिति न्यायात् ज्ञानिनामपि तत्फलमीश्वरायत्तमेव ततो ह्यस्य बन्धविपर्य्यायवित्त्वात् यस्मादेवं तस्माद्ये भक्त्याख्येन योगेन मामेव सेवन्ते ते मत्प्रसादद्वारा ज्ञानं प्राप्य तेन गुणातीता हृत्वा भवन्तीति स्थितमित्यर्थः, ये त्वात्मनस्तत्त्वमेव यन्दे हाद्यपोहेन जानन्ति तेन ज्ञानेन गुणातीताः सन्तो मुक्तिं गच्छन्तीति किमु वक्तव्यमित्यर्थः। विद्वमर्थमाह किमु वक्तव्यमिति। आत्मतत्त्वाज्ञानं यतः संसारहेतुः ज्ञानं मोक्षानुकूलमतोऽर्जुनेन किञ्चिदित्यपृष्टमपि तत्त्वं भगवानुक्तवान् प्रश्नाभावेऽपि तस्य तद्व्युत्पादनाभिमानादित्याह अत इति। तत्त्वेति वक्ष्यते। किमिति संसारो वर्ण्यते तत्राह तत्रेति। अध्यायादिः सप्रस्यर्थः। वैराग्यमपि किमिति उच्यते तत्राह विरक्तस्येति। इति वैराग्याय संसारवर्णनमिति शेषः। नाशसम्भावनायै वृक्षरूपकं बन्धहेतोर्दर्शयति ऊर्द्ध्वमूलमिति। कथं कालतः सूक्ष्मत्वं तदाह कारणत्वादिति। तदेव कथं कार्य्यापेक्षया नियतपूर्वभावित्वादनादित्वादित्याह नित्यत्वादिति। सर्वव्यापित्वाच्चोत्कर्षं सम्भावयति महत्त्वाच्चेति। ऊर्द्ध्वमुच्यते तत्तृतीयमिति यावत्। तस्य कूटस्थस्य कथं मूलत्वमित्याशङ्क्याह अव्यक्तेति। श्रुतिमूलत्वेन श्रुतिमुदाहरति श्रुतेश्चेति। अवाञ्च्यो निकृष्टाः शाखा इव महदाद्या यस्य स तथा। प्रकृते संसारवृक्षे पुराणसम्मतिमाह पुराणे चेति। अव्यक्तमव्याकृतं तदेव मूलं तस्मात् प्रभवनं प्रभवो यस्य स तथा तस्यैव मूलस्याव्यक्तस्यानुग्रहादतिदृढत्वादुत्थितः संवर्द्धितः। तस्य लौकिकवृक्षसाधर्म्यमाह बुद्धीत्यादिना। वृक्षस्य हि शाखाः स्कन्धादुद्भवन्ति संसारस्य च बुद्धेः सकाशान्नानापरिणामा जायन्ते तेन बुद्धिरेव स्कन्धस्तन्मयस्तत्प्रचुरोऽयं संसारतरुः इन्द्रियाणामन्तराणि छिद्राणि कोटराणि यस्य स तथा महान्ति भूतानि पृथिव्यादीन्याकाशान्तानि विशाखस्तम्भो यस्य

तथा आजीव्यत्वमुपजीव्यत्वं ब्रह्मणाभिहितो ह्ययो ब्रह्मवृक्षस्तथापि ज्ञानं विना छेत्तुमशक्यतया सनातनः चिरन्तनः एतच्च ब्रह्मणः परस्यात्मनो वनं वननीयं सम्भजनीयमत हि ब्रह्म प्रतिष्ठितं तस्य वृक्षस्य संसाराख्यस्य तदेव ब्रह्म सारभूतं अथवास्य ब्रह्मवृक्षस्यानवच्छिन्नस्य संसारमण्डलस्य तदेतद्ब्रह्मवनमिव वनं वननीयं सम्भजनीयं न हि ब्रह्मातिरिक्तं संसारस्यास्त्यन्यत् ब्रह्मैवाविद्यया संसरतीत्यभ्युपगमादित्यर्थः। अहं ब्रह्मेति दृढ़ज्ञानेनोक्तं संसारवृक्षं छित्वा प्रतिबन्धकाभावादात्मनिष्ठो भूत्वा पुनरावृत्तिरहित कैवल्यं प्राप्नोतीत्याह एतदिति। अधःशाखमित्येतद्व्याचष्टे महदिति। आदिशब्देनेन्द्रियादिसंग्रहः। संसारवृक्षस्यातिचञ्चलत्वे प्रमाणमाह प्राहुरिति। क्षणध्वंसिनोऽव्ययत्वं विरुद्धमित्याशङ्क्याह संसारेति। तदेवोपपादयति अनादीति। छादनं रक्षणं प्रावरणं वा कर्मकाण्डानि स्वर्गारोहावरोहफलानि नानाविधार्थवादयुक्तानि संसारवृक्षं रक्षन्ति तस्मिंश्च दोषञ्चाहरन्ति तेन तानि छन्दांसि पर्णानीव भवन्तीत्यर्थः। तदेव प्रपञ्चयति यथेति। उक्तेऽर्थे हेतुमाह धर्मेति। कर्मकाण्डानां वेदानामिति शेषः। कर्मब्रह्माख्यसर्ववेदार्थस्य तत्त्वान्तर्भाववमुपेत्य व्याचष्टे वेदार्थेति॥ १॥

स्वा॰ टी॰। वैराग्येण विना ज्ञानं न च भक्तिरतः स्फुटम्। वैराग्योपस्करं ज्ञानमीशः पञ्चदशेऽदिशत्। पूर्वाध्यायान्ते माञ्च यो व्यभिचारेण भक्तियोगेन सेवत इत्यादिना परमेश्वरमेकान्तभक्त्या भजतस्तत्प्रसादलब्धज्ञानेन ब्रह्मभावो भवति इत्युक्तं न चैकान्तभक्तिर्ज्ञानं वा अविरक्तस्य सम्भवतीति वैराग्यपूर्वकं ज्ञानमुपदेष्टुकामः प्रथमं तावत् सार्द्धश्लोकाभ्यां संसारस्वरूपं वृक्षं रूपकालङ्कारेण वर्णयन् श्रीभगवानुवाच ऊर्द्ध्वमूलमिति। ऊर्द्ध्वमुत्तमः क्षराक्षराभ्यामुत्कृष्टः पुरुषोत्तमो मूलं यस्य तम्। अध इति ततोऽर्वाचीनाः कार्योपाधयो हिरण्यगर्भादयो गृह्यन्ते ते तु शाखा इव शाखा यस्य तम्। विनश्वरत्वेन श्वः-प्रभातपर्य्यन्तमपि न स्थास्यतीति विश्वासानर्हत्वादश्वत्थं प्राहुः। प्रवाहरूपेणाविच्छेदादव्ययञ्च प्राहुः, ऊर्द्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सना-

तन इत्याद्याः श्रुतयः । छन्दांसि वेदा यस्य पर्णानि धर्माधर्मप्रतिपादनद्वारेण च्छायास्थानीयैः कर्मफलैः संसारवृक्षस्य सर्वजीवाश्रयणीयत्वसम्पादनात् पर्णस्थानीया वेदाः । यस्तमेवम्भूतमश्वत्थं वेद स एव वेदार्थवित् । संसारप्रपञ्चवृक्षस्य मूलमीश्वरो ब्रह्मादयस्तदंशाः शाखास्थानीयाः स च संसारवृक्षो विनश्वरः प्रवाहरूपेण नित्यश्च वेदोक्तैः कर्मभिः सेव्यतामापादितश्च इत्येतावानेव हि वेदार्थः अतएव विद्वान् वेदविदिति स्तूयते ॥ १ ॥

**अधश्चोर्ध्वञ्च प्रसृतास्तस्य शाखा-**
**गुणप्रवृद्धा विषयप्रवालाः ।**
**अधश्च मूलान्यनुसन्ततानि**
**कर्मानुबन्धीनि मनुष्यलोके ॥ २ ॥**

नहि संसारवृक्षादस्मात् समूलात् ज्ञेयोऽन्योऽणुमात्रोऽप्यवशिष्टोऽस्त्यतः सर्वज्ञः स यो वेद स वेदार्थविदिति यस्मात् संसारवृक्षे समूले सर्वज्ञेयं अन्तर्भवतीति तस्मात् समूलवृक्षज्ञानं स्तौति तस्यैव संसारवृक्षस्यापरावयवव्यापारकल्पनोच्यते अधोमनुष्यादिभ्यो यावत् स्थावरमूर्द्ध्वञ्च यावद्ब्रह्मा विश्वसृजो धर्म इत्येतदन्तं यथाकर्म यथाश्रुतं ज्ञानकर्मफलानि तस्य वृक्षस्य शाखा इव शाखाः प्रसृताः प्रगतागुणप्रवृद्धाः गुणैः सत्त्वरजस्तमोभिः प्रवृद्धाः स्थूलीकृता उपादानभूतैर्विषयप्रवालाः विषयाः शब्दादयः प्रवाला इव देहादिकर्मफलेभ्यः शाखाभ्यः अङ्कुरीभवन्तीव तेन विषयप्रवालाः शाखाः संसारवृक्षस्य परममूलमुपादानं पूर्वमुक्तमथेदानीं कर्मफलजनितरागद्वेषादिवासनामूलानीव धर्माधर्मप्रवृत्तिकारणान्यवान्तरभावीनि तान्यधश्च देहाद्यपेक्षया मूलान्यनुसन्त-

तानि अनुप्रविष्टानि कर्मानुबन्धीनि कर्म धर्माधर्मलक्षणमनुबन्धः पश्चाद्भावी येषामुद्भूतिमनुभवन्तीति तानि कर्मानुबन्धीनि मनुष्यलोके विशेषतोऽत्र हि मनुष्याणां धर्माधिकारः प्रसिद्धः ॥ २ ॥

आ॰ टी॰। समूलसंसारवृक्षज्ञाने तु फलं छित्त्वा मूलमेव निष्ठस्य स्यात् शक्यमिति तत्‌ज्ञानार्थं प्रयतितव्यमिति मत्वा तत्‌ज्ञानस्तुतिरत्र विवक्षितेत्याह न हीति। अवयवसम्बन्धिन्यपरा प्रागुक्तादतिरिक्ता कल्पना इति यावत्। आमनुष्यलोकादाविरिञ्चेरित्यधःशब्दार्थमाह मनुष्यादिभ्य इति। तस्मादेवारभ्यासत्यलोकादित्यूर्ध्वशब्दार्थमाह यावदिति। शाखाशब्दार्थं दर्शयति ज्ञानेति। तेषां हेत्वनुगुणत्वेन बहुविधत्वं सूचयति यथेति। प्रत्यक्षाणां शब्दादिविषयाणां प्रवालत्वं शाखासु पल्लवत्वं अङ्कुरत्वं स्फोरयति देहादीति। ऊर्ध्वमूलमित्यत्र संसारवृक्षस्य मूलमुक्तं किमिदानीमधश्च मूलानीत्युच्यते तत्राह संसारेति। अनुप्रविष्टत्वं सर्वेषु लिङ्गेष्वनुगततया सन्ततत्वमविच्छिन्नत्वं रागादीनाञ्च कर्मफलजन्यत्वं प्रकटयति कर्मेति। कर्मणां रागादीनां मिथो हेतुहेतुमत्त्वं तेषां तथात्वेनानवच्छिन्नतया प्रवृत्तिः विशेषतो मनुष्यलोके भवतीत्यत्र हेतुमाह अत्र हीति। कर्मव्युत्पत्त्या प्राणिनिकायो लोकः मनुष्याणां लोकस्तेष्वधिकतो ब्राह्मणत्वादिविशिष्टो देहो मनुष्यलोकः ॥ २ ॥

स्वा॰ टी॰। किञ्च अधश्चेति। हिरण्यगर्भादयः कार्योपाधयो जीवाः शाखास्थानीयत्वेनोक्तास्तेषु च ये दुष्कृतिनस्तेऽधः पश्वादियोनिषु प्रसृता विस्तारं गताः सुकृतिनश्चोर्ध्वं देवादियोनिषु प्रसृतास्तस्य संसारवृक्षस्य शाखाः। किञ्च गुणैः सत्त्वादिवृत्तिभिर्जलसेचनैरिव यथायथं प्रवृद्धा वृद्धिं प्राप्ताः। किञ्च विषया रूपादयः प्रवालाः पल्लवस्थानीया यासां शाखाप्रस्थानीयाभिरिन्द्रियवृत्तिभिः संयुक्तत्वात्। किञ्च अधश्च चशब्दादूर्ध्वञ्च मूलानि अनुसन्ततानि विरूढानि मुख्यं मूलमीश्वर एव इमानि त्ववान्तराणि मूलानि तत्तद्भोगवासनालक्षणानि। तेषां कार्यमाह मनुष्यलोके कर्मानुबन्धीनि इति। कर्म एव अनु-

बन्धि उत्तरभावि येषां तानि ऊर्द्धोऽधोलोकेषूपभुक्ततत्तद्भोगवासना-दिभिर्हि कर्म्मक्षये मनुष्यलोकप्राप्तानां तत्तदनुरूपेषु कर्म्मसु प्रवृत्तिर्भवति तस्मिन्नेव हि कर्म्माधिकारो नान्येषु लोकेषु अतो मनुष्यलोक इत्युक्तम् ॥ २ ॥

न रूपमस्येह तथोपलभ्यते
नान्तो न चादिर्न च सम्प्रतिष्ठा ।
अश्वत्थमेनं सुविरूढमूल-
मसङ्गशस्त्रेण दृढेन छित्त्वा ॥ ३ ॥

यस्त्वयं वर्णितः संसारवृक्षः न रूपेति । न रूपमस्य इह यथा वर्णितं तथा नैवोपलभ्यते स्वप्नमरीच्युदकमाया-गन्धर्वनगरसमत्वात् दृष्टनष्टस्वरूपो हि स इत्यत एवानन्तो न पर्य्यन्ता निष्ठा समाप्तिर्वा विद्यते तथा न चादिरित आरभ्यायं प्रवृत्त इति न केनचिद्गम्यते न च सम्प्रतिष्ठा स्थितिर्मध्यमस्य न केनचिदुपलभ्यते अश्वत्थमेनं यथोक्तं सुविरूढमूलं सुष्ठु विरूढानि विरोहं गतानि मूलानि यस्य तमेनं सुविरूढमूलमसङ्गशस्त्रेण असङ्गः असङ्गता पुत्रवित्तलोकैषणादिभ्यो व्युत्थानं तेनासङ्गशस्त्रेण दृढेन परमात्माभिमुखनिश्चयदृढीकृतेन पुनःपुनर्विवेकाभ्यासाश्मनिशितेन छित्त्वा संसारवृक्षं सबीजमुद्धृत्य ॥ ३ ॥

आ० टी० । पुनः पुनः रागादिना प्रवृत्तत्वेनानादित्वाच्च संसार-वृक्षः स्वयमुच्छिद्यते न चोच्छेत्तुं शक्यते केनापीत्याशङ्क्याह यस्त्विति । यथापूर्वं वर्णितं यथा च लोके प्रसिद्धं तथास्य रूपमिह शास्त्रेऽनुमीयते तथा चास्य ज्ञानापनोद्यत्वं युक्तमित्याह यथेति । तस्याप्रमितत्वे

हेतुमाह स्वप्नेति । तस्य स्वप्नादिसमत्वे दृष्टनष्टस्वरूपत्वं हेतुं करोति दृष्टेति । इत्यमेयतेति शेषः । तमेवामेयत्वं हेतुं तत्त्वावसानेऽपि तस्य न भातीत्याह चतएवेति । ज्ञानं विना भ्रान्तिवासनाकर्मणामन्योन्य-निमित्तत्वाच्चावसानमस्तीत्यर्थः । इदं प्रथमत्वमपि नास्य परिच्छेत्तुं शक्यमित्याह तथेति । आद्यन्तवन्मध्यमपि नास्य प्रामाणिकमित्याह मध्यमिति । संसारवृक्षस्यात्यशक्तिस्तस्य क्षणभङ्गुरस्य स्वयमेवोच्छेद-सम्भवात्तदुच्छेदार्थं न प्रयतितव्यमित्याशङ्क्याह अश्वत्थमिति । व्युत्थानं वैराग्यपूर्वकं पारिव्राज्यम् । दृढीकृतत्वमेव विवेकपूर्वकत्वेन स्फुटयति पुनः पुनरिति ॥ ३ ॥

स्वा० टी० । किञ्च न रूपमिति । इह संसारे स्थितैः प्राणिभि-रस्य संसारवृक्षस्य तथा ऊर्द्ध्वमूलत्वादिप्रकारेण रूपं नोपलभ्यते, न चान्तोऽवसानमपर्यन्तत्वात्, न चादिरनादित्वात्, न च सम्प्रतिष्ठा स्थितिः कथं तिष्ठतीति नोपलभ्यते यस्मादेवम्भूतोऽयं संसारवृक्षो दुर-वच्छेदोऽनर्थकरश्च तस्मादेन दृढेण वैराग्येण शस्त्रेण छित्वा तत्त्वज्ञाने यतेतेत्याह अश्वत्थमेनमिति सार्द्धेन । एनमश्वत्थं सुविरूढमूलमत्यन्त-बद्धमूलं सन्तं असङ्गोऽहं ममतात्यागस्तेन शस्त्रेण दृढेन सम्यग्विचा-रेण छित्वा पृथक्कृत्य ॥ ३ ॥

**ततः पदं तत् परिमार्गितव्यं**
**यस्मिन् गता न निवर्त्तन्ति भूयः ।**
**तमेव चाद्यं पुरुषं प्रपद्ये**
**यतः प्रवृत्तिः प्रसृता पुराणी ॥ ४ ॥**

तत इति । ततः पश्चात् यत् पदं वैष्णवं तत् परिमा-र्गितव्यं परिमार्गणमन्वेषणं ज्ञातव्यमित्यर्थः । यस्मिन् पदे गताः प्रविष्टा न निवर्त्तन्ति नावर्त्तन्ते भूयः पुनः संसाराय कथं परिमार्गितव्यमित्याह तमेव च यः पदशब्देनोक्तः

आद्यमादौ भवं आद्यं पुरुषं प्रपद्ये इत्येवं परिमार्गितव्यं तच्छरणतयेत्यर्थः कोऽसौ पुरुष इत्युच्यते यतो यस्मात् पुरुषात् संसारमायावृक्षप्रवृत्तिः प्रसृता निःसृतैन्द्रजालिकादिवत् माया पुराणी चिरन्तनी ॥ ४ ॥

श्री० टी० । उद्धृत्य किं कर्त्तव्यं तदाह तत इति । पश्चाद्वृक्षादूर्द्ध्वं व्यवस्थितमित्यर्थः । किन्तत् पदं यदन्वेष्टव्यं ज्ञातव्यं तदाह यस्मिन्निति । येन सर्वं पूर्णं पुरिषु वा शयानं पुरुषं प्रपद्ये शरणं गतोऽस्मीत्यर्थः । विवर्त्तवादानुरोधिनं दृष्टान्तमाह ऐन्द्रेति ॥ ४ ॥

स्वा० टी० । तत इति । ततस्तस्य मूलभूतं तत्पदं वस्तु परिमार्गितव्यं अन्वेष्टव्यं कीदृशं यस्मिन् गता यत् पदं प्राप्ताः सन्तो भूयो न निवर्त्तन्ति नावर्त्तन्त इत्यर्थः । अन्वेषणप्रकारमेवाह तमेवेति । यत एषा पुराणी चिरन्तनी संसारप्रवृत्तिः प्रसृता विस्तृता तमेव चाद्यं पुरुषं प्रपद्ये शरणं व्रजामि इत्येवमेकान्तभक्त्या अन्वेष्टव्यमित्यर्थः ॥ ४ ॥

**निर्मानमोहा जितसङ्गदोषा**
**अध्यात्मनित्या विनिवृत्तकामाः ।**
**द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञै-**
**र्गच्छन्त्यमूढाः पदमव्ययं तत् ॥ ५ ॥**

कथंभूतास्तत् पदं गच्छन्तीत्युच्यते निर्मानेति । निर्मानमोहा मानश्च मोहश्च मानमोहौ तौ निर्गतौ येभ्यस्ते निर्मानमोहाः मानमोहवर्जिताः जितसङ्गदोषाः सङ्ग एव दोषः सङ्गदोषः जितः सङ्गदोषो यैस्ते जितसङ्गदोषा अध्यात्मनित्याः परमात्मस्वरूपालोचने नित्यास्तत्परा विनिवृत्तकामाः विशेषतो निर्लेपेन निवृत्ताः कामा येषां ते

विनिवृत्तकामा यतयः संन्यासिनो द्वन्द्वैः प्रियाप्रियादिभिर्वि-मुक्ताः सुखदुःखसंज्ञैः परित्यक्ता गच्छन्त्यमूढा मोहवर्जिताः पदमव्ययं तद्यथोक्तम् ॥ ५ ॥

श्रा० टी० । परिमार्गणपूर्वकं वैष्णवं पदं गच्छतां संन्यासान्तरान्याक-ङ्क्षापूर्वकं कथयति कथमित्यादिना । मानोऽहङ्कारः मोहस्त्वविवेक-जितसङ्गदोषाः यत्र मित्रशत्रुभावावपि द्वेषप्रीतिवर्जिता इत्यर्थः । तत्परत्वं श्रवणादिनिरतत्वं, सन्न्यासिनो वैराग्यद्वारात्यक्तसर्वकर्माण इत्यर्थः आदिशब्देन तद्धेतुपरहः, मोहवर्जितत्वमुक्तहेतुतः संजातसम्यग् धीत्वम् ॥ ५ ॥

स्वा० टी० । तत्प्राप्तौ साधनान्तराणि दर्शयन्नाह निर्मानेति । निर्गतौ मानमोहौ अहङ्कारमिथ्याभिनिवेशौ येभ्यस्ते, जितः पुत्रादि-सङ्गरूपो दोषो यैस्ते, अध्यात्मे आत्मज्ञाने नित्याः परिनिष्ठिताः, विशेषेण निवृत्तः कामो येभ्यस्ते, सुखदुःखहेतुत्वात् सुखदुःखसंज्ञानि शीतोष्णादीनि द्वन्द्वानि तैर्विमुक्ता अतएवामूढ़ा निवृत्ताविद्याः सन्तस्त-दव्ययं पदं गच्छन्ति ॥ ५ ॥

## न तद्भासयते सूर्य्यो न शशाङ्को न पावकः ।
## यद्गत्वा न निवर्त्तन्ते तद्धाम परमं मम ॥६॥

तदेव पदं पुनर्विशिष्यते नेति । तद्धामेति व्यवहितेन धाम्ना सम्बन्धः धाम तेजोरूपं पदं न भासयते सूर्य्य आदित्यः सर्वावभासनशक्तिमत्त्वेऽपि सति तथा न शशाङ्क-श्चन्द्रो न च पावको नाग्निरपि यद्धाम वैष्णवं पदं गत्वा प्राप्य न निवर्त्तन्ते यच्च सूर्य्यादिभिर्न भासयते तद्धाम पदं परमं विष्णो मम पदं यत् गत्वा न निवर्त्तन्त इत्युक्तम् ॥६॥

श्रा० टी० । तच्चेत् पदं वेद्यं कस्त्वेष्यत् कर्मेति हेतापातोऽवेद्यं

चेदप्रमत्तत्वात् प्रेप्सितत्वाच्चिद्धिरित्याशङ्क्याह तद्देवेति । उक्तमनूद्या-भिप्रैति यद्गत्वेति ॥ ६ ॥

ख्या० टी० । तदेव गन्तव्यं पदं विशिनष्टि न तदिति । तत् पदं सूर्य्यादयो न प्रकाशयन्ति यत् प्राप्य न निवर्त्तन्ते योगिनस्तद्धाम स्वरूपं परमं मम, अनेन सूर्य्यादिप्रकाशाविषयत्वेन जड़त्वशीतो-ष्णादिदोषप्रसङ्गो निरस्तः ॥ ६ ॥

**ममैवांशो जीवलोके जीवभूतः सनातनः ।**
**मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥७॥**

ननु सर्वा हि गतिरागत्यन्ता संयोगाविप्रयोगान्ता इति प्रसिद्धं हि कथमुच्यते तद्धामगतानां नास्ति निवृ-त्तिरिति शृणु तत्र कारणं ममैवेति । ममैव परमात्मनो नारायणस्यांशो भागोऽवयव एकदेश इत्यनर्थान्तरं जीव-लोके जीवानां लोके संसारे जीवभूतः भोक्ता कर्त्तेति प्रसिद्धः सनातनः पुरातनः यथा जलसूर्य्यकः सूर्य्यांशो जलनिमि-त्तापाये सूर्य्यमेव गत्वा न निवर्त्तते तथा अयमप्यंशः तेनै-वात्मना संगच्छत्येवमेव यथा वा घटाद्युपाधिपरिच्छिन्नो घटाद्याकाशः आकाशांशः सन् घटादिनिमित्तापाये आकाशं प्राप्य न निवर्त्तत इत्येवमत उपपन्नमुक्तं यद्-गत्वा न निवर्त्तन्त इति ननु निरवयवस्य परमात्मनः कुतोऽवयव एकदेशोऽंश इति सावयवत्वे च विनाशप्रसङ्गो-ऽवयवविभागादिति नैष दोषोऽविद्याकृतोपाधिपरिच्छिन्न एकदेशो-ऽंश इव कल्पितो दर्शितश्चायमर्थः क्षेत्राध्याये विस्तरशः स च जीवो मदंशत्वेन कल्पितः कथं संसरतीत्युक्तमिति

चेत् उच्यते मनः षष्ठानीन्द्रियाणि श्रोत्रादीनि प्रकृतिस्थानि स्वस्थाने कर्णशष्कुल्यादौ प्रकृतौ स्थितानि कर्षत्याकर्षति ॥७॥

व्या० टी०। तत्र प्रसिद्धिं प्रमाणयति संयोगा इति। गमनस्यागमनान्तत्वप्रसिद्धेरयुक्तं यद्गत्वेत्यादि इत्युपसंहरति कथमिति। आक्षेपं परिहरति इहैवेति। भगवत्प्राप्तेर्नित्यत्वं तत्त्वाभावः सम्यगर्थः। जीवस्य परांशत्वेऽपि कथमुक्तदोषसमाधिरित्याशङ्क्य प्रतिविम्बपक्षमादाय दृष्टान्तेन प्रत्याचष्टे यथेति। अवच्छेदपक्षमाश्रित्य दृष्टान्तान्तरेणोक्तदोषसमाधिं दर्शयति यथा वेति। आक्षेपसमाधिमुपसंहरति अत इति। परस्य निरवयवत्वात्तदंशत्वं जीवस्यायुक्तमिति शङ्कते नन्विति। तस्य निरवयत्वं साधयति सावयवत्वे चेति। वस्तुतो निरंशस्यापि परस्य कल्पनया जीवोऽंशो भविष्यतीति परिहरति नैष दोष इति। तत्त्वतस्तु जीवस्य नांशत्वं परमात्मतावन्मात्रतया दर्शितत्वादित्याह दर्शितश्चेति। यदि परस्यांशत्वेन कल्पितो जीवो वस्तुतस्तदात्मैव न तर्हि तस्य संसारित्वं उत्क्रान्तिर्वेति शङ्कते कथमिति। जीवस्य संसरणमुत्क्रमणञ्चोपपादयितुमुपक्रमते उच्यत इति ॥ ७ ॥

स्वा० टी०। ननु च त्वदीयं धाम प्राप्ताः सन्तो यदि न निवर्त्तन्ते तर्हि सति संपद्य न विदुः सति संपद्याम इत्यादिश्रुतेः सुषुप्तिप्रलयसमये तत्प्राप्तिः सर्वेषामस्तीति को नाम संसारी स्यादित्याशङ्क्य संसारिणं दर्शयति ममैवेति पञ्चभिः। ममैवांशोऽयमविद्यया जीवभूतः सनातनः सर्वदा संसारित्वेन प्रसिद्धः असौ सुषुप्तिप्रलययोः प्रकृतौ लीनतया स्थितानि मनः षष्ठं येषां तानीन्द्रियाणि पुनर्जीवलोके संसारोपभोगार्थमाकर्षति। एतच्च कर्मेन्द्रियाणां प्राणस्य चोपलक्षणार्थं, अयम्भावः, सत्यं सुषुप्तिप्रलययोरपि मदंशत्वात् सर्वस्यापि जीवमात्रस्य मयि लयात्स्येयमत्प्राप्तिस्तथाप्यविद्यावृतस्य सानुशयस्य सप्रकृतिके मयि लयो न तु शुद्धे। तदुक्तं, अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्तीत्यादिना। अतः पुनः संसाराय निर्गच्छत्यविद्वान् प्रकृतौ लीनतया स्थितानि स्वोपाधिभूतानीन्द्रियाण्याकर्षति, विदुषान्तु शुद्धस्वरूपप्राप्तेर्नावृत्तिरिति ॥ ७ ॥

**शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः।**
**गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥८**

कस्मिन् काले शरीरमिति। यच्चापि यदा चाप्युत्क्रामतीश्वरो देहादिसङ्घातस्वामी जीवस्तदा कर्षतीति श्लोकस्य द्वितीयपादोऽर्थवशात् प्राथम्येन सम्बध्यते यदा च पूर्वस्मात् शरीरात् शरीरान्तरमाप्नोति तदा गृहीत्वैतानि मनःषष्ठानीन्द्रियाणि संयाति सम्यक् याति गच्छति किमिवेत्याह वायुः पवनो गन्धानिवाशयात पुष्पादेः ॥ ८ ॥

घा॰ टी॰। स्वस्थाने स्थितानामिन्द्रियाणां जीवेनाकर्षणस्य कालं पृच्छति कस्मिन्निति। जीवस्योत्क्रान्तिरीश्वरस्येत्याशङ्क्येश्वरशब्दार्थमाह देहादीति। उत्क्रान्त्यनन्तरभाविनीं गतिरित्येतदर्थवशादित्युक्तम्। अवशिष्टानि श्लोकाक्षराण्याचष्टे यदा चेति ॥ ८ ॥

स्वा॰ टी॰। तान्याकृष्य किं करोतीत्याह शरीरमिति। यत् यदा शरीरान्तरं कर्मवशादवाप्नोति यतश्च शरीरादुत्क्रामति ईश्वरो देहादीनां स्वामी तदा पूर्वस्मात् शरीरादेतानि गृहीत्वा तच्छरीरान्तरं सम्यग्याति, शरीरे सत्यपि इन्द्रियग्रहणे दृष्टान्तः आशयात् स्वस्थानात् कुसुमादेः सकाशात् गन्धान् गन्धवतः सूक्ष्मानंशान् गृहीत्वा वायुर्यथा गच्छति तद्वत् ॥ ८ ॥

**श्रोत्रञ्चक्षुः स्पर्शनञ्च रसनं घ्राणमेव च।**
**अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९ ॥**

कानि पुनस्तानीति श्रोत्रमिति। श्रोत्रं चक्षुः स्पर्शनञ्च त्वगिन्द्रियं रसनं जिह्वा घ्राणमेव च मनश्च षष्ठं प्रत्येकं इन्द्रियेण सहाधिष्ठाय देहस्थो विषयान् शब्दादीनुपसेवते ॥ ९ ॥

ब्या० टी० । मनःषष्ठानीन्द्रियाण्येव प्रश्नद्वारा विशेषतो दर्शयति कानीति ॥ ८ ॥

ब्या० टी० । तान्येवेन्द्रियाणि दर्शयन् यदर्थं गृहीत्वा गच्छति तदाह श्रोत्रमिति । श्रोत्रादीनि बाह्येन्द्रियाणि मनश्चान्तःकरणमधिष्ठायाश्रित्य शब्दादीन् विषयानयं जीव उपभुङ्क्ते ॥ ८ ॥

**उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणान्वितम्**
**विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥१०॥**

एवं देहगतं देहात् उत्क्रामन्तमिति । उत्क्रामन्तं परित्यजन्तं देहं पूर्वोपात्तं स्थितं वा देहे तिष्ठन्तं भुञ्जानं वा शब्दादींश्चोपलभमानं गुणान्वितं सुखदुःखमोहाद्यैः गुणैरन्वितमनुगतं संयुक्तमित्यर्थः एवम्भूतमप्येनमत्यन्तं दर्शनगोचरप्राप्तं विमूढा दृष्टादृष्टविषयभोगबलाकृष्टचेतस्तयानेकधा मूढा नानुपश्यन्त्यहो कष्टं वर्त्तत इत्यनुक्रोशति च भगवान् ये तु पुनः प्रमाणजनितज्ञानचक्षुषस्त एनं पश्यन्ति ज्ञानचक्षुषो विविक्तदृष्टय इत्यर्थः ॥ १० ॥

ब्या० टी० । शरीरमित्यादिश्लोके देहादात्मनोऽतिरेकमुक्त्वा श्रोत्रं चक्षुरित्यादौ स्वाभिलषिते विषये यथायथं करणानां प्रवर्त्तकत्वात् तेभ्योऽतिरिक्तश्चात्मेत्युक्तं तर्हि तमुत्क्रान्त्यादि कुर्वन्तं स्वरूपत्वात् किमिति सर्वे न पश्यन्तीत्याशङ्क्याह एवमिति । सन्निहिततमत्वेन दर्शनयोग्यमपि विषयपरवशादात्मानं सर्वे न पश्यन्तीति भगवतोऽनुक्रोशं दर्शयति एवंभूतमिति । तर्हि केषामात्मदर्शनं तदाह ये तु पुनरिति ॥ १० ॥

ब्या० टी० । ननु कार्य्यकारणसंघातव्यतिरेकेणैवम्भूतमात्मानं सर्वेऽपि किं न पश्यन्ति तत्राह उत्क्रामन्तमिति । उत्क्रामन्तं देहाद्देहान्तरं गच्छन्तं तस्मिन्नेव देहे स्थितं वा विषयान् भुञ्जानं वा गुणा-

न्वितमिन्द्रियादियुक्तं जीवं विमूढा नालोकयन्ति, ज्ञानमेव चक्षुर्येषां ते विवेकिनः पश्यन्ति ॥ १० ॥

**यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।**
**यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥११॥**

केचित्तु यतन्तः प्रयत्नं कुर्वन्तो योगिनश्च समाहितचित्ता एनं प्रकृतमात्मानं पश्यन्त्ययमहमस्मीति उपलभ्यन्ते आत्मनि स्वस्यां बुद्धाववस्थितं यतन्तोऽपि शास्त्रादिप्रमाणैरकृतात्मानोऽसंस्कृतात्मानः तपसेन्द्रियजयेन च दुश्चरितादनुपरता अशान्तदर्पाः प्रयत्नं कुर्वन्तो नैनं पश्यन्त्यचेतसोऽविवेकिनः ॥ ११ ॥

आ० टी० । ज्ञानचक्षुःशब्देन न्यायानुगृहीतं शास्त्रं ज्ञानसाधनमुक्तं तत्किमिदानीं शास्त्रमात्रेण न्यायानुगृहीतेनात्मानं पश्यन्ति नेत्याह केचित्त्विति । प्रयत्नः श्रवणमननात्मकः शास्त्रादिप्रमाणैर्यतन्तोऽपीति सम्बन्धः । असंस्कृतात्मत्वं प्रकटयति तपसेति । दुश्चरितादविरतिफलं कथयति अशान्तेति । अशुद्धबुद्धीनामविवेकिनां सदपि श्रवणादि न फलवदिति मत्वाह प्रयत्नमिति ॥ ११ ॥

स्वा० टी० । दुर्ज्ञेयश्चायं यतो विवेकिष्वपि केचित् पश्यन्ति केचिन्न पश्यन्तीत्याह यतन्त इति । यतन्तो ध्यानादिभिः प्रयतमाना योगिनः केचिदेनमात्मानमात्मनि देहेऽवस्थितं विविक्तं पश्यन्ति, शास्त्राभ्यासादिभिर्यत्नं कुर्वाणा अप्यकृतात्मानोऽविशुद्धचित्ता अतएवाचेतसो मन्दमतय एनं न पश्यन्ति ॥ ११ ॥

**यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।**
**यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥१२॥**

यत् पदं सर्वस्यावभासकमप्यग्न्यादित्यादिकं ज्योति-

नावभासते यत्प्राप्य मुमुक्षवः पुनःसंसाराभिमुखा न निवर्त्तन्ते यस्य च पदस्योपाधिभेदमनुविधीयमाना जीवा घटाकाशादय इवाकाशस्यांशास्तस्य पदस्य सर्वात्मत्वं सर्वव्यवहारास्पदत्वञ्च विवक्षुश्चतुर्भिः श्लोकैः विभूतिसंक्षेपमाह भगवान् यदेति। यदादित्यगतमादित्याश्रयं किन्तत् तेजो दीप्तिः प्रकाशो जगद्भासयते प्रकाशयत्यखिलं समस्तं यच्चन्द्रमसि यच्च शशभृति तत्तेजोऽवभासकं वर्त्तते यच्चाग्नौ हुतवहे तत्तेजो विद्धि विजानीहि मामकं मदीयं मम विष्णोस्तत् ज्योतिः। अथवा यदादित्यगतं तेजश्चैतन्यात्मकं ज्योतिश्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकं मदीयं मम विष्णोस्तत् ज्योतिरित्यादि। ननु स्थावरेषु जङ्गमेषु च तत्समानं चैतन्यात्मकं ज्योतिस्तत्र कथमिदं विशेषणं यदादित्यगतमित्यादि नैष दोषः सत्त्वाधिक्यादाधिक्योपपत्तेरादित्यादिषु हि सत्त्वमत्यन्तप्रकाशमत्यन्तभास्वरमतस्तत्रैवाविस्तरां ज्योतिरिति तद्विशिष्यते ननु तत्रैव तदधिकमिति यथा हि लोके तुल्येऽपि मुखसंस्थाने न काष्ठकुड्यादौ मुखमाविर्भवति आदर्शादौ तु स्वच्छे स्वच्छतरे तारतम्येनाविर्भवति तद्वत्॥ १२॥

आ॰ टी॰। अनन्तरश्लोकचतुष्टयस्य वृत्तानुवाददद्वारा तात्पर्यार्थमाह यत्पदमिति। जीवात्मत्वेन चिद्रूपत्वमुक्त्वा तदीयचैतन्येनादित्यादीनामवभासकत्वाच्च ब्रह्मणश्चिद्रूपत्वमित्याह यदादित्येति। चिद्रूपस्यैव ब्रह्मणः सर्वात्मकत्वप्रतिपादकत्वेन श्लोकं व्याचष्टे यदित्यादिना। आदित्यादौ तत्र तत्र स्थितं ब्रह्मचैतन्यज्योतिः सर्वावभासकमित्यर्थः। ब्रह्मणः सर्वज्ञत्वेन चिद्रूपत्वमत्र विवक्षितमिति व्याख्यान्तरमाह अथवेति। चैत-

न्यजज्योतिषः सर्वत्राविशेषादादित्यादिगतविशेषणमयुक्तमिति शङ्कते नन्विति । सर्वत्र सत्त्वेऽपि क्वचिदेवाभिव्यक्तिविशेषाद्विशेषणमिति परिहरति नैष दोष इति । तदेव प्रपञ्चयति आदित्यादिष्विति । सर्वत्र चैतन्यज्योतिषस्तुल्यत्वेऽपि क्वचिदेवाभिव्यक्त्या विशेषणोपपत्तिं दृष्टान्तेन स्पष्टयति यथाहीति ॥ १२ ॥

स्वा० टी० । तदेवं न तद्भासयते सूर्य इत्यादिना पारमेश्वरं परं धामोक्तं तत्प्राप्तानामपुनरावृत्तिरुक्ता तत्र संसारिणोऽभावमाशङ्क्य संसारिस्वरूपं देहादिव्यतिरिक्तं दर्शितं इदानीं तदेव पारमेश्वरं रूपमनन्तशक्तित्वेन निरूपयति यदित्यादिचतुर्भिः । आदित्यादिषु स्थितं यदनेकप्रकारं तेजो विश्वं प्रकाशयति तत् सर्वं तेजो मदीयमेव जानीहि ॥ १२ ॥

**गामाविश्य च भूतानि धारयाम्यहमोजसा ।**
**पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥ १३**

किञ्च गामिति । गां पृथिवीमाविश्य प्रविश्य धारयामि भूतानि जगदहमोजसा बलेन यद्बलं कामरागविवर्जितमैश्वरं जगद्विधारणाय पृथिव्यां प्रविष्टं येन गुर्वी पृथिवी नाधः पतति न विशीर्यते तथा च मन्त्रवर्णः येन द्यौरुग्रा पृथिवी च दृढेति सदाधार पृथिवीमित्यादिश्चातो गामाविश्य भूतानि चराचराणि धारयामीति युक्तमुक्तम् । किञ्च पृथिव्यां जाता ओषधीः सर्वा व्रीहियवाद्याः पुष्णामि पुष्टिमतीः रसास्वादमतीश्च करोमि सोमो भूत्वा रसात्मकः सोमः सर्वरसात्मको रसस्वभावः सर्वरसानामाकरः सोमः स हि सर्वा ओषधीः स्वात्मरसानुप्रवेशेन पुष्णाति ॥ १३ ॥

आ॰ टी॰। इतश्च सर्वात्मत्वं प्रकृतपदस्य युक्तमित्याह किञ्चेति। ईश्वरो हि पृथिवीदेवतारूपेण पृथिवीं प्रविश्य भूतगर्भितं जगदैश्वरेणैव बलेन बिभर्त्ति ततो गुर्व्वपि पृथिवी विदीर्य्य नाधःपततीत्यत्र प्रमाणमाह तथा चेति। परस्यैव हिरण्यगर्भात्मनावस्थानान्न मन्त्रयोरन्यपरतेति भावः, देवतात्मना द्यावापृथिव्योरुग्रत्वदृढ़त्वसामर्थ्यं तथापीश्वराय-त्तमेव स्वरूपधारणं तदपेक्षया दुर्बलत्वादिति द्रष्टव्यम्। ईश्वरस्य सर्वात्मत्वे हेत्वन्तरमाह किञ्चेति। रसात्मकसोमरूपतापत्तावपि कथमौषधीरीश्वरः सर्व्वाः पुष्णातीत्याशङ्क्याह सर्व्वेति॥ १३॥

स्वा॰ टी॰। किञ्च गामिति। गां पृथ्वीमोजसा बलेनाधिष्ठायाहमेव चराचराणि भूतानि धारयामि, अहमेव च रसमयः सोमो भूत्वा व्रीह्याद्यौषधीः सर्व्वाः संवर्द्धयामि॥ १३॥

**अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।**
**प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्॥१४॥**

किञ्च अहमिति। अहमेव वैश्वानर उदरस्थोऽग्निर्भूत्वायमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते इत्यादिश्रुतेर्वैश्वानरः सन् प्राणिनां प्राणवतां देहमाश्रितः प्रविष्टः प्राणापानसमायुक्तः प्राणापानाभ्यां समायुक्तः संयुक्तः पचामि पक्तिं करोमि अन्नं चतुर्विधं चतुःप्रकारं अन्नमशनं भोज्यञ्च भक्ष्यञ्चोष्यं लेह्यञ्च भोक्ता वैश्वानरोऽग्निर्भोज्यमन्नं सोमस्तदेतदुभयमग्नी सोमौ सर्वमिति पश्यतोऽन्नदोषलेपो न भवति॥ १४॥

आ॰ टी॰। भगवतः सर्वात्मत्वे हेत्वन्तरमाह किञ्चेति। अहमेवेत्यहंशब्देन परो लक्ष्यते भूत्वा पचामीति सम्बन्धः। परस्यैव जाठरात्मना स्थितौ श्रुतिं प्रमाणयति अयमिति। बाह्यं भौमाग्निं व्यावर्त्तयति। योऽयमिति। देहाभ्यन्तरारम्भकत्वतीयं भूतं व्यवच्छिनत्ति

येनेति। जाठरात्मना परः स्थितश्चेत्तस्य देहाश्रितत्वं सिद्धमिति न पृथग्वक्तव्यमित्याशङ्क्य पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेदेति श्रुतिमाश्रित्याह प्रविष्ट इति। परस्य जाठरात्मनोऽन्नपाके सहकारिकारणमाह प्राणेति। संयुक्तत्वं संधुक्षितत्वम्। अन्नस्य चातुर्विध्यं प्रकटयति भोज्यमिति। भोक्तरि वैश्वानरमिति दृष्टिर्भोज्ये सोमदृष्टिरेवं भोक्तृभोज्यरूपं सर्वं जगदग्निसोमात्मना भुक्तिकाले ध्यायतो भोक्तुरन्नकृतो दोषो नेति प्रासङ्गिकं सफलं ध्यानं दर्शयति भोक्तेति ॥ १४ ॥

स्वा॰ टी॰। किञ्च अहमिति। वैश्वानरो जाठराग्निर्भूत्वा प्राणिनां देहमन्तः प्रविश्य प्राणापानाभ्याञ्च तदुद्दीपकाभ्यां सहितः प्राणिभिर्भुक्तं भक्ष्यं भोज्यं लेह्यं चोष्यं चेति चतुर्विधमन्नं पचामि, तत्र यद्दन्तैरवखण्ड्यावखण्ड्य भक्ष्यते अपूपादि तद्भक्ष्यं, यत्तु केवलं जिह्वया विलोड्य निगीर्य्यते पायसादि तद्भोज्यं, यज्जिह्वायां निःक्षिप्य रसास्वादेन क्रमशो निगीर्य्यते द्रवीभूतं गुड़ादि तल्लेह्यं, यत्तु दंष्ट्राभिर्निष्पीड्य रसांशं निगीर्य्यावशिष्टं त्यज्यते इक्षुदण्डादि तच्चोष्यमिति चतुर्विधस्य भेदः ॥ १४ ॥

**सर्वस्य चाहं हृदि सन्निविष्टो**
**मत्तः स्मृतिर्ज्ञानमपोहनञ्च।**
**वेदैश्च सर्वैरहमेव वेद्यो**
**वेदान्तकृद्वेदविदेव चाहम् ॥ १५ ॥**

किञ्च सर्वेति। सर्वस्य प्राणिजातस्याहमात्मा सन् हृदि बुद्धौ सन्निविष्टोऽतो मत्तः आत्मनः सर्वप्राणिनां स्मृतिर्ज्ञानञ्च तदपोहनञ्च येषां पुण्यकर्मिणाञ्च पुण्यकर्मानुरोधेन ज्ञानस्मृती भवतस्तथा पापकर्मिणां पापकर्मानुरूपेण स्मृतिज्ञानयोरपोहनञ्च अपायनमपगमनञ्च वेदैश्च सर्वैरहमेव च

परमात्मा वेद्यो वेदितव्यः वेदान्तकृत् वेदान्तार्थसम्प्रदायकृदित्यर्थः वेदविद्वेदार्थविदेव चाहम् ॥ १५ ॥

क्रा॰ टी॰। इतश्च सर्वात्मत्वेन सर्वव्यवहारास्पदत्वमीश्वरस्येत्याह किञ्चेति। प्राणिजातं ब्रह्मादिपुत्तिकान्तमात्मतया बुद्धौ सन्निविष्टत्वं तद्गुणदोषाणामभेदेन दृष्टृत्वमतो बुद्धिमध्यस्थगुणदोषद्रष्टृत्वादिति यावत्। मत्तः सर्वकर्माध्यक्षाज्जगद्यन्त्रसूत्रधारादित्यर्थः। प्राणिनां स्मृतिज्ञानयोस्तदपायस्य च भगवदधीनत्वे भगवतो वैषम्यं स्यादित्याशङ्क्याह येषामिति। स्मृतिर्जन्मान्तरादावनुभूतस्य परामर्शः देशकालस्वभावविप्रकृष्टस्यापि ज्ञानमनुभवः, धर्माधर्माभ्यां विचित्रं कार्य्यं कुर्वतो नेश्वरस्य वैषम्यमिति भावः। वेदवेद्यं परं ब्रह्म भगवतोऽन्यदिति शङ्कां वारयन्ति वेदैरिति। वेदात्मनां पौरुषेयत्वं परिहरति वेदेति। तदर्थसम्प्रदायप्रवर्त्तकत्वार्थं तदर्थयाथातथ्यज्ञानवत्त्वमाह वेदार्थेति ॥ १५ ॥

स्वा॰ टी॰। किञ्च सर्वस्येति। सर्वस्य प्राणिजातस्य हृदि सम्यगन्तर्यामिरूपेण प्रविष्टोऽहं अतश्च मत्त एव हेतोः प्राणिमात्रस्य पूर्वानुभूतार्थविषया स्मृतिर्भवति ज्ञानञ्च विषयेन्द्रियसंयोगजं भवति अपोहनञ्च तयोः प्रमेयो भवति, वेदैश्च सर्वैस्तत्तद्देवतारूपेणाहमेव वेद्यः, वेदान्तकृत् तत्सम्प्रदाय प्रवर्त्तको ज्ञानदो गुरुरहमित्यर्थः, वेदविदेव च वेदार्थविदप्यहमेव ॥ १५ ॥

**द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।**
**क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥१६॥**

भगवत ईश्वरस्य नारायणाख्यस्य विभूतिसंक्षेप उक्तो विशिष्टोपाधिकृतः यदादित्यगतं तेज इत्यादिना अथाधुना तस्यैव क्षराक्षरोपाधिप्रविभक्ततया निरुपाधिकस्य केवलस्य स्वरूपनिर्दिधारयिषयोत्तरश्लोका आरभ्यन्ते तत्र सर्वमेवातीतानागतानन्तराध्यायार्थजातं त्रिधा राशीकृत्याह द्वाविमाविति। द्वौ इमौ पृथग्राशीकृतौ पुरुषौ इत्यु-

न्यते लोके संसारे चरश्च चरतीति चरः विनाश्येको राशिरपरः पुरुषोऽक्षरस्तद्विपरीतो भगवतो मायाशक्तिः क्षराख्यस्य पुरुषस्योत्पत्तिवीजमनेकसंसारिजन्तुकामकर्मादिसंस्काराश्रयोऽक्षरः पुरुष उच्यते, कौ तौ पुरुषावित्याह स्वयमेव भगवान् क्षरः सर्वाणि भूतानि समस्तं विकारजातमित्यर्थः, कूटस्थः कूटो राशिरिव स्थितः अथवा कूटो मायावञ्चना जिह्म कुटिलता वेति पर्य्यायाः अनेकमायावञ्चनादिप्रकारेण स्थितः कूटस्थः संसारवीजानन्त्यान्न क्षरतीत्यक्षर उच्यते ॥ १६ ॥

व्या० टी० । उत्तरश्लोकानां तात्पर्य्यं वक्तुं वृत्तं कीर्त्तयति भगवत इति । विशिष्टोपाधिरादित्यादिः । संप्रत्यध्यायसमाप्तेरुत्तरसन्दर्भस्य तात्पर्य्यमाह अथेति । न केवलं निरुपाधिकात्मस्वरूपं निर्द्धारणायोत्तरग्रन्थः किन्तु सर्व्वस्यैव गीताशास्त्रस्य अर्थनिर्णयार्थमित्याह तत्रेति । क्षराक्षरोपाधिभ्यां परमात्मना च राशित्रयमुक्तेन सर्व्वात्मत्वेनाशुद्ध्यादिदोषप्रसक्तावुक्तं द्वाविमौ इति । पुरुषोपाधित्वात् पुरुषत्वं न साक्षादिति विवक्षितत्वाह पुरुषाविति । परं पुरुषं व्यावर्त्तयति भगवत इति । तत्र कार्य्यलिङ्गकमनुमानं सूचयति क्षराख्यस्येति । मायाशक्तिं विना भोक्तॄणां कर्म्मादिसंस्कारादेर्शक्तकार्य्योत्पत्तिरित्याशङ्क्य तस्य निमित्तत्वेऽपि मायाशक्तिरुपादानमिति मत्वाह अनेकेति । कामकर्म्मादीन्यादिशब्देन ज्ञानं गृह्यते प्रकृतिं पुरुषं चैवेति प्रकृतयोरिह ग्रहणमिति शङ्कामाकाङ्क्षाद्वारा निवारयति कौ ताविति । कूटशब्दार्थमुक्त्वा तेन स्थितस्य कूटस्थेति । संपिण्डितमर्थमाह अनेकेति । तस्य कथमक्षरत्वं विना ब्रह्मज्ञानमनाशादित्याह संसारेति ॥ १६ ॥

स्वा० टी० । इदानीं तद्धाम परमं ममेति यदुक्तं स्वकीयं सर्व्वोत्तमत्वं तत् दर्शयति द्वाविति त्रिभिः । क्षरश्चाक्षरश्चेति द्वाविमौ पुरुषौ लोके प्रसिद्धौ । तावेवाह तत्र क्षरः पुरुषो नाम सर्व्वाणि भूतानि

ब्रह्मादिस्थावरान्तानि शरीराणि, अविवेकिलोकस्य शरीरेष्वेव पुरुषत्व-प्रसिद्धेः। कूटो राशिः शिलाराशिः पर्व्वत इव देहेषु नश्यत्स्वपि निर्व्विकारतया तिष्ठतीति कूटस्थश्चेतनो भोक्ता स त्वक्षरः पुरुष उच्यते विवेकिभिः ॥ १६ ॥

## उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।
## यो लोकत्रयमाविश्य बिभर्त्त्यव्यय ईश्वरः ॥१७॥

आभ्यां चराचराभ्यां विलक्षणः चराचरोपाधिद्वयदोषेणास्पृष्टो नित्यशुद्धबुद्धमुक्तस्वभावः उत्तम इति। उत्तमः उत्कृष्टतमः पुरुषस्त्वन्यः अत्यन्तविलक्षणः आभ्यां परमात्मेति। परमश्चासौ देहाद्यविद्याकृतात्मभ्यः अन्नमयादिभ्यः पञ्चकोशेभ्यः आत्मा च सर्व्वभूतानां प्रत्यक्‌चेतन इत्यतः परमात्मेत्युदाहृतः उक्तो वेदान्तेषु स एव विशिष्यते यो लोकत्रयं भूर्भुवःस्वराख्यं स्वकीयया चैतन्यबलशक्त्याविश्य बिभर्त्ति स्वरूपसद्भावमात्रेण बिभर्त्ति धारयत्यव्ययो नाव्ययो विद्यत इत्यव्ययः ईश्वरः सर्व्वज्ञो नारायणाख्य ईशनशीलः यथाव्याख्यातस्येश्वरस्य पुरुषोत्तम इत्येतन्नाम प्रसिद्धम् ॥ १७ ॥

आ° टी°। कार्य्यकारणाख्यौ राशी दर्शयित्वा राश्यन्तरं दर्शयति आभ्यामिति। वैलक्षण्यफलमाह चरेति। उपाधिद्वयकृतगुणदोषास्पर्शे फलितमाह नित्येति। आभ्यां चराचराभ्यामिति यावत्, उत्तमोऽन्य इति पदद्वयं वस्तुतः सर्व्वथैव चराचरात्मत्वाभावदृष्ट्यर्थम्। जड़वर्गस्यान्यत्वकृतं स्वातन्त्र्यं निरस्यति स एवेति। लोकत्रयमित्युपलक्षणं सर्व्वं जगदपि विवक्षितञ्चैतन्यमेव बलं तत्र शक्तिर्मायां तयेति यावत्। जगद्धारणे परस्य व्यापारान्तरं वारयति स्वरूपेति। न चास्यान्यो धारयिता स्वतोऽचलत्वादित्याह अव्यय इति। संयुक्तमेतत् क्षरमक्षरञ्च व्यक्ताव्यक्तं भरते विश्वमीश इति। श्रुत्यर्थं गृहीत्वाह ईश्वर

इति। किञ्च लोकवेदयोर्भगवतो नामप्रसिद्ध्या विलक्षणप्रपञ्चत्वमित्याह यथेति ॥ १७ ॥

स्वा० टी०। यदर्थमेतौ लक्षितौ तदाह उत्तम इति। एताभ्यां क्षराक्षराभ्यामन्यो विलक्षणस्तूत्तमः पुरुषः। वैलक्षण्यमेवाह परमश्चासावात्मा चेति उदाहृत उक्तः श्रुतिभिः आत्मत्वेन क्षरादचेतनाद्विलक्षणः परमत्वेनाक्षराच्च भोक्तुर्विलक्षण इत्यर्थः। परमात्मत्वमेव दर्शयति यो लोकत्रयमिति। य ईश्वर ईशनशीलः अव्ययश्च निर्विकार एव सन् लोकत्रयमाविश्य बिभर्त्ति पालयति ॥ १७ ॥

**यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः।**
**अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः॥१८**

तस्य नामनिर्वचनप्रसिद्धार्थवत्त्व नाम्नो दर्शयन्निरतिशयोऽहमीश्वर इत्यात्मानं दर्शयति भगवान् यस्मादिति। यस्मात् क्षरमतीतोऽहं संसारमायावृक्षमश्वत्थाख्यमतिक्रान्तोऽहमक्षरादपि संसारवृक्षबीजभूतादपि चोत्तम उत्कृष्टतम ऊर्द्ध्वतमो वा अतः क्षराक्षराभ्यामुत्तमत्वादस्मि भवामि लोके वेदे च प्रथितः प्रख्यातः पुरुषोत्तम इत्येवं मां भक्तजना विदुः कवयः काव्यादिषु च पुरुषोत्तम इत्यनेनाभिधानेनाभिगृणन्ति ॥ १८ ॥

आ० टी०। अश्वकर्णादिवदस्य नाम्नो रूढत्वादर्थविशेषाभावाज्जगत्वतोऽपि लौकिकेश्वरवदीश्वरत्वं सातिशयमिति नेत्याह तस्येति। यस्मादित्यस्यापेक्षितं निक्षिपति अत इति। उत्तमः पुरुष इति वाक्यशेषः ॥१८॥

स्वा० टी०। एवंभूतं पुरुषोत्तमत्वमात्मनो नामनिर्वचनेन दर्शयति यस्मादिति। यस्मात् क्षरं जड़वर्गमतिक्रान्तोऽहं नित्यमुक्तत्वात् अक्षराच्चेतनवर्गादप्युत्तमश्च नियन्तृत्वात् अतो लोके वेदे च पुरुषोत्तम इति प्रथितः प्रख्यातोऽस्मि। तथा च श्रुतिः, सवा अयमात्मा सर्वस्य वशी सर्वस्येशानः सर्वमिदं प्रशास्तीत्यादि ॥ १८ ॥

**यो मामेवमसम्मूढो जानाति पुरुषोत्तमम्।**
**स सर्वविद्भजति मां सर्वभावेन भारत!॥१९॥**

अथेदानीं यथानिरुक्तमात्मानं यो वेद तस्येदं फलमुच्यते यो मामिति। यो मामीश्वरं यथोक्तविशेषणमेवं यथोक्तेन प्रकारेणासंमूढः संमोहवर्जितः सन् जानात्ययमहमस्मीति पुरुषोत्तमं स सर्ववित् सर्वात्मना सर्वं वेत्तीति सर्वज्ञः सर्वभूतस्थं भजति मां सर्वभावेन सर्वात्मचिन्तया हे भारत!॥ १९॥

आ० टी०। आत्मनोऽपपञ्चत्वं ज्ञानफलोक्त्या स्तौति यद्येति। यथोक्तविशेषणं सर्वात्मत्वादिविशेषणोपेतमिति यावत्। क्षराक्षरातीतत्वं यथोक्तप्रकारः संमोहवर्जितः संमोहेन देहादिष्वात्मात्मीयत्वबुद्ध्या रहित इत्यर्थः। भगवन्तं जानतः सर्वविक्त्वं तस्यैव सर्वात्मना मेयत्वादित्याह स सर्वविदिति। सर्वात्मनि मय्येवासक्तचित्तत्वेनेत्यर्थः॥ १९॥

स्वा० टी०। एवंभूतेश्वरज्ञातुः फलमाह य इति। एवं निरुक्तप्रकारेणासम्मूढो निश्चितमतिः सन् यो मां पुरुषोत्तमं जानाति स सर्वभावेन सर्वप्रकारेण मामेव भजति ततश्च सर्ववित् सर्वज्ञो भवति॥१९॥

**इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ।**

**एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत!२०॥**

**इति श्रीमहाभारते शतसाहस्र्यां संहितायां**
**वैयासिक्यां भीष्मपर्वणि श्रीभगवद्गीतासूप-**
**निषत्सु ब्रह्मविद्यायां योगशास्त्रे श्री-**
**कृष्णार्जुनसंवादे पुरुषोत्तम-**
**योगो नाम पञ्चदशोऽध्यायः।**

अस्मिन्नध्याये भगवत्तत्त्वज्ञानं मोक्षफलमुक्त्वाऽथेदानीं तत् स्तौति इति गुह्यतममिति । इत्येतत् गुह्यतमं गोप्यतमं अत्यन्तं रहस्यमित्येतत् किन्तच्छास्त्रं यद्यपि गीताख्यं समस्तं शास्त्रमुच्यते तथाप्ययमेवाध्यायः इह शास्त्रमित्युच्यते स्तुत्यर्थं प्रकरणात् सर्वो हि गीताशास्त्रार्थोऽस्मिन्नध्याये समासेनोक्तो न केवलं सर्वश्च वेदार्थ इह परिसमाप्तो यस्तं वेद स वेदवित् वेदैश्च सर्वैरहमेव वेद्य इति चोक्तमिदमुक्तं कथितं मया हे अनघ । एतच्छास्त्रं यथादर्शितार्थं बुद्ध्वा बुद्धिमान् स्याद्भवेत् नान्यथा कृतकृत्यश्च भारत ! कृतं कृत्यं कर्त्तव्यं येन स कृतकृतत्रः विशिष्टजन्मप्रसूतेन ब्राह्मणेन यत् कर्त्तव्यं तत् सर्वं भगवत्तत्त्वे विदिते कृतं भवेदित्यर्थः न चान्यथा कर्त्तव्यं परिसमाप्यते कस्यचिदितरभिप्रायः सर्वं कर्माखिलं पार्थ ! ज्ञाने परिसमाप्यते इति चोक्तं एतद्धि जन्मसामग्र्यं ब्राह्मणस्य विशेषतः प्राप्यैतत् कृतकृतत्रो हि द्विजो भवति नान्यथा इति च मानवं वचनं यत एतत् परमार्थतत्त्वमतः श्रुतवानसि अतः कृतार्थस्त्वं भारतेति ॥ २० ॥

इति पञ्चदशोऽध्यायः ।

आ० टी० । अध्यायार्थमनूद्योपसंहारश्लोकमवतारयति अस्मिन्निति । सर्वस्यां गीतायां शास्त्रशब्दे वक्तव्ये कथमस्मिन्नध्याये तत्प्रयोगः स्यादित्याशङ्क्याह यद्यपीति । सन्निहितमध्यायं स्तोतुमपि कुतस्तत्र शास्त्रशब्दस्तदर्थाभावात्तत्राह सर्वो हीति । गीताशास्त्रार्थस्य सर्वस्यात्र संक्षिप्तत्वादेव केवलं शास्त्रशब्दो न भवति किन्तु वेदार्थस्यापि सर्वस्यात्र समाप्तेर्युक्तं शास्त्रपदमित्याह नेति । तत्र गमकमाह यस्तमिति । भग-

ৰস্তত্ত্বজ্ঞানে কৃতকৃত্যতেত্যেতদুপপাদয়তি বিশিষ্টেতি। নান্যথেত্যুক্তং প্রপঞ্চয়তি ন চেতি। অত্যপি তত্ত্বজ্ঞানে কর্ম্মণাং কর্ত্তব্যত্বাৎ কর্ত্তব্যসমাপ্তিরিত্যাশঙ্ক্যাহ বহিমিতি। তত্ত্বজ্ঞানে কৃতার্থতেতি তত্র মনোরপি সম্মতিমাহ এতদ্ধীতি। ভারতেতি সম্বোধনতাৎপর্য্যমাহ যত ইতি। তদনেনাত্মনো দেহাদ্যতিরিক্তত্বং চিদ্রূপত্বং সর্ব্বাত্মত্বং কার্য্যকারণবিনির্ম্মুক্তত্বেনাপ্রপঞ্চত্বং তস্যাখণ্ডৈকরসব্রহ্মতত্ত্বজ্ঞানাদশেষপুরুষার্থপরিসমাপ্তিরিত্যুক্তম্ ॥ ২০ ॥

ইতি পঞ্চদশোঽধ্যায়ঃ।

অধ্যায়ার্থমুপসংহরতি ইতীতি। ইত্যনেন সংক্ষেপপ্রকারেণ গুহ্যতমমতিরহস্যং সংপূর্ণং শাস্ত্রমেব ময়োক্তং ন তু পুনর্বিংশতিশ্লোকমধ্যায়মাত্রং হে অনঘ! ব্যসনশূন্য অতএবৈতন্মদুক্তং বুদ্ধা বুদ্ধিমান্ সম্যক্জ্ঞানী স্যাৎ কৃতকৃত্যশ্চ স্যাৎ যোঽপি কোঽপি হে ভারত! ত্বং কৃতকৃত্যোঽসীতি কিং বক্তব্যমিতিভাবঃ। সংসারশাখিনং ছিত্বা স্পষ্টং পঞ্চদশে বিভুঃ। পুরুষোত্তমযোগাখ্যে পরং পদমুপাদিশৎ ॥ ২০ ॥

ইতি পঞ্চদশোঽধ্যায়ঃ।

---

# ষোড়শোঽধ্যায়ঃ।

---

## শ্রীভগবানুবাচ।

**অভয়ং সত্ত্বসংশুদ্ধির্জ্ঞানযোগব্যবস্থিতিঃ।**
**দানং দমশ্চ যজ্ঞশ্চ স্বাধ্যায়স্তপ আর্জ্জবম্ ॥১॥**

দৈব্যাসুরী রাক্ষসী চেতি প্রাণিনাং প্রকৃতয়ো নবমেঽধ্যায়ে সূচিতাস্তাসাং বিস্তারপ্রদর্শনায়াভয়ং সত্ত্বসংশুদ্ধিরি-

त्यादिरध्याय आरभ्यते, तत्र संसारमोक्षाय दैवीप्रकृतिर्निर्बन्धनायासुरी राक्षसी चेति दैव्यादानाय प्रदर्शनं क्रियते इतरयोः परिवर्जनाय श्रीभगवानुवाच अभयमिति। अभयमभीरुता सत्त्वसंशुद्धिः सत्त्वस्यान्तःकरणस्य संव्यवहारेषु परवञ्चनमायानृतादिपरिवर्जनं शुद्धभावेन व्यवहार इत्यर्थः, ज्ञानयोगव्यवस्थितिः ज्ञानं शास्त्रत आचार्यतश्चात्मादिपदार्थानामवगमोऽवगतानामिन्द्रियाद्युपसंहारेणैकाग्रतया स्वात्मसंवेद्यतापादनं योगस्तयोर्ज्ञानयोगयोर्व्यवस्थितिः व्यवस्थानं तन्निष्ठता एषा प्रधाना दैवी सात्त्विकी सम्पत् यत्र च येषामधिकृतानां या प्रकृतिः सम्भवति सात्त्विकी सोच्यते, दानं यथाशक्ति संविभागोऽन्नादीनां, दमश्च बाह्यकारणानां उपशमोऽन्तःकरणस्योपशमं शान्तिं वक्ष्यति, यज्ञश्च श्रौतोऽग्निहोत्रादिः स्मार्त्तश्च देवयज्ञादिः, स्वाध्याय ऋग्वेदाद्यध्ययनमदृष्टार्थं, तपो वक्ष्यमाणं शारीरादि, आर्जवमृजुत्वं सर्वदा ॥ १ ॥

आ॰ टी॰। व्यवहितेन सम्बन्धं वदन्नध्यायान्तरमवतारयति दैवीति। दैवी सूचिता राक्षसीमासुरीञ्चैव प्रकृतिं मोहिनीमित्यादाविति शेषः। प्रकृतीनां विस्तरेण दर्शनं कुत्रोपयोगीत्याशङ्क्य विभज्योपयोगमाह संसारेति। अतीते चाध्याये कर्मानुबन्धीन्यधश्च मूलान्यनुसन्ततानीत्यत्र कर्मव्यङ्ग्या वासनाः संसारस्यावान्तरमूलत्वेनोक्तास्ता मनुष्यदेहे प्राग्भवीयकर्मानुसारेणाभ्युज्जृम्भमाणाः सात्त्विकादिभेदेन दैव्यादिप्रकृतित्रयत्वेन विभक्ता व्याविर्भक्तीर्षुर्भगवानुक्तवानित्याह भगवानिति। अभीरुता शास्त्रोपदिष्टेऽर्थे सन्देहं हित्वानुष्ठाननिष्ठत्वं परवञ्चना परस्य व्याजेन वशीकरणं माया हृदयेऽन्यथा कृत्वा बहिरन्यथा व्यवहरणं अनृतमयथादृष्टं कथनमादिपदेन विप्रलम्भविभ्रमादिग्रहः।

उक्तमर्थं संक्षिप्याह अथुक्ते ति। एषेत्यभयाद्या ज्ञानादिस्थित्यन्ता त्रि- धोक्ते ति यावत्। तामेव सात्त्विकीं प्रकृतिं प्रकटयति यत्रे ति। ज्ञाने कर्मणि वाधिकृतानामभीरुताद्या या प्रकृतिः सा तेषान्तत्र सात्त्विकी सम्पदित्यर्थः। महाभाग्यानामत्युत्तमा दैवी सम्पदुक्ता संपति सर्वेषां यथासम्भवं सम्पदं व्यपदिशति दानमिति। बाह्यकरणविशेषणे कारण- माह अन्तःकरणस्येति। देवयज्ञादिरित्यादिशब्देन पितृयज्ञो भूतयज्ञो मनुष्ययज्ञश्चे ति सङ्गृहम्॥ १॥

स्वा॰ टी॰। आसुरीं सम्पदं त्यक्त्वा दैवीमेवाश्रिता नराः। मुच्यन्त इति निर्णेतुं तद्विवेकोऽथ षोड़शे॥ पूर्वाध्यायान्ते एतद्बुद्धा बुद्धिमान् स्यात् कृतकृत्यश्च भारतेत्युक्तं तत्र क एतत्तत्त्वं बुध्यते को वा न बुध्यत इत्यपेक्षायां तत्त्वज्ञानेऽधिकारिणोऽनधिकारिणश्च विवे- कार्थं षोड़शाध्यायस्यारम्भः। निरूपिते हि कार्य्यार्थे चाधिकारि- जिज्ञासा भवति तदुक्तं भट्टैः, भारो यो येन वोढ़व्यः स प्रागान्दोलितो यदा। तदा कस्तस्य वोढ़े ति शक्यं कर्त्तुं निरूपणमिति। तत्राधि- कारिविशेषणभूतां दैवीं सम्पदमाह अभयमिति त्रिभिः। अभयं भया- भावः, सत्त्वस्य चित्तस्य संशुद्धिः सुप्रसन्नता, ज्ञानयोगे आत्मज्ञानो- पाये व्यवस्थितिः परिनिष्ठा, दानं स्वभोज्यस्यान्नादेर्यथोचितसंविभागः, दमो बाह्येन्द्रियसंयमः, यज्ञो यथाधिकारं दर्शपौर्णमासादि, स्वा- ध्यायो ब्रह्मयज्ञादिः, तप उत्तराध्याये वक्ष्यमाणं शारीरादि, आर्जव- मवक्रता॥ १॥

**अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम्।**
**दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम्॥२॥**

किञ्च अहिंसेति। अहिंसा अहिंसनं प्राणिनां पीड़ाव- र्जनं, सत्यमप्रियानृतवर्जनं यथाभूतार्थवचनं, अक्रोधः परै- राक्रुष्टस्याभिहतस्य वा प्राप्तस्य क्रोधस्योपशमनं, त्यागः सन्न्यासः पूर्वं दानस्योक्तत्वात्, शान्तिरन्तःकरणस्योपशमः,

अपैशुनमपिशुनता परस्मै पररन्ध्रप्रकटीकरणं पैशुनन्तद्-भावोऽपैशुनं, दया भूतेषु दुःखितेषु, अलोलुप्त्वमिन्द्रियाणां विषयसन्निधावविक्रिया, मार्दवं मृदुता अक्रौर्य्यं ह्रीर्लज्जा, अचापलमसति प्रयोजने वाक्पाणिपादादीनामव्यापा-रयितृत्वम् ॥ २ ॥

आ॰ टी॰ । ब्रह्मयज्ञस्य स्वाध्यायेन पृथक्करणाद्दैवीं सम्पदमभि-जातस्य विशेषणान्तराणि दर्शयति किञ्चेति । त्यागशब्देन यागदानं क्षमाचोच्यते तत्राह पूर्वमिति । लज्जाऽकार्य्यनिवृत्तिहेतुगर्हानिमित्ता मनोवृत्तिः ॥ २ ॥

स्वा॰ टी॰ । किञ्च अहिंसेति । अहिंसा परपीडावर्जनं, सत्यं यथादृष्टार्थभाषणं, अक्रोधस्ताडितस्यापि चित्ते क्रोधानुत्पत्तिः, त्याग औदार्यं शान्तिश्चित्तोपरतिः, पैशुन परोक्षे परदोषप्रकाशनं तद्वर्जन-मपैशुनं, भूतेषु दीनेषु दया, अलोलुपत्वं लोभाभावः अवर्णलोप-श्छान्दसः, मार्दवं मृदुत्वं अक्रूरता, ह्रीरकार्य्यप्रवृत्तौ लोकलज्जा, अचा-पलं व्यर्थक्रियाराहित्यम् ॥ २ ॥

**तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ।**
**भवन्ति सम्पदं दैवीमभिजातस्य भारत ! ॥ ३ ॥**

किञ्च तेज इति । तेजः प्रागल्भ्यं न त्वक्गता दीप्तिः, क्षमा आक्रुष्टस्य ताडितस्य वान्तर्विक्रियानुत्पत्तिः उत्प-न्नायां विक्रियायां प्रशमनं अक्रोधः इत्यवोचाम इत्थं क्षमायाः अक्रोधस्य च विशेषः, धृतिर्देहेन्द्रियेष्ववसादं प्राप्तेषु तस्य प्रतिषेधकोऽन्तःकरणवृत्तिविशेषो येनोत्तम्भितानि करणानि देहश्च नावसीदन्ति, शौचं द्विविधं मृज्जलाभ्यां कृतवाह्यमाभ्यन्तरञ्च मनोबुद्ध्योर्नैर्मल्यं मायारागादिका-

लुप्याभावः एवं द्विविधं शौचं, अद्रोहः परजिघांसाभावोऽहिंसनं, नातिमानितात्यर्थं मानोऽतिमानः स यस्य विद्यते सोऽतिमानी तद्भावोऽतिमानिता आत्मनः पूज्यतातिशयभावनाभाव इत्यर्थः, भवन्त्यभयादीन्येतदन्तानि सम्पदमभिजातस्य किं विशिष्टां संपदं दैवीं देवानां सम्पदं तामभिलक्ष्य जातस्य दैवीविभूत्यर्हस्य भाविकल्याणस्येत्यर्थो हे भारत ! ॥ ३ ॥

आ० टी० । दैवी सम्पदं प्राप्तस्य विशेषणान्तराण्यपि सन्तीत्याह किञ्चेति । व्यावर्त्यं कीर्त्तयति नेति । अध्यात्माधिकारादिति शेषः । क्षमाक्रोधयोरेकार्थत्वेन पौनरुक्त्यमाशङ्क्य परिहरति उत्पन्नायामिति । तयोरेवं विशेषाच्च पौनरुक्त्यं फलतीत्याह इत्यर्थमिति । वृत्तिविशेषमेव विशदयति येनेति । शौचस्य द्वैविध्यमेव प्रकटयति मृज्जलेत्यादिना । नैर्मल्यमेव स्फोरयति मायेति । उक्तमुपसंहरति एवमिति । अतिमानित्वभावमेव व्यनक्ति आत्मन इति । कस्यैतानि विशेषणानीत्यपेक्षायामाह भवन्तीति । साधकस्य मनुष्यदेहस्यैव कथं दैवीं सम्पदमभिलक्ष्य जातत्वमित्याशङ्क्याह दैवीमिति ॥ ३ ॥

स्वा० टी० । किञ्च तेज इति । तेजः प्रागल्भ्यं, क्षमा परिभवादिषूत्पद्यमानेषु क्रोधप्रतिबन्धः, धृतिर्दुःखादिभिरवसादे चित्तस्य स्थिरीकरणं, शौचं बाह्याभ्यन्तरशुद्धिः, अद्रोहो जिघांसाराहित्यं, अतिमानिता आत्मन्यतिपूज्यत्वाभिमानस्तदभावो नातिमानिता, एतान्यभयादीनि षड्विंशतिप्रकाराणि दैवीं सम्पदमभिजातस्य भवन्ति देवयोग्यां सात्त्विकीं सम्पदमभिलक्ष्य तदाभिमुख्येन जातस्य भाविकल्याणस्य पुंसो भवन्तीत्यर्थः ॥ ३ ॥

# दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ।
# अज्ञानं चाभिजातस्य पार्थ ! सम्पदमासुरीम् ॥४॥

अथेदानीमासुरी सम्पदुच्यते दम्भो धर्मध्वजित्वं, दर्पो धनस्वजनादिनिमित्त, उत्सेकोऽभिमानः पूर्वोक्तः क्रोधश्च, पारुष्यमेव परुषवचनं यथाकाणञ्चक्षुष्मान्विरूपं रूपवान् हीनाभिजनमुत्तमाभिजन इत्यादि अज्ञानञ्चाविवेकज्ञानं मिथ्याज्ञानं कर्त्तव्याकर्त्तव्यादिमिथ्याप्रत्ययविषयं अभिजातस्य पार्थ ! किमभिजातस्येत्याह असुराणां सम्पदासुरी तामभिजातस्येत्यर्थः ॥ ४ ॥

आ॰ टी॰। आदेयत्वेन दैवीं सम्पदमुक्त्वा हेयत्वेनासुरीं सम्पदमाह दम्भ इति। उत्सेको मदो महदवधीरणे हेतुः, आत्मन्युत्कृष्टत्वाध्यारोपोऽतिमानः, क्रोधस्तु कोपापरपर्य्यायः। स्वपरापकारप्रकृतिर्नेत्रादिविकारलिङ्गोऽन्तःकरणवृत्तिविशेषः परुषो निष्ठुरः प्रत्यक्षरूक्षवाक् तस्य भावः पारुष्यमज्ञानाद्युदाहरति यथेति। तामभिजातस्य दम्भादीन्यज्ञानान्तानि भवन्ति इत्यनुषज्यते ॥ ४ ॥

स्वा॰ टी॰। आसुरीं सम्पदमाह दम्भ इति। दम्भो धर्म्मध्वजित्व, दर्पो धनविद्यादिनिमित्तं चित्तस्यौत्सुक्यं, अभिमानो व्याख्यात एव, क्रोधः प्रसिद्धः पारुष्यं निष्ठुरत्वं, अज्ञानमविवेकः, आसुरीमित्युपलक्षणं असुराणां राक्षसानाञ्च या सम्पत्तिस्तामभिलक्ष्य जातस्यैतानि दम्भादीनि भवन्ति ॥ ४ ॥

**दैवी सम्पद्विमोक्षाय निबन्धायासुरी मता।**
**मा शुचः सम्पदं दैवीमभिजातोऽसि पाण्डव ! ॥५॥**

अनयोः सम्पदोः कार्य्यमुच्यते दैवीति। दैवी सम्पत् या सा विमोक्षाय संसारबन्धनात् निबन्धाय नियतो बन्धो निबन्धस्तदर्थमासुरी सम्पन्मताभिप्रेता तथा राक्षसी सर्वेवमुक्ते सत्यर्जुनस्यान्तर्गतं भावं किमहमासुरीसम्पद्युक्तः

किंवा दैवीसम्पद्युक्त इत्येवमालोचनारूपमालक्ष्याह भगवान् मा शुचः शोकं मा कार्षीः सम्पदं दैवीमभिजातोऽसि हे पाण्डव! अभिलक्ष्य जातोऽसि भाविकल्याणस्त्वमसीत्यर्थः ॥ ५ ॥

व्या० टी० । अनयोरिति । कार्य्यं फलविभागः । आसुरीत्युपलक्षणं राक्षसी चेति द्रष्टव्यमित्याह तथेति । फलविभागे सम्पदोरेवमुक्ते प्रतीत्यार्जुनस्याभिप्रायं भगवतो वचनमित्याह तत्रेति । तत्राभिजात्यं हेतुं करोति पाण्डवेति ॥ ५ ॥

स्वा० टी० । एतयोः सम्पदोः कार्य्यं दर्शयन्नाह दैवीति । दैवी या सम्पत्तया युक्तो मयोपदिष्टे तत्त्वज्ञानेऽधिकारी आसुर्या सम्पदा युक्तस्तु नित्यं संसारीत्यर्थः, एतच्छ्रुत्वा किमहमत्राधिकारी न वेति सन्देहाद्व्याकुलमर्जुनमाश्वासयति हे भारत ! मा शुचः शोकं मा कार्षीः यतस्त्वं दैवीं सम्पदमभिजातोऽसि ॥ ५ ॥

द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च ।
दैवो विस्तरशः प्रोक्त आसुरं पार्थ! मे शृणु ॥६

द्वौ भूतेति । द्वौ द्विःसङ्ख्याकौ भूतसर्गौ भूतानां मनुष्याणां सर्गौ सृष्टिभूतसर्गौ सृज्येते इति सर्गौ भूतान्येव सृज्यमानानि दैवासुरसम्पद्युक्तानि द्वौ भूतसर्गावित्युच्येते, द्वया ह प्राजापत्या देवाश्चासुराश्चेति श्रुतेः लोकेऽस्मिन् संसारे इत्यर्थः सर्वेषां द्वैविध्योपपत्तेः को तौ भूतसर्गौ इत्युच्येते प्रकृतावेव दैव आसुर एव च उक्तयोरेव पुनरनुवादप्रयोजनमाह दैवो भूतसर्गोऽभयं सत्त्वसंशुद्धिरित्यादिना विस्तरशो विस्तरप्रकारैः प्रोक्तः कथितो न त्वासुरो विस्तरशोऽतस्तत्परिवर्ज्जनार्थमासुरं पार्थ ! मे मम वचनादुच्यमानं विस्तरशः शृणु अवधारय ॥ ६ ॥

व्या० टी०। निर्दयाणां रक्षसां सम्पत्तीयास्ति सा कस्मान्नोक्ते-त्याशङ्कयासुर्यामन्तर्भावादित्याह द्वाविति। भूतानां द्वैविध्ये मानत्वे-नोद्गीथब्राह्मणमुदाहरति द्वया हेति। सम्पद्द्वययुतेभ्योऽतिरिक्तानामपि प्राणिभेदानां सम्भवात् कुतो भूतानां द्वित्वनियतिरित्याशङ्क्याह सर्वेषा-मिति ॥ ६ ॥

स्वा० टी०। आसुरी सम्पत् सर्वात्मना वर्जयितव्येत्येतदर्थमासुरीं सम्पदं प्रपञ्चयितुमाह द्वाविति। द्वौ द्विःप्रकारौ भूतानां सर्गौ मे वचनात्सृष्टौ, आसुरराक्षसप्रकृत्योरेकीकरणेन द्वावित्युक्तं, अतो राक्षसी-मासुरीञ्चैव प्रकृतिं मोहिनीं श्रिता इत्यादिना नवमाध्यायोक्तप्रकृतित्रैवि-ध्येनाविरोधः, स्पष्टमन्यत् ॥ ६ ॥

**प्रवृत्तिञ्च निवृत्तिञ्च जना न विदुरासुराः।**
**न शौचं नापि चाचारो न सत्यं तेषु विद्यते॥७**

अध्यायपरिसमाप्तेरासुरी सम्पत् प्राणिविशेषणत्वेन प्रदर्श्यते प्रत्यक्षीकरणेन च शक्यते अस्याः परिवर्ज्जनं कर्त्तु-मिति, प्रवृत्तिमिति प्रवृत्तिञ्च प्रवर्त्तनं यस्मिन् पुरुषार्थ-साधने कर्त्तव्ये प्रवृत्तिस्तां निवृत्तिञ्च तद्विपरीतां यस्मादन-र्थहेतोर्निवर्त्तितव्यं सा निवृत्तिस्ताञ्च जना आसुरा न विदुः न जानन्ति न केवलं प्रवृत्तिनिवृत्ती एव न विदुर्न शौचं नापि चाचारो न सत्यन्तेषु विद्यते अशौचा नाचार-मायाविनोऽनृतवादिनो ह्यासुराः ॥ ७ ॥

व्या० टी०। नन्वध्यायशेषेणासुरीसम्पद्दर्शनमयुक्तं तस्याक्ष्याज्य-त्वेन पङ्कप्रक्षालनन्यायावतारादित्याशङ्क्याह प्रत्यक्षीकरणेनेति। वर्जनी-यामासुरीं सम्पदं विवृणोति प्रवृत्तिञ्चेति। तां विहितां प्रवृत्तिं न जा-नन्तीत्यर्थः, ताञ्च निषिद्धां क्रियां न जानन्तीति सम्बन्धः। न शौचमि-

त्यादेस्तात्पर्य्यमाह अनाचारेति । शौचसत्ययोराचारान्तर्भावेऽपि ब्राह्मणपरिव्राजकन्यायेन पृथक् उपादानम् ॥ ७ ॥

स्वा० टी० । आसुरीं विस्तरशो निरूपयति प्रवृत्तिञ्चेत्यादि द्वादशभिः । धर्मे प्रवृत्तिमधर्मान्निवृत्तिञ्चासुरस्वभावा जना न जानन्ति अतः शौचमाचारः सत्यञ्च तेषु नास्त्येव ॥ ७ ॥

**असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम् ।**
**अपरस्परसम्भूतं किमन्यत् कामहैतुकम् ॥ ८ ॥**

किञ्च असत्येति । असत्यं यथा वयमनृतप्रायास्तथेदं जगत् सर्वं असत्यमप्रतिष्ठञ्च नास्य धर्माधर्मौ प्रतिष्ठातोऽप्रतिष्ठञ्चेति ते आसुरा जना जगदाहुरनीश्वरं न च धर्माधर्मसव्यपेक्षकोऽस्य शासितेश्वरो विद्यत इति अतोऽनीश्वरं जगदाहुः किञ्च अपरस्परसम्भूतं कामप्रयुक्तयोः स्त्रीपुरुषयोरन्योन्यसंयोगात् जगत् सर्वं सम्भूतं किमन्यत् कामहैतुकं कामहैतुकमेव कामहैतुकमन्यज्जगतः कारणं न किञ्चित् अदृष्टं धर्माधर्मादिकारणान्तरं विद्यते जगतः काम एव प्राणिनां कारणमिति लोकायतिकदृष्टिरियम् ॥ ८ ॥

आ० टी० । असुराणां जानानां विशेषणान्तराण्यपि सन्तीत्याह किञ्चेति । विद्यत इत्याहुरिति पर्वेण सम्बन्धः । शास्त्रैकगम्यमदृष्टं निमित्तीकृत्य प्रकृत्यधिष्ठातात्मकेन ब्रह्मणा रहितं जगदिष्यते चेत् कथन्तदुत्पत्तिरित्याशङ्क्याह किञ्चेति । किमन्यदित्यादेराक्षेपस्य तात्पर्यमाह न किञ्चिदिति ॥ ८ ॥

स्वा० टी० । ननु वेदोक्तयोर्धर्माधर्मयोः प्रवृत्तिं निवृत्तिञ्च कथं न विदुः कुतो वा धर्माधर्मयोरनङ्गीकारे जगतः सुखदुःखादिव्यवस्था स्यात् कथं वा शौचाचारादिविषयामीश्वराज्ञामतिवर्त्तेरन् ईश्वरानङ्गीकारे च कुतो जगदुत्पत्तिः स्यादत आह असत्यमिति । नास्ति सत्यं

वेदपुराणादि प्रमाणं यस्मिंस्तादृशं जगदाहुः वेदादीनां प्रामाण्यं न मन्यन्त इत्यर्थः। तदुक्तं त्रयो वेदस्य कर्त्तारो भुनिभण्डनिशाचरा इत्यादि। अतएव नास्ति धर्म्माधर्म्मरूपा प्रतिष्ठा व्यवस्थाहेतुर्यस्य तत् स्वाभाविकं जगद्वैचित्र्यमाहुरित्यर्थः। अतएव नास्तीश्वरः कर्त्ता व्यवस्थापकश्च यस्य तादृशं जगदाहुः। तर्हि कुतोऽस्य जगत उत्पत्तिं वदन्तीत्यत आह अपरस्परसम्भूतमिति। अपरश्च परश्चेति अपरस्परं अपरस्परतोऽन्योन्यतः स्त्रीपुंसयोर्म्मिथुनात् सम्भूत जगत्। किमन्यत् कारणमस्य नास्त्यन्यत् किञ्चित् किन्तु कामहेतुकमेव स्त्रीपुंसयोरुभयोः काम एव प्रवाहरूपेण हेतुरस्येत्यर्थः॥ ८॥

**एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः।**
**प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः॥९॥**

एतामिति। एतां दृष्टिमवष्टभ्याश्रित्य नष्टात्मानो नष्टस्वभावा विभ्रष्टपरलोकसाधनाः अल्पबुद्धयो विषयविषया अल्पैव बुद्धिर्येषान्ते अल्पबुद्धयः प्रभवन्त्युद्भवन्ति उग्रकर्माणः क्रूरकर्माणो हिंसात्मकाः क्षयाय जगतः प्रभवन्तीति सम्बन्धः जगतोऽहिताः शत्रव इत्यर्थः॥ ९॥

श्रा० टी०। यथोक्ता दृष्टिर्न्नास्तिदृष्टिर्वदिष्टैवेत्याशङ्क्याह एतामिति। प्रागुपदिष्टामेतां लोकायतिकदृष्टिमवलम्ब्येति यावत्। नष्टस्वभावत्वमेव स्पष्टयति विभ्रष्टेति। विषयबुद्धेरल्पत्वं दृष्टमात्रोद्देशेन प्रवृत्तत्वं, जगतः प्राणिजातस्येति यावत्॥ ९॥

स्वा० टी०। किञ्च एतामिति। एतां लोकायतिकानां दृष्टिं दर्शनमाश्रित्य नष्टात्मानो मलीमसचित्ताः सन्तोऽल्पबुद्धयोऽदृष्टार्थमात्रमतयः, अतएवोग्रं हिंस्रं कर्म येषां ते, अहिता वैरिणो भूत्वा जगतः क्षयाय प्रभवन्ति उद्भवन्तीत्यर्थः॥ ९॥

**काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः।**

**मोहाद्गृहीत्वाऽसद्ग्राहान् प्रवर्त्तन्तेऽशुचिव्रताः॥१०**

ते च कामिति। कामं इच्छाविशेषमाश्रित्यावष्टभ्य दुष्पूरमशक्यपूरणं दम्भमानमदान्विता दम्भश्च मानश्च मदश्च दम्भमानमदास्तैरन्विताः मोहादविवेकतः गृहीत्वोपादय असद्ग्राहानशुभनिश्चयान् प्रवर्त्तन्ते लोकेऽशुचिव्रताः अशुचीनि व्रतानि येषान्ते अशुचिव्रताः॥ १०॥

व्या० टी। तानेव दुराचारानसुरान् प्रकारान्तरेण विशिनष्टि ते चेति॥ १०॥

स्वा० टी०। अपि च काममाश्रित्येति। दुष्पूरं पूरयितुमशक्यं काममाश्रित्य दम्भादिभिर्युक्ताः सन्तः क्षुद्रदेवताराधनादौ प्रवर्त्तन्ते, कथं असद्ग्राहान् गृहीत्वा अनेन मन्त्रेणैतां देवतामाराध्य महानिधीन् साधयाम इत्यादीन् दुराग्रहान् मोहमात्रेण स्वीकृत्य प्रवर्त्तन्ते, अशुचिव्रता अशुचीनि मद्यमांसादिविषयाणि व्रतानि येषां ते॥ १०॥

**चिन्तामपरिमेयाञ्च प्रलयान्तामुपाश्रिताः।**
**कामोपभोगपरमा एतावदिति निश्चिताः॥११॥**

किञ्च चिन्तेति। चिन्तामपरिमेयाञ्च न परिमातुं शक्यते अस्याश्चिन्ताया इयत्ता सा अपरिमेया तामपरिमेयां प्रलयान्तां मरणान्तामुपाश्रिताः सदा चिन्तापरा इत्यर्थः कामोपभोगपरमाः काम्यन्त इति कामाः शब्दादयस्तदुपभोगपरमाः अयमेव परमः पुरुषार्थो यः कामोपभोग इत्येवं निश्चितात्मान एतावदिति निश्चिताः॥११॥

व्या० टी०। तानेव विधान्तरेण विशिनष्टि किञ्चेति। चिन्तामात्मीयश्रेयोमलेमोपायालोचनात्मिका अपरिमेयविषयत्वात् परिमातुमशक्यामा-

श्रिता इति सम्बन्धः। एष कामोपभोगः परमयनं सुखस्येत्येतावत् पारत्रिकं तु नास्ति सुखमिति निश्चयवन्त इत्याह एतावदितीति ॥११॥

स्वा० टी०। किञ्च चिन्तामिति। प्रलयो मरणमेवान्तो यस्यास्ता-मपरिमेयां परिमातुमशक्यां चिन्तामाश्रिता नित्यचिन्तापरा इत्यर्थः। कामोपभोग एव परमो येषां ते, एतावदिति कामोपभोग एव परमः पुरुषार्थो नान्यदस्तीति कृतनिश्चया अर्थसञ्चयानीहन्त इत्युत्तरेणान्वयः, तथा च बार्हस्पत्यसूत्रं, काम एवैकः पुरुषार्थ इति चैतन्यविशिष्टः कामः पुरुष इति च ॥ ११ ॥

**आशापाशशतैर्बद्धाः कामक्रोधपरायणाः।**
**ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान् ॥१२॥**

आशापाशेति। आशापाशशतैः आशा एव पाशास्त-च्छतैराशापाशशतैर्बद्धा नियन्त्रिताः सन्तः सर्वतः आकृष्य-माणाः कामक्रोधपरायणाः कामक्रोधौ परमयनं पर आश्रयो येषान्ते कामक्रोधपरायणाः ईहन्ते चेष्टन्ते कामभोगार्थं कामभोगप्रयोजनाय न धर्मार्थमन्यायेनार्थसञ्चयान् अर्थ-प्रचयान् अन्यायेन परस्वापहरणादिनेत्यर्थः ॥ १२ ॥

आ० टी०। आसुरानेव पुनः विशिनष्टि आशेति। अप्राप्तोपा-यार्थविषया अनवगतोपायार्थविषया वा प्रार्थना आशास्ताः पाशा इव पाशास्तेषां शतैर्बद्धा इव श्रेयसः प्रच्याव्येत ततो नीयमानाश्च इत्याह आशा एवेति ॥ १२ ॥

स्वा० टी०। अतएव आशेति। आशा एव पाशास्तेषां शतै-र्बद्धा इतस्ततः आकृष्यमाणाः, कामक्रोधपरायणाः कामक्रोधौ परमयन-माश्रयो येषां ते, कामभोगार्थमन्यायेन चौर्य्यादिनार्थानां सञ्चयान् राशीभूतान् इच्छन्ति ॥ १२ ॥

**इदमद्य मया लब्धमिदं प्राप्स्ये मनोरथम्।**

**इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥ १३ ॥**

इदमद्य तेषामभिप्रायः इदमिति । इदं द्रव्यं अद्य इदानीं मया लब्धं इदञ्च अन्यत् प्राप्स्ये मनोरथं मनस्तुष्टिकरं इदञ्चास्ति इदमपि मे भविष्यत्यागामिनि संवत्सरे पुनर्धनं तेनाहं धनी विख्यातो भविष्यामि ॥ १३ ॥

आ० टी० । तेषामभिप्रायोऽपि विवेकविरोधीत्याह इदमद्येति । द्रव्य इत्ती हिरण्यादि । इदमन्यद्द्रव्यं प्राप्यमानत्वेन विपरिवर्त्तमानमित्येतत् ॥ १२ ॥

श्या० टी० । तेषां मनोरथं कथयन् नरकप्राप्तिमाह इदमद्येति चतुर्भिः । प्राप्स्ये प्राप्स्यामि मनोरथं मनसः प्रियं, स्पष्टमन्यत, एतेषाञ्च मयाणां श्लोकानामित्यज्ञानविमोहिताः सन्तो नरके पतन्तीति चतुर्थेनान्वयः ॥ १२ ॥

**असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।**
**ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी १४**

असौ मयेति । असौ देवदत्तनामा मया हतः दुर्जयः शत्रुः हनिष्ये चान्यान्वराकान् परानपि किमेते करिष्यन्ति तपस्विनः सर्वथापि नास्ति मत्तुल्य ईश्वरोऽहमहं भोगी सर्वप्रकारेण च सिद्धोऽहं सम्पन्नः पुत्रैः पौत्रैर्नप्तृभिर्न केवलं मानुषोऽहं बलवान् सुखी चाहमेव अन्ये तु भूमिभारायावतीर्णाः ॥ १४ ॥

आ० टी० । यथोक्ते मदभिप्राये प्रतिबन्धकं शत्रुरपि न सम्भवतीत्याह असाविति । त्वत्तो निहीनानां त्वया परिभवेऽपि त्वत्तुल्यानां शत्रूणां परिभवो निश्चितो न भवतीत्याशङ्क्याह सर्वथेति । ऐश्वर्यातिरेकेऽपि कुतस्तेषां भोगसामर्थ्यमित्याशङ्क्याह अहमिति । सिद्धत्वमेव स्फुटयति सम्पन्न इति । बलवानोजस्वी सुखी रोगरहितः ॥ १४ ॥

स्वा० टी०। किञ्च अचार्षमिति। मिश्रः सनकृत्यः, मह्वन्ध्यत्॥१४

**आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया।**
**यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः॥१५॥**

आढ्य इति। आढ्यो धनेनाभिजनवान् सप्तपुरुषं श्रोत्रियत्वादिसम्पन्नस्तेनापि न मम तुल्योऽस्ति कश्चित् कोऽन्योऽस्ति सदृशस्तुल्यो मया किञ्च यक्ष्ये यागेनाप्यन्यानभिभविष्यामि दास्यामि नटादिभ्यः मोदिष्ये हर्षातिशयं प्राप्स्यामीत्येवं अज्ञानेन विमोहिताः अज्ञानविमोहिताः अविवेकभावमापन्नाः॥ १५॥

म्या० टी०। विद्याहृत्तधनाभिजनैः मत्तुल्यो नास्तीत्याह आढ्य इति। तथापि यागदानाभ्यान्तत्फलेन वा कश्चिदधिको भविष्यतीत्याशङ्क्याह किञ्चेति। न च तेषामेषाऽभिप्रायः साधीयानित्याह इत्येवमिति॥ १५॥

स्वा० टी०। किञ्च आढ्य इति। आढ्यो धनादिसम्पन्नः, अभिजनवान् कुलीनः, यक्ष्ये यागाद्यनुष्ठानेनापि दीक्षितान्तरेभ्यः सकाशान्महतीं प्रतिष्ठां प्राप्स्यामि, दास्यामि स्तावकेभ्यश्च, मोदिष्ये हर्षं प्राप्स्यामि इत्येवमज्ञानेन विमोहिता मिथ्याभिनिवेशं प्रापिताः॥१५॥

**अनेकचित्तविभ्रान्ता मोहजालसमावृताः।**
**प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ॥१६॥**

अनेकेति। अनेकचित्तविभ्रान्ता उक्तप्रकारैरनेकैश्चित्तैर्विविधं भ्रान्ता अनेकचित्तविभ्रान्ता मोहजालसमावृताः मोहोऽविवेकोऽज्ञानन्तदेव जालमिवावरणात्मकत्वात्तेन समावृताः प्रसक्ताः कामभोगेषु काम्यन्त इति कामाः विष-

यास्तेषामुपभोगेषु कामभोगेषु तत्रैव निषण्णा सन्तस्तेनोपचितकल्मषाः पतन्ति नरकेऽशुचौ वैतरण्यादौ ॥ १६ ॥

श्रा० टी० । उक्तप्रकारविपर्य्ययेण कृत्याकृत्यविवेकविकलानां किं स्यादित्यपेक्षायामाह अनेकेति । कामा विषयास्तेषां भोगेषु तत्प्रयुक्तेषूपभोगेष्विति यावत् ॥ १६ ॥

स्वा० टी० । एवम्भूता यत् प्राप्नुवन्ति तच्छृणु अनेकेति । अनेकेषु मनोरथेषु प्रवृत्तं चित्तं अनेकचित्तं तेन विभ्रान्ता विक्षिप्ताः तेनैव मोहमयेन जालेन समावृता मत्स्या इव सूत्रमयेन जालेन यन्त्रिताः एवं कामभोगेषु प्रसक्ता अभिनिविष्टाः सन्तोऽशुचौ कश्मले नरके पतन्ति ॥ १६ ॥

**आत्मसम्भाविताः स्तब्धा धनमानमदान्विताः ।**
**यजन्ते नाम यज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥१७॥**

आत्मेति । आत्मसम्भाविताः सर्वगुणविशिष्टतयात्मनैवात्मनि सम्भाविताः आत्मसम्भाविताः न साधुभिः, स्तब्धा अप्रणतात्मानो धनमानमदान्विता धननिमित्तो मानो मदश्च ताभ्यां धनमानमदाभ्यामन्विता यजन्ते नामयज्ञैर्नाममात्रैर्यज्ञैस्तैर्दम्भेन धर्मध्वजितया अविधिपूर्वकं विहिताङ्गेतिकर्त्तव्यतारहितैः ॥ १७ ॥

श्रा० टी० । ननु तेषामपि केषाञ्चिद्वैदिके कर्म्मणि यागदानादौ प्रवृत्तिदर्शनात्तेषामपि कथं वैतरण्यादौ पतनमिति चेत्तत्राह आत्मेति । आसुरीसम्पदमभिजातैरधर्म्मजातमेव सञ्चीयते प्रवृत्तेरपि वैदिके कर्म्मणि नैव पुण्यमित्युक्तम् ॥ १७ ॥

स्वा० टी० । यज्ञ इति च यस्तेषां मनोरथ उक्तः स केवलं दम्भाहङ्कारादिप्रधान एव न तु सात्त्विक इत्यभिप्रायेणाह आत्मेति द्वाभ्याम् । आत्मनैव सम्भाविताः पूज्यतां नीताः न तु

साधुभिः कैश्चित् अतएव स्तब्धा अनम्राः धनेन यो मानो मदश्च ताभ्यां समन्विताः सन्तः ते नाममात्रेण ये यज्ञास्ते नामयज्ञाः यद्वा दीक्षितः सोमयाजीत्येवमादिना ममात्मप्रसिद्धये ये यज्ञास्तैर्यजन्ते, कथं दम्भेन न तु श्रद्धया अविधिपूर्वकञ्च यथा भवति तथा ॥ १७ ॥

**अहङ्कारं बलं दर्पं कामं क्रोधञ्च संश्रिताः ।**
**मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ १८ ॥**

अहमिति । अहङ्कारमहङ्करणमहङ्कारः विद्यमानै-रविद्यमानैश्च गुणैरात्मन्यध्यारोपितैर्विशिष्टमात्मानमह-मिति मन्यते सोऽहङ्कारोऽविद्याख्यः कष्टतमः सर्वदो-षाणां मूलं सर्वानर्थप्रवृत्तीनाञ्च मूलं तं परिगृह्य तथा बलं पराभिभवनिमित्तं कामरागान्वितं दर्पं दर्पो नाम यस्योद्भवे धर्ममतिक्रामतीति सोऽयमन्तःकरणाश्रयो दोषविशेषः कामं स्त्र्यादिविषयं क्रोधमनिष्टविषयं एतान-न्यांश्च महतो दोषान् संश्रिताः किञ्च ते मामीश्वरं आत्म-परदेहेषु स्वदेहे परदेहेषु च तद्बुद्धिकर्मसाक्षीभूतं मां प्रद्विषन्तो मच्छासनातिवर्त्तित्वं प्रद्वेषस्तं कुर्वन्तोऽभ्यसू-यकाः सन्मार्गस्थानां गुणेषु असहमानाः ॥ १८ ॥

आ॰ टी॰ । ब्रह्मज्ञानात् पुनरासुरादूराद्देवोद्विजन्त इत्याह अहङ्कारमिति । अहङ्कारमेव स्फोरयति विद्यमानैरिति । अध्या-रोपितैर्विशिष्टविषयत्वादहङ्कारस्याविद्यामूलत्वेनाविद्यात्मत्वमाह अवि-द्याख्य इति । विवेकिभिस्तस्यातियत्नादेव हेयत्वं सूचयति कष्टतम इति । तदेव स्पष्टयति सर्वेति । तत्संश्रिता इति सम्बन्धः । कार्य्य-कारणसामर्थ्यं सुक्तविशेषणं बलं अहङ्कार एव महदवधीरणापर्यन्तत्वेन परिणतो दर्पस्तं व्याकरोति दर्पो नामेत्यादिना । अन्यांश्च दोषानात्म-श्लाघादीन्न केवलं उक्तमेव तेषां विशेषणं किन्तु कष्टतमत्वमपि विशेषणान्तर-

मित्याह किञ्चेति। यद्यपीश्वरस्यापि द्वेषस्तेषां सम्भाव्यते तथापि कथं स्वदेहे परदेहेषु च तं प्रति द्वेषः न हि तत्र भोक्तारमन्तरेणेश्वरस्याव-स्थानमित्याशङ्क्याह तत्त्वबुद्धीति। तेषामीश्वरं प्रति द्वेषमेव प्रकटयति मच्छासनेति। ईश्वरस्य शासनं श्रुतिस्मृतिरूपन्तदतिवर्त्तित्वं तदुक्तार्थ-ज्ञानानुष्ठानपराङ्मुखत्वम् ॥ १८ ॥

स्वा॰ टी॰। अविधिपूर्वकत्वमेव प्रपञ्चयति अहङ्कारमिति। अहङ्कारादीन् संश्रिताः सन्त आत्मपरदेहेषु आत्मदेहे परदेहेषु च चिदंशेन स्थितं मां प्रद्विषन्तो यजन्ते दम्भयज्ञेषु श्रद्धाया अभावादात्मनो दुःखैव पीडा भवति तथा पश्वादीनामप्यविधिना हिंसायां चैतन्यद्रोह एवावशिष्यत इति प्रद्विषन्त इत्युक्तं. अभ्यसूयकाः सन्मार्गवर्त्तिनां गुणेषु दोषारोपकाः ॥ १८ ॥

**तानहं द्विषतः क्रूरान् संसारेषु नराधमान्।**
**क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥१९॥**

तानहमिति। तानहं सर्वान् सन्मार्गप्रतिपक्षभूतान् साधुद्वेषिणो द्विषतश्च मां क्रूरान् संसारेष्वेव नरकसंसरणमार्गेषु नराधमान् अधर्मदोषवत्त्वात् क्षिपामि प्रक्षिपामि अजस्रं सन्ततमशुभान् शुभकर्मकारिण आसुरीष्वेव क्रूरकर्मप्रायासु व्याघ्रसिंहादियोनिषु क्षिपामीत्यनेन सम्बन्धः ॥ १९ ॥

आ॰ टी॰। तेषामुक्तविशेषणवतामासुराणां किं स्यादिति तदाह तानिति। भगवतो नैर्घृण्यप्रसङ्गं प्रत्यादिशति अधर्मेति ॥ १९ ॥

स्वा॰ टी॰। तेषाञ्च कदाचिदप्यासुरस्वभावप्रच्युतिर्न भवतीत्याह तानिति द्वाभ्याम्। तानहं मां द्विषतः क्रूरान् संसारेषु जन्ममृत्यु-मार्गेषु तत्राप्यासुरीष्वेवातिक्रूरासु व्याघ्रसर्पादियोनिष्वजस्रमनवरतं क्षिपामि तेषां पापकर्मणा तादृशं फलं ददामीत्यर्थः ॥ १९ ॥

**आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि।**
**मामप्राप्यैव कौन्तेय! ततो यान्त्यधमां गतिम् २०॥**

आसुरीमिति। आसुरीं योनिमापन्नाः प्रतिपन्ना मूढा जन्मनि जन्मनि अविवेकिनः प्रतिजन्म तमोबहुलास्वेव योनिषु जायमाना अधो गच्छन्ति ते मूढा मामीश्वरं अप्राप्य अनासाद्यैव हे कौन्तेय! ततस्तस्मादपि यान्ति अधमां निकृष्टतमाङ्गतिं मामप्राप्यैति न मत्प्राप्तौ काचिदप्याशङ्कास्त्यतो मच्छिष्टसाधुमार्गप्राप्तिमप्राप्येत्यर्थः॥ २०॥

आ॰ टी॰। ननु तेषामपि क्रमेण बहूनां जन्मनामन्ते श्रेयो भविष्यति नेत्याह आसुरीमिति। तेषामीश्वरप्राप्तिशङ्काभावे कथन्तन्निषेधः स्यादित्याशङ्क्याह मामित्यादिना। यस्मादासुरी सम्पदनर्थपरम्परया सर्वपुरुषार्थपरिपन्थिनी तस्माद्यावत् पुरुषः स्वतन्त्रो न काञ्चित् पारवश्यकरीं योनिमापन्नस्तावदेव तेनाऽसौ परिहरणीयेति समुदायार्थः॥ २०॥

स्वा॰ टी॰। किञ्च आसुरीमिति। ते च मामप्राप्यैवेत्येवकारेण मत्प्राप्तिशङ्कापि कुतस्तेषां मत्प्राप्त्युपायं सन्मार्गमप्राप्य ततोऽप्यधमां कृमिकीटादिगतिं यान्तीत्युक्तं, शेषं स्पष्टम्॥ २०॥

**त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः।**
**कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत्॥२१**

सर्वस्याः आसुर्याः सम्पदः सङ्क्षेपोऽयमुच्यते, यस्मिंस्त्रिविधे सर्वं आसुरीसंपद्भेदोऽनन्तोऽप्यन्तर्भवति यत्परिहारेण परिहृतस्य भवति यन्मूलं सर्वस्यानर्थस्य तदेतदुच्यते त्रिविधमिति। त्रिविधं नरकद्वारं त्रिःप्रकारं नरकस्य

प्राप्तिद्वारं नाशनमात्मनः यद्द्वारं प्रविशन्नेव नश्यति आत्मा कस्मैचित् पुरुषार्थाय योग्यो न भवतीत्येतदुच्यते द्वारं नाशनमात्मन इति किं तत् कामः क्रोधस्तथा लोभस्तस्मादेतत् त्रयं त्यजेत् यत एतत् द्वारं नाशनमात्मनस्तस्मात् कामादित्रयमेतत् त्यजेत् त्यागस्तुतिरियम् ॥ २१ ॥

व्या० टी०। कथमासुरी सम्पदनन्तभेदवती पुरुषायुषेणापि परिहर्त्तुं शक्येतेत्याशङ्क्याह सर्वस्येति। संक्षेपोक्तिफलमाह यस्मिन्निति। कामादौ त्रिविधे सर्वस्यासुरसम्पद्भेदस्यान्तर्भावेऽपि कथमसौ परित्यज्यते तत्राह यत् परिहारेणेति। कामादिपरिहारेणासुरीसम्पद्भेदपरिहारेऽपि कथं सर्वानर्थपरिवर्जनमित्याशङ्क्याह यन्मूलमिति। कथमात्मनो नित्यस्य नाशशङ्केति तत्राह कश्चैचिदिति। त्रिविधमपि सामान्यतो दर्शितमाकाङ्क्षाद्वारा विशेषतो दर्शयति किं तदिति। तस्मादिति व्याचष्टे यत इति। कामादित्यागे सति अनर्थाचरणाश्रेयःप्रतिबन्धनिवृत्तौ स्यातामिति भावः ॥ २१ ॥

स्वा० टी०। उक्तानामासुरदोषाणां मध्ये सकलदोषमूलभूतं दोषत्रयं सर्वथा वर्जनीयमित्याह त्रिविधमिति। कामः क्रोधो लोभश्च इतीदं त्रिविधं नरकस्य द्वारं अतएवात्मनो नाशनं नीचयोनिप्रापकं तस्मादेतत्त्रयं सर्वात्मना त्यजेत् ॥ २१ ॥

**एतैर्विमुक्तः कौन्तेय ! तमोद्वारैस्त्रिभिर्नरः।**
**आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥२२**

एतैरिति। एतैर्विमुक्तः कौन्तेय ! तमोद्वारैस्तमसो नरकस्य दुःखमोहात्मकस्य द्वाराणि कामादयस्तैरेतैस्त्रिभिर्विमुक्तो नर आचरत्यनुतिष्ठति किमात्मनः श्रेयो यत्प्रतिबद्धः पूर्वं नाचरति तदपगमादाचरति ततस्तदाचरणात्तया याति परां गतिं मोक्षमपि इति ॥ २२ ॥

आ॰ टी॰ । न केवलं श्रेयः समाचरन्नासुरीं च सम्पदं वर्जयन्मोक्षमेव सम्यग्धीद्वारा लभते किन्तु लौकिकमपि सुखमित्यपेरर्थः ॥२२॥

स्वा॰ टी॰ । त्यागे विशिष्टं फलमाह एतैरिति । तमसो नरकस्य द्वारभूतैरेतैस्त्रिभिः कामादिभिर्विमुक्तो नर आत्मनः श्रेयःसाधनं तपोयोगादिकमाचरति ततश्च मोक्षं प्राप्नोति ॥ २२ ॥

**यः शास्त्रविधिमुत्सृज्य वर्त्तते कामचारतः ।**
**न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥२३**

सर्वस्यैतस्यासुरीसंपत्परिवर्जनस्य श्रेयआचरणस्य शास्त्रं कारणं शास्त्रप्रमाणादुभयं शक्यं कर्त्तुं नान्यथा अतः यः शास्त्रेति यः शास्त्रविधिं शास्त्रं वेदः तस्य विधिं कर्त्तव्याकर्त्तव्यज्ञानकारणं विधिप्रतिषेधाख्यमुत्सृज्य त्यक्त्वा वर्त्तते कामकारतः कामप्रयुक्तः सन् न स सिद्धिं पुरुषार्थयोग्यतामाप्नोति । नाप्यस्मिन् लोके सुखं नापि परां प्रकृष्टां गतिं स्वर्गं मोक्षं वा ॥ २३ ॥

आ॰ टी॰ । आसुर्याः सम्पदो वर्जने श्रेयसश्च करणे किं कारणं तदाह सर्वस्येति । तस्य कारणत्वं साधयति शास्त्रेति । उक्तमुपजीव्यानन्तरश्लोकं प्रवर्त्तयति अत इति । शिष्यते बोध्यतेऽनेनापूर्वोऽर्थ इति शास्त्रं तच्च विधिनिषेधात्मकमित्युपेत्य व्याचष्टे कर्त्तव्येति । कामस्य करणं कामकारः तस्माद्धेतोरित्युपेत्य कामाधीना शास्त्रविमुखस्य प्रवृत्तिरित्याह कामेति । कामाधीनप्रवृत्तेः सदा पुमर्थायोगस्य सर्वपुरुषार्थासिद्धिरित्याह नाप्नोति ॥ २३ ॥

स्वा॰ टी॰ । कामादित्यागश्च स्वधर्माचरणं विना न सम्भवतीत्याह य इति । शास्त्रविधिं वेदविहितं धर्ममुत्सृज्य यः कामचारतो यथेष्टं वर्त्तते स सिद्धिं तत्त्वज्ञानं न प्राप्नोति न च सुखमुपशमं न च परां गतिं मोक्षं प्राप्नोति ॥ २३ ॥

**तस्माच्छास्त्रं प्रमाणन्ते कार्य्याकार्य्यव्यवस्थितौ ।**
**ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्त्तुमिहार्हसि ॥२४**

**इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे दैवासुरसम्पद्विभागयोगो नाम षोड़शोऽध्यायः ।**

तस्मादिति । तस्मात् शास्त्रं प्रमाणं ज्ञानं साधनन्ते तव कार्य्याकार्य्यव्यवस्थितौ कर्त्तव्याकर्त्तव्यव्यवस्थाया-मतो ज्ञात्वा बुद्धा शास्त्रविधानोक्तं विधिर्विधानं शास्त्र-मेव विधानं शास्त्रविधानं कुर्य्यान्न कुर्य्यादित्येवं लक्षणं तेनोक्तं स्वकर्म यत्तत् कर्त्तुमिहार्हसि इह इति कर्माधि-कारभूमिप्रदर्शनार्थम् इति ॥ २४ ॥

इति षोड़शोऽध्यायः ।

व्या॰ टी॰ । शास्त्रादृते कर्मणो निष्फलत्वे फलितमाह तस्मा-दिति । कर्त्तव्याकर्त्तव्यौ धर्माधर्मौ तत्र शास्त्रस्य प्रमाणत्वेऽपि मम किं कर्त्तव्यमित्याशङ्क्याह अत इति । स्वकर्म क्षत्रियस्य युद्धादि, इति षष्ठोऽध्यायसमाप्त्यर्थः । तदनेनाध्यायेन प्राग्भवीयकर्म्मवासनानु-सारेणाभिव्यज्यमानसात्त्विकादिप्रकृतित्रयविभागेन दैव्यासुरीति सम्पद्-द्वयमादानहानाभ्यामुपदिश्य कामक्रोधलोभानपहाय पुरुषार्थिना शास्त्र-श्रवणेन तदुक्तकारिणा भवितव्यमिति निर्द्धारितम् ॥ २४ ॥

इति षोड़शोऽध्यायः ।

स्वा० टी० । फलितमाह तस्मादिति । इदं कार्य्यमिदमकार्य्य-ञ्चेत्यस्यां व्यवस्थायां ते तव शास्त्रं श्रुतिस्मृतिपुराणादिकमेव प्रमाणम् अतः शास्त्रविधिनोक्तं कर्म्म कर्त्तुमर्हसि तन्मूलत्वात् सत्त्वशुद्धिसम्यग्-ज्ञानसुक्तीनामित्यर्थः । देवदैतेयसम्पत्तिसंविभागेन षोड़शे । तत्त्व-ज्ञानेऽधिकारस्तु सात्त्विकस्येति दर्शितम् ॥ २४ ॥

इति षोड़शोऽध्यायः ।

---

# सप्तदशोऽध्यायः ।

---

## अर्जुन उवाच ।

**ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः ।**
**तेषां निष्ठा तु का कृष्ण! सत्त्वमाहो रजस्तमः ॥१**

तस्माच्छास्त्रं प्रमाणन्त इति भगवद्वाक्यात् लब्धप्रश्न-बीजोऽर्जुन उवाच ये शास्त्रेति । ये केचित् अविशेषिताः शास्त्रविधिं शास्त्रविधानं श्रुतिस्मृतिशास्त्रचोदनामुत्सृज्य परित्यज्य यजन्ते देवादीन् पूजयन्ति श्रद्धयान्विताः श्रद्धा-स्तिक्या बुद्ध्यान्विताः संयुक्ताः सन्तः श्रुतिलक्षणं स्मृतिल-क्षणं वा कञ्चित् शास्त्रविधिमपश्यन्तो वृद्धव्यवहारदर्शना-देव श्रद्दधानतया देवादीन् पूजयन्ति ते इह शास्त्रवि-धिमुत्सृज्य यजन्ते श्रद्धयान्विता इत्येवं गृह्यन्ते । ये पुनः कञ्चित् शास्त्रविधिमुपलभमाना एव तमुत्सृज्यायथा-

विधि देवादीन् पूजयन्ति ते इह "ये शास्त्रविधिमुत्सृज्य यजन्ते" इति न परिगृह्यन्ते कस्मात् श्रद्धयान्वितत्वविशेषणात् देवादिपूजाविधिपरं किञ्चित् शास्त्रं पश्यन्त एव तदुत्सृज्याश्रद्दधानतया तद्विहितायां देवादिपूजायां श्रद्धयान्विताः प्रवर्त्तन्ते इति न शक्यं परिकल्पयितुं यस्मात्तस्मात् पूर्वोक्ता एव "(ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः)" इत्यत्र गृह्यन्ते तेषामेवम्भूतानां निष्ठा तु अवस्थानं का कृष्ण! सत्त्वमाहो रजस्तमः किं सत्त्वनिष्ठावस्थानमाहोस्वित् रजोऽथ वा तम इति ॥ १ ॥

श्रा० टी०। आस्तिकानां नास्तिकानाञ्च शास्त्रैकचक्षुषां गतिरुक्ता सम्प्रत्यास्तिकानामेव शास्त्रानभिज्ञानां गतिं जिज्ञासया पृच्छतीत्याह तस्मादिति। यजन्त इति यागग्रहणं दानादेरुपलक्षणम्। यदि वेदोक्तं विधिमपश्यन्तस्तदुत्सृजन्ति कथं तर्हि श्रद्दधाना यागादि कुर्वन्ति न हि ज्ञानं विना श्रद्धया यागादि कर्त्तुं शक्यमित्याशङ्क्याह श्रुतीति। ननु शास्त्रीयं विधिं पश्यन्तोऽपि केचित्तमुपेक्ष्य स्वोत्प्रेक्षया यागादि कुर्वन्तो दृश्यन्ते तेषामिह (ये शास्त्रविधिमुत्सृज्येति) ग्रहो भविष्यति नेत्याह ये पुनरिति। तेषामत्रापरिग्रहे प्रश्नपूर्वकं हेतुमाह कस्मादिति। शास्त्रज्ञानान्तदुपेक्षावतां ग्रहेऽपि विशेषणमविरुद्धमित्याशङ्क्याव्यावर्त्यान्नैवमित्याह देवादीनि। अश्रद्दधानतया तदुत्सृजन्तीति सम्बन्धः। शास्त्रोक्तं विधिमधिगच्छतामपि तमवधीर्य स्वेच्छया देवपूजादौ प्रवृत्तानामासुरेष्वेवान्तर्भावो यस्मादनन्तराध्याये सिद्धस्तस्मादास्तिकाधिकारे तेषां प्रसक्तो नास्तीत्युपसंहरति यस्मादिति। पूर्वोक्ताः शास्त्रानभिज्ञा वृद्धव्यवहारानुसारिण इति यावत्। तैः श्रद्धया क्रियमाणं कर्म कुत्र पर्य्यवस्यतीति पृच्छति तेषामिति। का निष्ठेत्येतद्विवृणोति सत्त्वमिति ॥ १ ॥

स्वा० टी०। उक्ताधिकारहेतूनां श्रद्धा मुख्या च सात्त्विकी। इति सप्तदशे गौणश्रद्धाभेदस्त्विहोच्यते। पूर्वाध्यायान्ते यः शास्त्रविधि-

समुत्सृज्य वर्त्तते कामचारतः। न स सिद्धिमवाप्नोतीत्यनेन शास्त्रोक्त-विधिमुत्सृज्य कामचारेण वर्त्तमानस्य ज्ञानेऽधिकारो नास्तीत्युक्तं तत्र शास्त्रविधिमुत्सृज्य कामचारं विना श्रद्धया वर्त्तमानानां किमधि-कारोऽस्ति नास्ति वेति बुभुत्सया अर्जुन उवाच य इति। अत्र च शास्त्रविधिमुत्सृज्य यजन्त इत्यनेन शास्त्रार्थं बुद्ध्वा तमुल्लङ्घ्य प्रवर्त्त-माना न गृह्यन्ते तेषां श्रद्धया यजनानुपपत्तेः आस्तिक्यबुद्धिर्हि श्रद्धा न चासौ शास्त्रविरुद्धेऽर्थे शास्त्रज्ञानवतां सम्भवति, तामेवाधिकृत्य त्रिविधा भवति श्रद्धेति यजन्ते सात्त्विकादेवानित्याद्युत्तरानुपपत्तेश्च अतो नात्र शास्त्रोल्लङ्घिनो गृह्यन्ते अपि तु क्लेशबुद्ध्या वा आलस्याद्वा शास्त्रार्थज्ञाने प्रयत्नमकृत्वा केवलमाचारपरम्परावशेन श्रद्धया क्वचि-द्देवताराधनादौ प्रवर्त्तमाना गृह्यन्ते, अतोऽयमर्थः ये शास्त्रविधिमुत्-सृज्य दुःखबुद्ध्या आलस्याद्वा अनादृत्य केवलमाचारप्रामाण्येन श्रद्धयान्विताः सन्तो यजन्ते तेषान्तु का निष्ठा का स्थितिः क आश्रयः। तामेव विशेषेण पृच्छति, किं सत्त्वम् आहो किं रजः अथ वा तम इति तेषां यादृशी देवपूजादिप्रवृत्तिः किं सत्त्वसंश्रिता रजःसंश्रिता तमःसं-श्रिता वेत्यर्थः श्रद्धायाः सात्त्विकत्वात् क्लेशबुद्ध्या आलस्येन च शास्त्रा-नादरस्य राजसतामसत्वाच्चायं सन्देहः। यदि सत्त्वसंश्रिता तर्हि तेषामपि सात्त्विकत्वाद्यथोक्तज्ञानेऽधिकारः स्यादन्यथा नेति तात्-पर्य्यार्थः ॥ १ ॥

## श्रीभगवानुवाच।

**त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा।**
**सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥२**

एतदुक्तं भवति या तेषां देवादिविषया पूजा सा किं सात्त्विक्याहोस्विद्राजस्युत तामसीति सामान्यविषयोऽयं प्रश्नो नाप्रविभज्य प्रतिवचनमर्हतीति त्रिविधेति श्रीभग-वानुवाच। त्रिविधा त्रिःप्रकारा भवति श्रद्धा यस्यां

निष्ठायां त्वं पृच्छसि देहिनां सा स्वभावजा जन्मान्तरकृतो धर्मादिसंस्कारो मरणकालेऽभिव्यक्तः स्वभाव उच्यते ततो जाता स्वभावजा सात्त्विकी सत्त्वनिर्वृत्ता देवपूजादिविषया, राजसी रजोनिर्वृत्ता यक्षरक्षःपूजादिविषया, तामसी तमोनिर्वृत्ता प्रेतपिशाचादिपूजाविषयैवं त्रिविधा तामुच्यमानां श्रद्धां शृणु मेवं त्रिविधा भवति॥ २ ॥

आ॰ टी॰ । कार्य्याणां कारणैर्व्यपदेशमाश्रित्य तात्पर्य्यमाह एतदिति । विशेषनिष्ठमुत्तरं सामान्येन वक्तुं न शक्यमित्याशयेन परिहरति सामान्येति । किमिति श्रद्धात्रैविध्यं प्रश्नानुपयुक्तमुच्यते तत्राह यस्यामिति । श्रद्धापूर्विकायां क्रियायामिति यावत् । श्रद्धात्रैविध्ये हेतुमाह सा स्वभावजेति । स्वभावशब्दार्थं प्रकृतोपयोगितया कथयति जन्मान्तरेति । कथं त्रिविधेत्यपेक्षामाह सात्त्विकीत्यादिना । कथमुक्ता श्रद्धा स्वभावजेति तत्राह तामिति ॥ २ ॥

स्वा॰ टी॰ । ततोत्तरं श्रीभगवानुवाच त्रिविधेति । अयमर्थः शास्त्रतत्त्वज्ञानतः प्रवर्त्तमानानां परमेश्वरपूजाविषया सात्त्विकी एकविधैव भवति श्रद्धा लोकाचारमात्रेण तु प्रवर्त्तमानानां देहिनां या श्रद्धा सा तु सात्त्विकी राजसी तामसी चेति त्रिविधा भवति । तत्र हेतुः स्वभावजा स्वभावः पूर्वसंस्कारस्तस्माज्जाता स्वभावमन्यथा कर्त्तुं समर्थं हि शास्त्रोत्थं विवेकज्ञानं तेषां नास्ति अतः केवलं पूर्वस्वभावेन भवन्ती श्रद्धा त्रिविधा भवति । तामिमां त्रिविधां श्रद्धां शृण्विति तदुक्तं, व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दनेत्यादिना ॥ २ ॥

**सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ! ।**
**श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥३॥**

सत्त्वेति सत्त्वानुरूपा विशिष्टसंस्कारोपेतान्तःकरणानुरूपा सर्वस्य प्राणिजातस्य श्रद्धा भवति भारत ! यद्येव-

न्नतः किं ? स्यादित्युच्यते श्रद्धामयः अयं पुरुषः संसारी जीवः कथं ? यो यच्छ्रद्धो या श्रद्धा यस्य जीवस्य स तच्छ्रद्धः स एव स जीवः ॥ ३ ॥

व्या० टी०। प्राचीनकर्मोद्बोधिता त्रिविधा वासना स्वभावशब्दिता त्रिविधायाः श्रद्धाया निमित्तमित्युक्तमिदानीमुपादानमस्या दर्शयति सत्त्वमिति विशिष्टचित्तोपादाना श्रद्धा । तत्त्रैविध्यं त्रिविधेति पूर्वार्द्धस्यार्थः । कथं निष्ठायां सात्त्विकादिप्रश्नद्वारा श्रद्धायास्त्रैविध्यनिरूपणमुपयुक्तमिति मन्वानः शङ्कते यद्येवमिति । श्रद्धेयं विषयमभिध्यायंस्तया तत्रैव वर्त्तत इति मन्वानः परिहरति उच्यत इति । श्रद्धामयत्वं प्रश्नपूर्वकं कथयति कथमिति । श्रद्धा स्वत्वधिक्षते पुरुषे प्राचुर्य्येण प्रवृत्तेऽपि तस्य श्रद्धामयत्वसिद्धिरित्यर्थः ॥ ३ ॥

स्वा० टी० । ननु श्रद्धा सात्त्विक्येव सत्त्वकार्य्यत्वेन त्वयैव श्रीभागवते उद्धवं प्रति निर्दिष्टत्वात् यथोक्तं "शमो दमस्तितिक्षेक्षा तपः सत्यं दया स्मृतिः । तुष्टिस्त्यागोऽस्पृहा श्रद्धा ह्रीर्दयादिः स्वनिर्वृतिः ।" इत्येताः सत्त्ववृत्तय इति अतः कथं तस्यास्त्रैविध्यमुच्यते सत्यं तथापि रजस्तमोभिर्मिश्रितत्वेन सत्त्वस्य त्रैविध्यात् श्रद्धाया अपि त्रैविध्यं घटत इत्याह सत्त्वेति । सत्त्वानुरूपा सत्त्वतारतम्यानुसारिणी सर्वस्य विवेकिनोऽविवेकिनो वा लोकस्य श्रद्धा भवति तस्मादयं पुरुषो लौकिकः श्रद्धाविकारः त्रिविधया श्रद्धया विक्रियत इत्यर्थः । तदेवाह यो यच्छ्रद्धः यादृशी श्रद्धा यस्य स एव सः तादृशश्रद्धायुक्तः । स एव स इति यः पूर्वं सत्त्वोत्कर्षेण सात्त्विकश्रद्धायुक्तः पुरुषः स पुनस्तत्संस्कारेण सात्त्विकश्रद्धायुक्त एव भवति यस्तु रजस उत्कर्षेण राजसश्रद्धायुक्तः स पुनस्तादृश एव भवति यस्तु तमस उत्कर्षेण तामसश्रद्धया युक्तः स पुनस्तादृश एव भवतीति लोकाचारमात्रेण प्रवर्त्तमानेष्वेवं सात्त्विकराजसतामसश्रद्धाव्यवस्था शास्त्रजनितविवेकज्ञानयुक्तानान्तु स्वभावविजयेन सात्त्विकी एकैव श्रद्धेति प्रकरणार्थः ॥ ३ ॥

यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः ।

**प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः॥४॥**

ततश्च कार्य्येण लिङ्गेन देवादिपूजया सत्त्वादिनिष्ठानुमेयेत्याह यजन्त इति। यजन्ते पूजयन्ति सात्त्विकाः सत्त्वनिष्ठा देवान्, यक्षरक्षांसि राजसाः, प्रेतान् भूतगणांश्च सप्तमातृकादींश्च अन्ये यजन्ते तामसा जनाः ॥ ४ ॥

श्री० टी० । तथापि कथं सत्त्वादिनिष्ठा यथोक्तस्य पुरुषस्य ज्ञातुं शक्येत्याशङ्क्याह ततश्चेति। अधिकृतस्य पुरुषस्य श्रद्धाप्रधानत्वादिति यावत्, देवा वस्वादयो, यक्षाः कुवेरादयो, रक्षांसि नैर्ऋतादयः, स्वधर्मात् प्रच्युता विप्रादयो देहपातादूर्द्ध्वं वायुदेहमापन्नाः प्रेताः एभ्यश्च यथायथमाराध्यदेवादयः सात्त्विकराजसतामसान् प्रकामान् प्रयच्छन्तीति सामर्थ्यादवगन्तव्यम् ॥ ४ ॥

स्वा० टी० । सात्त्विकादिभेदमेव कार्य्यभेदेन प्रपञ्चयति यजन्त इति। सात्त्विका जनाः सत्त्वप्रकृतीन् देवानेव यजन्ते पूजयन्ति, राजसास्तु रजःप्रकृतीन् यक्षान् राक्षसांश्च यजन्ते, एतेभ्योऽन्ये विलक्षणास्तामसा जनास्तामसानेव प्रेतान् भूतगणांश्च यजन्ते, सत्त्वादिप्रकृतीनां तत्तद्देवादीनां पूजादर्शनभिस्तत्तत्पूजकानां सात्त्विकादित्वं ज्ञातव्यमित्यर्थः ॥ ४ ॥

**अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ।**
**दम्भाहङ्कारसंयुक्ताः कामरागबलान्विताः ॥ ५ ॥**

एवं कार्य्यतो निर्णीताः सत्त्वादिनिष्ठाः शास्त्रविध्युत्सर्गे तत्र कश्चिदेव सहस्रेषु पूजादितत्परः सत्त्वनिष्ठो भवति बाहुल्येन तु रजोनिष्ठाः तमोनिष्ठाश्चैव प्राणिनो भवन्ति, कथं अशास्त्रेति। अशास्त्रविहितं न शास्त्रविहितं अशास्त्रविहितं घोरं पीडाकरं प्राणिनामात्मनश्च

तपस्तप्यन्ते निर्वर्त्तयन्ति ये तपो जनास्ते च दम्भाहङ्कार-संयुक्ता दम्भश्चाहङ्कारश्च दम्भाहङ्कारौ ताभ्यां संयुक्तादम्भा-हङ्कारसंयुक्ताः कामरागबलान्विताः कामश्च रागश्च काम-रागौ तत्कृतं बलङ्कामरागबलन्तेऽन्विताः कामरागब-लैर्वान्विताः ॥ ५ ॥

व्या॰ टी॰ । ननु सत्त्वादिनिष्ठाः शास्त्रेण ज्ञातुं शक्यन्ते कुतः कार्य्यलिङ्गकानुमानेनेति तत्राह एवमिति । सत्त्वादिनिष्ठानां जन्मना-मवान्तरविशेषं प्रचुरत्वाप्रचुरत्वरूपं दर्शयति तत्रेत्यादिना । राजसानाञ्च तामसानाञ्च प्राचुर्य्यं प्रश्नद्वारा विवृणोति कथमित्यादिना । कामश्च का-म्यमानविषयो, रागश्च तद्विषयभोगाभिलाषः, तत्कृतं तन्निमित्तमिति यावत् ॥ ५ ॥

स्वा॰ टी॰ । राजसतामसेष्वपि पुनर्विशेषान्तरमाह अशास्त्र-विहितमिति द्वाभ्याम् । शास्त्रविधिमजानन्तोऽपि केचित् प्राचीन-पुण्यसंस्कारेणोत्तमाः सात्त्विका एव भवन्ति केचिन्मध्यमा राजसा भवन्ति अधमास्तु तामसा भवन्ति ये पुनरत्यन्तं मन्दभाग्यास्ते गतानु-गत्या पाषण्डसङ्गेन च तदाचारानुवर्त्तिनः सन्तोऽशास्त्रविहितं घोरं भूतभयङ्करं तपस्तप्यन्ते कुर्वन्ति । तत्र हेतवः, दम्भाहङ्काराभ्यां संयुक्ताः, तथा कामोऽभिलाषः राग आसक्तिः बलमाग्रहः एतैरन्विताः सन्तः, तानासुरनिश्चयान् विद्धीत्युत्तरेणान्वयः ॥ ५ ॥

**कर्शयन्तः शरीरस्थं भूतग्राममचेतसः ।**
**माञ्चैवान्तःशरीरस्थं तान् विद्ध्यासुरनिश्चयान् ॥६॥**

कर्शयन्त इति । कर्शयन्तः कृशीकुर्वन्तः शरीरस्थम्भू-तग्रामङ्करणसमुदायमचेतसोऽविवेकिनो माञ्चैव तत्कर्म-बुद्धिसाक्षिभूतमन्तःशरीरस्थं कर्शयन्तः मदनुशासनाकर-णमेव मत्कर्शनं तान्विद्ध्यासुरनिश्चयान् आसुरो निश्चयो

येषान्ते आसुरनिश्चयास्तान् परिहरणार्थं विद्धि इत्यु-
पदेशः ॥ ६ ॥

श्रा० टी० । रजोनिष्ठान् प्राधान्येन प्रदर्श्य तमोनिष्ठान् प्राधान्येन दर्शयति कर्षयन्त इति । कथं शरीरादिसाक्षिणमीश्वरं प्रति कर्षीन्येन दर्शयति कर्षयन्त इति । कथं शरीरादिसाक्षिणमीश्वरं प्रति कर्षणं प्राणिनां प्रकल्पते तत्राह मदनुशासनेति । तेषां विपर्यासनिश्चयवतां परिज्ञानं कुत्रोपयुज्यते तत्राह परिहरणार्थमिति ॥ ६ ॥

स्वा० टी० । किञ्च कर्षयन्त इति । शरीरस्थं आरम्भकत्वेन देहे स्थितं भूतानां पृथिव्यादीनां ग्रामं समूहं कर्षयन्तो वृथैवोपवासादिभिः कृशं कुर्वन्तोऽचेतसोऽविवेकिनः साक्षान्तर्यामितया अन्तःशरीरस्थं देहमध्ये स्थितं मदाज्ञालङ्घनेनैव कर्षयन्तो ये तपश्चरन्ति तानासुरनिश्चयान् आसुरोऽतिक्रूरो निश्चयो येषां तान् विद्धि ॥ ६ ॥

**आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ।**
**यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥७॥**

आहाराणाञ्च रसस्निग्धादिवर्गत्रयरूपेण भिन्नानां यथाक्रमं सात्त्विकराजसतामसपुरुषप्रियत्वदर्शनमिह क्रियते यतो रस्यस्निग्धादिष्वाहारविशेषेष्वात्मनः प्रीत्यतिरेकेण लिङ्गेन सात्त्विकत्वं राजसत्वन्तामसत्वञ्च बुद्धा रजस्तमोलिङ्गानामाहाराणां परिवर्जनार्थं सत्त्वलिङ्गानाञ्चोपादानार्थं तथा यज्ञादीनामपि सत्त्वादिगुणभेदेन त्रिविधत्वप्रतिपादनमिह राजसतामसान् बुद्धा कथं नु नाम परित्यजेत् सात्त्विकानेवानुतिष्ठेदित्येवमर्थमाह आहारस्त्विति । आहारस्त्वपि सर्वस्य भोक्तुस्त्रिविधो भवति प्रिय इष्टस्तथा यज्ञस्तपस्तथा दानं तेषामाहारादीनां भेदमिमं वक्ष्यमाणं शृणु ॥ ७ ॥

आ० टी०। उत्तरश्लोकपूर्वार्द्धतात्पर्य्यमाह आहाराणामिति। रस्यादिवर्गस्य सात्त्विकपुरुषप्रियत्वं कट्वादिवर्गस्य राजसप्रियत्वं यातयामादिवर्गस्य तामसप्रियत्वमिति दर्शनं कुत्रोपयुज्यते तत्राह रस्येति। श्लोकोत्तरार्द्धतात्पर्य्यमाह तथेति। आहारत्रैविध्यवदिति यावत्। कथमेतेषां प्रत्येकं त्रैविध्यन्तत्राह तेषामिति ॥ ७ ॥

स्वा० टी०। आहारादिभेदादपि सात्त्विकादिभेदं दर्शयितुमाह आहारस्त्वित्यादित्रयोदशभिः। सर्वस्यापि जनस्य य आहारोऽन्नादिः स तु यथायथं त्रिविधः प्रियो भवति, तथा यज्ञतपोदानानि त्रिविधानि भवन्ति, तेषां वक्ष्यमाणं भेदमिमं शृणु, एतच्च राजसतामसाहारयज्ञादिपरित्यागेन सात्त्विकाहारयज्ञादिसेवया सत्त्ववृद्धौ यत्नः कर्त्तव्य इत्येतदर्थं कथ्यते ॥ ७ ॥

**आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्द्धनाः। रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ८**

आयुरिति। आयुश्च सत्त्वञ्च बलञ्च आरोग्यञ्च सुखञ्च प्रीतिश्च तासां विवर्द्धनाः आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्द्धनाः ते च रस्या रसोपेताः स्निग्धाः स्नेहवन्तः स्थिराश्चिरकालस्थायिनो देहे, हृद्या हृदयप्रिया आहाराः सात्त्विकस्येष्टाः ॥ ८ ॥

आ०टी०। सात्त्विकप्रीतिविषयमाहारविशेषमुदाहरति आयुरिति। आयुर्जीवनं सत्त्वाच्चित्तस्थैर्य्यं वीर्य्यं वा बलं कार्य्यकारणसामर्थ्यम्। आरोग्यं नीरोगता सुखं अन्तराह्लादः प्रीतिः परेषामपि सम्पन्नाना दर्शनात् परमो हर्षस्तासां विवर्द्धनाः विवर्द्धयन्तीति व्युत्पत्ते रसोपेता रसयितव्याः सरसाः देहे चिरकालस्थायित्वं चिरशरीरोपकारहेतुत्वम् ॥ ८ ॥

स्वा० टी०। तत्राहारत्रैविध्यमाह आयुरिति त्रिभिः। आयुर्जीवनं सत्त्वमुत्साहः बलं शक्तिः आरोग्यं रोगराहित्यं सुखं चित्त-

प्रसादः प्रीतिरभिरुचिः आयुरादीनां विवर्द्धनाः विशेषेण वृद्धिकराः ते च रस्या रसवन्तः स्निग्धाः स्नेहयुक्ताः स्थिरा देहे सारांशेन चिरकालावस्थायिनः हृद्याः दृष्टिमात्रादेव हृदयङ्गमाः एवम्भूता आहारा भक्ष्यभोज्यादयः सात्त्विकप्रियाः ॥ ८ ॥

**कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः।**
**आहाराराजसस्येष्टादुःखशोकामयप्रदाः ॥ ९ ॥**

कट्विति। कटुः अम्लो लवणः अत्युष्णः अतिशब्दः कट्वादिषु सर्वत्र योज्योऽतिकटुरतितीक्ष्ण इत्येवं कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः एवंविधा आहारा राजसस्येष्टा दुःखशोकामयप्रदा दुःखञ्च शोकञ्च आमयञ्च प्रयच्छन्तीति दुःखशोकामयप्रदाः ॥९ ॥

व्या॰ टी॰। राजसप्रीतिविषयमाहारविशेषं दर्शयति कट्विति। कट्वम्ल॰ कटुरस्य तीक्ष्णशब्देनोक्तत्वात् रूक्षो विस्नेहः विदाही सन्तापकः। अतिशब्दस्य सर्वत्र योजनमेवाभिनयति अतिकटुरिति। दुःखं तात्कालिकी पीड़ा इष्टवियोगजं दुःखं शोकः आमयो रोग ॥ ९ ॥

स्वा॰ टी॰। तथा कट्विति। अतिशब्दः कट्वादिषु सप्तस्वपि सम्बध्यते, तेन अतिकटुर्निम्बादिः अत्यम्लोऽतिलवणोऽत्युष्णश्च प्रसिद्धः अतितीक्ष्णा मरिचादिः अतिरूक्षः कङ्गुकोद्रवादिः अतिविदाही सर्षपादिः, अतिकट्वादय आहारा राजसस्येष्टाः प्रियाः, दुःखं तात्कालिकहृदयसन्तापादि, शोकः पश्चाद्भाविदौर्मनस्यम्, आमयो रोगः एतान् प्रददति प्रयच्छन्तीति तथा ॥ ९ ॥

**यातयामं गतरसं पूतिपर्य्युषितञ्च यत्।**
**उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥१०॥**

यातयाममिति। यातयामं मन्दपक्कं निर्वीर्य्यस्य गत-

रसेनोक्तत्वात् गतरसं रसवियुक्तं पूति दुर्गन्धि पर्य्युषितञ्च पक्कं सत् रात्र्यन्तरितञ्च यत् उच्छिष्टमपि च भुक्तशिष्टमप्यमेध्यमयज्ञार्हम्भोजनमीदृगन्नं तामसप्रियम् ॥ १० ॥

व्या० टी० । तामसप्रियमाहारमुदाहरति यातयाममिति । ननु निर्वीर्य्यं यातयाममुच्यते न पुनः स्वार्धपक्वमिति नेत्याह निर्वीर्य्यस्येति ।

स्वा० टी० । यातयाममिति । यातो यामः प्रहरो यस्य पक्वस्यौदनादेः तद्यातयामं शैत्यावस्थां प्राप्तमित्यर्थः, गतरसं निष्पीडितसारं, पूति दुर्गन्धि पर्य्युषितं दिनान्तरपक्वम् उच्छिष्टम् अन्यभुक्तावशिष्टम् अमेध्यम् अभक्ष्यं कलञ्जादि एवम्भूतं भोजनं भोज्यं तामसस्य प्रियम् ॥ १० ॥

**अफलाकाङ्क्षिभिर्यज्ञो विधिदिष्टो य इज्यते ।**
**यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥ ११ ॥**

अथेदानीं यज्ञस्त्रिविध उच्यते अफलेति । अफलाकाङ्क्षिभिरफलार्थिभिर्यज्ञो विधिदृष्टः शास्त्रचोदनादृष्टो योऽयम् इज्यते निर्वर्त्यते यष्टव्यमेवेति यज्ञस्वरूपनिर्वर्त्तनमेव कार्य्यमिति मनः समाधाय नानेन पुरुषार्थो मम कर्त्तव्य इत्येवं निश्चित्य स सात्त्विको यज्ञ उच्यते ॥ ११ ॥

व्या० टी० । हानादानार्थं आहारत्रैविध्यमेवं विभज्य क्रमप्राप्तं यज्ञत्रैविध्यं कथयति अथेति । तत्र सात्त्विकं यज्ञं ज्ञापयति अफलेति । फलाभिसन्धिं विना यज्ञस्वरूपमेव भाव्यमिति बुद्ध्वा शास्त्रतोऽनुष्ठीयमानो यज्ञः सात्त्विक इत्यर्थः ॥ ११ ॥

स्वा० टी० । यज्ञोऽपि त्रिविधस्तत्र सात्त्विकं यज्ञमाह अफलाकाङ्क्षिभिरिति त्रिभिः । फलाकाङ्क्षारहितैः पुरुषैर्विधिनादिष्टः आवश्यकतया विहितो यो यज्ञ इज्यते अनुष्ठीयते स सात्त्विको यज्ञः, कथमिज्यते, यष्टव्यमेवेति यज्ञानुष्ठानमेव कार्य्यं नान्यत् फलं साधनीयमित्येवं मनः समाधायैकाग्रं कृत्वेत्यर्थः ॥ ११ ॥

**अभिसन्धाय तु फलं दम्भार्थमपि चैव यत् ।**
**इज्यते भरतश्रेष्ठ ! तं यज्ञं विद्धि राजसम् ॥१२॥**

अभिसन्धायेति । अभिसन्धायोद्दिश्य फलं दम्भार्थमपि चैव यत् इज्यते भरतश्रेष्ठ । तं यज्ञं विद्धि राजसम् ॥ १२ ॥

श्रा० टी० । राजसं यज्ञं दानादि दर्शयति अभिसन्धायेति । स्वर्गाद्युद्दिश्य धार्मिकत्वख्यापनार्थञ्च यद्यजनं क्रियते तद्यज्ञं रजसा निर्वृत्तं राजसमवगच्छेत्यर्थः ॥ १२ ॥

स्वा० टी० । राजसं यज्ञमाह अभिसन्धायेति । फलमभिसन्धाय उद्दिश्य यत् त्विज्यते यज्ञः क्रियते दम्भार्थञ्च स्वमहत्त्वख्यापनाय तं यज्ञं राजसं विद्धि ॥ १२ ॥

**विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।**
**श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ १३ ॥**

विधिहीनमिति । विधिहीनं यथाचोदितविधिविपरीतम्, असृष्टान्नं ब्राह्मणेभ्यो न सृष्टमन्नं यस्मिन् यज्ञे सोऽसृष्टान्नस्तमसृष्टान्नं मन्त्रहीनं मन्त्रतः स्वरतो वर्णतश्च वियुक्तं मन्त्रहीनम् अदक्षिणमुक्तदक्षिणारहितं श्रद्धारहितं यज्ञं तामसं परिचक्षते तमोनिर्वृत्तं कथयन्ति ॥ १३ ॥

श्रा० टी० । तामसं यज्ञं दानादिमेवोदाहरति विधीति ॥ १३ ॥

स्वा० टी० । तामसं यज्ञमाह विधीति । विधिहीनं शास्त्रोक्तविधिशून्यम् असृष्टान्नं ब्राह्मणादिभ्योऽसृष्टं न निष्पादितमन्नं यस्मिंस्तं मन्त्रैर्हीनं यथोक्तदक्षिणारहितं श्रद्धाशून्यञ्च यज्ञं तामसं परिचक्षते कथयन्ति शिष्टाः ॥ १३ ॥

**देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।**
**ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥१४॥**

अथेदानीं तपस्त्रिविधमुच्यते देवेति । देवाश्च द्विजाश्च गुरवश्च प्राज्ञाश्च देवद्विजगुरुप्राज्ञास्तेषां पूजनं शौचमार्जवम् ऋजुत्वं ब्रह्मचर्य्यमहिंसा च शरीरनिर्वर्त्त्यं शारीरं शरीरप्रधानैः सर्वैरेव कार्य्यकरणैः कर्त्रादिभिः साध्यं शारीरन्तप उच्यते ॥ १४ ॥

श्चा॰ टी॰ । सात्त्विकादिभावं निरूपयितुं सर्वस्य तपसः स्वरूपं त्रिविधं निरूपयति अथेति । तत्र शारीरन्तपो निर्दिशति देवेति । देवा ब्रह्मविष्णुशिवादयः द्विजाः पूज्यत्वात् द्विजोत्तमाः गुरवः पित्रादयः प्राज्ञाः पण्डिता विदितवेदितव्यास्तेषां पूजनं प्रणामशुश्रूषादि शौचं मृज्जलाभ्यां शरीरशोधनम् आर्जवमृजुत्वं विहितप्रतिषिद्धयोरेकरूपप्रवृत्तिनिवृत्तिमत्त्वं ब्रह्मचर्य्यं मैथुनासमाचरणम् अहिंसा प्राणिनामपीडनं शरीरमात्रस्य निर्वर्त्त्यत्वमस्य तपसो सम्भवतीति मत्वा विशिनष्टि शरीरेति ॥ १४ ॥

स्वा॰ टी॰ । तपसः सात्त्विकादिभेदं दर्शयितुं प्रथमं तावच्छारीरादिभेदेन तस्य त्रैविध्यमाह देवेत्यादि त्रिभिः । तत्र शारीरमाह देवेति । प्राज्ञा गुरुव्यतिरिक्ता अन्येऽपि तत्त्वविदः देवब्राह्मणादिपूजनं शौचादिकञ्च शारीरं शरीरनिर्वर्त्त्यं तप उच्यते ॥ १४ ॥

**अनुद्वेगकरं वाक्यं सत्यं प्रियहितञ्च यत् ।**
**स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥१५॥**

यच्चैते तस्य हितव इति हि वक्ष्यति अनुद्वेगेति । अनुद्वेगकरं प्राणिनाम् अदुःखकरं वाक्यं सत्यं प्रियं हितञ्च यत् प्रियहिते दृष्टादृष्टार्थे अनुद्वेगकरत्वादिभिर्धर्म्मैर्वाक्यं विशिष्यते विशेषणधर्मसमुच्चयार्थश्चशब्दः परप्रत्यायनार्थं प्रयुक्तस्य वाक्यस्य सत्यप्रियाहितानुद्वेगकरत्वादीनामन्यतमेन द्वाभ्यां त्रिभिर्वा हीनता स्यात् यदि न तस्य वाङ्मय-

पस्त्वन्तथा सत्यवाक्यस्येतरेषामन्यतमेन द्वाभ्यां त्रिभिर्वा हीनतायां न वाङ्मयतपस्त्वं तथा प्रियवाक्यस्यापीतरेषामन्यतमेन द्वाभ्यां त्रिभिर्हीनस्य न वाङ्मयतपस्त्वन्तथाहि न वाक्यस्यापीतरेषामन्यतमेन द्वाभ्यां त्रिभिर्वा वियुक्तस्य न वाङ्मयतपस्त्वं किं पुनस्तत्तपो यत् सत्यं वाक्यमनुद्वेगकरं प्रियं हितञ्च यत् तत् परमं तपो वाङ्मयं यथा शान्तो भव वत्स ! स्वाध्यायं योगं वानुतिष्ठ तथा ते श्रेयो भविष्यति स्वाध्यायाभ्यसनञ्चैव यथाविधि वाङ्मयं तप उच्यते॥ १५ ॥

व्या० टी० । कथं कर्त्रादिसाध्यत्वे तपसः शारीरत्वं शारीरस्य वा कथं कर्त्रादिसाध्यत्वमित्याशङ्क्याह पञ्चेति । सम्प्रति वाङ्मयं तपो व्यपदिशति अनुद्वेगकरमिति । सत्यं यथादृष्टार्थवचनं प्रियं श्रुतिसुखं हितं परिणामपथ्यम् । प्रियहितयोर्विधान्तरेण विभागमाह प्रियेति । कथमत्र विशेषणविशेष्यत्वं तदाह अनुद्वेगेति । विशेषणानां धर्माणामनुद्वेगकरत्वादीनां विशेषणवाक्येन समुदितानां परस्परमपि समुच्चयद्योती चकार इत्याह विशेषणेति । किमिति वाक्यगतैर्विशेष्यते किमिति वा तेषां मिथः समुच्चयस्तत्राह परेति । यद्यपि विधायकवाक्यमात्रस्याविशेषितस्य वाङ्मयतपस्त्वानुपपत्तिस्तथापि सत्यवाक्यस्य वाक्यविशेषणान्तराभावेऽपि वाङ्मयतपस्त्वमित्याशङ्क्याह तथेति । तथापि प्रियवाक्यमात्रस्य तथात्वं स्यादित्याशङ्क्याह तथेति । तथापि परिणामपथ्यं वाक्यमात्रन्तथा भविष्यति नेत्याह तथा हितेति । कीदृक् तर्हि तयोर्वाङ्मयत्वमिति प्रश्नपूर्वकं विशदयति किं पुनरिति । विशिष्टे वाङ्मये तपसि दृष्टान्तमाह यथेति । वाङ्मुखत्वं पवित्रपाणित्वमित्यादिविधानमनतिक्रम्य स्वाध्यायस्यावर्त्तनमपि वाङ्मये तपस्यन्तर्भवतीत्याह स्वाध्यायेति । वाक्प्राचुर्येण प्रस्तुतान्यत्रीणि वाङ्मयं वाक्प्रधानमित्यर्थः ॥ १५ ॥

स्वा० टी० । वाचिकं तप आह अनुद्वेगकरमिति । उद्वेगं भयं

न करोतीत्यनुद्वेगकरं वाक्यं सत्यं श्रोतुः प्रियं हितञ्च परिणामे सुखकरं स्वाध्यायाभ्यसनं वेदाभ्यासश्च वाङ्मयं वाचा निर्वर्त्त्यं तपः ॥ १५ ॥

**मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।**
**भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ १६ ॥**

मन इति । मनःप्रसादो मनसः प्रशान्तिः स्वच्छतापादनं मनसः प्रसादसौम्यत्वं यत् सौमनस्यमाहुर्मुखादिरूप्रसादकार्य्यान्तःकरणस्य वृत्तिः, मौनं वाक्संयमोऽपि मनःसंयमपूर्वको भवति इति कार्य्येण कारणमुच्यते मनःसंयमो मौनमिति आत्मविनिग्रहो मनोनिरोधः सर्वतः सामान्यरूप आत्मविनिग्रहो वाग्विषयस्यैव मनसः संयमो मौनमिति विशेषः भावसंशुद्धिः परैर्व्यवहारकालेऽमायावित्वं भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ १६ ॥

व्या० टी० । मानसन्तपः दर्शयति मन इति । प्रशान्तिफलमेव व्यनक्ति स्वच्छतेति । मनसः स्वाच्छ्यमनाकुलता नैश्चिन्त्यमित्यर्थः । सौमनस्यं सर्वेभ्यो हितैषित्वमहिताचिन्तनञ्च तत् कथं गम्यते तत्राह मुखादीति । तस्य स्वरूपमाह अन्तःकरणस्येति । ननु मौनं वाङ्नियमन वाङ्मये तपस्यन्तर्भवति तत् कथं मानसे तपसि व्यपदिश्यते तत्र वाचः संयमस्य कार्य्यत्वान्मनःसंयमस्य कारणत्वात् कार्य्येण कारणग्रहणात् मानसे तपसि मौनस्याभिधानमित्याह वागिति । यद्वा मौनं मुनिभावो मननम् आत्मनो मनसो विनिग्रहो निरोधः नन्वेवं मौनस्य मनोनिग्रहस्य च मनःसंयमत्वेनैकत्वात् पौनरुक्त्यं नेत्याह सर्वत इति । भावस्य हृदयस्य संशुद्धी रागादिमलविकलतेति व्याचष्टे परैरिति । मानसं मनसा प्रधानेन निर्वर्त्त्यमित्यर्थः ॥ १६ ॥

स्वा० टी० । मानसं तप आह मन इति । मनःप्रसादः स्वच्छता,

सौम्यत्वमक्रूरता, मौनं मुनेर्भावो मननमित्यर्थः, आत्मनो मनसो विनिग्रहो विषयेभ्यः प्रत्याहारः भावसंशुद्धिर्व्यवहारे मायाराहित्यमित्येतन्मानसं तपः॥ १६ ॥

**श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः।**
**अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥१७**

यथोक्तं कायिकं वाचिकं मानसञ्च तपस्तप्तं नरैः सत्त्वादिभेदेन कथं त्रिविधं भवतीत्युच्यते श्रद्धयास्तिक्यबुद्ध्या परया प्रकृष्टया तप्तमनुष्ठितं तपस्तत् प्रकृतं त्रिविधं त्रिःप्रकारम् अधिष्ठानं नरैरनुष्ठातृभिरफलाकाङ्क्षिभिः फलाकाङ्क्षारहितैर्युक्तैः समाहितैर्यदीदृग्तपस्तत् सात्त्विकं सत्त्वनिर्वृत्तं परिचक्षते कथयन्ति शिष्टाः॥ १७ ॥

आ० टी०। त्रिविधस्य तपसो यथासम्भवं सात्त्विकादिभावेन तत्त्रैविध्यमाकाङ्क्षाद्वारा निक्षिपति यथोक्तमिति। तत्त्वेव अधिष्ठानं देहवाङ्मनोनिर्वर्त्यमित्यर्थः समाहितैः सिद्ध्यसिद्ध्योर्निर्विकारैरिति यावत्॥ १७॥

स्वा० टी०। शरीरवाङ्मनोभिर्निर्वर्त्यं त्रिविधं तपो दर्शितं तस्य त्रिविधस्यापि तपसः सात्त्विकादिभेदेन त्रैविध्यमाह श्रद्धयेत्यादित्रिभिः। तत् त्रिविधमपि तपः श्रेष्ठया श्रद्धया फलाकाङ्क्षाशून्यैर्युक्तैरेकाग्रचित्तैर्नरैस्तप्तं सात्त्विकं कथयन्ति॥ १७॥

**सत्कारमानपूजार्थं तपो दम्भेन चैव यत्।**
**क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥१८॥**

सत्कारेति। सत्कारः साधुकारः साधुरयं तपस्वी ब्राह्मणः इत्येवमर्थं मनो माननं प्रत्युत्थानाभिवादनादि-

एतदर्थं पूजा पादप्रक्षालनार्चनाशयितृत्वादि तदर्थञ्च तपः सत्कारमानपूजार्थं दम्भेनैव च क्रियते तपस्तदिह प्रोक्तं कथितं राजसञ्चलमध्रुवम् ॥१८॥

श्रा० टी० । राजसन्तपो निर्दिशति सत्कारेति । साधुकारमेवाह्लोत्पयति साधुरिति । दम्भेन चैव न आस्तिक्येन केवलधर्मध्वजित्वेनत्यर्थः तदिह प्रोक्तमस्मिन्नेव लोके फलप्रदमित्यर्थः कादाचित्कफलत्वं चलमध्रुवमनियतमनैकान्तिकफलमिति यावत् ॥ १८ ॥

स्वा० टी० । राजसमाह सत्कारेति । सत्कारः साधुकारः साधुरयमिति तापसोऽयमित्यादिवाक्पूजा, मानः प्रत्युत्थानाभिवादनादि दैहिकी पूजा पूजा अर्थलाभादि एतदर्थं दम्भेन च तपः क्रियते अतएव चलमनियतं ध्रुवञ्च क्षणिकं यदेवम्भूतं तपस्तदिह राजसं प्रोक्तम् ॥ १८ ॥

मूढग्राहेणात्मनो यत् पीड़या क्रियते तपः ।
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥१९॥

मूढ़ेति । मूढ़ग्राहेण विवेकनिश्चयेनात्मनः पीड़या क्रियते तत्तपः परस्य उत्सादनार्थं विनाशार्थं वा तत्तामसन्तप उदाहृतम् ॥ १९ ॥

श्रा० टी० । तामसन्तपः संदर्शयति मूढ़ेति । मूढोऽत्यन्ताविवेकी तस्य ग्राहो नामाग्रहभिनिवेशस्तेनेत्याह अविवेकेति । आत्मनः स्वस्य देहादेरित्यर्थः ॥ १९ ॥

स्वा० टी० । तामसं तप आह मूढ़ेति । मूढ़ग्राहेणाविवेककृतेन दुराग्रहेणात्मनः पीड़या यत्तपः क्रियते परस्योत्सादनार्थं वा अन्यस्य विनाशार्थमभिचाररूपं तत्तामसमुदाहृतं कथितम् ॥ १९ ॥

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥२०

इदानीं दानभेद उच्यते दातव्यमिति । दातव्यमिति । एवं मनः कृत्वा यद्दानं दीयतेऽनुपकारिणे प्रत्युपकारासमर्थाय समर्थायापि निरपेक्षन्दीयते देशे पुण्ये कुरुक्षेत्रादौ काले संक्रान्त्यादौ पात्रे च षडङ्गविद्वेदपारग इत्यादौ आचारनिष्ठाय इत्यर्थः तद्दानं सात्त्विकं स्मृतम् ॥ २० ॥

श्रा॰ टी॰ । क्रमप्राप्तं दानस्य गुणनिमित्तभेदमाह इदानीमिति । दातव्यमित्येवं मनः कृत्वा दानमेव मया भाव्यं न फलमित्यभिसन्धायेत्यर्थः ॥ २० ॥

स्वा॰ टी॰ । प्रतिज्ञातमेव दानस्य त्रैविध्यमाह दातव्यमिति । दातव्यमेवेत्येवं निश्चयेन यद्दानं दीयते अनुपकारिणे प्रत्युपकारासमर्थाय देशे कुरुक्षेत्रादौ काले ग्रहणादौ पात्रे चेति देशकालसाहचर्यात् सप्तमी प्रयुक्ता पात्रे पात्रभूताय तपःश्रुतादिसम्पन्नाय ब्राह्मणायेत्यर्थः, यद्वा, चतुर्थ्येवैषा पात्रे इति कजन्तं रक्षकाय इत्यर्थः । स हि सर्वस्मादापद्गणाद्दातारं पातीति पाता तस्मै यदेवंभूत दानं तत् सात्त्विकम् ॥२०॥

यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥२१॥
अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥२२॥

यत्त्विति । यत्तु दानं प्रत्युपकारार्थं काले त्वयं मां प्रत्युपकरिष्यतीत्येवमर्थं फलं वास्य दानस्य मे भविष्यत्यदृष्टमिति तदुद्दिश्य पुनर्दीयते च परिक्लिष्टं खेदसंयुक्तं तद्राजसं स्मृतम् ॥ २१ ॥

अदेशेति । अदेशकाले अपुण्ये देशे म्लेच्छाशुच्यादिसंकीर्णे अकाले पुण्यहेतुत्वेनाऽप्रख्याते संक्रान्त्यादिविशेष-

रहितं अपात्रेभ्यश्च मूर्खतस्करादिभ्यो देशादिसंगतौ वा असत्कृतं प्रियवचनपादप्रक्षालनपूजादिरहितमवज्ञातं पात्रपरिभवयुक्तञ्च तद्दानं तामसमुदाहृतम् ॥ २२ ॥

भा० टी० । राजसतामसदानविभजनं स्पष्टार्थम् ॥ २१ २२ ॥

स्वा० टी० । राजसं दानमाह यत्त्विति । कालान्तरेऽयं मां प्रत्युपकरिष्यतीत्येवमर्थं फलं वा स्वर्गादिकमुद्दिश्य यत् पुनर्दानं दीयते परिक्लिष्टं चित्तक्लेशयुक्तं यथा भवत्येवं भूतं तत् दानं राजसमुदाहृतं कथितम् ॥ २१ ॥

स्वा० टी० । तामसं दानमाह अदेशेति । अदेशे अशुचिस्थाने अकाले अशौचादिसमये अपात्रेभ्यो विटनटादिभ्यो यद्दानं दीयते तत् देशकालपात्रसम्पत्तावपि असत्कृतं पादप्रक्षालनादिसत्कारशून्यम् अवज्ञातं पात्रतिरस्कारयुक्तम् एवम्भूतं दानं तामसमुदाहृतम् ॥ २२ ॥

ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥२३

यज्ञदानतपःप्रभृतीनां साद्गुण्यकरणायायमुपदेश उच्यते ओं तत् सदिति । एष निर्देशः निर्दिश्यतेऽनेनेति निर्देशः त्रिविधो नाम निर्देशो ब्रह्मणः स्मृतश्चिन्तितो वेदान्तेषु ब्रह्मविद्भिर्ब्राह्मणास्तेन निर्देशेन त्रिविधेन वेदाश्च यज्ञाश्च विहिता निर्मिता. पुरा पूर्वमिति ॥ २३ ॥

स्वा० टी० । विहितानां कर्मणां प्रमादतुल्ये वैगुण्ये कथं परिहारः स्यादित्याशङ्क्याह ओमिति । ओमिति ब्रह्मेत्यादिश्रुतेः ओमिति तावद्ब्रह्मणो नामनिर्देशः तत्त्वमसीति श्रुतेः तदित्यपि ब्रह्मणो नामनिर्देशः सदेव सौम्येदमिति श्रुतेः सदित्यपि तस्य नामेति मत्वाह ओमिति । कथं निर्देशेन तेषां विधानमित्याशङ्क्याह निर्देश इति । यज्ञादीनां वैगुण्यप्रतीतिकाले यथोक्तनाम्नामन्यतमोच्चारणाद्वैगुण्यं

সিধ্যতীতি ভাবঃ কর্ম্মসাদ্গুণ্যপ্রকারণং ত্রিবিধনাম স্তৌতি ব্রাহ্মণা ইতি ॥ ২২ ॥

স্বা° টী°। নন্বেবং বিচার্য্যমাণে সর্ব্বমপি যজ্ঞতপোদানাদি রাজসতামসপ্রায়মেবেতি ব্যর্থো যজ্ঞাদিপ্রয়াস ইত্যাশঙ্ক্য তথাবিধস্যাপি সাত্ত্বিকত্বোপপাদনপ্রকারং দর্শয়িতুমাহ ওমিতি। ওঁতৎসদিতি ত্রিবিধো ব্রহ্মণঃ পরমাত্মনো নির্দ্দেশো নাম্না ব্যপদেশঃ স্মৃতঃ শিষ্টৈঃ, তত্র তাবদোমিতি ত্রিবৃদ্ব্রহ্মেত্যাদিশ্রুতিপ্রসিদ্ধেরোমিতি ব্রহ্মণো নাম, জগৎকারণত্বেনাতিপ্রসিদ্ধত্বাৎ বিদুষাং অপরোক্ষত্বাচ্চ তচ্ছব্দোঽপি ব্রহ্মণো নাম, পরমার্থসত্ত্বসাধুত্বপ্রশস্তত্বাদিভিঃ সচ্ছব্দোঽপি ব্রহ্মণো নাম। সদেব সৌম্যেদমগ্র আসীদিত্যাদিশ্রুতেঃ। অয়ং ত্রিবিধোঽপি নাম-নির্দ্দেশো বিগুণমপি সগুণং কর্ত্তুং সমর্থ ইত্যাশয়েন স্তৌতি তেন ত্রিবিধেন ব্রহ্মণো নির্দ্দেশেন ব্রাহ্মণাশ্চ বেদাশ্চ যজ্ঞাশ্চ পুরা সৃষ্ট্যাদৌ বিহিতা বিধাত্রা নির্ম্মিতাঃ শুদ্ধীকৃতা ইতি বা, যদ্বা, যস্যায়ং ত্রিবিধো নির্দ্দেশস্তেন পরমাত্মনা ব্রাহ্মণাদয়ঃ পবিত্রতমাঃ সৃষ্টাশ্চ তস্মাত্তস্যায়ং নির্দ্দেশোঽতিপ্রশস্ত ইত্যর্থঃ ॥ ২৩ ॥

**তস্মাদোমিত্যুদাহৃত্য যজ্ঞদানতপঃক্রিয়াঃ।**
**প্রবর্ত্তন্তে বিধানোক্তাঃ সততং ব্রহ্মবাদিনাম্ ॥২৪॥**

নির্দ্দেশস্তুত্যর্থমুচ্যতে তস্মাদোমিত্যুদাহৃত্যোচ্চার্য্য যজ্ঞদানতপঃক্রিয়াঃ যজ্ঞাদিস্বরূপাঃ ক্রিয়াঃ প্রবর্ত্তন্তে বিধানোক্তাঃ শাস্ত্রচোদিতাঃ সততং সর্ব্বদা ব্রহ্মবাদিনাং ব্রহ্মবদনশীলানাম ॥ ২৪ ॥

ব্যা° টী°। পূর্ব্বং সর্গাদৌ নির্ম্মাণস্য প্রজাপতিকর্ত্তৃকং যজ্ঞানব্রাহ্মণাদীনাং কারণং যস্মাচ্চ ব্রহ্মণো নির্দ্দেশস্তস্মাদিত্যুপসংহরতি তস্মাদিতি। ব্রহ্মবাদিনামিত্যত্র ব্রহ্ম বেদ ॥ ২৪ ॥

স্বা° টী°। ইদানীং প্রত্যেকমোঙ্কারাদীনাং প্রাশস্ত্যং দর্শয়িষ্যন্নোঙ্কারস্য তদেবাহ তস্মাদিতি। যস্মাদেবং ব্রহ্মণো নির্দ্দেশঃ প্রশস্ত-

सर्वादोमित्युदाहृत्य तदुच्चार्य्य कृता वेदवादिनां यज्ञाद्याः शास्त्रोक्ताश्च क्रियाः सततं सर्वदा अङ्गवैकल्येऽपि प्रकर्षेण वर्त्तन्ते सगुणा भवन्तीत्यर्थः ॥ २४ ॥

**तदित्यनभिसन्धाय फलं यज्ञतपःक्रियाः ।**
**दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः २५**

तदिति । तदित्यनभिसन्धाय तदिति ब्रह्माभिधानमुच्चार्य्य अनभिसन्धाय च कर्मणः फलं यज्ञतपःक्रियाः यज्ञक्रियास्तपःक्रियाश्च यज्ञतपःक्रियाः दानक्रियाश्च विविधाः क्षेत्रहिरण्यप्रदानादिलक्षणाः क्रियन्ते निर्वर्त्तन्ते मोक्षकाङ्क्षिभिः ॥ २५ ॥

आ० टी० । ओं शब्दस्य विनियोग उक्तः । तच्छब्दस्य विनियोगमाह तदित्यादिना ॥ २५ ॥

स्वा० टी० । द्वितीयं नाम स्तौति तदिति । ओंदाहृत्येति पूर्वस्यानुषङ्गः तदित्युदाहृत्य उच्चार्य्य शुद्धचित्तैर्मोक्षकाङ्क्षिभिः पुरुषैः फलाभिसन्धिमकृत्वा यज्ञाद्याः क्रियाः क्रियन्ते अतश्चित्तशोधनद्वारा फलसंकल्पत्यजनेन मुमुक्षुत्वसम्पादकत्वात्तच्छब्दनिर्देशः प्रशस्त इत्यर्थः ॥ २५ ॥

**सद्भावे साधुभावे च सदित्येतत् प्रयुज्यते ।**
**प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ ! युज्यते ॥२६॥**

ओंतच्छब्दयोर्विनियोग उक्तोऽथेदानीं सच्छब्दस्य विनियोगः कथ्यते सद्भाव इति । सतः सद्भावे यथा विद्यमानस्य पुत्रस्य जन्मनि, तथा साधुभावे असद्वृत्तस्यासाधोः सद्वृत्तता साधुभावस्तस्मिन् साधुभावे च सदित्येतदभिधानं ब्रह्मणः प्रयुज्यते तत्रोच्यतेऽभिधीयते प्रशस्ते

कर्मणि विवाहादौ च तथा सच्छब्दः पार्थ ! युज्यते प्रयुज्यत इत्येतत् ॥ २६ ॥

श्रा° टी° । इत्तमनूद्यानन्तरश्लोकतात्पर्य्यमाह ओं तच्छब्दयोरिति ॥ २६ ॥

स्वा° टी° । सच्छब्दस्य प्रागस्त्यमाह सद्भाव इति द्वाभ्याम् । सद्भावे अस्तित्वे देवदत्तस्य पुत्रादिकमस्तीत्यस्मिन्नर्थे साधुभावे च साधुत्वे देवदत्तस्य पुत्रादि श्रेष्ठमित्यस्मिन्नर्थे सदित्येतत् पदं प्रयुज्यते। प्रशस्ते माङ्गलिके विवाहादिकर्मणि च सदिदं कर्मेति सच्छब्दो युज्यते प्रयुज्यते सङ्गच्छत इति वा ॥ २६ ॥

**यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।**
**कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥ २७ ॥**

यज्ञे यज्ञकर्मणि या स्थितिस्तपसि च या स्थितिर्दाने च या स्थितिः सा च सदित्युच्यते विद्वद्भिः, कर्म च एव तदर्थीयं यज्ञदानतपोऽर्थीयमथ वा यस्याभिधानत्रय प्रकृतं तदर्थीयमीश्वरार्थीयमित्येतत् सदित्येवाभिधीयते तदेतत् यज्ञदानतप आदिकर्म असात्त्विकं विगुणमपि श्रद्धापूर्वकं ब्रह्मणोऽभिधानत्रयप्रयोगेण सगुणं सात्त्विकं संपादितं भवति ॥ २७ ॥

श्रा° टी° । प्रकारान्तरेण सच्छब्दस्य विनियोगमाह यज्ञ इति । नामत्रयोच्चारणेन साद्गुण्यं सिध्यतीति प्रकरणार्थमुपसंहरति तदेतदिति ॥ २७ ॥

स्वा° टी° । किञ्च यज्ञ इति । यज्ञादिषु या स्थितिस्तात्पर्य्येणावस्थानं तदपि सदित्युच्यते । यस्य चेदं नामत्रयं स एव परमात्मा फलं फलं यस्य तत्तदर्थं कर्म पुजोपहारश्चहाङ्गनपरिमार्जनोपलेपनरङ्गमाङ्गलिकादिक्रिया तत्विषये यदन्यत् कर्म क्रियते तद्यामप्यभि-

क्षेत्रधनार्जनादिविषयं तत्कर्म तदर्थीयं तच्चातिव्यवहितमपि सदित्येवाभिधीयते। यस्मादेवमतिप्रशस्तमेतच्चामत्रयं तस्मादेतत् सर्वकर्मसाद्गुण्यार्थं सङ्कीर्त्तयेदिति तात्पर्य्यार्थः। अत्र चार्थवादानुपपत्त्या विधिः कल्प्यते "विधेयं स्तूयते वस्त्विति" न्यायात्। अपरे तु प्रशस्तेन्ते विधानोक्ताः क्रियन्ते मोक्षकाङ्क्षिभिरित्यादि वर्त्तमानोपदेशः समिधो यजतीत्यादिवद्विधितया परिणमनीय इत्याहुस्तत्तु सद्भावे साधुभावे चेत्यादिषु प्रामार्थत्वाच्च सङ्गच्छत इति पर्यौक्तक्रमेण विधिकल्पनैव ज्यायसी॥२७॥

**अश्रद्धया हुतं दत्तं तपस्तप्तं कृतञ्च यत्।**
**असदित्युच्यते पार्थ! न च तत् प्रेत्य नो इह॥२८**

**इति श्रीमहाभारते शतसाहस्त्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीभगवद्गीता-सूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे श्रद्धात्रयविभागयोगो नाम सप्तदशोऽध्यायः।**

---

तत्र च सर्वत्र श्रद्धाप्रधानतया सर्वं संपाद्यते यस्मात् अश्रद्धयेति। तस्मात् अश्रद्धया हुतं हवनं कृतं दत्तञ्च ब्राह्मणेभ्योऽश्रद्धया, तपस्तप्तमनुष्ठितमश्रद्धया, तथाऽश्रद्धयैव कृतं यत् स्तुतिनमस्कारादि तत् सर्वमसदित्युच्यते मत्प्राप्तिसाधनमार्गबाह्यत्वात् पार्थ! न च तद्बहुायासमपि प्रेत्य फलाय नाऽपीहार्थं साधुभिर्निन्दितत्वादिति॥२८॥

इति सप्तदशोऽध्यायः।

व्या० टी०। अश्रद्धान्वितस्यापि कर्मणो नामत्रयोच्चारणाद्वैगुण्ये श्रद्धाप्राधान्यं न स्यादित्याशङ्क्याह तच्च चेति। सप्तमीभ्यां प्रकृतं यज्ञादि च्यते सर्वयज्ञादि सगुणमिति शेषः। तस्यासत्त्वं साधयति नहमा-प्नोति। ऐहिकामुष्मिकं वा फलमश्रद्धितेनापि कर्मणा संपत्स्यते कुतो-ऽस्यासत्त्वमित्याशङ्क्याह न चेति। तस्योभयविधफलाहेतुत्वे हेतुमाह साधुभिरिति। निन्दन्ति हि साधवः श्रद्धारहितं कर्म अतो नैतदुभय-फलौपयिकमित्यर्थः, तदनेन शास्त्रानभिज्ञानामपि श्रद्धावतां श्रद्धया सात्त्विकत्वादित्रैविध्यभाजां राजसतामसाहारादित्यागेन सात्त्विकाहा-रादिसेवया सत्त्वैकशरणानां प्राप्तमपि यज्ञादिवैगुण्यं ब्रह्मनामनिर्देशेन परिहरतां परिशुद्धबुद्धीनां श्रवणादिसामग्रीकज्ञाततत्त्वसाक्षात्कारवतां मोक्षोपपत्तिरिति स्थितम् ॥ २८ ॥

इति सप्तदशोऽध्यायः।

स्वा० टी०। इदानीं सर्वकर्मसु श्रद्धैव प्रवृत्त्यर्थमश्रद्धया कृतं सर्वं निन्दति अश्रद्धयेति। अश्रद्धया हुतं हवनं दत्तं दानं तपस्तप्तं निर्व-र्त्तितं यच्चान्यदपि कृतं तत् सर्वमसदित्युच्यते, यतस्तत् प्रेत्य लोकान्तरे न फलति विगुणत्वात् नो इह न चास्मिन् लोके फलति अयशस्कर-त्वात्। रजस्तमोमयीं त्यक्त्वा श्रद्धां सत्त्वमयीं श्रितः। तत्त्वज्ञानेऽधि-कारी स्यादिति सप्तदशे स्थितम् ॥ २८ ॥

इति सप्तदशोऽध्यायः।

---

# अष्टादशोऽध्यायः।

---

## अर्जुन उवाच।

**सन्न्यासस्य महाबाहो! तत्त्वमिच्छामि वेदितुम्।**
**त्यागस्य च हृषीकेश! पृथक् केशिनिसूदन!॥१॥**

सर्वस्यैव गीताशास्त्रस्यार्थोऽस्मिन्नध्याये उपसंहृत्य सर्वश्च वेदार्थो वक्तव्य इत्येवमर्थोऽयमध्याय आरभ्यते सर्वेषु ह्यतीतेष्वध्यायेषु उक्तोऽर्थोऽस्मिन्नध्यायेऽवगम्यतेऽर्जुनस्तु सन्न्यासत्यागशब्दार्थयोरेव विशेषं बुभुत्सुरुवाच सन्न्यासस्येति । सन्न्यासस्य सन्न्यासशब्दार्थस्य इत्येतद्धे महाबाहो ! तत्त्वन्तस्य भावस्तत्त्वं याथात्म्यमित्येतत् इच्छामि वेदितुं ज्ञातुं त्यागस्य च त्यागशब्दार्थस्येत्येतत् हृषीकेश ! पृथक् इतरेतरविभागं केशिनिसूदन ! केशिनामा कश्चित् असुरस्तन्निसूदितवान् भगवान् वासुदेवस्तेन तन्नाम्ना सम्बोध्यतेऽर्जुनेन ॥१॥

आ० टी० । पूर्वैरध्यायैर्विस्तरेण यतस्ततो विक्षिप्ततयोक्तमर्थं सुखप्रतिपत्त्यर्थं संक्षेपेणोपसंहृत्याभिधातुमध्यायान्तरमवतारयति सर्वस्यैवेति । उपसंहृत्य वक्तव्य इति सम्बन्धः । किञ्चोपनिषत्सु यतस्ततो विस्तृतस्यार्थस्य बुद्धिसौकर्यार्थमस्मिन्नध्याये संक्षिप्ताभिधानं कर्त्तव्यमुपनिषदां गीतानाञ्चैकार्थत्वादित्याह सर्वश्चेति । कथं सर्वोऽपि शास्त्रार्थोऽस्मिन्नध्याये संक्षिप्योपसंह्रियते तत्राह सर्वेषु हीति । ननु वेदार्थश्चेदशेषतोऽत्र सञ्जिहीर्षितस्तर्हि किमिति त्यागेनैके, सन्न्यासयोगादिति च वेदार्थैकदेशविषयं प्रश्नप्रतिवचनन्तत्राह अर्जुनस्त्विति । पृथगनयोस्तत्त्वं वेदितुमिच्छामीति विशेषणादपृथगर्थस्तयोरस्तीति गम्यते बुभुत्सितस्य प्रष्टव्यत्वादेकदेशे तदभावादुक्तप्रश्नोपपत्तिरिति भावः ॥ १ ॥

स्वा० टी० । न्यासत्यागविभागेन सर्वगीतार्थसंग्रहम् । स्पष्टमष्टादशे प्राह परमार्थविनिर्णये । अत्र च सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी । संन्यासयोगयुक्तात्मेत्यादिषु कर्मसंन्यास उपदिष्टस्तथा त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः सर्वकर्मफलत्यागं ततः कुरु यतात्मवानित्यादिषु च फलमात्रत्यागेन कर्मानुष्ठानमुपदिष्टं, न च परस्परविरुद्धं सर्वज्ञः परमकारुणिको भगवानुपदिशेत् अतः कर्मसंन्यासस्य तद्-

युद्धावस्य चाविशेषप्रकारं बुभुत्सुरर्जुन उवाच सन्न्यासस्येति। भो हृषीकेश! सर्वेन्द्रियनियामक! हे केशिनिसूदन! केशिनाम्नो महतो हयाकृतेर्दैत्यस्य युद्धे मुखं व्यादाय भक्षितुमिच्छतोऽत्यन्तं व्यात्तमुखे वामबाहुं प्रवेश्य तत्क्षणमेव विवृद्धेन तेनैव बाहुना कर्कटिकाफलवत्तं विदार्य्य निसूदितवन्! अतएव हे महाबाहो! इति सम्बोधनं, सन्न्यासस्य त्यागस्य च तत्त्वं पृथक् विवेकेन वेदितुमिच्छामि ॥ १ ॥

## श्रीभगवानुवाच।

**काम्यानां कर्मणां न्यासं सन्न्यासं कवयो विदुः।**
**सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ २ ॥**

तत्र तत्र निर्दिष्टौ सन्न्यासत्यागशब्दौ न निर्लुण्ठितार्थौ पूर्वेष्वध्यायेष्वतोऽनुमाय पृष्टवति तन्निर्णयाय भगवानुवाच काम्येति। काम्यानां अश्वमेधादीनां कर्मणान्यासम्परित्यागं सन्न्यासं सन्न्यासशब्दार्थमनुष्ठेयत्वेन प्राप्तस्याननुष्ठानं कवयः पण्डिताः केचिद्विद्वद्विजानन्ति नित्यनैमित्तिकानामनुष्ठीयमानानां सर्वकर्मणामात्मसम्बन्धितया प्राप्तस्य फलस्य त्यागः सर्वकर्मफलत्यागः तमाहुः कथयन्ति त्यागं त्यागशब्दार्थं विचक्षणाः पण्डिताः ॥ २ ॥

श्रा० टी०। ननु पूर्वेष्वध्यायेषु तत्र सन्न्यासत्यागयोरुक्तत्वात् किमिति पुनस्तौ पृच्छ्येते तत्राह तत्र तत्रेति। न निर्लुण्ठितार्थौ न निष्कृष्टार्थौ न विविक्तार्थावित्यर्थः। बुभुत्सया प्रश्नस्य प्रवृत्तत्वात् प्रष्टुरभिप्रायं प्रश्नेन प्रतिपद्य भगवानुत्तरमुक्तवानित्याह अत इति। पक्षद्वयोपन्यासेन सन्न्यासत्यागशब्दयोरर्थभेदं कथयति काम्यानामिति ॥ २ ॥

स्वा० टी०। तत्रोत्तरं श्रीभगवानुवाच काम्यानामिति। काम्यानां

पुत्रकामो यजेत, स्वर्गकामो यजेतेत्यादिकामोपबन्धेन विहितानां कर्म्मणां न्यासं परित्यागं सन्न्यासं कवयो विदुः सम्यक्फलैः सह कर्म्मणामपि न्यासं संन्यासं पण्डिता जानन्तीत्यर्थः। सर्वेषां काम्यानां नित्यनैमित्तिकानां च कर्म्मणां फलमात्रत्यागं प्राहुस्त्यागं विचक्षणा निपुणाः न तु स्वरूपतः कर्मत्यागम्। ननु नित्यनैमित्तिकानां फलाश्रवणादविद्यमानस्य फलस्य कथं त्यागं स्यात् न हि बन्ध्यायाः पुत्रत्यागः सम्भवति, उच्यते, यद्यपि स्वर्गकामः पशुकाम इत्यादिवत् अहरहः सन्ध्यामुपासीत यावज्जीवमग्निहोत्रं जुहोतीत्यादिषु फलविशेषो न श्रूयते तथाप्यपुरुषार्थे व्यापारे प्रेक्षावन्तं प्रवर्त्तयितुमशक्नुवन्, विधिर्विश्वजिता यजेतेत्यादिष्विव सामान्यतः किमपि फलमाक्षिपत्येव। न चातीव गुरुमतश्रद्धया स्वसिद्धरेव विधेः प्रयोजनं मन्तव्यं पुरुषप्रवृत्त्यनुपपत्तेर्दुष्परिहरत्वात्। श्रूयते च नित्यादावपि फलं "सर्व एते पुण्यलोका भवन्तीति" कर्मणा पितृलोक इति, "धर्मेण पापमपनुदतीत्यादिषु। तस्माद्युक्तमुक्तं सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणा इति। ननु फलत्यागे पुनरपि निष्फलेषु कर्मसु प्रवृत्तिरेव न स्यात्, तन्न सर्वेषां कर्म्मणां संयोगपृथक्त्वेन विविदिषार्थतया विनियोगात्। तथा च श्रुतिः। "तमेतमात्मानं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेनेति"। ततश्च श्रुतिपदोक्तं सर्वं फलं बन्धकत्वेन त्यक्त्वा विविदिषार्थं सर्वकर्म्मानुष्ठानं घटत एव। विविदिषा च नित्यानित्यवस्तुविवेकेन निवृत्तदेहाद्यभिमानतया बुद्धेः प्रत्यक्प्रवणता तावत्पर्य्यन्तञ्च सत्त्वशुद्ध्यर्थं ज्ञानाविरुद्धं यथोचितमावश्यकं कर्म कुर्वतस्तत्फलत्याग एव कर्मत्यागो नाम न स्वरूपेण तथा च श्रुतिः "कुर्व्वन्नेवेह कर्म्माणि जिजीविषेच्छतं समाः" इति। ततः परन्तु सर्वकर्म्मनिवृत्तिः स्वत एव भवति। तदुक्तं नैष्कर्म्यसिद्धौ, "प्रत्यक्प्रवणतां बुद्धेः कर्म्माण्युत्पाद्य शुद्धितः। कृतार्थान्यस्तमायान्ति प्रावृडन्ते घना इव"। उक्तञ्च भगवता "यस्त्वात्मरतिरेव स्यादित्यादि"वशिष्ठेन चोक्तं, "न कर्म्माणि त्यजेद्योगी कर्मभिस्त्यज्यते ह्यसाविति"। ज्ञाननिष्ठाविक्षेपकत्वमालक्ष्य त्यजेद्वा तदुक्तं श्रीभागवते, "तावत् कर्म्माणि कुर्वीत न निर्विद्येत यावता। मत्कथा-

शुश्रूषादौ वा शुश्रूषा यावज्ज्ञ जायते। ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वाऽनपेक्षकः। स लिङ्गानाश्रमांस्त्यक्त्वा चरेदविधिगोचर” इत्यादि। अलमतिप्रसङ्गेन प्रकृतमनुसरामः, अविदुषः फलत्यागमात्रमेव त्यागशब्दार्थो न कर्मत्याग इति॥ २॥

**त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः।**
**यज्ञदानतपःकर्म न त्याज्यमिति चापरे॥ ३॥**

यदि काम्यकर्मपरित्यागः फलपरित्यागो वार्थो वक्तव्यः सर्वथा परित्यागमात्रं सन्न्यासत्यागशब्दयोरेकोऽर्थः स्यात् तद्घटपटशब्दाविव जात्यन्तरभूतार्थौ। ननु नित्यनैमित्तिकानां कर्मणां फलमेव नास्तीत्याहुः कथमुच्यते तेषां फलत्यागः यथा बन्ध्यायाः पुत्त्रत्यागो नैष दोषः नित्यानामपि कर्मणां भगवता फलवत्त्वस्येष्टत्वात् वक्ष्यति भगवान् अनिष्टमिति न तु सन्न्यासिनामिति च सन्न्यासिनामेव हि केवलं कर्मफलासम्बन्धं दर्शयन्नसन्न्यासिनां नित्यकर्मफलप्राप्तिं भवत्यत्यागिनां प्रेत्येति दर्शयति, त्याज्यं दोषेति। त्याज्यन्त्यक्तव्यं दोषवत् दोषोऽस्यास्तीति दोषवत् किं तत् कर्म बन्धहेतुत्वात् सर्वमेव अथवा दोषो यथा रागादिस्त्यज्यते तथा त्याज्यमित्येके कर्म प्राहुर्मनीषिणः पण्डिताः साङ्ख्यादिदृष्टिमाश्रिता अधिकृतानान्तु कर्मिणामपीति, तत्रैव यज्ञदानतपःकर्म न त्याज्यमिति चापरे कर्मिण एवाधिकृतास्तानपेक्ष्यैते विकल्पाः न तु ज्ञाननिष्ठान् व्युत्थायिनः सन्न्यासिनोऽपेक्ष्य ज्ञानयोगेन साङ्ख्यानां निष्ठा मया पुरा प्रोक्ता इति कर्माधिकारादपाहृत्ता ये न तान् प्रति,

विहिता चिन्ता, ननु कर्मयोगेन योगिनामिति अधिकृताः पूर्वं विभक्तनिष्ठा अपीह सर्वशास्त्रोपसंहारप्रकरणे यथा विचार्य्यन्ते तथा सांख्या अपि ज्ञाननिष्ठा विचार्य्यन्तामिति न तेषां मोहकृतं शरीरदुःखनिमित्तत्यागानुपपत्तेर्न कायक्लेशनिमित्तानि दुःखानि साङ्ख्या आत्मनि पश्यन्ति इच्छादीनां चेत्रधर्मत्वेनैव दर्शितत्वात् अतस्ते न कायक्लेशदुःखभयात् कर्म परित्यजन्ति नापि ते कर्माण्यात्मनि पश्यन्ति येन नियतं कर्म मोहात् परित्यजेयुर्गुणानां कर्म नैव किञ्चि-

---

व्या० टी० । ननु किमिदानीं सन्न्यासत्यागशब्दयोरात्यन्तिकं भिन्नार्थत्वन्तथा च प्रसिद्धिविरोधः स्यादित्याशङ्क्यावान्तरभेदेऽपि नात्यन्तिकभेदोऽस्तीत्याह यदीति । पुत्राभावाद्वन्ध्यायास्तत्त्यागायोगवन्नित्यनैमित्तिककर्मणामफलानां फलत्यागानुपपत्तेरुक्तस्त्यागशब्दार्थो न सिध्यतीति शङ्कते नन्विति । नित्यनैमित्तिककर्मफलस्य वन्ध्यापुत्रवादश्याभावात्तत्त्यागसम्भवादुक्तस्त्यागशब्दार्थः सम्भवतीति समाधत्ते नैष दोष इति । भगवता तेषां फलवत्त्वमिष्टमित्यत्र वाक्यशेषमनुकूलयति वक्ष्यतीति । तर्हि सन्न्यासिनामसन्न्यासिनाञ्च नित्याद्यनुष्ठायिनामविशेषेण तत् फलं स्यादिति चेन्नैवेत्याह न त्विति । वक्ष्यतीत्यनुकर्षणार्थश्चकारार्थः । प्रसक्तस्य वचसोऽर्थं प्रकृतोपयोगित्वेन संगृह्य स्मारयति सन्न्यासिनामिति । काम्यानि वर्जयित्वा नित्यनैमित्तिकानि फलाभिलाषादृते कर्त्तव्यानि युक्तं पक्षं प्रतिपक्षनिरासेन दृढ़यितुं विप्रतिपत्तिमाह त्याज्यमिति । कर्मणः सर्वस्य दोषवत्त्वे हेतुमाह बन्धेति । दोषवदित्येतद्दृष्टान्तत्वेन व्याचष्टे यथ वेति । कर्मण्यनधिकृतानामकर्मिणामेव कर्म त्याज्यं कर्मिणान्तत्यागे प्रत्यवायादित्याशङ्क्याह अधिकृतानामिति । न हि तेषामपि कर्म त्यजतां प्रत्यवायो हिंसादियुक्तस्य कर्मणोऽनुष्ठाने परं प्रत्यवायादिति भावः, साङ्ख्यादिपक्षसमाप्ताविति शब्दः । मीमांसक-

करोमीति हि ते सन्न्यस्यन्ति सर्वकर्माणि मनसा सन्न्यस्ये-
त्यादिभिर्हि तत्त्वविदः सन्न्यासप्रकार उक्तस्तस्माद्येऽन्येऽधि-
कृताः कर्मण्यनात्मविदो येषाञ्च मोहात् त्यागः सम्भवति
कायक्लेशभयाच्च त एव तामसास्त्यागिनो राजसाश्चेति
निन्द्यन्ते कर्मिणामनात्मज्ञानां कर्मफलत्यागस्तुत्यर्थं सर्वा-
रम्भपरित्यागी मौनी सन्तुष्टो येन केनचिदनिकेतः स्थिर-
मतिरिति गुणातीतलक्षणे च परमार्थसन्न्यासिनो विशेषि-
तत्वात, वक्ष्यति च ज्ञानस्य या परा निष्ठेति तस्मात् ज्ञान-
निष्ठाः सन्न्यासिनो नेह विवक्षिताः कर्मफलत्याग एव

---

एवमाह तत्रैवेति । कर्माधिकृतेष्वेवेति यावत्, कर्म नित्यं नैमित्ति-
कञ्च । काम्यानां कर्मणामित्यारभ्य श्लोकाभ्यां कर्मिणोऽधिकृतानधि-
कृतांश्चापेक्ष्य दर्शितविकल्पानां प्रवृत्तिरित्याशङ्क्याह कर्मिण इति । एव-
कारव्यवच्छेद्यमाह नत्विति । तदेव स्फुटयति ज्ञानेति । कर्माधि-
कृतानां ज्ञाननिष्ठातो विभक्तनिष्ठावत्त्वेन पूर्वोक्तानामपि शास्त्रार्थोपसं-
हारे पुनर्विचार्यत्ववज्ज्ञाननिष्ठानामपि विचार्यत्वमत्राविरुद्धमिति शङ्कते
नन्विति । सांख्यानां परमार्थज्ञाननिष्ठानां नात्र विचार्यतेत्युत्तरमाह
न तेषामिति । ननु तेषामपि स्वात्मनि क्लेशदुःखादि पश्यतां तदनुरोधेन
राजसकर्मत्यागसिद्धेर्विचार्यत्वं नेत्याह न कायेति । तत्र क्षेत्राध्या-
योक्तं हेतुं करोति इच्छादीनामिति । स्वात्मनि सांख्यादीनां क्लेशाद्य-
प्रतिपत्तौ फलितमाह अत इति । ननु तेषां क्लेशाद्यदर्शनेऽपि स्वात्मनि
कर्माणि पश्यतां तत्त्यागो युक्तस्तेषां कायक्लेशादिकरत्वाद्वेत्याह
नापीति । अज्ञानात्मोहमाहात्म्यात् नियतमपि कर्म त्यक्तुं शक्यं
न तत्त्वविदां स्वात्मनि कर्मादर्शने तत्त्यागे हेत्वभावादिति मत्वाह मो-
हादिति । कथं तर्हि तेषामात्मनि कर्माण्यपश्यतां प्राप्तभावे तत्त्यागः
बुद्ध्यादिकृतमाह गुणानामिति । अविवेकमाप्तानां कर्मणां तत्त्यागसत्त्व-

सात्त्विकत्वेन गुणेन तामसत्वाद्यपेक्षया सन्न्यास उच्यते न मुख्यः सर्वकर्मसन्न्यासः सर्वकर्मसन्न्यासासम्भवे च न हि देहभृतेति हेतुवचनान्मुख्य एवेति चेन्न हेतुवचनस्य स्तुत्यर्थत्वात् यथा त्यागाच्छान्तिरनन्तरमिति कर्मफलत्यागस्तुतिरेव यथोक्तानेकपक्षानुष्ठानाशक्तिमन्तं अर्जुनं प्रति विधानात तथेदमपि नहि देहभृता शक्यमिति कर्मफलत्यागस्तुत्यर्थं न सर्वाणि कर्माणि मनसा सन्न्यस्य नैव कुर्वन्न कारयन्नास्ते इत्यस्य पक्षस्यापवादः केनचिद्दर्शयितुं शक्यस्तस्मात् कर्मस्वधिकृतान् प्रत्येवैष सन्न्यासत्यागविकल्पः ये तु परमार्थदर्शिनः साङ्ख्यास्तेषां ज्ञाननिष्ठायामेव सर्वकर्मसन्न्यासलक्षणायामधिकारो नान्यत्रेति न ते विकल्पार्हास्तच्चोपपादितमस्माभिर्वेदाविनाशिनमित्यस्मिन् प्रदेशे तृतीयादौ च ॥ ३ ॥

विदामितत्युक्तं कारयन्नासमतिशेषं प्रतत्यादिशति सर्वेति । तत्त्वविदामलाविचार्यत्वे फलितमाह तस्मादिति । ये नात्मविदस्त एवेतत्युत्तरत्र सम्बन्धः । कर्मण्यधिकृतानामनात्मविदां कर्मत्यागसम्भावनां दर्शयति येषामिति । तन्निन्दा कृतोपयुक्तेत्यागङ्क्याह कर्मिणामिति । किञ्च परमार्थसन्न्यासिना दशसम्भोपलम्भात् निन्दाविषयत्वमित्याह सर्वेति । किञ्चात्रापि सिद्धिं प्राप्तो यथेत्यादिना ज्ञाननिष्ठया वक्ष्यमाणत्वात्तत्तामेह विचार्यतेत्याह वक्ष्यतीति । कर्माधिकृतानामेवात्र विवक्षितत्वात् न ज्ञाननिष्ठानामित्युपसंहरति तस्मादिति । ननु सन्न्यासशब्देन सर्वकर्मसन्न्यासस्य ग्राह्यत्वात्तथाविधसन्न्यासिनामिह विवक्षितत्वं प्रतिभाति तत्राह कर्मेति । सन्न्यासशब्देन तुल्यस्यैव सन्न्यासस्य पक्षकृत्येवाह्यस्ययोर्लक्ष्ये संप्रत्ययादन्यथा तदसम्भवे द्वैतक्रियैवस्यादिप्राप्तप्रतिषेधादिति शङ्कते सर्वेति । नेदं हेतुवचनं सर्वकर्मसन्न्यासासम्भवसाधकं

कर्मफलत्यागस्तुतिपरत्वादिति परिहरति नेत्यादिना। एतदेव दृष्टान्तेन स्पष्टयति यथेति। दृष्टान्तेऽपि यथाश्रुतार्थत्वं किं न स्यादित्याशङ्क्याह यथोक्तेति। न हि फलत्यागादेव ज्ञानं विना मुक्तिर्युक्ता मुक्तेर्ज्ञानैकाधीनत्वसाधकश्रुतिस्मृतिविरोधात् अद्वेष्टेत्यादिना ज्ञानान्तरमेव ज्ञानसाधनविधानानर्थक्यात् त्यागस्तुतिरेवात्र भातीत्यर्थः। दृष्टान्तगतमर्थं दार्ष्टान्तिके योजयति तथेति। प्रागुक्तपक्षापवादविवक्षया हेतूक्तेः संख्यार्थत्वमेव किं न स्यादित्याशङ्क्य तदपवादे हेत्वभावान्नैवमित्याह न सर्वेति। न श्रेयमेव हेतूक्तिस्तदपवादिकान्यथासिद्धेरुक्तत्वादिति भावः। कृत्स्नसंन्यासापवादासम्भवे संन्यासत्यागविकल्पस्य कथं सावकाशतेत्याशङ्क्याह तस्मादिति। ज्ञाननिष्ठान् प्रत्युक्तविकल्पानुपपत्तौ कुत्र तेषामधिकारस्तत्राह ये त्विति। संन्यासिनां विकल्पानर्हत्वेन ज्ञाननिष्ठायामेवाधिकारस्य भूयःसु प्रदेशेषु साधितत्वात् साधनीयत्वापेक्षेत्याह तथेति ॥ ३ ॥

स्वा॰ टी॰। एतदेव मतान्तरनिरासेन दृढीकर्तुं मतभेदं दर्शयति त्याज्यमिति। दोषवद्धिंसादिदोषवत्त्वेन बन्धकमिति हेतोः सर्वमपि कर्म त्याज्यमित्येके सांख्याः प्राहुर्मनीषिण इति। अस्यायं भावः, मा हिंस्यात् सर्वा भूतानीति निषेधः पुरुषस्यानर्थहेतुर्हिंसेत्याह अग्नीषोमीयं पशुमालभेतेत्यादि प्राकरणिको विधिस्तु हिंसायाः क्रतूपकारकत्वमाह अतो भिन्नविषयत्वेन सामान्यविशेषन्यायागोचरत्वात् कृत्यसाध्येषु सर्वेष्वपि कर्मसु हिंसादेः सम्भवात् सर्वमपि कर्म त्याज्यमेवेति। तदुक्तं, "दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः" इति। अपरे तु मीमांसका यज्ञादिकं कर्म न त्याज्यमेवेति प्राहुः। अयं भावः, क्रत्वर्थापि सतीयं हिंसा पुरुषेण कर्तव्या सा चान्योद्देशेनापि कृता पुरुषस्य प्रत्यवायहेतुरेव तथा हि विधिर्विधेयस्य प्रवृत्त्युद्देशेनानुष्ठानं विधत्ते तादर्थ्यबोधकत्वात्स्वलक्षणस्य, नत्वेवं निषेधो निषेध्यस्य तादर्थ्यमपेक्षते निषिद्धमात्रापेक्षकत्वात् अन्यथा अज्ञानप्रमादादिकृते दोषाभावप्रसङ्गात्, तदेवं समानविषयत्वेन सामान्यशास्त्रस्य विशेषेण बाधाद् नास्ति दोषवत्त्वं अतो नित्यं यज्ञादिकर्म न त्याज्यमिति ॥ ३ ॥

**निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ।**
**त्यागो हि पुरुषव्याघ्र ! त्रिविधः संप्रकीर्त्तितः ॥ ४**

तत्रैतेषु विकल्पभेदेषु निश्चयं शृणु अवधारय मे मम वचनात् तत्र त्यागे त्यागसन्न्यासविकल्पे यथा दर्शिते भरतसत्तम ! भरतानां साधुतम ! त्यागो हि त्यागसन्न्यासशब्दवाच्यो हि योऽर्थः स एक एवेत्यभिप्रेत्याह त्यागो हीति । पुरुषव्याघ्र ! त्रिविधस्त्रिप्रकारस्तामसादिप्रकारैः संप्रकीर्त्तितः शास्त्रेषु सम्यक् कथितः यस्मात्तामसादिभेदेन त्यागसन्न्यासशब्दवाच्योऽधिकृतस्य कर्मिणोऽनात्मज्ञस्य त्रिविधः सम्भवति न परमार्थदर्शिन इत्ययमर्थो दुर्ज्ञानो हि यस्मात् अत्र तत्त्वं नान्यो वक्तुं समर्थस्तस्मान्निश्चयं परमार्थशास्त्रार्थविषयमध्यवसायमैश्वरं मे मम शृणु ॥ ४ ॥

व्या० टी० । कर्माधिकृतान् प्रत्येवोक्तविकल्पप्रवृत्तावपि कुतो निर्द्धारणसिद्धस्तत्राह तत्रेति । तमेव निश्चयं दर्शयितुमादौ त्यागगतमवान्तरविभागमाह त्यागो हीति । ननु त्यागसन्न्यासयोरुभयोरपि प्रकृतत्वाविशेषे त्यागस्यैव वान्तरविभागाभिधाने सन्न्यासस्योपेक्षितत्वमापद्येतेत्याह त्यागो हीति । सात्त्विको राजसस्तामसश्चेत्युक्तेऽर्थे त्रैविध्येऽपि स्वयमेव निश्चयसम्भवात् किमत्र भागवतेन निश्चयेनेत्याशङ्क्याह हि यस्मादिति । भगवतोऽन्येनोक्तविभागे तत्त्वानिश्चयाद्भागवतनिश्चयस्य श्रोतव्यत्वेनेति निगमयति तस्मादिति ॥ ४ ॥

स्वा० टी० । एवं मतभेदमुपन्यस्य स्वमतं कथयितुमाह निश्चयं शृण्विति । तत्रैवं विप्रतिपन्ने त्यागे निश्चयं मे वचनाच्छृणु, त्यागस्य लोकप्रसिद्धत्वात् किमत्र श्रोतव्यमिति मावमंस्था इत्याह हे पुरुषव्याघ्र ! पुरुषश्रेष्ठ ! त्यागो हि दुर्बोधः हि यस्मादयं कर्मत्यागस्तत्त्वविद्भि-

तामसादिभेदेन त्रिविधः सम्यग्विवेकेन प्रकीर्त्तितः, त्रैविध्यञ्च नियतस्य तु सन्न्यासः कर्मण इत्यादिना वक्ष्यति ॥ ४ ॥

**यज्ञदानतपःकर्म न त्याज्यं कार्य्यमेव तत् ।**
**यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥५॥**

कः पुनरसौ निश्चय इत्याह यज्ञ इति । यज्ञो दानन्तप इत्येतत्त्रिविधं कर्म न त्याज्यं न त्यक्तव्यं कार्य्यं करणीयमेव तत्, कस्मात् ? यज्ञो दानं तपश्चैव पावनानि विशुद्धिकारणानि मनीषिणां फलानभिसन्धीनामित्येतत् ॥ ५ ॥

आ॰ टी॰ । तमेव भगवतो निश्चयं शिष्येभ्यो निर्द्धारयितुं प्रश्नपूर्वकमनन्तरश्लोकप्रवृत्तिं दर्शयति कः पुनरिति । यज्ञादीनां कर्त्तव्यत्वे हेतुमाह यज्ञ इति न केवलं न त्याज्यं किन्तु कर्त्तव्यमेवेत्याह कार्य्यमिति । प्रतिज्ञातमेवं विभज्य हेतुं विभजते कस्मादिति ॥ ५ ॥

स्वा॰ टी॰ । प्रथमं तावन्निश्चयमाह यज्ञेति द्वाभ्याम् । मनीषिणां विवेकिनां पावनानि चित्तशुद्धिकराणि ॥ ५ ॥

**एतान्यपि तु कर्म्माणि सङ्गं त्यक्त्वा फलानि च ।**
**कर्त्तव्यानीति मे पार्थ ! निश्चितं मतमुत्तमम् ॥६॥**

एतान्यपीति । एतान्यपि तु कर्माणि यज्ञदानतपांसि पावनान्युक्तानि सङ्गमासक्तिं तेषु त्यक्त्वा, फलानि च तेषां परित्यज्य कर्त्तव्यानीति अनुष्ठेयानीति मे मम निश्चितं मतमुत्तमं निश्चयं शृणु मे तत्रेति प्रतिज्ञाय पावनत्वं च सहेतुकमुक्त्वा एतान्यपि कर्माणि कर्त्तव्यानीत्येतन्निश्चितं मतं अनुत्तममिति प्रतिज्ञातार्थोपसंहार एव नापूर्वार्थं वचनमेतान्यपीति प्रकृतसन्निकृष्टार्थतोपपत्तेः सासङ्गस्य फला-

र्थिनो बन्धहेतव एतान्यपि कर्माणि मुमुक्षोः कर्त्तव्यानीति अपिशब्दस्यार्थः नत्वन्यानि कर्माण्यपेक्ष्यैतान्यपीत्युच्यन्ते। अन्ये वर्णयन्ति नित्यानां कर्मणां फलाभावात् सङ्गं त्यक्त्वा फलानि चेति नोपपद्यते। एतान्यपीति यानि काम्यानि कर्माणि नित्येभ्योऽन्यानि एतानि अपि कर्त्तव्यानि किमुत यज्ञदानतपांसि नित्यानि इति, तदसत् नित्यानामपि कर्मणां फलवत्त्वस्योपपादितत्वात् यज्ञो दानं तपश्चैव पावनानीत्यादिवचनेन नित्यान्यपि कर्माणि बन्धहेतुत्वाशङ्कया जिहासोर्मुमुक्षोः कुतः काम्येषु प्रसङ्गः "दूरेण ह्यवरं कर्मेति" च निन्दितत्वात् "यज्ञार्थात् कर्मणो नान्येति" च काम्यकर्मणां बन्धहेतुत्वस्य निश्चितत्वात् "त्रैगुण्यविषया वेदाः" "त्रैविद्या मां सोमपाः" "क्षीणे पुण्ये मर्त्यलोकं विशन्तीति" च दूरव्यवहितत्वाच्च न काम्येष्वेतान्यपीति व्यपदेशः ॥६॥

व्या॰ टी॰। प्रतिज्ञातमर्थमुपसंहरति एतान्यपीति। उपसंहारश्लोकाक्षराणि व्याकरोति एतानीत्यादिना। अक्षरार्थमुक्त्वा तात्पर्यार्थमाह निश्चयमिति। प्रकृतार्थोपसंहारे गमकमाह एतान्यपीति। अपिशब्दस्य विवक्षितमर्थं दर्शयति सासङ्गस्येति। व्यावर्त्यं कीर्त्तयति न त्विति। एतान्यपीत्यादिवाक्यं न नित्यकर्मविषयमिति मतमुपन्यस्यति अन्य इति। न चेदिदं नित्यकर्मविषयं किंविषयन्तर्हि इत्याशङ्क्य वाक्यमवतार्य व्याकरोति एतानीत्यादिना। नित्यानामफलत्वमुपेत्य यच्चोद्यन्तदयुक्तमिति दूषयति तदसदिति। यत्तु काम्यान्यपि कर्त्तव्यानीति तन्निरस्यति नित्यान्यपीति। किञ्च काम्यानां भगवता निन्दितत्वाच्च तेषु मुमुक्षोरनुष्ठानमित्याह दूरेणेति। किञ्च मुमुक्षोरपेक्षितमोक्षापेक्षया विरुद्धफलवत्त्वात् काम्यकर्मणां न तेषु तस्यानुष्ठानमित्याह यज्ञार्थादिति। काम्यानां बन्धहेतुत्वं निश्चितमित्यत्रैव पूर्वोत्तरवाक्यानुकूल्यं दर्शयति त्रैगुण्येति। किञ्च

पूर्वश्लोके यज्ञादिनित्यकर्मणां प्रकृतत्वादेतच्छब्देन सन्निहितवाचिना परामर्शात् काम्यकर्मणाञ्च "काम्यानां कर्मणामिति" व्यवहितानां सन्निहितपरामर्शकैतच्छब्दाविषयत्वाच्च काम्यकर्माण्येतान्यपीति व्यपदेशमर्हन्तीत्याह दूरेति ॥ ६ ॥

स्वा० टी०। येन प्रकारेण कृतान्येतानि पावनानि भवन्ति तं प्रकारं दर्शयन्नाह एतान्यपीति। यानि यज्ञादीनि कर्माणि मया पावनानीत्युक्तान्येतान्यप्येवं कर्त्तव्यानि कथं, सङ्गं कर्त्तृत्वाभिनिवेशं त्यक्त्वा केवलमीश्वराधीनतया कर्त्तव्यानि, फलानि च त्यक्त्वा कर्त्तव्यानीति मे मतं निश्चितं अतएवोत्तमम् ॥ ६ ॥

**नियतस्य तु सन्न्यासः कर्मणो नोपपद्यते।**
**मोहात्तस्य परित्यागस्तामसः परिकीर्त्तितः॥७॥**

तस्मादज्ञस्याधिकृतस्य न मुमुक्षोः नियतस्येति नियतस्य तु नित्यस्य सन्न्यासः परित्यागः कर्मणो नोपपद्यते अज्ञस्य पावनत्वस्येष्टत्वात् मोहादज्ञानात्तस्य नियतस्य परित्यागो नियतञ्चावश्यं कर्त्तव्यं त्यज्यते चेति विप्रतिषिद्धमतो मोहनिमित्तः परित्यागस्तामसः परिकीर्त्तितो मोहश्च तम इति ॥ ७ ॥

आ० टी०। नित्यकर्मणामवश्यकर्त्तव्यत्वमुक्तमुपजीव्यापेक्षितं पूरयन्ननन्तरश्लोकमवतारयति तस्मादिति। ननु कश्चिन्नियतमपि कर्म त्यजन्नुपलभ्यते तत्राह मोहादिति। अज्ञानं पावनत्वापरिज्ञानम् अज्ञस्य नित्यकर्मत्यागो मोहादित्येतदुपपादयति नियतञ्चेति। नित्यकर्मत्यागस्य मोहकृतत्वे कुतस्तामसत्वमित्याशङ्क्याह मोहश्चेति ॥ ७ ॥

स्वा० टी०। प्रतिज्ञातं त्यागत्रैविध्यमिदानीं दर्शयति नियतस्येति त्रिभिः। काम्यस्य कर्मणो बन्धकत्वात् संन्यासो युक्तः नियतस्य तु नित्यस्य पुनः कर्मणः संन्यासस्त्यागो नोपपद्यते सत्त्वशुद्धिद्वारा मोक्षहेतुत्वात्

अतस्तस्य परित्याग उपादेयत्वेऽपि त्याज्यमित्येवंलक्षणान्मोहादेव भवेत् स च मोहस्य तामसत्वात्तामसः परिकीर्त्तितः ॥ ७ ॥

**दुःखमित्येव यत् कर्म कायक्लेशभयात्त्यजेत् ।**
**स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत्॥८॥**

किञ्च दुःखमिति। दुःखमित्येव यत् कर्म कायक्लेशभयात् शरीरदुःखभयात्त्यजेत् स कृत्वा राजसं रजोनिवर्त्त्यं त्यागं नैव त्यागफलं ज्ञानपूर्वकस्य सर्वकर्मत्यागस्य फलं मोक्षाख्यं न लभेन्नैव लभते ॥ ८ ॥

व्या० टी० । इतश्च नित्यकर्मत्यागो नात्तस्य सम्भवतीत्याह किञ्चेति । ननु मोहं विनैव दुःखात्मकं कर्म कायक्लेशभयात्त्यजति कारणानि हि कार्यं जनयन्ति आत्मानि च तथाच न तत्त्यागस्तामसो युक्तस्तत्राह दुःख-मित्येवेति । यत् कर्म दुःखात्मकमशक्यसाध्यमित्येवालोच्य ततो निवर्त्तते देहस्येन्द्रियाणाञ्च क्लेशात्मनो भयात्त्यजति स तत्त्यक्त्वा रजोनिमित्तं त्याग कृत्वापि न तत्फलं मोक्षं लभते किन्तु कृतेनैव राजसेन त्यागेन तदनुरूपं नरकं प्रतिपद्यते इत्याह दुःखमित्येवेत्यादिना । कर्मत्यागस्तामसो राज-सश्चेति द्विविधो दर्शितः ॥ ८ ॥

स्वा० टी० । राजसं त्यागमाह दुःखमिति । यः अकर्त्तात्मबोधं विना केवलं दुःखमित्येवं मत्वा शरीरायासभयान्नित्यं कर्म त्यजेदिति यत्, तादृशस्त्यागो राजसो दुःखस्य राजसत्वात् अतस्तं राजसं त्यागं कृत्वा स राजसः पुरुषस्त्यागफलं ज्ञाननिष्ठालक्षणं नैव लभत इत्यर्थः ॥८॥

**कार्य्यमित्येव यत् कर्म नियतं क्रियतेऽर्जुन ।**
**सङ्गं त्यक्त्वा फलञ्चैव स त्यागः सात्त्विको मतः॥९**

कः पुनः सात्त्विकस्त्यागः कार्य्यमिति कार्य्यं कर्त्तव्य-मितीत्यर यत् कर्म नियतं नित्यं, क्रियते निर्वर्त्त्यते हे

अर्जुन! सङ्गं फलञ्च एव। नित्यानां कर्मणां फलवत्त्वे भगवद्वचनं प्रमाणमवोचामाथ वा यद्यपि फलं न श्रूयते नित्यस्य कर्मणस्तथापि नित्यं कर्म कृतमात्मसंस्कारं प्रत्यवायपरिहारं वा फलं करोत्यात्मन इति कल्पयत्यज्ञस्तत्र तामपि कल्पनां निवारयति फलं त्यक्त्वेत्यनेनातः साधूक्तं सङ्गं त्यक्त्वा फलञ्चेति स त्यागो नित्यकर्मसु सङ्गफलपरित्यागः सात्त्विकः सत्त्वनिर्वृत्तो मतोऽभिमतः ननु कर्मपरित्यागस्त्रिविधः सन्न्यास इति च प्रकृतस्तत्र तामसो राजसश्चोक्तस्त्यागः कथमिह सङ्गफलत्यागस्तृतीयत्वेनोच्यते यथात्र ये ब्राह्मणा आगतास्तत्र षडङ्गविदौ द्वौ क्षत्रियस्तृतीय इति तद्वन्नैष दोषस्त्यागसामान्येन स्तुत्यर्थत्वाद्स्ति हि कर्मसन्न्यासस्य फलाभिसन्धित्यागस्य च त्यागत्वसामान्यन्तत्र राजसतामसत्वेन कर्मत्यागनिन्दया कर्मफलाभिसन्धित्यागः सात्त्विकत्वेन स्तूयते स त्यागः सात्त्विको मत इति ॥ ९ ॥

व्या० टी० । सम्प्रति सात्त्विकं त्यागं प्रश्नपूर्वकं वर्णयति कः पुनरिति। कर्त्तव्यमित्येतत्येवकारेण नित्यस्य भाव्यन्तरं निषिध्यते नित्यानां विध्युद्देशे फलाश्रवणात् तेषां फलं त्यक्त्वेत्युक्तिमयुक्तमित्याशङ्क्याह नित्यानामिति। फलं त्यक्त्वेत्यस्य विधान्तरेण तात्पर्य्यमाह अथ वेति। न हि विधिना कृतं कर्म अनर्थकं विध्यानर्थक्यात्तेन श्रौतफलाभावेऽपि नित्यं कर्म विधितोऽनुतिष्ठन्नात्मानमजानन्ननुपहतमनस्केनाज्ञो नित्यानि कर्माण्यात्मसंस्कारं फलं कल्पयति तदकरणे प्रत्यवायस्तत्या तत्करणं कर्त्तुरात्मनः प्रत्यवायनिवृत्तिं करोतीति वा नित्ये कर्मण्यज्ञानां कल्पनामनुनिष्पादित-फलकल्पनाञ्च फलं त्यक्त्वेत्यनेन भगवान्निवारयतीत्यर्थः। नित्यकर्मसु फलत्यागोक्तेः सम्भवे फलितमाह अत इति कर्मतत्फलत्यागस्य त्यागसन्न्यासशब्दाभ्यां प्रकृत इव त्यागो हीति त्रैविध्यं प्रतिज्ञाय प्रतिज्ञानुरोधेन द्वे विधे

व्युत्पाद्य तृतीयां विधान्तद्विरोधेन व्युत्पादयतो भगवतोऽकौशलमापतितमिति शङ्कते नन्विति। प्रक्रमप्रतिकूलमुपसंहारवचनमनुचितमित्यत्र दृष्टान्तमाह यथेति। पूर्वोत्तरविरोधेन प्राप्तमकौशलं प्रत्यादिशति नैष दोष इति। कर्मत्यागफलत्यागयोस्त्यागत्वेन सादृश्यात् कर्मत्यागनिन्दया तत्फलत्यागस्तुत्यर्थमिदं वचनमित्युपगमात् न विरोधोऽस्तीत्युक्तमेव व्यक्तीकर्त्तुमादौ त्यागसामान्यं विशदयति अस्तीति। सति सामान्ये निर्देशस्य स्तुत्यर्थत्वं समर्थयते तत्रेति॥ ९॥

स्वा॰ टी॰। सात्त्विकं त्यागमाह कार्य्यमिति। कार्य्यमित्येव बुद्धा नियतमवश्यं कर्त्तव्यतया विहितं कर्म सङ्गं फलञ्च त्यक्त्वा क्रियत इति यत्, तादृशस्त्यागः सात्त्विको मतः॥ ९॥

**न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते।**
**त्यागी सत्त्वसमाविष्टो मेधावी च्छिन्नसंशयः॥१०**

यस्त्वधिकृतः सङ्गं त्यक्त्वा फलाभिसन्धिञ्च नित्यं कर्म्म करोति तस्य फलरागादिनाऽकलुषीक्रियमाणमन्तःकरणं नित्यैश्च कर्म्मभिः संस्क्रियमाणं विशुध्यति तत् विशुद्धं प्रसन्नमात्मालोचनक्षमम्भवति तस्यैव नित्यकर्म्मानुष्ठानेन विशुद्धान्तःकरणस्यात्मज्ञानाभिमुखस्य क्रमेण यथा तन्निष्ठा स्यात्तद्वक्तव्यमित्याह न द्वेष्टि अकुशलं अशोभनं काम्यं कर्म्म शरीरारम्भद्वारेण संसारकारणं किमनेनेत्येवं कुशले शोभने नित्ये कर्म्मणि सत्त्वशुद्धिज्ञानोत्पत्तितन्निष्ठाहेतुत्वेन मोक्षकारणमिदमित्येवं नानुषज्जते तत्रापि प्रयोजनमपश्यन्ननुषङ्गं प्रीतिं न करोतीत्येतत् कः पुनरसौ त्यागी पूर्व्वोक्तेन सङ्गफलपरित्यागेन तद्वांस्त्यागी यः कर्म्मणि सङ्गं त्यक्त्वा तत्फले च, नित्यकर्म्मानुष्ठायी स त्यागी। कदा पुन-

रमावकुशलं कर्म्म न द्वेष्टि कुशले च नानुषज्जत इत्युच्यते सत्वसमाविष्टो यदा सत्वेनात्मानात्मविवेकविज्ञानहेतुना समाविष्टः संव्याप्तः संयुक्त इत्येतत्। अतएव च मेधावी मेधयात्मज्ञानलक्षणया प्रज्ञया संयुक्तस्तद्वान्मेधावी मेधावित्वादेव छिन्नसंशयः छिन्नोऽविद्याकृतः संशयो यस्य आत्मस्वरूपावस्थानमेव परं निःश्रेयससाधनं नान्यत् किञ्चिदितेयवं निश्चयेन च्छिन्नसंशयः ॥ १० ॥

व्या॰ टी॰। एवं पूर्वापरविरोधं परास्य अनन्तरश्लोकतात्पर्यमाह यस्त्विति। फलरागादिनेत्यादिशब्देन कर्म्मस्वरूपासङ्गो गृह्यते अन्तःकरणमकलुषीक्रियमाणमिति च्छेदः। विशुद्धेऽन्तःकरणे किं स्यादित्याशङ्क्याह विशुद्धमिति। मलविकलत्वं विशुद्धत्वं संस्क्रियमाणत्वं प्रसन्नत्वमिति भेदः, क्रमेण श्रवणाद्यर्हत्वद्वारेणेत्यर्थः। तन्निष्ठेत्यात्मज्ञाननिष्ठोक्ता। काम्यकर्माणि त्याज्यत्वेन द्वेषमभिनयति किमिति। उभयत्र द्वेषं प्रीतिञ्च न करोतीति सामान्येनोक्तं कर्त्तारं प्रश्नपूर्वकं विशेषतो निर्दिशति कः पुनरिति। त्यागीत्युक्तं त्यागिनमभिव्यनक्ति पूर्व्वोक्तेनेति। कर्मणि सङ्गस्य तत्फलस्य च त्यागेन त यावत्। उक्तमेव त्यागिनं विवृणोति यः कर्माणीति। तत्फलं त्यक्तेति सम्बन्धः। काम्ये निषिद्धे च कर्मणि बन्धहेतुरिति न द्वेष्टि नित्ये नैमित्तिके च मोक्षहेतुरिति न प्रीयते। तत्र कालविशेषं पृच्छति कदेति। नित्यादिकर्मणा फलाभिसन्धिवर्जितेन क्षयितमलसम्पन्नत्वं यथार्थग्रहणसामर्थ्यं सुदृढ़म्भूते तेन समावेशदशायामुक्तप्रीतिद्वेषयोरभावो भवतीत्याह उच्यत इति। चतुर्थपादं व्याकरोति अतएवेति। सुदृढ़युद्धयथार्थग्रहणसामर्थ्ये समाविष्टत्वादित्यर्थः। छिन्नसंशयत्वमेव विशदयति आत्मेति। परं निःश्रेयसलस्य च साधनं सम्यग्ज्ञानमेवेति योजना ॥ १० ॥

स्वा॰ टी॰। एवंभूतसात्त्विकत्यागपरिनिष्ठितस्य लक्षणमाह न द्वेष्टीत्यादि। सत्त्वसमाविष्टः सत्त्वेन व्याप्तः सात्त्विकत्यागी अकुशलं

दुःखावहं शिशिरे प्रातःस्नानादिकं कर्म न द्वेष्टि कुशले च सुखकरे कर्मणि निदाघे मध्याह्नस्नानादौ नानुषज्जते प्रीतिं न करोति। तत्र हेतुः मेधावी स्थिरबुद्धिः यत परपरिभवादि महदपि दुःखं सहते स्वर्गादिसुखञ्च त्यजति तत्र कियदेतत्तात्कालिकं सुखं दुःखञ्चेत्येवमनुसन्धानवानित्यर्थः। अतएव छिन्नः संशयो मिथ्याज्ञानं दैहिकसुखयोरुपादित्सापरिजिहीर्षालक्षणं यस्य सः॥ १०॥

**न हि देहभृता शक्यं त्यक्तुं कर्म्माण्यशेषतः।**
**यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥११॥**

योऽधिकृतः पुरुषः पूर्व्वोक्तेन प्रकारेण कर्म्मयोगानुष्ठानेन क्रमेण संस्कृतात्मा सन् जन्मादिविक्रियारहितत्वेन निःक्रियमात्मानमात्मत्वेन संबुद्धः स सर्वकर्म्माणि मनसा सन्न्यस्य नैव कुर्वन्नकारयन्नासीनो नैष्कर्म्म्यलक्षणां ज्ञाननिष्ठामश्नुत इत्येतत् पूर्व्वोक्तस्य कर्म्मयोगस्य प्रयोजनमनेन श्लोकेनोक्तं, यः पुनरधिकृतः सन् देहात्माभिमानित्वेन देहभृदज्ञोऽबाधितात्मकर्तृत्वविज्ञानतयाहंकर्त्तेति निश्चितबुद्धिस्तस्याशेषकर्म्मपरित्यागस्याशक्यत्वात् कर्म्मफलत्यागेन चोदितकर्म्मानुष्ठान एवाधिकारो न त्याग इत्येतमर्थं दर्शयितुमाह न हीति न हि यस्माद्देहभृता देहं बिभर्त्तीति देहभृद्देहात्माभिमानवान् देहभृदुच्यते न हि विवेकी स हि वेदाविनाशिनमित्यादिना कर्तृत्वाधिकारान्निवर्त्तितोऽतस्तेन देहभृताऽज्ञेन न शक्यं त्यक्तुं सन्न्यसितुं कर्म्माण्यशेषतो निःशेषेण। तस्माद्यस्त्वज्ञोऽधिकृतो नित्यानि कर्म्माणि कुर्वन् कर्म्मफलत्यागी कर्म्मफलाभिसन्धिमात्रसन्न्यासी स त्यागीत्यभिधीयते कर्म्मी अपि सन्निति, स्तुत्यभिप्रायेण

**तस्मात् परमार्थदर्शित्वेनैवादेहभृता देहात्मभावरहितेनाशेषकर्मसन्न्यासः शक्यते कर्तुम् ॥११॥**

व्या० टी०। न द्वेष्टीत्यादिना श्लोकेनोक्तमर्थं सङ्क्षिप्यानुवदति योऽधिकृत इति। पूर्वोक्तप्रकारेणापि कर्माणि तत्फले च सङ्गत्यागेनेत्यर्थः, कर्मात्मयोगस्यानुष्ठानेन संस्कृतात्मा सन् क्रमेण श्रवणाद्यनुष्ठानद्वारेण कूटस्थं ब्रह्म प्रत्यक्त्वेन संबुद्ध इति सम्बन्धः। परस्य निष्क्रियत्वे हेतुमाह जन्मादीति। उक्तज्ञानवतः सर्वकर्मत्यागद्वारा मुक्तिभाक्त्वं दर्शयति स सर्वेति। आत्मज्ञानवतः सर्वकर्मत्यागसम्भावनामुक्त्वा तद्धीनस्य तदसम्भवे हेतुवचनत्वेन अनन्तरश्लोकमवतारयति यः पुनरिति। न बाधितमात्मनि कर्तृत्वविज्ञानमस्येत्यज्ञस्तथा तस्य भावस्तत्ता तयेति यावत्, एतमर्थं दर्शयितुमज्ञस्य सर्वकर्मसन्न्यासासम्भवे हेतुमाहेति योजना, यस्मादित्यस्य तस्मादित्युत्तरेण सम्बन्धः। विवेकिनोऽपि देहधारितया देहभृत्त्वाविशेषे कर्माधिकारः स्यादित्याशङ्क्याह न हीति। कर्तृत्वाधिकारस्तत्पूर्वकं कर्मानुष्ठानं तस्मादिति यावत्। ज्ञानवतो देहधारणेऽपि तदभिमानित्वाभावोऽतः शब्दार्थः। अज्ञस्य सर्वकर्मत्यागायोगमुक्तं हेतूकृत्य फलितमाह तस्मादिति। कर्मानुष्ठायिनस्त्यागित्वोक्तिरयुक्तेत्याशङ्क्याह कर्मीति। कर्मिणोऽपि फलत्यागेन त्यागित्ववचनं फलत्यागस्तुत्यर्थमित्यर्थः। कस्य तर्हि सर्वकर्मत्यागः सम्भवतीत्याशङ्क्य विवेकवैराग्यादिमतो देहाभिमानहीनस्येत्युक्तं निगमयति तस्मादिति ॥ ११ ॥

स्वा० टी०। नन्वेवंभूतात् कर्मफलत्यागाद्वरं सर्वकर्मत्यागस्तथा सति कर्मविक्षेपा ज्ञाननिष्ठा सुखं संपद्यते तत्राह न हीति। देहभृता देहाभिमानवता निःशेषेण सर्वाणि कर्माणि त्यक्तुं न हि शक्यानि। तदुक्तं, "न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृदित्यादिना। तस्माद्यस्तु कर्माणि कुर्वन्नपि कर्मफलत्यागी स एव मुख्यः त्यागीत्यभिधीयते ॥११

**अनिष्टमिष्टं मिश्रञ्च त्रिविधं कर्मणः फलम्।**

**भवत्यत्यागिनां प्रेत्य न तु सन्न्यासिनां क्वचित् ॥ १२ ॥**

किं पुनस्तत् प्रयोजनं यत् सर्व्वकर्म्मपरित्यागात् स्यादित्युच्यते । अनिष्टं नरकतिर्य्यगादिलक्षणम् इष्टं देवादिलक्षणं, मिश्रं इष्टानिष्टसंयुक्तं मनुष्यलक्षणञ्चैवं त्रिविधं त्रिःप्रकारं कर्म्मणो धर्म्माधर्म्मलक्षणस्य फलं बाह्यानेककारकरूपं व्यापारनिष्पन्नं सदविद्याकृतमिन्द्रजालमायोपमं महामोहकरं प्रत्यगात्मोपसर्पीव फलगुतया लयमदर्शनं गच्छतीति फलनिर्व्वचनं तदेतत्त्रिविधं फलं भवत्यत्यागिनामज्ञानां कर्म्मिणामपरमार्थसन्न्यासिनां प्रेत्य शरीरपातादूर्द्ध्वम् । न तु परमार्थसन्न्यासिनां परमहंसपरिव्राजकानां केवलज्ञाननिष्ठानां क्वचिन्न हि केवलसम्यग्दर्शननिष्ठा अविद्यादिसंसारबीजं नोन्मूलयन्ति कदाचिदित्यर्थः ॥ १२ ॥

आ० टी० । एकाधिकारित्वे सर्व्वकर्म्मसंन्याससाम्येऽपि फलाभावे कुतस्तस्य कर्त्तव्यतेति शङ्कते किं पुनरिति । गौणस्य मुख्यस्य वा संन्यासस्य फलं विवक्षितमिति विकल्पयति उच्यत इति । सर्व्वकर्म्मत्यागो नाम तदनुष्ठानेऽपि तत्फलाभिसन्धित्यागः स चामुख्यसंन्यासस्तस्य फलमाह अनिष्टमिति । मुख्ये तु सन्न्यासे सर्व्वकर्म्मत्यागे सम्यग्धीद्वारा सर्व्वसंसारोच्छित्तिरेव फलितमित्याह न त्विति । पादत्रयं व्याकरोति अनिष्टमित्यादिना । तिर्य्यगादीत्यादिपदमवशिष्टनिकृष्टयोनिसंग्रहार्थं देवादीत्यादिपदं विशिष्टोत्कृष्टयोनिसंग्रहार्थमिति विभागः । फलशब्दं व्युत्पादयति बाह्येति । कारणद्वारकमनेकविधत्वमुक्त्वा मिथ्यात्वमाह अविद्येति । तत्कृतत्वेन दृष्टमात्रदेहत्वे दृष्टान्तमाह इन्द्रेति । प्रतीतितो रमणीयत्वं सूचयति महामोहेति । अविद्योत्थानां चाविद्याश्रितत्वादात्माश्रितत्वं वस्तुतो नास्तीत्याह प्रत्यगिति । उक्तं फलं कर्म्मिणामिष्यते चेदमुख्यसंन्यासफलोक्तिपरत्वं पादत्रयस्य कथमिष्टमित्याशङ्क्याह अपर-

मार्थेति । फलाभिसन्धिविकलानां कर्मिणां देहपातादूर्द्ध्वं कर्मानुरोधि फलमावश्यकमित्यर्थः । कर्मिणामेव सतामफलाभिसन्धीनाममुख्यसंन्यासित्वात्तदीयामुख्यसंन्यासस्य फलमुक्त्वा चतुर्थपादं व्याचष्टे न त्विति । अमुख्यसंन्यासमनन्तरप्रकृतं व्यवच्छिनत्ति परमार्थेति । तेषां प्रधानं धर्ममुपदिशति केवलेति । क्वचिद्देशे काले वा नास्ति यथोक्तं फलं तेषामिति सम्बन्धः । तर्हि परमार्थसंन्यासोऽफलत्वात् नानुष्ठीयेतेत्याशङ्क्य तस्य मोक्षावसायित्वान्मैवमित्याह न हीति ॥ १२ ॥

स्वा० टी० । एवंभूतस्य कर्मफलत्यागस्य फलमाह अनिष्टमिति । अनिष्टं नारकित्वम् इष्टं देवत्वं मिश्रं मनुष्यत्वम् एवं त्रिविधं पापस्य पुण्यस्य चोभयमिश्रस्य च कर्मणो यत् फलं प्रसिद्धं तत् सर्वमत्यागिनां सकामानामेव प्रेत्य परत्र भवति तेषां त्रिविधकर्मसम्भवात् न तु संन्यासिनां क्वचिदपि भवति । सन्यासिशब्देनात्र फलत्यागिनो गृह्यन्ते, "अनाश्रितः कर्मफलं कार्य्यं कर्म करोति यः। स संन्यासी च योगी च" इत्येवमादौ कर्मफलत्यागिषु संन्यासिशब्दप्रयोगदर्शनात् । तेषां सात्त्विकानां पापासम्भवादीश्वरार्पणेन च पुण्यफलस्य त्यक्तत्वात् त्रिविधमपि कर्मफलं न भवतीत्यर्थः ॥ १२ ॥

**पञ्चेमानि महाबाहो ! कारणानि निबोध मे ।**
**सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥ १३**

अतः परमार्थदर्शिन एवाशेषकर्मसन्न्यासित्वं सम्भवत्यविद्याध्यारोपितत्वादात्मनि क्रियाकारकफलानां नत्वज्ञस्याधिष्ठानादीनि क्रियाकर्तॄणि कारकाण्यात्मत्वेन पश्यतोऽशेषकर्मसन्न्यासः सम्भवति । तदेतदुत्तरैः श्लोकैर्दर्शयति पञ्चेति पञ्च इमानि वक्ष्यमाणानि हे महाबाहो ! कारणानि निर्वर्त्तकानि निबोध मे मम इत्युत्तरत्र चेतःसमाधानार्थं वस्तुवैषम्यप्रदर्शनार्थं च तानि च कारणानि ज्ञातव्यतया

स्तौति सांख्ये ज्ञातव्याः पदार्थाः संख्यायन्ते यस्मिन् शास्त्रे तत् सांख्यं वेदान्तः कृतान्त इति तस्यैव विशेषणं कृतमिति कर्मोच्यते तस्यान्तः परिसमाप्तिर्यत्र स कृतान्तः कर्मान्तः इत्येतत् यावानर्थ उपदाने सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यत इत्यात्मज्ञाने सञ्जाते सर्वकर्मणां निवृत्तिं दर्शयति अतस्तस्मिन्नात्मज्ञानार्थे सांख्ये कृतान्ते वेदान्ते प्रोक्तानि कथितानि सिद्धये निष्पत्त्यर्थं सर्वकर्मणाम् ॥१३॥

आ॰ टी॰ । ननु अपरमार्थसंन्यासवद्विशेषाद्ज्ञानां परमार्थसंन्यासोऽपि किं न स्यात्त्यागस्य सुकरत्वात्तत्राह अतः परमार्थेति । तस्य सम्यग्दर्शनादविद्यानिवृत्तौ तदारोपितक्रियाकारकादिनिवृत्तेरिति हेत्वर्थः । विद्यावतः सर्वकर्मसंन्यासित्वसम्भावनासूक्ता एवकारव्यावर्त्यं दर्शयति न त्विति । अविदुषोऽशेषकर्मणां तद्धेतूनाञ्च रागादीनां त्यागायोगे कारकेष्वधिष्ठानादिष्वात्मदर्शनं हेतुमाह क्रियेति । कथमधिष्ठानादीनां क्रियाकर्तृत्वं कथं वा विदुषस्तेष्वात्मत्वधीरित्याशङ्क्यानन्तरश्लोकचतुष्टयस्य तात्पर्यमाह तदेतदिति । कर्मार्थानामधिष्ठानादीनामप्रामाणिकत्वाशङ्कामादावुद्धरति पञ्चेति । उत्तरत्रेत्यधिष्ठानादिषु वक्ष्यमाणेष्वित्यर्थः । वस्तूनां तेषामेव वैषम्यं निर्दिदर्शयिषितं न हि चेतःसमाधानादृते ज्ञातुं शक्यं तत्, सांख्यशब्दं व्युत्पादयति ज्ञातव्या इति । आत्मा त्वम्पदार्थस्तत्पदार्थो ब्रह्म तयोरैक्यधीस्तदुपयोगिनश्च श्रवणादयः पदार्थास्ते सख्यायन्ते व्युत्पाद्यन्ते । कृतान्तशब्दस्य वेदान्तविषयत्वं विभजते कृतमित्यादिना । वेदान्तस्य तत्त्वधीद्वारा कर्मावसानभूमित्वे वाक्योपक्रमानुकूल्यं दर्शयति यावानिति । उदपाने कूपादौ यावानर्थः स्नानादिः तावानर्थः समुद्रे सम्पद्यते अतो यथा कूपादिकृतं कार्य्यं सर्वं समुद्रेऽन्तर्भवति तथा सर्वेषु वेदेषु कर्मार्थेषु यावत् फलं तावत् ज्ञानवतो ब्राह्मणस्य ज्ञानेऽन्तर्भवति ज्ञानं प्राप्तस्य कर्त्तव्यानवशेषादित्यर्थः । तत्रैव वाक्यान्तरमनुक्रामति सर्वमिति । उदाहृतवाक्ययोस्तात्पर्यमाह आत्मेति । आत्मज्ञाने

सति सर्वकर्मनिवृत्तावपि कथं वेदान्तस्य कृतान्तत्वमित्याशङ्क्याह अत इति। तानि मद्वचनतो निबोधेति पूर्वेण सम्बन्धः ॥ १३ ॥

ख्या० टी०। ननु कर्म कुर्वतः कर्मफलं कथं न भवेदित्याशङ्क्य सङ्गत्यागिनो निरहङ्कारस्य कर्मलेपो नास्तीत्युपपादयितुमाह पञ्चेति पञ्चभिः। सर्वकर्मणां सिद्धये निष्पत्तये इमानि वक्ष्यमाणानि पञ्च कारणानि मे वचनान्निबोध जानीहि। आत्मनः कर्तृत्वाभिमाननिवृत्त्यर्थमवश्यमेतानि ज्ञातव्यानीत्येवं तेषां स्तुत्यर्थमेवाह सांख्य इति। सम्यक् ख्यायते ज्ञायते परमात्मा अनेनेति साख्यं तत्त्वज्ञानं तस्मिन् प्रकाशमान आत्मबोधः सांख्यः, तस्मिन्, कृतं कर्म तस्यान्तः समाप्तिरस्मिन्निति कृतान्तस्तस्मिन् वेदान्तसिद्धान्त इत्यर्थः। यद्वा, संख्यायन्ते गण्यन्ते तत्त्वान्यस्मिन्निति सांख्यं, कृतोऽन्तो निर्णयोऽस्मिन्निति कृतान्तं सांख्यशास्त्रमेव तस्मिन् प्रोक्तानि अतः सम्यङ्निबोधेत्यर्थः ॥ १३ ॥

**अधिष्ठानं तथा कर्त्ता करणञ्च पृथग्विधम्।**
**विविधाश्च पृथक् चेष्टा दैवञ्चैवात्र पञ्चमम्॥१४॥**

कानि तानीत्युच्यते अधिष्ठानमिति अधिष्ठानमिच्छाद्वेषसुखदुःखज्ञानादीनामभिव्यक्तेराश्रयोऽधिष्ठानं शरीरन्तथा कर्त्ता उपाधिलक्षणो भोक्ता करणञ्च श्रोत्रादिकं शब्दाद्युपलब्धये पृथग्विधं नानाप्रकारं द्वादशसंख्यं विविधाश्च पृथक्चेष्टा वायवीयाः प्राणापानाद्यादैवञ्चैव दैवमेवात्र एतेषु चतुर्षु पञ्चमं पञ्चानां पूरणमादित्यादि चक्षुराद्यनुग्राहकम्॥ १४ ॥

ख्या० टी०। कर्माण्यधिष्ठानादीनि मानमूलत्वात् ज्ञेयानीत्युक्तमिदानीं प्रश्नपूर्वकं विशेषतस्तानि निर्दिशति कानीत्यादिना। प्रतीकमादाय व्याकरोति अधिष्ठानमिति। उपाधिलक्षणो बुद्ध्यादिरुपाधिस्तल्लक्षणस्तत्स्वभावो बुद्ध्याद्यनुविधायी तद्धर्ममात्मनि मन्यमानः परिच्छिन्नस्तत्-

प्रधान इत्यर्थः। तत्र कार्य्यलिङ्गकमनुमानं सूचयति शब्दादीति। ज्ञानेन्द्रियाणि पञ्च पञ्च कर्मेन्द्रियाणि मनोबुद्धिश्चेति द्वादशसंख्यत्वं, चेष्टा या विविधत्वं नानाप्रकारत्वं तदेव स्फुटयति वायवीया इति। पृथक्त्वमसङ्कीर्णत्वं न हि प्राणापानादिचेष्टानां मिथःसङ्करोऽस्ति। दैवं विशदयति चादित्यादीति॥ १४॥

स्वा॰ टी॰। तान्येवाह अधिष्ठानमिति। अधिष्ठानं शरीरं कर्त्ता चिदचिद्ग्रन्थिरहङ्कारः पृथग्विधमनेकप्रकारं करणं चक्षुःश्रोत्रादि विविधाः कार्य्यतः स्वरूपतश्च पृथग्भूताश्चेष्टाः प्राणापानादीनां व्यापाराः अत्र एतेष्वेव पञ्चमं दैवं चक्षुराद्यनुग्राहकमादित्यादिसर्वप्रेरकोऽन्तर्यामी वा॥ १४॥

**शरीरवाङ्मनोभिर्यत् कर्म प्रारभते नरः।**
**न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः॥१५॥**

शरीरेति। शरीरवाङ्मनोभिर्यत् कर्म त्रिभिरेतैः प्रारभते निर्वर्त्तयति नरः न्याय्यं वा धर्म्यं शास्त्रीयं, विपरीतं वा अशास्त्रीयम् अधर्म्यं यच्चापि निमिषितचेष्टादि जीवनहेतुस्तदपि पूर्वकृतधर्माधर्मयोरेव कार्य्यमिति न्याय्यविपरीतयोरेव ग्रहणेन गृहीतं, पञ्चैते यथोक्तास्तस्य सर्वस्यैव कर्मणो हेतवः कारणानि। ननु अधिष्ठानादीनि सर्वकर्मणां कारणानि कथमुच्यते शरीरवाङ्मनोभिः प्रारभ्यत इति नैष दोषः विधिप्रतिषेधलक्षणं सर्वं कर्म शरीरादित्रयप्रधानं तदङ्गतया दर्शनश्रवणादि च जीवनलक्षणं त्रिधैव राशीकृतमुच्यते शरीरादिभिरारभ्यत इति फलकालेऽपि तत्प्रधानैर्भुज्यते इति पञ्चानामेव हेतुत्वं न विरुध्यते॥ १५॥

स्वा॰ टी॰। पञ्चानामधिष्ठानादीनामुक्तानां सर्वकर्महेतुत्वं स्फुटयति शरीरेति। ननु जीवनकृतं निमिषोन्मेषादिकर्मान्तरं साधारण-

मस्ति तत् कथं राशिद्वयकरणमिति तत्राह यच्चेति । अधिष्ठानादीनां कर्म्ममात्रहेतुत्वं प्रतिज्ञाय शारीरादित्रिविधकर्म्महेतुत्वोक्तिरयुक्तेति शङ्कते नन्विति । पूर्वापरविरोधं परिहरति नैष दोष इति । ननु जीवनकृतानि स्वाभाविकानि कर्माणि दर्शनादीनि विधिनिषेधबाह्यत्वाच्च देहादिनिर्व्वर्त्यानीत्याशङ्क्याह तदङ्गतयेति । तस्य देहादित्रयस्य प्रधानस्याङ्गश्चक्षुरादि तन्निष्पाद्यत्वेन जीवनकृतं दर्शनादिप्रधानकर्मण्यन्तर्भूतमिति त्रैविध्यमविरुद्धमित्यर्थः । देहाद्यारम्भे त्रिविधे कर्म्मणि सर्वकर्मान्तरभावेऽपि कथं पञ्चानामेवाधिष्ठानादीनां तत्र हेतुत्वं फलोपभोगकाले कारणान्तरापेक्षासम्भवादित्याशङ्क्य जन्मकालभाविनो भोगकालभाविनश्च सर्व्वस्य कारणस्य तेष्वेवान्तर्भावान्मैवमित्याह फलेति ॥ १५ ॥

स्वा॰ टी॰ । एतेषामेव सर्व्वकर्म्महेतुत्वमाह शरीरेति । यथोक्तैः पञ्चभिः प्रारभ्यमाणं कर्म त्रिष्वेवान्तर्भाव्य शरीरवाङ्मनोभिरित्युक्तं शरीरं वाचिकं मानसञ्च त्रिविधं कर्म्मेति प्रसिद्धम्, शरीरादिभिर्यत् कर्म्म धर्म्यमधर्म्यं वा करोति नरस्तस्य सर्व्वस्य कर्मण एते पञ्च हेतवः ॥१५॥

**तत्रैवं सति कर्त्तारमात्मानं केवलन्तु यः ।**
**पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥१६॥**

तत्रेति । तत्रेति प्रकृतेन सम्बध्यते, एवं सति एव यथोक्तैः पञ्चभिर्हेतुभिर्निर्व्वर्त्त्ये सति कर्म्मणि तत्रैवं सतीति दुर्मतित्वस्य हेतुत्वेन सम्बध्यते तत्रैतेषामात्मानमनन्यत्वेनाविद्यया परिकल्पितैः क्रियमाणस्य कर्म्मणोऽहमेव कर्त्तेति कर्त्तारमात्मानं केवलं शुद्धं तु यः पश्यत्यविद्वान् कस्माद्वेदान्ताचार्य्योपदेशन्यायैरकृतबुद्धित्वादसंस्कृतबुद्धित्वाद्योऽपि देहादिव्यतिरिक्तात्मवाद्यन्यमात्मानमेव केवलं कर्त्तारं पश्यत्यसावप्यकृतबुद्धिरेवातोऽकृतबुद्धित्वान्न स पश्यत्यात्मनस्तत्त्वं कर्म्मणो वेत्यर्थोऽतो दुर्म्मतिः कुत्सिता विपरीता

**दुष्टास्य जननमरणाप्रतिपत्तिहेतुभूता मतिरस्येति दुर्मतिः स पश्यन्नपि न पश्यति यथा तैमिरिकोऽनेकचन्द्रं यथा वाभ्रेषु धावत्सु चन्द्रं धावन्तं यथा वा वाहन उपविष्टोऽन्येषु धावत्स्वात्मानं धावन्तम्॥ १६॥**

आ° टी°। क्रियाकर्तृत्वमधिष्ठानादीनामापाद्याविदुषस्तेष्वात्मदृष्टिमनुवदति तत्रेति। तच्छब्दपरामर्शयोग्यं प्रकृतं सर्वं कर्म। प्रतीकमादाय पूर्वेण सङ्गत्यर्थं कथयति एवमिति। अधिष्ठानादीनामुक्तरीत्या कर्तृत्वे सतीत्यन्यगतं कर्तृत्वमात्मनोऽध्यारोप्य पश्यति दुर्मतिरित्यात्मन कर्तृत्वं पश्यन्नित्याह तत्रैवमिति। कर्त्तारमित्यादि व्याचष्टे तत्रेत्यादिना। तेष्वधिष्ठानादिषु तैरधिष्ठानादिभिरारोपितात्मभावैरित्यर्थः। अकर्त्तारमात्मानं कर्त्तारं पश्यतीत्यत्र प्रश्नद्वारा हेतुमाह कस्मादिति। ननु शास्त्रसंस्कृतबुद्धेर्व्यतिरिक्तात्मवादी कर्तृत्वं तस्यानुमन्यते नासौ कर्तृत्वमात्मनि पश्यन्नपि अकृतबुद्धिस्तत्राह योऽपीति। तस्यापि शास्त्रपूर्वकमाचार्योपदेशेन तदनुसारिन्यायेनश्चान्वितबुद्धित्वादकृतबुद्धित्वं सिद्धमित्यर्थः। कौटस्थ्यमात्मनस्तत्त्वं याथात्म्यं कर्मणोऽपि तत्त्वमविद्याकृताधिष्ठानादिकृतत्वेनात्मास्पर्शित्वमात्मकर्मणोस्तत्त्वदर्शनाभावोऽतःशब्दार्थः। दुष्टत्वं स्पष्टीकर्तुं दुर्मतित्वं विवृणोति जननेति। अहं कर्तेत्यात्मदर्शनवतोऽपि नाविदुषस्तद्दर्शनमस्तीत्यत्र दृष्टान्तमाह यथेति। तिमिरोपहतचक्षुरनेकचन्द्रं पश्यन्नपि तत्त्वतो न तं पश्यतीत्यमविद्वानात्मानं कर्त्तारं पश्यन्नपि तत्त्वतो न तं पश्यतीत्यर्थः। अधिष्ठानादिष्वविद्यया सम्बद्धात्मनः स्वात्मनि तद्गतक्रियारोपे दृष्टान्तमाह यथा वेति। अन्येषु वाहकेषु पुरुषेषु धावमकर्तृषु वाहने स्थितः स्वात्मानं प्रधावनकर्त्तारमविवेकादभिमन्यते तथाधिष्ठानादिषु क्रियाकर्तृषु तद्गतं स्वात्मानं कर्त्तारं मन्यमानो दुर्मतिरित्यर्थः॥ १६॥

स्वा° टी°। ततः किमत आह तत्रेति। तत्र सर्वस्मिन् कर्मणि एते पञ्च हेतव इत्येवं सति केवलं निरुपाधिमसङ्गमात्मानं यः कर्त्तारं

पश्यति शास्त्राचार्य्योपदेशाभ्यामसंस्कृतबुद्धित्वाद्दुर्मतिरसौ सम्यङ् पश्यति ॥ १६॥

**यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते।**
**हत्वापि स इमाल्लोँकान्न हन्ति न निबध्यते॥१७**

कः पुनः सुमतिर्यः सम्यक् पश्यतीत्युच्यते यस्येति। यस्य शास्त्राचार्य्योपदेशन्यायसंस्कृतात्मनो न भवत्यहंकृतः अहं कर्त्तेत्येवंलक्षणो भावो भावनाप्रत्यय एतएव पञ्चाधिष्ठानादयोऽविद्ययात्मनि कल्पिताः सर्वकर्म्मणां कर्त्तारो नाहमहन्तु तद्व्यापाराणां साक्षिभूतः अप्राणो ह्यमनाः शुभ्रोऽक्षरात् परतः परः केवलो विक्रिय इत्येवं पश्यतीति एवं बुद्धिरन्तःकरणं यस्यात्मन उपाधिभूता न लिप्यते नानुशायिनी भवतीदमहमकार्षन्तेनाहं नरकं गमिष्यामीत्येवं यस्य बुद्धिर्न लिप्यते स सुमतिः स पश्यति हत्वापि स इमाल्लोँकान् सर्वान् प्राणिन इत्यर्थः। न हन्ति हननक्रियां न करोति न निबध्यते नापि तत्कार्य्येणाधर्म्मफलेन सम्बध्यते, ननु हत्वापि न हन्तीति विप्रतिषिद्धमुच्यते यद्यपि स्तुतिः नैष दोषः लौकिकपारमार्थिकदृष्ट्यपेक्षया तदुपपत्तेः देहाद्यात्मबुद्ध्या हन्ताहमिति लौकिकीं दृष्टिमाश्रित्य हत्वापीत्याह यथा दर्शितां पारमार्थिकीं दृष्टिमाश्रित्य न हन्ति न निबध्यत इति तदुभयमुपपद्यत एव। नन्वधिष्ठानादिभिः संभूय करोत्येवात्मा कर्त्तारमात्मानं केवलं त्विति केवलशब्दप्रयोगान्नैष दोषः आत्मनोऽविक्रियस्वभावत्वेऽधिष्ठानादिभिः संहतत्वानुपपत्तेः विक्रियावतो ह्यन्यैः संहननं सम्भ-

वति संहत्य वा कर्तृत्वं स्यान्न त्वविक्रियस्यात्मनः केनचित् संहननमस्तीति न संभूय कर्तृत्वमुपपद्यते अतः केवलत्वम् आत्मनः स्वाभाविकमिति केवलशब्दोऽनुवादमात्रम् अविक्रियत्वञ्चात्मनः श्रुतिस्मृतिन्यायप्रसिद्धम् "अविकार्य्योऽयमुच्यते" "गुणैरेव कर्म्माणि क्रियन्ते" "शरीरस्थोऽपि न करोती"त्याद्यसकृदुपपादितं गीतास्वेव तावत । श्रुतिषु च ध्यायतीव लेलायतीत्येवमाद्यासु यानि वाक्यानि तैर्दर्शितं न्यायतश्च निरवयवमपरतन्त्रमविक्रियमात्मतत्त्वमिति राजमार्गः विक्रियावत्त्वाभ्युपगमेऽप्यात्मनः स्वकीयैव विक्रिया स्वस्य भवितुमर्हति नाधिष्ठानादीनां कर्माण्यात्मकर्तृकाणि स्युर्नहि परस्य कर्म परेणाकृतमागन्तुमर्हति यत्त्वविद्यया गमितं न तत्तस्य तथा रजतत्वं न शुक्तिकायां यथा वा तलमल-

---

आ० टी० । विपरीतदृष्टेर्दुर्मतित्वं शिष्ट्वा सम्यग्दृष्टेः सुमतित्वं प्रश्नपूर्वकमाह कः पुनरित्यादिना । अहं करोमीत्यात्मनि कर्तृत्वप्रत्ययाभावे कुत्र कर्तृत्वधीरित्याशङ्क्याह एव इति । कथं तर्हि अकर्तृत्वधीरात्मनीत्याशङ्क्य विज्ञानादीनां तद्व्यापाराणाञ्च साक्षित्वादित्याशङ्क्याह अहं त्विति । आत्मनो न स्वतोऽस्ति क्रियाशक्तिमत्त्वमित्यत्र प्रमाणमाह अप्राणो हीति । नापि तस्य स्वतो ज्ञानशक्तित्वमित्याह अमना इति । उपाधिद्वयासम्बन्धे शुद्धत्वं फलितमाह शुभ्र इति । कारणसम्बन्धादशुद्धिमाशङ्क्योक्तं अक्षरादिति । कार्य्यकारणयोरात्मास्पर्शित्वेन पार्थक्ये सद्वितीयत्वमाशङ्क्य तयोराविद्यकपारवश्यत्वान्मैवमित्याह केवल इति । जन्मादिषड्विक्रियाराहित्येन कौटस्थ्यमाह अविक्रिय इति । बुद्धिर्यस्येत्यादि व्याचष्टे बुद्धिरिति । नानुशायिनी नानुशयवती न क्लेशशालिनीत्यर्थः । द्वितीयपादस्याक्षरार्थमुक्त्वा वाक्यार्थमाह इदमिति । पापं कर्म इदमा परामृश्यते । लोकानां प्राणसम्बन्धाभावे कुतो हिंसे-

वत्त्वं बालैर्गमितमविद्यया नाकाशस्य तथाधिष्ठानादिविक्रियापि तेषामेवेति नात्मनः तस्मात् युक्तमुक्तम् अहंकृतत्वबुद्धिलेपाभावात् विद्वान् हन्ति न निबध्यत इति नायं हन्ति न हन्यत इति प्रतिज्ञाय न जायत इत्यादिहेतुवचनेनाविक्रियत्वमात्मन उक्त्वा वेदाविनाशिनमिति विदुषः कर्माधिकारनिवृत्तिं शास्त्रादौ सङ्क्षेपत उक्त्वा मध्ये प्रसारितांश्च तत्र तत्र प्रसङ्गं कृत्वा इहोपसंहरति शास्त्रार्थपिण्डीकरणाय विद्वान् हन्ति न निबध्यत इति। एवञ्च सति

---

त्याशङ्क्याह प्राणिन इति। विरुद्धार्थोक्त्या स्तुतिरपि न युक्तेति शङ्कते नन्विति। विरोधं परिहरति नैष दोष इति। लौकिकदृष्टिमाश्रित्याह हत्वापीति। निर्देशं विशदयति देहादीति। तात्त्विकीं दृष्टिमाश्रित्याह न हन्तीति निर्देशमुपपादयति यदेति। नाहं कर्त्ता किन्तु कर्त्तृतद्व्यापारयोः साक्षी क्रियाज्ञानशक्तिमदुपाधिद्वयविनिर्मुक्तः शुद्धः सन् कार्यकारणासम्बन्धोऽद्वितीयोऽविक्रिय इत्येवं पारमार्थिकदृष्टेर्यथा दर्शितत्वं द्रष्टव्यम्। हत्वापीत्येतच्च हन्तीत्यादि चोभयं दृष्टिद्वयाश्रयणादुपपन्नमित्युपसंहरति तदुभयमिति। केवलमेवात्मानं कर्त्तारं पश्यन् दुर्मतिरित्यत्रात्मविशेषणसमर्पककेवलशब्दसामर्थ्यादात्मनो विशिष्टस्य कर्तृत्वमिति शङ्कते नन्विति। आत्मनो वैशिष्ट्यायोगाच्च विशिष्टस्यापि कर्तृत्वमिति दूषयति नैष दोष इति। अविक्रियस्वाभाव्येऽपि कथमात्मनो संहतत्वमित्याशङ्क्याह अविक्रियेति। अधिष्ठानादिभिरात्मनः संहननेऽपि न कर्त्तृत्वमविक्रियस्य क्रियान्वयव्याघातादित्याह संहत्येति। संहतत्वानुपपत्तिं व्यक्तीकरोति नत्विति। असंहतत्वे फलितमाह इति नेति। कथं तर्हि केवलत्वमात्मनि केवलशब्दादुक्तं तदाह तत इति। कर्त्तृत्वमात्मनोऽभ्युपपन्नं नास्याविक्रियत्वमुपैतीत्याशङ्क्याह अविक्रियत्वञ्चेति। तत्र स्मृतिवाक्यान्युदाहरति अविकार्योऽयमिति। नायं हन्ति न हन्यत इत्यादिवाक्यमादिशब्दार्थः। उक्तवाक्यानामात्माविक्रियत्वे तात्-

देहभृत्त्वाभिमानानुपपत्तावविद्याकृताशेषकर्मसन्न्यासोपपत्तेः सन्न्यासिनामनिष्टादि त्रिविधं कर्मणः फलं न भवतीत्युपपन्नं तद्विपर्य्ययाच्चेतरेषां भवतीत्येतच्चापरिहार्य्यमित्येष गीताशास्त्रस्यार्थ उपसंहृतः स। एष सर्ववेदार्थसारो निपुणमतिभिः पण्डितैर्विचार्य्य प्रतिपत्तव्य इति तत्र तत्र प्रकरणविभागेन दर्शितोऽस्माभिः शास्त्रन्यायानुसारेण ॥ १७ ॥

---

पर्य्यं सूचयति असक्तदिति। निःकलं निःक्रिय शान्तमित्यादि वाक्यं श्रुत्यादिशब्दार्थः, यानि वाक्यानि तैरात्मनोऽविक्रियत्वं दर्शितमिति योजना, न्यायतश्च तद्दर्शितमिति पूर्वेण सम्बन्धः। न्यायमेव दर्शयति निरवयवमिति। न तावदात्मा स्वतो विक्रियते निरवयवत्वादाकाशवन्नापि परतोऽसङ्गस्याकार्य्यस्य पराधीनत्वायोगादित्यर्थः। किं वात्मनः स्वनिष्ठा वा विक्रियाधिष्ठानादिनिष्ठा वा नाद्यः स्वनिष्ठविक्रियानुपपत्तेरात्मनो दर्शितत्वादित्याशयेनाह विक्रियावत्त्वं ति, सा चायुक्तेत्युक्तमिति शेषः। द्वितीयं दूषयति नेत्यादिना। अधिष्ठानादिकृतमपि कर्म्म तद्योगादात्मन्यागच्छतीत्याशङ्क्य तदागमनं वास्तवमाविद्यं वेति विकल्प्याद्यं दूषयति न हीति। द्वितीयं निरस्यति यत्त्विति। आत्मन्यविद्याप्रापितं कर्म्म नात्मीयमित्येतद्दृष्टान्ताभ्यामुपपादयति यद्येत्यादिना। आत्मनोऽविक्रियत्वेन कर्तृत्वाभावे फलितमाह तस्मादिति। ननु प्रागेवात्मनोऽविक्रियत्वं प्रतिपादितं तदिह कस्मादुच्यते तत्राह नायमिति। शास्त्रादौ प्रतिज्ञाय हेतुपूर्वकं संक्षिप्योक्त्वा मध्ये तत्प्रसङ्गं कृत्वा प्रसारितां कर्म्माधिकारनिवृत्तिमिहोपसंहरतीति सम्बन्धः। प्रतिज्ञातस्य हेतुनोपपादितस्यान्ते निगमनं किमर्थमित्याशङ्क्याह शास्त्रार्थेति। कर्म्माधिकारो विदुषो नेति स्थिते तस्य देहाभिमानाभावे सत्यविद्योत्थसर्वकर्मत्यागसिद्धेरनिष्टमिष्टं मिश्रञ्चेति त्रिविधं कर्म्मफलं सन्न्यासिनां नेति प्रागुक्तं युक्तमेवेति परमप्रकृतमुपसंहरति एवञ्चेति। ये पुनरविद्वांसो देहाभिमानिनस्तेषां त्रिविधं कर्म्मफलं सम्भवत्येवेति हेतुवचनमिदमर्थं निगमयति तद्विपर्य्य-

यस्येति । अधिष्ठानादिकृतं कर्म नात्मकृतमविदुषामेव कर्माधिकारो देहाभिमानित्वेन तत्त्यागादेवागाद्देहाभिमानाभावात्तु विदुषां कर्माधिकारनिवृत्तिरित्युपसंहृतमर्थं सङ्क्षिप्याह इत्येव इति । उक्तञ्च गीतार्थो वेदार्थत्वादुपादेय इत्याह स एव इति । कथमदसर्थो वेदार्थोऽपि प्रतिपत्तुं शक्यते तत्राह निपुणेति । भाष्यकृता मानयुक्तिभ्यां विभज्याभुक्तत्वाच्छास्त्रार्थस्योपादेयत्वमित्याशङ्क्याह तत्रेति ॥ १७ ॥

स्वा॰ टी॰। कर्त्तर्हि शुभतिर्यस्य कर्मलेपो नास्तीत्युक्तमित्यपेक्षायामाह यस्येति । अहमिति कृतोऽहङ्कृत्तेत्येवंभूतो भावोऽभिप्रायो यस्य नास्ति । यद्वा, अहं कृतोऽहङ्कारस्य भावः स्वभावः कर्त्तृत्वाभिनिवेशो यस्य नास्ति शरीरादीनामेव कर्मकर्त्तृत्वालोचनादित्यर्थः, अतएव यस्य बुद्धिर्न लिप्यते इष्टानिष्टबुद्ध्या कर्मसु न सज्जते स एवंभूतो देहादिव्यतिरिक्तात्मदर्शी इमान् लोकान् सर्वानपि प्राणिनो लोकदृष्ट्या हत्वापि विविक्ततया स्वदृष्ट्या न हन्ति न च तत्फलैर्निबध्यते बन्धनं प्राप्नोति किं पुनः सत्त्वशुद्धिद्वारा परोक्षज्ञानोत्पत्तिहेतुभिः कर्मभिस्तस्य बन्धाशङ्केत्यर्थः । तदुक्तं "ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसेति ॥ १७ ॥

**ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ।**
**करणं कर्म कर्त्तेति त्रिविधः कर्मसंग्रहः ॥१८॥**

अथेदानीं तेषां कर्मणां प्रवर्त्तकमुच्यते ज्ञानमिति । ज्ञानं ज्ञायतेऽनेनेति सर्वविषयमविशेषेणोच्यते तथा ज्ञेयं ज्ञातव्यं तदपि सामान्येनैव सर्वमुच्यते तथा परिज्ञातोपाधिलक्षणोऽविद्याकल्पितो भोक्ता इत्येतत्त्रयमेषामविशेषेण सर्वकर्मणां प्रवर्त्तिका त्रिविधा त्रिःप्रकारा कर्मचोदना ज्ञानादीनां हि त्रयाणां सन्निपाते हानोपादानादिप्रयोजनः सर्वकर्मारम्भः स्यात्ततः पञ्चभिरधिष्ठानादिभिरारब्धं

वाङ्मनःकायाश्रयभेदेन त्रिधा राशीभूतं त्रिषु करणादिषु संगृह्यते इत्येतदुच्यते करणं क्रियतेऽनेनेति बाह्यं श्रोत्रादि अन्तस्थम्बुद्ध्यादिकधर्मेप्सिततमं कर्त्तुः क्रियया व्याप्यमानं कर्त्ता करणानां व्यापारयितोपाधिलक्षण इति त्रिविधः त्रिःप्रकारः कर्मसंग्रहः संगृह्यते अस्मिन्निति संग्रहः कर्मणः संग्रहः कर्मसंग्रहः कर्म एषु हि त्रिषु समवैति तेनायं त्रिविधः कर्मसंग्रहः॥ १८॥

व्या॰ टी॰। शास्त्रार्थोपसंहारामनन्तर्य्यमथेत्युक्तमिदानीमिति प्रवर्त्तकापदेशापेक्षावस्थोक्ता कर्म्मणां, येषु विदुषां नाधिकारोऽविदुषा-ञ्चाधिकारस्तेषामित्यर्थः। ज्ञानशब्दस्य करणव्युत्पत्त्या ज्ञानमात्रार्थत्व-माह ज्ञानमिति। ज्ञेयशब्दस्यापि तद्वदेव ज्ञातव्यमात्रार्थत्वमाह तथेति। उपाधिलक्षणत्वं तत्प्रधानत्वमुपहितत्वं तस्यावस्तुत्वार्थमविद्याकल्पित-विशेषणमेतदेव त्रयं सर्वकर्मप्रवर्त्तकमित्याह इत्येतदिति। सर्वकर्म्मणां प्रवर्त्तकमित्यध्याहर्त्तव्यम्। चोदनेति "क्रियायाः प्रवर्त्तकं वचनमिति" भाष्यानुसारेण चोदनाशब्दार्थमाह प्रवर्त्तिकेति। सर्वकर्म्मणामिति पूर्वेण सम्बन्धः, त्रैविध्यं ज्ञानादीनां प्रागुक्तं, कर्म्मणां चोदनेति विग्रहः। तेषां सर्वकर्म्मप्रवर्त्तकत्वमनुभवेन साधयति ज्ञानादीना-मिति। ज्ञानोपादानादीत्यादिपदेनोपेक्षा विवक्षिता। करणमित्यादे-स्तात्पर्य्यमाह तत इति। ज्ञानादीनां प्रवर्त्तकत्वादित्यर्थः। उक्तेऽर्थे श्लोकभागमवतारयति इत्येतदिति। बाह्यमन्तस्थञ्च द्विविधं करणं व्युत्-पत्त्या कथयति करणमिति। उक्तलक्षणं कर्मैव स्फुटयति कर्त्तुरिति। स्वतन्त्रो हि कर्त्ता स्वातन्त्र्यञ्च कारकान्तराप्रयोज्यस्य तत्प्रयोक्तृत्वमित्याह कर्त्तेति। कथन्तर्हि त्रिविधे कर्म्म संगृह्यते तत्राह कर्म्मेति। कर्म्मणो हि प्रसिद्धं कारकाश्रयत्वमिति भावः॥ १८॥

स्वा॰ टी॰। हत्वापि न हन्ति न निबध्यत इत्यन्तेत्तद्देशोपपादयितुं कर्मचोदनायाः कर्माश्रयस्य च कर्मफलादीनाञ्च त्रिगुणात्मकत्वात्त्रिगुणस्य

आत्मनस्तत्सम्बन्धो नास्तीत्यभिप्रायेण कर्मचोदनां कर्माश्रयञ्चाह ज्ञानमिति। ज्ञानमिष्टसाधनमेतदिति बोधः ज्ञेयमिष्टसाधनं कर्म परिज्ञाता एतत् ज्ञानाश्रयः एवं त्रिविधा कर्मचोदना चोद्यते प्रवर्त्त्यतेऽनयेति चोदना ज्ञानादि त्रितयं कर्मप्रवृत्तिहेतुरित्यर्थः। यद्वा, चोदनेति विधिरुच्यते, तदुक्तं भट्टैः चोदना चोपदेशश्च विधिश्चैकार्थवाचिन इति। ततश्चायमर्थः, उक्तलक्षणं त्रिगुणात्मकं ज्ञानादित्रयमवलम्ब्य कर्मविधिः प्रवर्त्तत इति तदुक्तं त्रैगुण्यविषया वेदा इति, तथा करणं साधकतमं कर्म च कर्त्तुरीप्सिततमं कर्त्ता क्रियानिर्वर्त्तकः कर्म संगृह्यतेऽस्मिन्निति कर्मसंग्रहः करणादि त्रिविधं कारकं क्रियाश्रय इत्यर्थः संप्रदानादिकारकत्रयन्तु परम्परया क्रियाप्रवर्त्तनमेव केवलं न तु साक्षात् क्रियाया आश्रयः अतः करणादित्रयमेव क्रियाश्रय इत्युक्तम्॥ १८॥

**ज्ञानं कर्म च कर्त्ता च त्रिधैव गुणभेदतः।**
**प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि॥१९॥**

अथेदानीं क्रियाकारकफलानां सर्वेषां गुणात्मकत्वात् सत्त्वरजस्तमोगुणभेदतः त्रिविधो भेदो वक्तव्य इत्यारभ्यते ज्ञानं कर्म चेति। ज्ञानं ज्ञायतेऽनेनेति कर्म च कर्म क्रिया न कारकं पारिभाषिकमीप्सिततमं कर्म कर्त्ता च निर्वर्त्तकः क्रियाणां, त्रिधैवावधारणं गुणव्यतिरिक्तजात्यन्तराभावप्रदर्शनार्थं गुणभेदतः सत्त्वादिभेदेनेत्यर्थः प्रोच्यते कथ्यते गुणसंख्याने कापिले शास्त्रे कापिलमपि गुणसंख्यानं शास्त्रन्तदपि गुणभोक्तृविषये प्रमाणमेव परमार्थब्रह्मैकत्वविषये यद्यपि विरुध्यते तथापि ते हि कापिला गुणगौणव्यापारनिरूपणेऽभियुक्ता इति तच्छास्त्रमपि वक्ष्यमाणार्थस्तुत्यर्थत्वेनोपादीयत इति न विरोधः। यथावद्य-

**याथार्थं यथाशास्त्रं शृणु तान्यपि ज्ञानादीनि तद्भेदजातानि गुणभेदकृतानि शृणु वक्ष्यमाणेऽर्थे मनःसमाधिं कुर्वित्यर्थः ॥ १९ ॥**

व्या० टी० । अनन्तरश्लोकत्रयतात्पर्यमाह अथेति । ज्ञानादिप्रस्तावानन्तर्यमथशब्दार्थः, इदानीं प्रस्तुतज्ञानाद्यवान्तरभेदापेक्षायामित्यर्थः । तेषां गुणभेदात् त्रैविध्ये हेतुमाह गुणात्मकत्वादिति । वक्तव्यो वक्ष्यमाणश्लोकत्रयेणेति शेषः । एवं स्थिते प्रथमपदान्तरभेदप्रतिज्ञा क्रियत इत्याह इत्यारभ्यत इति । कर्त्तुरीप्सिततमं कर्मेति यत्तत् परिभाष्यते तदत्र कर्मशब्दवाच्यमित्याह नेति । गुणातिरेकेण विधान्तरं ज्ञानादिषु नेति निर्द्धारयितुमवधारणमित्याह गुणेति । ज्ञानादीनां प्रत्येकं गुणभेदप्रयुक्ते त्रैविध्ये प्रमाणमाह प्रोच्यत इति । ननु कापिलं पातञ्जलमित्यादि शास्त्रं विरुद्धार्थत्वादप्रमाणं कथमिह प्रमाणीक्रियते तत्राह तथापीति । विषयविशेषविरोधेऽपि प्रकृतेऽर्थे प्रामाण्यमविरुद्धमित्यर्थः । यद्यपि कापिलादयो गुणवृत्तविचारे गौणव्यापारस्य भोगादेर्निरूपणे च निपुणास्तथापि कथं तदीयं शास्त्रमत्र प्रमाणीकृतमित्याशङ्क्याह ते हीति । ज्ञानादिषु प्रत्येकमवान्तरभेदो वक्ष्यमाणोऽर्थस्तस्य तन्त्रान्तरेऽपि प्रसिद्धिकथनं स्तुतिस्तादर्थ्येन कापिलादिमतोपादानमिहोपयोगीत्यर्थः । तृतीयपादस्याविरुद्धार्थत्वं निगमयति नेति । यथावदित्यादि व्याचष्टे यथान्यायमिति ॥ १९ ॥

व्या० टी० । ततः किमत आह ज्ञानं कर्म चेति । गुणाः सम्यक् कार्यभेदेन ख्यायन्ते प्रतिपाद्यन्तेऽस्मिन्निति गुणसंख्यानं सांख्यशास्त्रं तस्मिन् ज्ञानञ्च कर्म च कर्त्ता च प्रत्येकं सत्त्वादिगुणभेदेन त्रिधैवोच्यते तान्यपि ज्ञानादीनि वक्ष्यमाणानि यथावत् शृणु त्रिधैवेत्येवकारो गुणत्रयोपाधिव्यतिरेकेणात्मनः स्वतः कर्त्रादिप्रतिषेधार्थः, चतुर्दशाध्याये तत्र सत्त्वं निर्मलत्वादिना गुणानां बन्धकत्वप्रकारो निरूपितः सप्तदशाध्याये यजन्ते सात्त्विका देवानित्यादिना गुणकृत-

त्रिविधस्वभावनिरूपणेन रजस्तमःस्वभावं परित्यज्य सात्त्विकाहारादि-सेवया सात्त्विकस्वभावः सम्पादनीय इत्युक्तम् इह तु क्रियाकारक-फलादीनामात्मसम्बन्धो नास्तीति दर्शयितुं सर्वेषां त्रिगुणात्मकत्वमुच्यत इति विशेषो ज्ञातव्यः ॥ १९ ॥

**सर्वभूतेषु येनैकं भावमव्ययमीक्षते।**
**अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् २०**

ज्ञानस्य तु तावत् त्रिविधत्वमुच्यते सर्वेति। सर्वभूतेषु अव्यक्तादिस्थावरान्तेषु भूतेषु येन ज्ञानेनैकं भावं वस्तु भावशब्दो वस्तुवाची एकमात्मवस्त्वित्यर्थः अव्ययं न व्येति स्वात्मना तद्धर्मेण वा कूटस्थं नित्यमित्यर्थः. ईक्षते येन ज्ञानेन पश्यति तञ्च भावमविभक्तं प्रतिदेहं विभक्तेषु देहभेदेषु न विभक्तं तदात्मवस्तु व्योमवन्निरन्तरमित्यर्थः तत् ज्ञानं अद्वैतात्मदर्शनं सात्त्विकं सम्यक दर्शनं विद्धीति ॥ २० ॥

आ० टी०। ज्ञानादीनां प्रत्येकं त्रैविध्यं ज्ञातव्यं यदुक्तं तत्र ज्ञान-त्रैविध्यार्थं श्लोकत्रयमवतारयति ज्ञानस्येति। तत्र सात्त्विकं ज्ञानमुप-न्यस्यति सर्वेति। भूतानि कार्यकारणात्मकान्युपाधिज्ञानानि अद्वि-तीयमखण्डैकरसं प्रत्यगात्मानुभवमबाधिततत्त्वं द्वैतं न विद्यतेऽनेनेत्याह एकमिति। विपश्चितमव्ययत्वं माङ्गुप्ति कूटस्थेति। प्रतिदेहमविभक्त-मित्युक्तं व्यनक्ति विभक्तेष्विति। तद् ज्ञानमित्यादि व्याकरोति अद्वैतेति ॥ २० ॥

स्वा० टी०। तत्र ज्ञानस्य सात्त्विकादित्रैविध्यमाह सर्वेति त्रिभिः। सर्वेषु भूतेषु ब्रह्मादिस्थावरान्तेषु विभक्तेषु परस्परं व्यावृत्तेषु अविभक्तमनुस्यूतं एकमव्ययं निर्विकारं भावं परमात्मतत्त्वं येन ज्ञानेनेक्षते आलोचयति तत् ज्ञानं सात्त्विकं विद्धि ॥ २० ॥

**पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान्।**
**वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥२१॥**

यानि द्वैतदर्शनान्यसम्यक् तानि राजसानि तामसानि चेति न साक्षात् संसारोच्छित्तये भवन्ति पृथक्त्वेनेति। पृथक्त्वेन तु भेदेन प्रतिशरीरमन्यत्वेन यत् ज्ञानं नानाभावान् भिन्नानात्मनः पृथग्विधान् पृथक्प्रकारान् भिन्नलक्षणानित्यर्थः। वेत्ति विजानाति यत् ज्ञानं सर्वेषु भूतेषु ज्ञानस्य कर्तृत्वासम्भवाद्येन ज्ञानेन वेत्तीत्यर्थः॥ २१॥

आ० टी०। द्वैतदर्शनान्यपि कानिचिद्भवन्ति सत्त्वनिर्वृत्तानि कस्यचिदित्याशङ्क्याह यानीति। तेषामसम्यक्त्वे हेतुमाह राजसानीति। प्रतिदेहमन्यत्वेन भिन्नात्मनो येन ज्ञानेन जानाति तत् ज्ञानं राजसमिति व्याचष्टे भेदेनेति। पृथक्त्वं पृथग्विधत्वञ्च पुनरुक्तमित्याशङ्क्य हेतुहेतुमत्त्वेन विभागं विवक्षित्वाह भिन्नेति। ज्ञानस्य ज्ञानकर्तृत्वमयुक्तमित्याशङ्क्याह येनेति॥ २१॥

स्वा० टी०। राजसं ज्ञानमाह पृथक्त्वेनेति। पृथक्त्वेन तु यत् ज्ञानमिन्नत्वेनैव विषयत्वं सर्वेषु भूतेषु देहे नानाभावान् वस्तुत एकानेकान् क्षेत्रज्ञान् पृथग्विधान् सुखदुःखित्वादिरूपेण विलक्षणान् येन ज्ञानेन वेत्ति तत् ज्ञानं राजसं विद्धि॥ २१॥

**यत्तु कृत्स्नवदेकस्मिन् कार्ये सक्तमहैतुकम्।**
**अतत्त्वार्थवदल्पञ्च तत्तामसमुदाहृतम् ॥ २२ ॥**

यत्त्विति। यत् ज्ञानं कृत्स्नवत् समस्तवत् सर्वविषयमिव एकस्मिन् कार्ये देहे बहिर्वा प्रतिमादौ सक्तं एतावानेवात्मेश्वरो वा नातः परमस्तीति यथा नग्नक्षपणका-

दीनां शरीरान्तर्वर्त्ती देहपरिमाणो जीव ईश्वरो वा पाषाणादावर्चादिमात्रम् इत्येवम् एकस्मिन् कार्य्ये सक्तमहैतुकं हेतुवर्जितं अयुक्तिकं निःप्रमाणकमतत्त्वार्थवत् अयथाभूतार्थवद्यथाभूतोऽर्थस्तत्त्वार्थः सोऽस्य ज्ञेयभूतोऽस्तीति तत्त्वार्थवदतत्त्वार्थवदहैतुकत्वादेवाल्पञ्चाल्पविषयत्वादल्पफलत्वाद्वा तत्तामसमुदाहृतं तामसानां हि प्राणिनामविवेकिनामीदृशं ज्ञानं दृश्यते ॥ २२ ॥

भा॰ टी॰। यत् त्विति। सक्तत्वमेव व्यनक्ति एतावानिति। एकस्मिन् कार्य्ये ज्ञानस्य सक्तत्वमेव दृष्टान्तेन साधयति यथेतत्रादिना। यद्यियुक्तिकत्वदेव ज्ञानस्याभासत्वे कारणमितत्राह अहैतुकत्वादिति। स्वरूपतो विषयतश्चाभासत्वं फलतो वेतत्राह अल्पमिति। तामसं ज्ञानमुक्तलक्षणमितत्रज्ञानानुभवं प्रमाणयति तामसानां हीति॥ २२ ॥

स्वा॰ टी॰। तामसं ज्ञानमाह यत् त्विति। एकस्मिन् कार्य्ये देहे प्रतिमादौ वा कृत्स्नवत् परिपूर्णवत् सक्तं एतावानेवात्मा ईश्वरो वेत्यभिनिवेशयुक्तम् अहैतुकं निरुपपत्तिकम् अतत्त्वार्थवत् परमार्थावलम्बनशून्यम् अतएवाल्पं तुच्छम् अल्पविषयत्वात् अल्पफलत्वाच्च यदेवंभूतं ज्ञानं तत्तामसमुदाहृतम् ॥ २२ ॥

**नियतं सङ्गरहितमरागद्वेषतः कृतम्।**
**अफलप्रेप्सुना कर्म यत्तत् सात्त्विकमुच्यते ॥२३॥**

अथ कर्मणां त्रैविध्यमुच्यते नियतमिति। नियतं नित्यं सङ्गरहितमासक्तिवर्ज्जितमरागद्वेषतः कृतं रागप्रयुक्तेन द्वेषप्रयुक्तेन च कृतं तद्विपरीतं कृतमरागद्वेषतः कृतमफलप्रेप्सुना फलं प्रेप्सतीति फलप्रेप्सुः फलतृष्णस्तद्विपरीतेनाफलप्रेप्सुना कर्त्रा कृतं कर्म यत्तत् सात्त्विकमुच्यते ॥२३॥

स्वा॰ टी॰। त्रिविधं कर्म यक्तमनन्तरश्लोकत्रयमित्याह अथेति। तत्र सात्त्विकं कर्म्म निरूपयति नियतमिति ॥ २३ ॥

स्वा॰ टी॰। इदानीं त्रिविधं कर्माह नियतमिति त्रिभिः। नियतं नित्यतया विहितं सङ्गरहितमभिनिवेशशून्यम् अरागद्वेषतः पुत्रादिप्रीत्या वा शत्रुद्वेषेण वा यत् कृतं न भवति फलं प्राप्तुमिच्छतीति फलप्रेप्सुस्तद्विलक्षणेन निष्कामेण कर्त्रा यत्कृतं कर्म तत् सात्त्विकमुच्यते ॥२३॥

**यत्तु कामेप्सुना कर्म साहङ्कारेण वा पुनः।**
**क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥२४॥**

यत् त्विति। यत्तु कामेप्सुना कर्मफलप्रेप्सुनेत्यर्थः कर्म साहङ्कारेणेति न तत्त्वज्ञानापेक्षया किं तर्हि लौकिकश्रोत्रियनिरहङ्कारापेक्षया यो हि परमार्थनिरहङ्कार आत्मवित् तस्य कामित्त्वबहुलायासकर्तृत्वप्राप्तिरस्ति सात्त्विकस्यापि कर्मणोऽनात्मवित् साहङ्कारः कर्त्ता किमुत राजसतामसयोर्लोकेऽनात्मविदपि श्रोत्रियो निरहङ्कारः उच्यते निरहङ्कारोऽयं ब्राह्मण इति तस्मात्तदपेक्षयैव साहङ्कारेणेत्युक्तं पुनःशब्दः पादपूरणार्थः क्रियते बहुलायासं कर्म महतायासेन निर्वर्त्त्यते तत् कर्म राजसमुदाहृतम् ॥ २४ ॥

स्वा॰ टी॰। राजसं कर्म निर्दिशति यत्त्विति। फलप्रेप्सुना कर्त्रा यत् कर्म्म क्रियते तद्राजसमित्युत्तरत्र सम्बन्धः। तत्त्वज्ञानवता निरहङ्कारेण साहङ्कारेणातत्त्वज्ञेन क्रियते कर्म्मेति विवक्षा वारयति साहङ्कारेणेति। तत्त्वज्ञानवता निरहङ्कारेण कृतं कर्म्मापेक्ष्य साहङ्कारेणाज्ञेन कृतमेतत् कर्म्मेति न विवक्ष्यते चेत्तर्हि किमत्र विवक्षितमिति पृच्छति किं तर्हीति। यो हि दुरितरहितः श्रोत्रियो लोकादन-

मैतस्य यदहङ्कारवर्जितं कर्म्म तदपेक्षयेदं साहङ्कारेण क्वतं कर्म्मेतयुक्त-मित्याह लौकिकेति। ननु तत्त्वज्ञानवतो निरहङ्कारस्य कर्मकर्तृत्व मपेक्ष्य साहङ्कारेणेत्यादि किं नेष्यते तत्राह येति। विशेषणा-न्तरवशादेव तत्त्वविदो निवारितत्त्वाच्च तदपेक्षमिदं विशेषणमित्यर्थः। साहङ्कारस्यैव राजसे कर्म्मणि कर्तृत्वमित्येतत् वैसुतिकन्यायेन साधयति सात्त्विकस्येति। नन्वात्मविदोऽन्यस्य निरहङ्कारत्वायोगात् कथं तदपेक्षया साहङ्कारेणेत्युक्तं तत्राह लोक इति॥ २४॥

स्वा० टी०। राजसं कर्माह यत्त्विति। यत्तु कर्म कामेप्सुना फलं प्राप्तुमिच्छता साहङ्कारेण वा मत्सम कोऽन्यः श्रोत्रियोऽस्तीत्येवं निरूढाहङ्कारयुक्तेन च क्रियते तच्च पुनर्बहुलायासमतिक्लेशयुक्तं तत् कर्म राजसमुदाहृतम्॥ २४॥

# अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम्।
# मोहादारभ्यते कर्म यत् तत्तामसमुच्यते॥२५॥

अनुबन्धमिति। अनुबन्धः पश्चाद्भावि यद्वस्तु सोऽनुबन्ध उच्यते तच्चानुबन्धं, क्षयं यस्मिन् कर्मणि क्रियमाणे शक्तिक्षयोऽर्थक्षयो वा स्यात्तं क्षयं, हिंसां प्राणिपीड़ाञ्चानपेक्ष्य च पौरुषं पुरुषकारं शक्तोमीदं कर्म समापयितुमित्येवमात्मसा-मर्थ्यम् इत्येतान्यनुबन्धादीन्यनपेक्ष्य पौरुषान्तानि मोहादविवेकत आरभ्यते कर्म यत् तत् तामसन्तमोनिर्वृत्तमुच्यते॥२५॥

आ०टी०। सम्प्रति तामसं कर्म्मोदाहरति अनुबन्धमित्यादिना॥२५॥

स्वा० टी०। तामसं कर्माह अनुबन्धमिति। अनुबध्यत इत्यनुबन्धं पश्चाद्भावि शुभाशुभं, क्षयं वित्तक्षयं हिंसां परपीड़ां पौरुषञ्च स्वसाम-र्थ्यमनपेक्ष्यापर्य्यालोच्य केवलं मोहादेव यत् कर्मारभ्यते तत्तामस-मुदाहृतम्॥ २५॥

**मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ।**
**सिद्ध्यसिद्ध्योर्निर्विकारः कर्त्ता सात्त्विक उच्यते २६**

मुक्तेति । मुक्तसङ्गो मुक्तः परित्यक्तः सङ्गो येन स मुक्तसङ्गोऽनहंवादी नाहंवदनशीलो धृत्युत्साहसमन्वितो धृतिर्धारणमुत्साह उद्यमस्ताभ्यां समन्वितः संयुक्तो धृत्युत्साहसमन्वितः सिद्ध्यसिद्ध्योः क्रियमाणस्य कर्मणः फलसिद्धावसिद्धौ च सिद्ध्यसिद्ध्योः निर्विकारः केवलं शास्त्रप्रमाणप्रयुक्तफलरागादिनाऽयुक्तो यः स निर्विकार उच्यते एवम्भूतः कर्त्ता यः स सात्त्विक उच्यते ॥ २६ ॥

व्या० टी० । इदानीं कर्तृत्रैविध्यं वक्तव्यमादौ सात्त्विकं कर्त्तारं दर्शयति मुक्तेति । सङ्गो नाम फलाभिसन्धिर्वा कर्तृत्वाभिमानो वा नाहंवदनशीलः कर्त्ताहमिति वदनशीलो न भवतीत्यर्थः धारणं धैर्यं क्रियमाणस्य कर्मणो यदि फलासिद्धिः स्यात्तर्हि नानन्दाभिव्यक्तिः इत्यभिप्रायेण केवलमिति । फलरागादिरहित इत्यादिशब्देन कर्मरागो गृह्यते अयुक्त इति छेदः ॥ २६ ॥

स्वा० टी० । कर्त्तारं त्रिविधमाह मुक्तसङ्ग इति त्रिभिः । मुक्तसङ्गस्त्यक्ताभिनिवेशः अनहंवादी गर्वोक्तिरहितः धृतिर्धैर्यम् उत्साह उद्यमस्ताभ्यां समन्वितः संयुक्तः आरब्धस्य कर्मणः सिद्धावसिद्धौ च निर्विकारो हर्षविषादशून्यः स एवम्भूतः कर्त्ता सात्त्विक उच्यते ॥२६॥

**रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।**
**हर्षशोकान्वितः कर्त्ता राजसः परिकीर्त्तितः २७**

रागीति । रागी रागोऽस्यास्तीति रागी कर्मफलप्रेप्सुः कर्मफलार्थी लुब्धः परद्रव्येषु सञ्जाततृष्णः तीर्थादौ च स्वद्र-

च्यापरित्यागी, हिंसात्मकः परपीड़कस्वभावः अशुचिर्बा-ह्यान्तःशौचवर्जितो हर्षशोकान्वितः इष्टप्राप्तौ हर्षोऽनिष्ट-प्राप्ताविष्टवियोगे च शोकस्ताभ्यां हर्षशोकाभ्यां समन्वितः सयुक्तः तस्यैव च कर्मणः सम्पत्तिविपत्त्योर्हर्षशोकौ स्यातां ताभ्यां समन्वितः संयुक्तो यः कर्त्ता स राजसः परि-कीर्त्तितः ॥ २७ ॥

श्री० टी० । राजसं कर्त्तारं कथयति रागीति । कर्मविषयो रागः, कर्मफलप्रेप्सुरिति फलरागस्य पृथक्कथनात् स्वाभिप्रायाप्रकटीकरण-पूर्वकं परपीड़नं परवृत्तिविच्छेदनं तेन स्वार्थपर इत्यर्थः ॥ २७ ॥

स्वा० टी० । राजसं कर्त्तारमाह रागीति । रागी पुत्रादिप्रीति-मान् कर्मफलप्रेप्सुः कर्मफलकामी लुब्धः परस्वाभिलाषी हिंसात्मको मारकस्वभावः अशुचिः विहितशौचशून्यः लाभालाभयोर्हर्षशोकाभ्यां समन्वितः कर्त्ता राजसः ॥ २७ ॥

**अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः ।**
**विषादी दीर्घसूत्री च कर्त्ता तामस उच्यते ॥२८**

अयुक्त इति । अयुक्तोऽसमाहितः प्राकृतोऽत्यन्तासंस्कृत-बुद्धिः प्रकृतिपरवशो, बालसमः स्तब्धो दण्डवत् न नमति कस्मैचित् शठः मायावी शक्तिगूहनकारी मायावान्नैकृतिकः परवृत्तिच्छेदनपरः, अलसोऽप्रवृत्तिशीलः कर्त्तव्येष्वपि, विषादी सर्वदा अवसन्नस्वभावः दीर्घसूत्री च कर्त्तव्यानां दीर्घप्रसारणः सदा मन्दस्वभावो यदद्य श्वो वा कर्त्तव्यं तन्मासेनापि न करोति यश्चैवम्भूतः स कर्त्ता तामस उच्यते ॥ २८ ॥

आ० टी०। दीर्घं सूत्रयितुं शीलमस्येति व्युत्पत्तिं गृहीत्वा विवक्षितमर्थमाह कर्त्तव्यानामिति। एवं क्रियमाणे सति अनिष्टमिदं कथञ्चिदापद्येत यदा पुनरेवं क्रियते तदा त्वनिष्टमेव सम्भावनोपनीतमिति चिन्तापरम्पराया मन्थरप्रवृत्तिरित्यर्थः। तदेव स्पष्टयति यद्वेति॥ २८॥

स्वा० टी०। तामसं कर्त्तारमाह अयुक्त इति। अयुक्तोऽनवहितः प्राकृतो विवेकशून्यः स्तब्धोऽनम्रः शठः शक्तिगूहनकारी नैष्कृतिकः परापमानी अलसोऽनुद्यमशीलः विषादी शोकशीलः यदद्य श्वो वा कर्त्तव्यं तन्मासेनापि न सम्पादयति यः स दीर्घसूत्री एवम्भूतः कर्त्ता तामसः। कर्तृत्रैविध्येनैव ज्ञातुरपि त्रैविध्यमुक्तं कर्मत्रैविध्येन च ज्ञेयस्यापि त्रैविध्यमुक्तं ज्ञातव्यं बुद्धेस्त्रैविध्येन च करणस्याप्युक्तं भविष्यति।॥ २८॥

**बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु।**
**प्रोच्यमानमशेषेण पृथक्त्वेन धनञ्जय!॥२९॥**

बुद्धेर्भेदमिति। बुद्धेर्भेदं धृतेश्चैव भेदं गुणतः सत्त्वादिगुणतः त्रिविधं शृणु इति सूत्रोपन्यासः प्रोच्यमानं कथ्यमानमशेषेण निरवशेषतो यथावत् पृथक्त्वेन विविक्ततो धनञ्जय! दिग्विजये मानुषं दैवञ्च प्रभूतं धनमजयत् ते नासौ धनञ्जयोऽर्जुनः॥ २९॥

आ०टी०। ज्ञानादीनां प्रत्येकं त्रैविध्यमुक्त्वा इत्तिमत्या बुद्धेस्तद्वृत्तेश्च धृत्याख्यायास्त्रैविध्यं सूचयति बुद्धेरिति। सूच्यविवरणं प्रतिजानीते प्रोच्यमानमिति। अर्जुनस्य धनञ्जयत्वं व्युत्पादयति दिग्गिति॥ २९॥

स्वा० टी०। इदानीं बुद्धेर्धृतेश्च त्रैविध्यं प्रतिजानीते बुद्धेर्भेदमिति। स्पष्टोऽर्थः॥ २९॥

**प्रवृत्तिञ्च निवृत्तिञ्च कार्य्याकार्य्ये भयाभये।**
**बन्धं मोक्षञ्च या वेत्ति बुद्धिः सा पार्थ! सात्त्विकी॥ ३०॥**

प्रवृत्तिञ्चेति। प्रवृत्तिञ्च प्रवृत्तिः प्रवर्त्तनं बन्धहेतुः कर्ममार्गः, निवृत्तिञ्च निवृत्तिर्मोक्षहेतुः सन्न्यासमार्गः बन्धमोक्षसमानवाक्यत्वात् प्रवृत्तिनिवृत्ती कर्मसंन्यासमार्गावित्यवगम्यते अथवा कार्य्याकार्य्ये विहितप्रतिषिद्धे लौकिके वा शास्त्रबुद्धेर्वा कर्त्तव्याकर्त्तव्ये कारणाकारणे इत्येतत् कस्य देशकालाद्यपेक्षया विजानाति दृष्टादृष्टार्थानां कर्मणां भयाभये बिभेत्यस्मादिति भयन्तद्विपरीतमभयं भयञ्चाभयञ्च भयाभये दृष्टादृष्टयोर्भयाभययोः कारणे इत्यर्थः बन्धं सहेतुकं मोक्षञ्च सहेतुकं या वेत्ति विजानाति बुद्धिः सा पार्थ! सात्त्विकी तत्र ज्ञानं बुद्धेर्वृत्तिः बुद्धिस्तु वृत्तिमती धृतिरपि वृत्तिविशेष एव बुद्धेः॥ ३०॥

आ॰ टी॰। तत्रादौ सात्त्विकीं बुद्धिं निर्दिशति प्रवृत्तिञ्चेति। प्रवृत्तिराचरणमात्रं अनाचरणमात्रञ्च निवृत्तिरिति किं नेष्यते तत्राह बन्धेति। यस्मिन् वाक्ये बन्धमोक्षावुच्येते तस्मिन्नेव प्रवृत्तिनिवृत्त्योरुक्तत्वात् कर्ममार्गस्य बन्धहेतुत्वान्मोक्षहेतुत्वञ्च सन्न्यासमार्गस्य तावेवात्र ग्राह्यावित्यर्थः। करणाकरणयोर्निर्विषयत्वायोगाद्विषयापेक्षामवतार्य्य योग्यं विषयं निर्दिशति कस्येति। अनिष्टसाधनं भयमिष्टसाधनमभयमिति विभजते भयेति। बन्धादिज्ञानमात्रस्य बुद्धेरन्यत्रेऽपि सम्भवाद्विशेषणं न बुद्धिमद्भिन्नस्य ज्ञानस्य प्रागेव त्रैविध्यप्रतिपादनात् किमिति बुद्धेरिदानीं त्रैविध्यं प्रतिज्ञाय व्युत्पाद्यते तत्राह ज्ञानमिति। तर्हि ज्ञानेन गतत्वान्न पुनर्धृतिर्व्युत्पादनीयेत्याशङ्क्याह धृतिरपीति। विशेषशब्देन ज्ञानाद्व्यावृत्तिरिष्टा॥ ३०॥

स्वा० टी०। तत्र बुद्धेस्त्रैविध्यमाह प्रवृत्तिमिति त्रिभिः। प्रवृत्तिं धर्मं निवृत्तिमधर्मं, यस्मात् देशे काले च यत् कार्य्यमकार्य्यञ्च भयाभये कार्य्याकार्य्य निमित्तौ अर्थानर्थौ कथं बन्धः कथं वा मोक्ष इति या बुद्धि-रन्तःकरणं वेत्ति सा सात्त्विकी। यया पुमान् वेत्तीति वक्तव्ये करणे कर्त्तृत्वोपचारः काष्ठानि पचन्तीतिवत्॥ ३०॥

## यया धर्ममधर्मञ्च कार्य्यञ्चाकार्य्यमेव च।
## अयथावत् प्रजानाति बुद्धिः सा पार्थ! राजसी ३१

ययेति। यया धर्मं शास्त्रचोदितं अधर्मञ्च प्रतिषिद्धं कार्य्यञ्चाकार्य्यमेव च पूर्वोक्ते एव कार्य्याकार्य्ये अयथावत्न यथावत् सर्वतो निर्णयेन न प्रजानाति या बुद्धिः सा पार्थ! राजसी॥ ३१॥

व्या० टी०। कार्य्याकार्य्ययोर्द्धर्म्माधर्म्माभ्यां पौनरुक्त्यं परिहरति पूर्वोक्ते इति। पूर्वश्लोके कार्य्याकार्य्यशब्दाभ्यां दृष्टादृष्टार्थानां कर्म्मणां करणाकरणे निर्दिष्टे तयोरेवात्रापि ग्रहणात् धर्म्माधर्म्माभ्यां पूर्वपर्य्याय-भ्याञ्चार्थतेत्यर्थः या बुद्धिर्यया बुद्ध्या योद्धा निर्णयेन न जानाती-त्यर्थः॥ ३१॥

स्वा० टी०। राजसीं बुद्धिमाह ययेति। अयथावत् सन्देहास्पदत्वे-नत्यर्थः। स्पष्टमन्यत्॥ ३१॥

## अधर्मं धर्ममिति या मन्यते तमसावृता।
## सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ! तामसी ३२

अधर्ममिति। अधर्मं प्रतिषिद्धं धर्मं विहितमिति या मन्यते जानाति तमसावृता सती सर्वार्थान् सर्वानेव ज्ञेय-पदार्थान्विपरीतानेव जानाति बुद्धिः सा पार्थ! तामसी॥ ३२॥

व्या॰ टी॰ । धर्मशब्दो नपुंसकलिङ्गोऽपीत्यभिप्रेत्य धर्मं चेत्युक्तं भ्रमप्रमादताऽविवेकेन वेष्टितेत्यर्थः । कार्य्याकार्य्यादीनुक्तानन्यांश्च संगृह्णीत सर्वार्थानित्युक्तं तद्व्याचष्टे सर्वानेवेति । विपरीतांश्चेति चकारमव-धारणे गृहीत्वा विपरीतानेवेत्युक्तम् ॥ ३२ ॥

स्वा॰ टी॰ । तामसीं बुद्धिमाह अधर्ममिति । विपरीतग्राहिणी बुद्धिस्तामसीत्यर्थः । बुद्धिरन्तःकरणं पूर्वोक्तं ज्ञानन्तद्वृत्तिं धृतिरपि तद्वृत्तिरेव । यद्वा, अन्तःकरणस्य धर्मिणो बुद्धिरध्यवसायलक्षणा वृत्तिरेव इच्छाद्वेषादीनां तद्वृत्तीनां बहुत्वेऽपि धर्माधर्मभयाभयसाधन-त्वेन प्राधान्यादेतासां त्रैविध्यमुक्तं उपलक्षणञ्चैतदन्यासाम् ॥ ३२ ॥

## धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ।
## योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ३३

धृत्येति । धृत्या ययाऽव्यभिचारिण्येति व्यवहितेन सम्बन्धः, धारयते किं मनःप्राणेन्द्रियक्रियाः मनश्च प्राणाश्चे-न्द्रियाणि च तेषां क्रियाश्चेष्टास्ता उच्छास्त्रमार्गप्रवृत्तेर्धारयन्ति धृत्या हि धार्य्यमाणा उच्छास्त्रमार्गविषया न भवन्ति योगेनेति योगेन समाधानेनाव्यभिचारिण्या नित्यसमाधा-नानुगतयेत्यर्थः एतदुक्तं भवत्यव्यभिचारिण्या धृत्या मनः-प्राणेन्द्रियक्रियाः धार्यमाणा योगेन धारयतीति येवं-लक्षणा धृतिः सा पार्थ ! सात्त्विकी ॥ ३३ ॥

व्या॰ टी॰ । इदानीं धृतित्रैविध्यं व्युत्पिपादयिषुरादौ सात्त्विकीं धृतिं व्युत्पादयति धृत्येति । निर्दिष्टानाञ्चेष्टानां कथं धृत्या धारणं तत्राह ता इति । तदेवानुभवेन साधयति धृत्या हीति । ध्रियतेऽनयेति धृतिर्यत्नविशेषः तया धृत्या धार्य्यमाणा यथोपदिष्टाश्चेष्टाः शास्त्रमतिक्रम्य नार्थान्तरावगाहिन्यो भवन्तीत्यर्थः । धृतिमेव समाध्यविनाभूतत्वेन विशिनष्टि योगेन इति । ननु धृतेर्नियमेन समाध्यनुगतत्वं कथमुक्त-

क्रियाधारणोपयोगीत्याशङ्क्याह एतदिति। उक्तक्रिया धार्य्यकाणां योगेन अङ्गस्य समाधानेनैकाग्र्येणाव्यभिचारिण्याऽविनाभूतया धृत्या धारयत्यथः तदविनाभावाभावे नियमेन तद्धारणासिद्धेरित्यर्थः॥ ३३॥

स्वा॰ टी॰। इदानीं धृतेस्त्रैविध्यमाह धृत्येति त्रिभिः। योगेन चित्तैकाग्र्येण हेतुनाऽव्यभिचारिण्या विषयान्तरमधारयन्त्या यया धृत्या मनसः प्राणस्य इन्द्रियाणाञ्च क्रिया धारयते नियच्छति सा धृतिः सात्त्विकी॥ ३३॥

**यया तु धर्मकामार्थान् धृत्या धारयतेऽर्जुन!।**
**प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ! राजसी॥३४**

ययेति। यया तु धर्मकामार्थान् धर्मश्च कामश्चार्थश्च ते धर्मकामार्थाः तान् धर्मकामार्थान् धृत्या यया धारयते मनसि नित्यकर्त्तव्यरूपानेव धारयते हे अर्जुन! प्रसङ्गेन यस्य यस्य धर्मादेर्धारणप्रसङ्गस्तेन तेन प्रसङ्गेन फलाकाङ्क्षी च भवति यः पुरुषः तस्य धृतिर्या सा पार्थ! राजसी॥३४॥

भा॰ टी॰। राजसीं धृतिं दर्शयति यया त्विति। तेषां धारणप्रकारमभिनयति मनसीति। फलाकाङ्क्षीति कस्य विशेषणं तत्राह यः पुरुष इति॥ ३४॥

स्वा॰ टी॰। राजसीं धृतिमाह यया त्विति। यया तु धृत्या धर्मार्थकामान् प्राधान्येन धारयते न विसृजति तत्प्रसङ्गेन तत्फलाकाङ्क्षी च भवति सा राजसी धृतिः॥ ३४॥

**यया स्वप्नं भयं शोकं विषादं मदमेव च।**
**न विमुञ्चति दुर्मेधा धृतिः सा तामसी मता ३५**

ययेति। यया स्वप्नं निद्राभयत्रासं शोकं सन्तापं विषादमवसादं विषयमदनतां मदं विषयसेवां आत्मनो

बहुमन्यमानो मत इव मदमेव च मनसि नित्यमेव कर्त्तव्यरूपतया कुर्वन्न विमुञ्चति धारयत्येव दुर्मेधाः कुत्सितमेधाः पुरुषो यस्तस्य धृतिर्या सा तामसी मता ॥ ३५ ॥

आ॰ टी॰ । तामसीं धृतिं व्याचष्टे यथेति । शोकं प्रियवियोगनिमित्तं सन्तापं विषण्णतामिन्द्रियाणां ग्लानिः विषयसेवा कुमार्गप्रवृत्तेकामलक्षणमुक्तं स्वप्नादिमदान्तं सर्वमेव कर्त्तव्यतयात्मनो बहुमन्यमानो मनसि नित्यमेव कुर्वन् दुर्मेधाः न मुञ्चति किन्तु धारयत्येवेति योजना ॥ ३५ ॥

स्वा॰ टी॰ । तामसीं धृतिमाह यथेति । दुष्टा अविवेकबहुला मेधा यस्य स दुर्मेधाः पुरुषो यया धृत्या स्वप्नादीन्न विमुञ्चति पुनः पुनरावर्त्तयति स्वप्नोऽत्र निद्रा सा धृतिस्तामसी ॥ ३५ ॥

**सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ! ।**
**अभ्यासाद्रमते यत्र दुःखान्तञ्च निगच्छति ॥३६**

गुणभेदेन क्रियाणां कारकाणाञ्च त्रिधा भेद उक्तोऽथेदानीं फलस्य सुखस्य त्रिविधो भेद उच्यते सुखमिति । सुखन्तु इदानीं त्रिविधं शृणु समाधानं कुर्वित्येतन्मे मम भरतर्षभ ! अभ्यासात् परिचयावृत्तेः रमते रतिं प्रतिपद्यते यत्र यस्मिन् सुखानुभवे दुःखान्तञ्च दुःखावसानं दुःखोपशमञ्च निगच्छति निश्चयेन प्राप्नोति ॥ ३६ ॥

आ॰ टी॰ । वृत्तमनूद्यानन्तरश्लोकतात्पर्यमाह गुणेत्यादिना । क्रियमाणं कारकाणां गुणतस्त्रैविध्योक्त्यनन्तरं फलस्य सुखस्य त्रैविध्योक्त्यवसरे सतीत्याह इदानीमिति । हेयोपादेयभेदार्थं त्रैविध्यं समाधानमैकाग्र्यं मम वचनादिति शेषः, यत्र त्वभयत्र सम्बध्यते, तत्त्रिविधं सुखमिति पूर्वेण सम्बन्धः ॥ ३६ ॥

स्वा॰ टी॰ । इदानीं सुखस्य त्रैविध्यं प्रतिजानीते सुखन्त्विति । स्पष्टोऽर्थः ॥ ३६ ॥

**यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।**
**तत् सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥३७**

यदिति । यत् सुखमग्रे पूर्वं प्रथमसन्निपाते ज्ञानवैराग्यध्यानसमाध्यारम्भेऽत्यन्तायाससपूर्वकत्वाद्विषमिव दुःखात्मकं भवति परिणामे ज्ञानवैराग्यादिपरिपाकजं सुखममृतोपमन्तत् सुखं सात्त्विकं प्रोक्तं विद्वद्भिरात्मनो बुद्धिरात्मबुद्धिरात्मबुद्धेः प्रसादो नैर्मल्यं सलिलवत् स्वच्छता ततो जातमात्मबुद्धिप्रसादजमात्मविषया वात्मावलम्बना बुद्धिरात्मबुद्धिस्तत्प्रसादे प्रकर्षाद्वा जातमित्येतत्तस्मात् सात्त्विकं तन्मतम् ॥ ३७ ॥

आ॰ टी॰ । तत्र सात्त्विकं सुखमादेयत्वेन दर्शयति यत्तदिति । प्रथमसन्निपातं विभजते ज्ञानेति । कुतस्तस्य दुःखात्मकत्वं तत्राह अत्यन्तेति । दुःखात्मकत्वे दृष्टान्तमाह विषमिवेति । ज्ञानादिपरिपाकावस्थापरिणामस्तस्मिन् सति ततो जातमिति योजना । तत्रैव हेत्वन्तरमाह आत्मन इति । आत्मबुद्धिशब्दार्थान्तरमाह आत्मविषयेति । अन्तःकरणनैर्मल्याद्वा सम्यक्ज्ञानप्रकर्षाद्वा जातत्वादिति तच्छब्दार्थः ॥३७॥

स्वा॰ टी॰ । तत्र सात्त्विकं सुखमाह अभ्यासादिति सार्द्धेन । यत्र यस्मिन् सुखे अभ्यासाद्रमते न तु विषयसुख इव सहसा रतिं प्राप्नोति यस्मिन् रममाणश्च दुःखस्यान्तमवसानं नितरां गच्छति प्राप्नोति । कीदृशं यत्तत् किमपि अग्रे प्रथमं विषमिव मनःसंयमाधीनत्वाद्दुःखावहमिव भवति परिणामे त्वमृतसदृशं आत्मविषया बुद्धिरात्मबुद्धिस्तस्याः प्रसादो रजस्तमोमलत्यागेन स्वच्छतयावस्थानं ततो जातं यत् सुखं तत् सात्त्विकं प्रोक्तं योगिभिः ॥ ३७ ॥

**विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् ।**
**परिणामे विषमिव तत् सुखं राजसं स्मृतम् ॥३८॥**

विषयेति । विषयेन्द्रियसंयोगाद्यत् सुखं जायते प्रथमं प्रथमक्षणेऽमृतोपमममृतसमं परिणामे विषमिव बलवीर्य्यरूपप्रज्ञामेधाधनोत्साहहानिहेतुत्वादधर्मतज्जनितनरकादिहेतुत्वाच्च परिणामे तदुपभोगविपरिणामान्ते विषमिव तत् सुखं राजसं स्मृतम् ॥ ३८ ॥

भा० टी० । राजसं सुखं हेयत्वाय कथयति विषयेति । बलं शत्रुनाशसामर्थ्यं वीर्य्यं पराक्रमकृतं यशोरूपं शरीरसौन्दर्य्यं प्रज्ञा श्रुतार्थग्रहणसामर्थ्यं मेधा गृहीतार्थस्याविस्मरणेन धारणशक्तिः धनं गोहिरण्यादि उत्साहस्तु कार्य्यं प्रत्युपक्रमादिः, एतेषां नाशकत्वादैषयिकं सुखं विषसममित्यर्थः तत्रैव हेत्वन्तरमाह अधर्मेति ॥ ३८ ॥

भा०टी० । राजसं सुखमाह विषयेति । विषयाणामिन्द्रियाणाञ्च संयोगात् यत्तत् प्रसिद्धं स्त्रीसंसर्गादिसुखं अमृतमुपमा यस्य तादृशं भवति अग्रे प्रथमं परिणामे च विषतुल्यं इहामुत्र च दुःखहेतुत्वात् तत् सुखं राजसं स्मृतम् ॥ ३८ ॥

**यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।**
**निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥३९॥**

यदग्रे चेति । यदग्रे चानुबन्धे चावसानोत्तरकाले च सुखं मोहकरमात्मनो निद्रालस्यप्रमादोत्थं निद्रा चालस्यञ्च प्रमादश्च तेभ्यः समुत्तिष्ठतीति निद्रालस्यप्रमादोत्थस्तत्तामसमुदाहृतम् ॥ ३९ ॥

भा० टी० । तामसं सुखं त्याजार्थमेवोदाहरति यदग्रे चेति ।

अनुबन्धशब्दार्थमाह अवसानेति । मोहनं मोहकरं तदुत्पत्तिहेतुमाह निद्रेति ॥ ३९ ॥

व्या०टी०। तामसं सुखमाह यदिति । अग्रे च प्रथमक्षणे अनुबन्धे च पश्चादपि यत् सुखमात्मनो मोहकरं तदेवाह निद्रा च आलस्यञ्च प्रमादश्च कर्त्तव्यावधारणराहित्येन मनोग्राह्यमेतेभ्य उत्तिष्ठति यत् सुखं तत्तामससुदाहृतम् ॥ ३९ ॥

**न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।**
**सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥४०**

अथेदानीं प्रकरणोपसंहारार्थः श्लोक आरभ्यते नेति । न तदस्ति तन्नास्ति पृथिव्यां वा मनुष्यादि सत्त्वं प्राणिजातमन्यद्वाऽप्राणिजातं दिवि देवेषु वा पुनः सत्त्वं प्रकृतिजैः प्रकृतितो जातैरेभिस्त्रिभिर्गुणैः सत्त्वादिभिर्मुक्तं परित्यक्तं यत स्याद्भवेन्न तदस्तीति पूर्वेण सम्बन्धः । सर्वः संसारः क्रियाकारकफललक्षणः सत्त्वरजस्तमोगुणात्मकोऽविद्यापरिकल्पितः समूलोऽनर्थ उक्तः वृक्षरूपकल्पनया चोर्द्ध्वमूलमित्यादिना तञ्चासङ्गशस्त्रेण दृढेन छित्वा ततः पदन्तत् परिमार्गितव्यमिति चोक्तं तत्र च सर्वस्य त्रिगुणात्मकत्वात् संसारकारणनिवृत्त्यनुपपत्तौ प्राप्तायां यथा तन्निवृत्तिः स्यात्तथा वक्तव्यं सर्वश्च गीताशास्त्रार्थ उपसंहर्त्तव्य एतावानेव च सर्वो वेदः स्मृत्यर्थश्च ॥ ४० ॥

व्या० टी० । क्रियाकारकफलात्मनः संसारस्य प्रत्येकं सात्त्विकादिभेदेन त्रैविध्यमुक्त्वा संसारान्तर्भूतमेव किञ्चित् गुणत्रयास्पृष्टमपि कश्चिद्भविष्यतीत्याशङ्क्याह अथेति । संसारस्य सर्वस्यैव गुणत्रयसंस्पृष्टत्वं प्रकटयन् अन्यद्वाऽप्राणीत्यत्राप्राणिशब्देन प्रसिद्धा स्थावरादि व्यक्तयो ।

प्रकरणार्थमुपसंहृतमनुवदति सर्वं इति। तस्यानेकात्मकत्वेन हेयत्वं सूचयति क्रियेति। निर्गुणादात्मनो वैलक्षण्याच्च तस्य हेयतेत्याह सत्त्वेति। अनर्थत्वाच्च तस्य त्याज्यत्वमनर्थत्वञ्चाविद्याकल्पितत्वेनावस्तुत्वादित्याह अविद्येति। न केवलमध्यात्मादौ संसारो दर्शितः, किन्तु पञ्चदशेऽपीत्याह वृक्षेति। चकारात् सर्वः संसारः इत्यनुकृष्यते। संसारव्युच्छित्तिसाधनं सम्यग्ज्ञानञ्च तत्रैवोक्तमित्याह असङ्गेति। इत्यमनूद्यानन्तरसन्दर्भतात्पर्यमाह तत्र चेति। उक्तो विनिवर्त्तयिषितसंसारः सतीति सप्तम्या परामृश्यते. सर्वो हि संसारो गुणत्रयात्मको न च गुणानां प्रकृत्यात्मकानां संसारकारणीभूतानां निवृत्तियुक्ता प्रकृतेर्नित्यत्वादित्याशङ्कायां स्वधर्म्मानुष्ठानात्तत्त्वज्ञानोत्पत्त्या गुणानामज्ञानात्मकानां निवृत्तिर्यथा भवति तथा स्वधर्म्मजातं वक्तव्यमित्युत्तरग्रन्थप्रवृत्तिरित्यर्थः। तत्तद्वर्णप्रयुक्तधर्म्मजातमुपदेष्टुं चोपसंहारप्रकरणप्रकोपः स्यादित्याह सर्वेति। उपसंहृते गीताशास्त्रार्थे यद्यपि सर्वो वेदार्थस्तदर्थश्च सर्व उपसंहृतस्तथापि मुमुक्षुभिरनुष्ठेयमस्ति वक्तव्यमवशिष्टमित्याशङ्क्याह एतावानिति। अनुष्ठेयपरिमाणनिर्द्धारणवद्भक्त्यवधानियतेन शास्त्रार्थोपसंहारश्चेत्येतदुभयञ्चकारार्थः ॥ ४० ॥

स्वा० टी०। अनुक्तमपि संगृह्णन् प्रकरणार्थमुपसंहरति न तदस्तीति त्रिभिः। एभिः प्रकृतिसम्भवैः सत्त्वादिभिर्गुणैर्मुक्तं यदेवं सत्त्वं प्राणिजातं अन्यद्वा यत् स्यात्तत् पृथिव्यां मनुष्यादिषु दिवि देवेषु च क्वापि नास्तीत्यर्थः ॥ ४० ॥

**ब्राह्मणक्षत्रियविशां शूद्राणाञ्च परन्तप।**
**कर्म्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ ४१ ॥**

पुरुषार्थमिच्छद्भिरनुष्ठेय इत्येवमर्थं ब्राह्मणक्षत्रियविशामित्यादिरारभ्यते ब्राह्मणेति। ब्राह्मणाश्च क्षत्रियाश्च विशश्च ब्राह्मणक्षत्रियविशस्तेषां ब्राह्मणक्षत्रियविशां शूद्राणाञ्च शूद्राणामसमासकरणमेकजातित्वे सति वेदे नाधि-

कारात् हे परन्तप। कर्माणि प्रविभक्तानीतरेतरविभागेन व्यवस्थापितानि, केन स्वभावप्रभवैर्गुणैः स्वभाव ईश्वरस्य प्रकृतिः त्रिगुणात्मिका माया सा प्रभवो येषां गुणानां ते स्वभावप्रभवास्तैः शमादीनि कर्माणि प्रविभक्तानि ब्राह्मणादीनामथ वा ब्राह्मणस्वभावस्य सत्त्वगुणप्रभवः कारणं तथा क्षत्रियस्वभावस्य सत्त्वोपसर्जनं रजः प्रभवः वैश्यस्वभावस्य तम उपसर्जनं रजःप्रभवः शूद्रस्वभावस्य रज उपसर्जनं तमःप्रभवः प्रशान्त्यैश्वर्य्येहामूढस्वभावदर्शनाच्चतुर्णाम्। अथवा जन्मान्तरकृतसंस्कारः प्राणिनां वर्त्तमानजन्मनि स्वकार्य्याभिमुखत्वेनाभिव्यक्तः स्वभावः स प्रभवो येषां गुणानान्ते स्वभावप्रभवा गुणाः गुणप्रादुर्भावस्य निःकारणत्वानुपपत्तेः स्वभावः कारणमिति कारणविशेषोपादानं एवं स्वभावप्रभवैः प्रकृतिप्रभवैः सत्त्वरजस्तमोभिर्गुणैः स्वकार्य्यानुरूपेण शमादीनि कर्माणि प्रविभक्तानि, ननु शास्त्रप्रविभक्तानि शास्त्रेण विहितानि ब्राह्मणादीनां शमादीनि कर्माणि कथमुच्यते सत्त्वादिगुणप्रविभक्तानीति नैष दोषः शास्त्रेणापि ब्राह्मणादीनां सत्त्वादिगुणविशेषापेक्षयैव शमादीनि कर्माणि प्रविभक्तानि न गुणाननपेक्ष्येति शास्त्रप्रविभक्तान्यपि कर्माणि गुणप्रविभक्तानीत्युच्यते ॥ ४१ ॥

व्या० टी०। सम्प्रति वर्णचतुष्टयस्य अनुष्ठेयं धर्मजातं सङ्कीर्ण-मिति सूत्रमुपन्यस्यति ब्राह्मणेति। उपनयनसंस्कारवत्त्वे सति वेदाधिकारित्वं समानमिति त्रयाणां समासकरणमितरेषामसमासे हेतुमाह शूद्राणामिति। एकजातित्वमुपनयनवर्जितत्वं कर्मणामसङ्कीर्णत्वेन व्यवस्थापकम्। प्रश्नपूर्वकं प्रकटयति केनेत्यादिना। स्वभावप्रभवैर्गुणैरित्य-

स्याथान्तरमाह अथ वेति । उक्तव्यवस्थायां कार्य्यदर्शनं प्रमाणयति प्रशान्तीति । स्वभावशब्दस्यार्थान्तरमाह अथवेति । किमिति गुणाभिव्यक्तेस्तद्वासनाधीनत्वनतवाह गुणेति । ननु नास्ति गुणप्रादुर्भावस्य निमित्तकारणत्वं प्रकृतिजैर्गुणैरिति प्रकृतेर्गुणकारणत्वाभिधानादत आह स्वभाव इति । वासनाकारणमिति गुणाव्यक्तेर्निमित्तकारणत्वं विवक्षितं प्रकृतिस्तु उपादानमिति भावः । उक्तमुपसंहरति एवमिति । स्वभावप्रभवैः सत्त्वादिगुणैः ब्राह्मणादीनां कर्म्माणि प्रविभक्तानीत्युक्तमाक्षिपति नन्विति । शास्त्रस्य धर्म्मविभागहेतोः सत्त्वादिभिर्विशेषापेक्षयैव विभागज्ञापकत्वादुभयत्र विभागहेतुत्वोक्तिरविरुद्धेति परिहरति नैष दोष इति ॥ ४१ ॥

स्वा॰ टी॰ । ननु यद्येवं सर्व्वमपि क्रियाकारकफलादिकं प्राणिजातञ्च त्रिगुणात्मकमेव तर्हि कथमस्य मोक्ष इत्यपेक्षायां स्वस्वाधिकारेण विहितैः कर्म्मभिः परमेश्वराराधनात्तत्प्रसादलब्धज्ञानेनेत्येवं सर्व्वगीतार्थसारं संगृह्य दर्शयितुं प्रकारान्तरमारभते ब्राह्मणेत्यादि यावदध्यायसमाप्ति । हे परन्तप ! हे शत्रुतापन ! ब्राह्मणानां क्षत्रियाणां वैश्यानां शूद्राणाञ्च कर्म्माणि प्रविभक्तानि प्रकर्षेण विभागतो विहितानि, शूद्राणां समासात् पृथक्करणं द्विजत्वाभावेन वैलक्षण्यात्, विभागोपलक्षणमाह स्वभावः सात्त्विकराजसादिः प्रभवति प्रादुर्भवति येभ्यस्तैर्गुणैरुपलक्षणभूतैः । यद्वा, स्वभावप्रभवैः पूर्व्वजन्मसंस्कारप्रादुर्भूतैरित्यर्थः । तत्र सत्त्वप्रधाना ब्राह्मणाः सत्त्वोपसर्ज्जनरजःप्रधानाः क्षत्रियाः तम उपसर्ज्जनरजःप्रधाना वैश्याः रजउपसर्ज्जनतमःप्रधानाः शूद्राः ॥ ४१ ॥

**शमो दमस्तपः शौचं क्षान्तिरार्ज्जवमेव च ।**
**ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥४२**

कानि पुनस्तानि कर्म्माणीत्युच्यते शम इति । शमो दमश्च यथा व्याख्यातार्थौ तपो यथोक्तं शारीरादि शौचं व्याख्यातं क्षान्तिः क्षमा आर्ज्जवं ऋजुतैव च ज्ञानं विज्ञानं

आस्तिक्यं अस्तिभावः श्रद्धधानता परमार्थेषु आगमार्थेषु ब्रह्मकर्म ब्राह्मणजातेः कर्म ब्रह्मकर्म स्वभावजं यदुक्तं स्वभावप्रभवैर्गुणैः प्रविभक्तानीति तदेवोक्तं स्वभावजमिति ॥ ४२ ॥

श्रा॰ टी॰। प्रविभक्तानि कर्माण्येव प्रश्नद्वारा विविच्य दर्शयति शमोदमइत्यादिना। अन्तःकरणोपशमः शमो दमो बाह्यकरणोपरतिरित्युक्तं कारयति यथेति। त्रिविधन्तपः समदशे दर्शितमित्याह तप इति। शौचमपि बाह्यान्तरभेदेन प्रागेवोक्तमित्याह शौचमिति। क्षमा नामाक्रुष्टस्य ताड़ितस्य वा मनसि विकाररहित्यं ज्ञानं शास्त्रीय पदार्थज्ञानं विज्ञानं शास्त्रार्थस्य स्वानुभवपर्य्यन्तत्वापादनं त्रिधा व्याख्यातम्। स्वभावशब्दार्थमुपेत्याह यदुक्तमिति ॥ ४२ ॥

स्वा॰ टी॰। तत्र ब्राह्मणस्य स्वाभाविकानि कर्माण्याह शम इति। शमश्चित्तोपरमः दमो बाह्येन्द्रियोपरमः तपः पूर्वोक्तं शारीरादि शौचं बाह्याभ्यन्तरं क्षान्तिः क्षमा आर्जवमवक्रता ज्ञानं शास्त्रीयं विज्ञानमनुभवः आस्तिक्यमस्ति परलोक इति निश्चयः एतच्छमादि ब्राह्मणस्य स्वभावाज्जातं कर्म ॥ ४२ ॥

**शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्।**
**दानमीश्वरभावश्च क्षत्रकर्म स्वभावजम् ॥ ४३ ॥**

शौर्य्यमिति। शौर्य्यं शूरस्य भावस्तेजः प्रागल्भ्यं धृतिर्धारणं सर्वावस्थास्वनवसादो भवति यया धृत्योत्तम्भितस्य दाक्ष्यं दक्षस्य भावः सहसा प्रत्युत्पन्नेषु कार्य्येष्वव्यामोहेन प्रवृत्तिर्युद्धे चाप्यपलायनमपराङ्मुखीभावः शत्रुभ्यः दानं देयेषु मुक्तहस्तता ईश्वरभावः ईश्वरस्य भावः प्रभुशक्तिप्रकटीकरणमीषितव्यान् प्रति क्षात्रं कर्म क्षत्रियजातेर्विहितं कर्म क्षात्रं कर्म स्वभावजम् ॥ ४३ ॥

शूरस्य भावो विक्रमो बलवत्तरानपि प्रहर्त्तुं प्रवृत्तिः प्रागल्भ्यं परैर्धर्षणीयत्वं महत्यामपि विपदि देहेन्द्रियोत्तम्भनी चित्तवृत्तिर्धृतिरिति व्याचष्टे सर्वास्वस्थास्विति । दक्षस्य भावमेव विभजते दक्षतेति ॥ ४३ ॥

स्वा० टी० । क्षत्रियस्य स्वाभाविकं कर्माह शौर्यमिति । शौर्यं पराक्रमः तेजः प्रागल्भ्यं धृतिर्धैर्यं दाक्ष्यं कौशलं युद्धे चाप्यपलायनं अपराङ्मुखता दानमौदार्यं ईश्वरभावो नियमनशक्तिः एतत् क्षत्रियस्य स्वाभाविकं कर्म ॥ ४३ ॥

**कृषिगोरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम् ।**
**परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥४४॥**

कृषीति । कृषिगोरक्ष्यवाणिज्यं कृषिश्च गोरक्ष्यञ्च वाणिज्यञ्च कृषिगोरक्ष्यवाणिज्यं कृषिर्भूमेर्विलेखनं गां रक्षतीति गोरक्षस्तद्भावो गोरक्ष्यं पाशुपाल्यं वाणिज्यं वणिक्कर्म क्रयविक्रयादिलक्षणं वैश्यकर्म वैश्यजातेः कर्म वैश्यकर्म स्वभावजं परिचर्यात्मकं शुश्रूषास्वभावं कर्म शूद्रस्यापि स्वभावजम् ॥ ४४ ॥

स्वा० टी० । वैश्यशूद्रयोः कर्माह कृषीति । कृषिः कर्षणं गां रक्षतीति गोरक्षस्तस्य भावः गोरक्ष्यं पाशुपाल्यमित्यर्थः वाणिज्यं क्रयविक्रयादि एतद्वैश्यस्य स्वाभाविकं कर्म । त्रैवर्णिकपरिचर्यात्मकं शूद्रस्यापि स्वभावजं कर्म ॥ ४४ ॥

**स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।**
**स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥४५**

एतेषां जातिविहितानां कर्मणां सम्यगनुष्ठितानां स्वर्ग-

प्राप्तिः फलं स्वभावतः वर्णा आश्रमादयश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलधर्मायुःश्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते इत्यादिस्मृतिभ्यः पुराणे च वर्णानामाश्रमाणाञ्च लोकफलभेदविशेषस्मरणात् कारणान्तरात्त्विदं वक्ष्यमाणं फलं शृणु स्वे स्वे इति। स्वे स्वे यथोक्तलक्षणभेदे कर्मण्यभिरतस्तत्परः संसिद्धिं स्वकर्मानुष्ठानादशुद्धिक्षये सति कायेन्द्रियाणां ज्ञानाधिष्ठानयोग्यतालक्षणां संसिद्धिं लभते प्राप्नोति नरोऽधिकृतः पुरुषः किं स्वकर्मानुष्ठानादेव साक्षात् संसिद्धिं न कथं तर्हि स्वकर्मनिरतः सिद्धिं यथा येन प्रकारेण विन्दति तच्छृणु ॥ ४५ ॥

आ॰ टी॰। स्वभावस्तु पूर्ववच्छमादिपरिचर्य्यान्तकर्म्मणां विभजनोक्तानामभ्युदयं फलमापादयिष्यति एतेषामिति। स्वभावतो विहितत्वादेव मोक्षापेक्षामन्तरेणानुष्ठानादित्यर्थः। तत्र प्रमाणमाह वर्णा इति। शेषशब्देन भुक्तकर्मणोऽतिरिक्तं कर्म्मानुशयशब्दितमुच्यते, प्रत्येकं देशादिभिर्विशिष्टशब्दः सम्बध्यते, आदिशब्देन तद्यथा आम्रफलार्थे निर्मिते छाया गन्धाद्यनूत्पद्यते एवं धर्मं चर्य्यमाणमर्था अनूत्पद्यन्ते न धर्महानिर्भवतीति स्मृतिर्गृह्यते। इतश्चोक्तानां कर्मणां स्वर्गफलत्वं युक्तमित्याह पुराणे चेति। उक्तं हि यस्तु सम्यक् करोत्येवं गृहस्थः परमं विधिं स्वर्गं बध्नन्नसौ लोकानाप्नोत्यनुत्तमानिति यस्त्वेतां नियतश्चर्य्यां वानप्रस्थश्चरेत् मुनिः स दहत्यग्निवद्दोषान् जयेल्लोकांश्च शाश्वतान् इति मोक्षाश्रयश्चरते यथोक्तं शुचिः सुसंकल्पितबुद्धियुक्तः अनिन्धनज्योतिरिव प्रशान्तं स ब्रह्मलोकात् श्रयते द्विजातिरिति च सर्व एते पुण्यलोका भवन्तीति श्रुतिश्चकारार्थः। यदि पुनर्मोक्षापेक्षयोक्तानि कर्माण्यनुष्ठीयेरंस्तदा मोक्षफलत्वं तेषां सेत्स्यतीत्याह कारणान्तरादिति।

तदेव कारणान्तरं यन्मोक्षापेक्षया तेषामनुष्ठानं मोक्षोपायेषु सात्त्विकेषु ब्राह्मणधर्मेषु क्षत्रियादीनामनधिकारात् ब्राह्मणानामेव मोक्षो न क्षत्रियादीनामित्याशङ्क्याह स्वे स्वे इति। यथा स्वे कर्मण्यभिरतस्य बुद्धिशुद्धिद्वारा ज्ञाननिष्ठायोग्यताप्राप्तावप्राप्तज्ञानस्य मोक्षोपपत्तेर्ब्राह्मणातिरिक्तस्यापि ज्ञानवतो मुक्तिरिति मत्वा पूर्वार्द्धं व्याचष्टे स्वे स्वे इत्यादिना। संसिद्धिशब्दस्य मोक्षार्थत्वं गृहीत्वा स्वधर्मनिष्ठत्वमात्रेण तल्लाभे तादर्थ्येन सन्न्यासादिविधानानर्थक्यमिति मन्वानः शङ्कते किमिति। न तावन्मात्रेण साक्षान्मोक्षो ज्ञाननिष्ठायोग्यता चेति परिहरति नेति। तर्हि कथं स्वधर्मनिष्ठस्य संसिद्धिरिति पृच्छति कथं तदिति। उत्तरार्द्धेनोत्तरमाह स्वकर्मेति। तच्छृणु तं प्रकारमेकाग्रचेतो भूत्वा, श्रुत्वावधारय इत्यर्थः॥ ४५॥

स्वा० टी०। एवंभूतस्यापि ब्राह्मणादिकर्मणो ज्ञानहेतुत्वमाह स्वे स्वे इति। स्वस्वाधिकारविहिते कर्मण्यभिरतः परिनिष्ठितो नरः संसिद्धिं ज्ञानयोग्यतां लभते॥ ४५॥

# यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्। स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः॥४६॥

यत इति। यतो यस्मात् प्रवृत्तिरुत्पत्तिश्चेष्टा वा यस्मादन्तर्यामिण ईश्वरात् भूतानां प्राणिनां स्यात् येनेश्वरेण सर्वमिदं ततं जगद्व्याप्तं स्वकर्मणा पूर्वोक्तेन प्रतिवर्णन्तमीश्वरमभ्यर्च्य पूजयित्वाराध्य केवलं ज्ञाननिष्ठायोग्यतालक्षणां सिद्धिं विन्दति मानवो मनुष्यः॥ ४६॥

श्रा० टी०। तमेव प्रकारं स्फुटयति यत इति। यतःशब्दार्थं यस्मादित्युक्तं व्यक्तीकरोति यस्मादिति। प्राणिनामुत्पत्तिर्यस्मादीश्वराच्चेष्टा चेष्टा च यस्मादन्तर्यामिणो येन च सर्वं व्याप्तं स्वदेव घटादिकार्यं मृत्कारणातिरिक्तस्वरूपाभावात् स्वकर्मणाभ्यर्च्य मानवः संसिद्धिं

विन्दतीति सम्बन्धः। न हि ब्राह्मणादीनां यथोक्तधर्मनिष्ठया साक्षा-न्मोक्ष उपलभ्यते तस्य ज्ञानैकलभ्यत्वात् किन्तु तन्निष्ठानां शुद्धबुद्धीनां कर्मसु फलमपश्यतामीश्वरप्रसादासादितविवेकवैराग्यवतां सन्न्यासिनां ज्ञाननिष्ठायोग्यतावतां ज्ञानप्राप्त्या मुक्तिरित्यभिप्रेत्याह केवलमिति ॥४६॥

स्वा० टी०। कर्मणा ज्ञानप्राप्तिप्रकारमाह स्वकर्मेति सार्द्धेन। स्वकर्मपरिनिष्ठितो यथा येन प्रकारेण तत्त्वज्ञानं लभते तं प्रकारं शृणु, तमेवाह यत इति। यतोऽन्तर्यामिणः परमेश्वराद्भूतानां प्राणिनां प्रवृत्तिश्चेष्टा भवति येनात्मना सर्वमिदं विश्वं ततं व्याप्तं तमीश्वरं स्वक-र्मणा अभ्यर्च्य पूजयित्वा सिद्धिं लभते मनुष्यः॥ ४६॥

**श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात्।**
**स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम्॥४७॥**

यत एवमतः श्रेयानिति। श्रेयान् प्रशस्यतरः स्वो धर्मः स्वधर्मः विगुणोऽपीत्यपिशब्दो द्रष्टव्यः परधर्मात् स्वनुष्ठितात् स्वभावनियतं स्वभावेन नियतं यदुक्तं स्वभावजमिति तदेवोक्तं स्वभावनियतमिति यथा विषजातस्य इव कृमेः विषं न दोषकरं तथा स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषं पापं स्वभावनियतं कर्म कुर्वाणो विषजात इव कृमिः किल्बिषं नाप्नोतीत्युक्तम्॥ ४७॥

स्वा० टी०। स्वधर्मानुष्ठानस्य बुद्धिशुद्ध्यादिद्वारा मोक्षहेतुत्वादवश्यं तदनुष्ठानमावश्यकमित्याह श्रेयानिति। ननु युद्धादिलक्षणं स्वधर्मं कुर्वन्नपि हिंसाधीनं पापं प्राप्नोति तत् कथं स्वधर्मः श्रेयानिति तत्राह स्वभावेति। स्वकीयं वर्णाश्रमं निमित्तीकृत्य विहितं स्वभावनियतं भस्मादुक्तमित्याह यदुक्तमिति। निषिद्धाचरणं विहितं कर्म कुर्वन् पापं नाप्नोतीत्यत्र दृष्टान्तमाह यथेति। अतश्च विहितकर्म दोषवदपि कर्त्तव्यं प्रकारान्तरासम्भवादित्युक्तस्यानुवादपूर्वकं वाशयति स्वभावेत्यादिना।

न हि कृमिर्विषजो विषनिमित्तं मरणं प्रतिपद्यते तथा पापाधिकृतः पुरुषो दोषवदपि विहितं कर्म कुर्वन् पापं नाप्नोतीत्युक्तमित्यर्थः ॥४७॥

स्वा॰ टी॰। स्वकर्मणोति विशेषणस्य फलमाह श्रेयानिति। विगुणोऽपि स्वधर्मः सम्यगनुष्ठितादपि परधर्मात् श्रेष्ठः, न च बन्धु-बधादियुक्ताद्युद्धादेः स्वधर्माद्भिक्षाटनादिपरधर्मः श्रेष्ठ इति मन्तव्यं यतः स्वभावेन पूर्वोक्तेन नियतं नियमेनोक्तं कर्म कुर्वन् किल्बिषं नाप्नोति ॥ ४७ ॥

**सहजं कर्म्म कौन्तेय! सदोषमपि न त्यजेत्।**
**सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः॥४८॥**

परधर्मस्य भयावह इत्यनात्मज्ञस्य न हि कश्चित् क्षणम-प्यकर्मकृत्तिष्ठतीत्यतः सहजमिति। सहजं सह जन्मनैवो-त्पन्नं सहजं किं तत् कर्म कौन्तेय! सदोषमपि त्रिगुण-त्वान्न त्यजेत् सर्वारम्भा आरभ्यन्त इत्यारम्भाः सर्वकर्मा-णीत्येतत् प्रकरणात् यः कश्चिदारम्भः स्वधर्मः परधर्मश्च ते सर्वे सदोषाः हि यस्मात्त्रिगुणात्मकत्वमत्र हेतुः त्रिगुणा-त्मकत्वाद्दोषेण धूमेन सहजेनाग्निरिवावृताः सहजस्य कर्मणः स्वधर्माख्यस्य परित्यागेन परधर्मानुष्ठानेऽपि दोषात् नैवमुच्यते भयावहश्च परधर्मः न च शक्यतेऽशेषतस्त्यक्तुम-ज्ञेन कर्मवता तस्मान्न त्यजेदित्यर्थः किमशेषतस्त्यक्तुमशक्यं कर्मेति न त्यजेत् किं वा सहजस्य कर्मणस्त्यागे दोषो भवतीति। किञ्चातो यदि तावदशेषतस्त्यक्तुमशक्यमिति न त्याज्यं सहजं कर्मैवन्तह्यशेषतस्त्यागे गुण एव स्यादिति सिद्धं भवति सत्यमेवमशेषतस्त्याग एव नोपपद्यत इति चेत् किं नित्यप्रचलितात्मकः पुरुषो यथा सांख्यानां गुणाः

किंवा क्रियैव कारकं यथा बौद्धानां पञ्चस्कन्धाः क्षणप्रध्वंसिनः उभयथापि कर्मणोऽशेषतस्त्यागो न भवत्यथ तृतीयोऽपि पक्षो यदा करोति तदा सक्रियं वस्तु यदा न करोति तदा निःक्रियं वस्तु तदेव तत्रैवं सति शक्यं कर्माशेषतस्त्यक्तुं अयं त्वस्मिन् तृतीये पक्षे विशेषो न नित्यप्रचलितं वस्तु नापि क्रियैव कारकं किं तर्हि व्यवस्थिते द्रव्येऽविद्यमाना क्रियोत्पद्यते विद्यमाना च विनश्यति। शुद्धं द्रव्यं शक्तिमत्तिष्ठत इति एवमाहुः काणादास्तदेव च कारकमित्यस्मिन् पक्षे को दोष इत्युच्यते अयमेव तु दोषो

---

आ० टी० । तर्हि दोषरहितमेव भिक्षाटनादि सर्वैरनुष्ठीयताम् अतो न पापप्राप्तिरित्याशङ्क्याह परेति । श्रेय इत्यनुवर्त्तते । तर्हि पापप्राप्तिशङ्कापरिहर्तुमकर्मनिष्ठत्वमेव सर्वेषां स्यादित्याशङ्क्य ज्ञानाभावान्नैवमित्याह अनात्मज्ञ इति । पूर्ववदत्रापि सम्बन्धः । प्रकारान्तरासम्भवकृतं फलमाह अत इति । सह जायत इति सहजं स्वभावनियतं नित्यं कर्म तद्विहितत्वान्निर्दोषमपि हिंसात्मकतया सदोषमित्यत्र हेतुमाह त्रिगुणेति । सत्त्वादिगुणत्रयारब्धतया हिंसादिदोषवदपि कर्म विहितमत्याज्यमित्यर्थः । कर्मणां दोषवत्त्वं प्रपञ्चयति सर्वेति । आरम्भशब्दस्य कर्मव्युत्पत्त्या स्वपरसर्वकर्मार्थत्वे कर्मणां प्रकृतत्वं हेतुमाह प्रकरणादिति । दोषेणेत्यादि व्याचष्टे यः कश्चिदिति । ते सर्वे दोषेणावृता इति सम्बन्धः । सर्वकर्मणां दोषावृतत्वे हिशब्दोपात्तं यस्मादित्युक्तं हेतुमेवाभिनयति त्रिगुणात्मकत्वादिति । स्वभावनियतस्य कर्मणो दोषवत्त्वात्तत्त्यागद्वारा परधर्ममातिष्ठमानस्यापि नैव दोषाद्विमोक्षः सम्भवति न च परधर्मोऽनुष्ठातुं शक्यते भयावहत्वान्न च तर्हि कर्मणोऽशेषतोऽनुष्ठानमेवास्याशेषकर्मत्यागायोगादतः सहजं कर्म सदोषमपि न त्याज्यमिति वाक्यार्थमाह सहजमिति । सहजं कर्म सदोषमपि न त्यजेदित्यत्र

यतस्त्वभागवतं मतमिदं कथं ज्ञायते यत आह भगवान्नासतो विद्यते भाव इत्यादि काणादादीनां ह्यसतो भावः सतश्चाभाव इतीदं मतमभागवतत्वेऽपि न्यायवत्त्वे को दोष इति चेदुच्यते दोषवत्त्विदं सर्वप्रमाणविरोधात् कथं यदि तावद्द्व्यणुकादि द्रव्यं प्रागुत्पत्तेरत्यन्तमेवासदुत्पन्नञ्च स्थितं कञ्चित् कालं पुनरत्यन्तमेवासत्त्वमापद्यते तथा च सत्यसदेव सज्जायते अभावोभावो भवति भावश्चाभाव इति तत्राभावो जायमानः प्रागुत्पत्तेः शशविषाणकल्पः समवाय्यसमवायिनिमित्ताख्यं कारणमपेक्ष्य जायत इति।

---

विचारमवतारयति किमिति। न हि कश्चिदिति न्यायादिति शेषः दोषो विहितनित्यत्यागे प्रत्यवायः। सन्दिग्धस्य सप्रयोजनस्य विचार्य्यत्वादुक्तसन्देहे प्रयोजनं पृच्छति किञ्चात इति। तत्राद्यमनूद्य फलं दर्शयति यदीति। अशक्यानुष्ठानस्य गुणत्वेन प्रसिद्धत्वात् प्रसिद्धं हि महोदधिमगस्त्यस्य चुलकीकृत्य पिबतो गुणत्वन्तदाह यथेत्यादि। अशेषकर्मत्यागस्य गुणवत्त्वेऽपि प्रागुक्तन्यायेन तदयोगात्तस्याशक्यानुष्ठानतेति शङ्कते सत्यमिति। चोद्यमेव विवृणोत्याद्यं विभजते किमिति। सत्त्वादिगुणवदात्मनो नित्यप्रचलितत्वेनाशेषतस्तेन न कर्म त्यक्तुं शक्यं नापि रूपविज्ञानवेदनासंस्कारसंज्ञानं क्षणध्वंसिनां स्कन्धानामिव क्रियाकारकभेदाभावात् कारकस्यैवात्मनः क्रियात्वमित्युक्ते कर्माशेषतस्त्यक्तुं शक्यमुभयथापि स्वभावसङ्गादित्याह उभयथेति। पक्षद्वयानुरोधेनाशेषकर्मत्यागायोगे वैशेषिकश्चोदयति अथेति। कदाचिदात्मा सक्रियो निःक्रियश्च कदाचिदिति स्थिते फलितमाह तत्रेति। उक्तमेव पक्षं पूर्वोक्तपक्षद्वयाद्विशेषदर्शनेन विशदयति अयं त्विति। आगमापायित्वे क्रियायास्तद्वतो द्रव्यस्य कथं स्थायितेत्याशङ्क्याह शुद्धमिति। क्रिया शक्तिमत्त्वेऽपि क्रियावत्त्वाभावे कथं कारकत्वं क्रियां कुर्वन् हि कारकं

न चैवमभाव उत्पद्यते कारणञ्चापेक्षत इति शक्यं वक्तुमसतां शशविषाणादीनामदर्शनाद्भावात्मकाश्चेत् घटादय उत्पद्यमानाः किञ्चिदभिव्यक्तिमात्रे कारणमपेक्षोत्पद्यन्त इति शक्यं प्रतिपत्तुं किञ्च असतश्च सद्भावे सतश्चासद्भावे न क्वचित्प्रमाणप्रमेयव्यवहारेषु विश्वासः कस्यचित् स्यात् सत् सदेवासदसदेवेति निश्चयानुपपत्तेः किञ्चोत्पद्यत इति द्व्यणुकादिद्रव्यस्य स्वकारणसत्तासम्बन्धमाह प्रागुत्पत्तेश्चासत् पश्चात् स्वकारणव्यापारमपेक्ष्य स्वकारणैः परमाणुभिः सत्तया च समवायलक्षणेन सम्बन्धेन सम्बध्यते

---

कारकमित्यभ्युपगमादित्याशङ्क्याह तदेवेति। क्रियाश्रयमेव कारकं न क्रियाधिकरणं परस्पराश्रयादित्यर्थः। वैशेषिकपक्षे दोषाभावादस्मदीयैः स्वीकार्यं तत्प्रसङ्गेनाह इत्याशङ्क्याह इति। भगवन्मतानुसारित्वाभावादस्य पक्षस्य त्याज्यतेति दूषयति न्यायमेवेति। भगवन्मतानुसारित्वमस्याप्रामाणिकमिति शङ्कते कथमिति। भगवद्वचनमुदाहरन् परमपक्षस्य तदनुगुणत्वाभावमाह यत इति परेषामपि तमेतदनुगुणमेव किं न स्यादित्याशङ्क्याह काणादादीनां चेति। भगवन्मतानुगुणत्वाभावेऽपि न्यायानुगुणत्वेन दोषरहितं काणादादीनां मतमुपादेयमेव न हि काणादमतं विरोधादुपेक्षणीयमिति शङ्कते अभागवतत्वेऽपीति न्याय-वत्त्वमसिद्धमिति दूषयति उच्यत इति। सर्वप्रमाणानुसारिणो मतस्य न तद्विरोधितेत्याक्षिपति कथमिति। वैशेषिकमतस्य सर्वप्रमाणविरोधं प्रकटयन्नादौ तन्मतमनुवदति यदीति। असतो जन्म सतश्च नाश इति स्थिते फलितमाह तथा चेति। उक्तमेव वाक्यं व्याकरोति अभाव इति। सदेवासत्त्वमापद्यत इत्युक्तं व्याचष्टे भावश्चेति। इति कल्पयन्तीति शेषः। तत्रैवाभ्युपगमान्तरमाह तत्रेति। प्रकृतं मतं सप्तम्यर्थः इत्यभ्युपगम्यत इति शेषः। परकीयमभ्युपगमं दूषयति न चेति। एव-

सम्बद्धं सत् कारणसमवेतं सत् भवति तत्र वक्तव्यं कथमसतः सत् कारणं भवेत् सम्बन्धो वा केनचित्। नहि वन्ध्यापुत्रस्य सत्तासम्बन्धो वा कारणं वा केनचित् प्रमाणतः कल्पयितुं शक्यं ननु नैवं वैशेषिकैरभावस्य सम्बन्धः कल्प्यते द्व्यणुकादीनां हि द्रव्याणां स्वकारणेन समवायलक्षणः सम्बन्धः सत्ताभिर्वोच्यते इति न सम्बन्धात् प्राक् सत्त्वानभ्युपगमान्नहि वैशेषिकैः कुलालदण्डचक्रादिव्यापारात् प्राक् घटादीनामस्तित्वमिष्यते न च मृद एव घटाद्याकारप्राप्तिमिच्छन्ति ततश्चासत एव सम्बन्धः पारिशेष्यादिष्टो भवति नन्वसतोऽपि समवायलक्षणः सम्बन्धो न विरुद्धः न वन्ध्यापुत्रादीनामदर्शनात् घटादेरेव प्रागभावस्य स्वकारणसम्बन्धो भवति न वन्ध्यापुत्रादेरभावस्य तुल्यत्वेऽपीति

---

मिति परपरिभाषानुसारेणेत्यर्थः, अदर्शनादुत्पत्तेरपेक्षायाश्चेति शेषः। कथन्तर्हि त्वन्मतेऽपि घटादीनां कारणापेक्षाणामुत्पत्तिर्नहि मायामां कारणापेक्षोत्पत्तिर्वा युक्तेति तत्राह भावेति। घटादीनामुत्पत्तेः प्रागपि कारणात्मना सतामेवाव्यक्तनामरूपाणामभिव्यक्तिमात्रमपेक्ष्य पृथगभिव्यक्तिसम्भवाच्च किञ्चिदनवद्यमित्यर्थः। असत्कार्य्यवादे दोषान्तरमाह किञ्चेति। परमते मानमेयव्यवहारे क्वचिदपि विश्वासो न कस्यचिदित्यत्र हेतुमाह सदेवेति। न हि स तथैवेति निश्चितं तस्यैव पुनरसत्त्वप्राप्तिरित्यत्र वा स तथैवेति निश्चयः तथैव सत्त्वप्राप्तेरुपगमात् ततो यन्मानेन सदसदा निर्णीतं तत्तथेति विश्वासाभावात् मानवैफल्यमित्यर्थः। इतश्चासत्कार्य्यवादो न युक्तिमानित्याह किञ्चेति। तदेव हेत्वन्तरं स्फोरयितुं परमतमनुवदति उत्पद्यत इतीति। परकीयं वचनमेव व्याचष्टे प्रागिति। सम्बद्धं सदित्यनेन कारणसम्बन्धे सति कार्य्यस्य सम्बन्धो भवतीत्युक्तं तदेव स्फुटयति कारणेति। परमत-

विशेषोऽभावस्य वक्तव्यः एकस्याभावो द्वयोरभावः सर्वस्याभावः प्रागभावः प्रध्वंसाभाव इतरेतराभावोऽत्यन्ताभाव इति लक्षणतो न केनचिद्विशेषो दर्शयितुं शक्यः असति च विशेषे घटस्य प्रागभाव एव कुलालादिभिर्घटाभावमापद्यते सम्बध्यते च भावेन कपालाख्येन कारणेन सर्वव्यवहारयोग्यश्च भवति ननु घटस्यैव प्रध्वंसाभावोऽभावत्वे सत्यपीति प्रध्वंसाद्यभावानां न क्वचिद्व्यवहारयोग्यत्वं प्रागभावस्यैव

---

मेवमनुभाष्य दूषयति नन्विति । कार्यस्यासतोऽपि कारणं सम्भवति तस्य च कार्येण सम्बन्धः सिध्यतीत्याशङ्क्याह न हीति । असत्त्वादेवासतः सम्बन्धाभावे कारणस्य सतोऽपि न तेन सम्बन्धोऽनुमातुं शक्यते सदसतोः सम्बन्धासम्भवादित्यर्थः । कार्यस्यात्यन्तासत्त्वानभ्युपगमात् कारणसम्बन्धः स्यादिति शङ्कते नन्विति सतामेव द्व्यणुकादीनां कारणसम्बन्धं शङ्कित्वा दूषयति न सम्बन्धादिति । अनभ्युपगममेव विशदयति न हीति । सदेव कारणं कार्याकारमापद्य कार्यव्यवहारं निर्वर्त्तयतीत्यभ्युपगमादस्ति सम्बन्धानुपपत्तिरित्याशङ्क्यापराद्धान्तत्वैरित्याह न चेति । कार्यस्य कारणसम्बन्धात् पूर्वं सत्त्वाभावे परिशेषसिद्धमर्थं दर्शयति ततश्चेति । तत्र चानुपपत्तिरुक्तेति शेषः सम्बन्धिनोः सदसतोरसंयोगेऽपि समवायः सदसतोः स्यादिति तस्य नित्यत्वादन्यतरसम्बन्ध्यभावेऽपि स्थितेरावश्यकत्वादिति शङ्कते नन्विति । सदसतोर्मिथः सम्बन्धस्यादृष्टत्वान्नेति निराचष्टे न बन्ध्येति । घटादिप्रागभावस्य अत्यन्ताभावत्वाभावाद्वन्ध्यापुत्रादिविलक्षणतया स्वकारणसम्बन्धः सिध्यतीत्याशङ्क्याह घटादेरिति । उभयत्राभावाविशेषेऽपि कस्यचित् कारणसम्बन्धो नेतरस्येति विशेषे हेत्वभावाच्च प्रागभावस्य कारणसम्बन्धः सम्भवतीत्यर्थः । घटादिप्रागभावस्य सप्रतियोगिकत्वं बन्ध्यापुत्रादेर्नैवमिति विशेषमाशङ्क्य दूषयति एकस्येति । प्रागभावस्येव प्रध्वंसाभावादेरपि सप्रतियोगिकत्वाविशेषे स्वकारणेन सम्बन्धाविशेषः स्यादित्यर्थः । प्रागभावप्रध्वंसा-

द्व्यणुकादिद्रव्यास्यास्योत्पादिव्यवहारार्हत्वमितीत्यतदसमञ्जसमभावत्वाविशेषादतन्त्रप्रध्वंसाभावयोरिव ननु नेवास्माभिः प्रागभावस्य भावापत्तिरुच्यते किं तर्हि भावस्यैव हि भावापत्तिर्यथा घटस्य घटापत्तिः पटस्य पटापत्तिः एतदप्यभावस्य भावापत्तिवदेव प्रमाणविरुद्धं सांख्यस्यापि यः परिणामपक्षः सोऽप्यपूर्वधर्मोत्पत्तिविनाशाङ्गीकरणाद्वैशेषिकपक्षान्न विशिष्यतेऽभिव्यक्तितिरोभावाङ्गीकरणेऽप्यभिव्यक्तितिरोभावयोर्विद्यमानाविद्यमाननिरूपणे पूर्ववदेव प्रमाणविरोधः एतेन कारणस्यैव संस्थानमुत्पत्त्यादीत्येतदप्ययुक्तं पारिशेष्यात् सदेकमेव वस्त्वविद्ययोत्पत्तिविनाशादिधर्मैरनेकधा विकल्प्यत इतीदं भागवतं मतमुक्तं

---

भावयोर्विशेषाभावे फलितमाह असतीति चेति। कपालशब्दो घटकारणीभूतस्वद्वयवविषयः, सर्वो व्यवहारो घटाश्रितो जन्मनाशादिव्यवहारः प्रध्वंसाभावस्तु घटस्यैवाभावत्वे सत्यपि न घटत्वमापद्यते नापि कारणेन सम्बध्यते न चोत्पत्त्यादिव्यवहारयोग्यो भवतीत्येतदयुक्तं प्रागभावेनास्य विशेषाभावादित्याह नन्विति। असमञ्जसमित्यनेनेतिशब्दः सम्बध्यते। असमञ्जसान्तरमाह प्रध्वंसादीति। अन्योन्याभावात्यन्ताभाववादिपदार्थौ कचिदिति देशकालयोर्ग्रहणं व्यवहारो जन्मादिरेव प्रागभावो नोत्पत्त्यादिव्यवहारयोग्योऽभावत्वात् प्रध्वंसादिवदित्यर्थः। प्रागभावस्य घटभावानभ्युपगमादनुमानं सिद्धसाधनमिति शङ्कते नन्विति। अभावस्य भावापत्त्यनभ्युपगमे भावस्यैव भावापत्तिरित्यनिष्टं स्यादिति दूषयति भावस्यैवेति। तस्य तदापत्तेरयोग्यत्वे दृष्टान्तमाह यथेति। भावस्य भावापत्तिरनिष्टेति दार्ष्टान्तिकं स्पष्टयति एतदपीति। आरम्भवादोक्तदोषं परिणामवादेऽपि सञ्चारयति सांख्यस्येति। धर्मः परिणामः असतोऽपूर्वपरिणामस्योत्पत्तेः सतश्च पूर्वपूर्वपरिणामस्य नाशादसदसदेव

नासतो विद्यते भाव इत्यस्मिन् श्लोके सत्प्रत्ययस्याव्यभिचारात् व्यभिचाराच्चेतरेषामिति। कथं तर्हि आत्मनोऽविक्रियत्वेनाशेषतः कर्मणस्त्यागो नोपपद्यत इति यदि वस्तुभूता गुणाः यदि वा अविद्याकल्पितास्तद्धर्मकर्म तदात्मन्यविद्याध्यारोपितमेवेत्यविद्वान् हि कश्चित् क्षणमप्यशेषतस्त्यक्तुं शक्नोतीत्युक्तं विद्वांस्तु पुनर्विद्ययाऽविद्यायां निवृत्तायां शक्नोत्येवाशेषतः कर्म परित्यक्तुं अविद्याऽध्यारोपितस्य शेषानुपपत्तेः नहि तैमिरिकदृष्ट्याऽध्यारोपितस्य द्विच-

---

सच्च सदेवेति व्यवस्थाऽपि दुर्घटेत्यर्थः। ननु कार्यं कारणात्मना प्रागपि सदेवाव्यक्तं कारकव्यापारादुत्पद्यते तेन व्यक्ताव्यक्तयोर्जन्मनाशव्यवहारात्मत्वात् तद्विशेषविशिष्टत्वाच्च अभिव्यक्तीति कारकव्यापारात् प्रागनभिव्यक्तिवदभिव्यक्तेः सत्त्वमसत्त्वं वा सत्त्वे कारकव्यापारवैयर्थ्यात्तद्विषयप्रमाणविरोधः द्वितीये पक्षान्तरवदत्यन्तासतः तच्चिवन्ध्यात्वायोगे स एव दोषः कारकव्यापाराद्दूर्ध्वमभिव्यक्तेरपि सत्त्वे स एव दोषः असत्त्वेपि सतोऽसत्त्वाङ्गीकारात् मानमेयव्यवहारे न क्वापि विश्वासः सत्सदेव असदसदेवेत्यनिर्द्धारणादित्यर्थः। सांख्यपक्षप्रतिक्षेपन्यायेन पक्षान्तरमपि प्रतिक्षिप्तमित्याह एतेनेति। कारणस्यैव कार्यरूपापत्तिरुत्पत्तिस्तस्यैव तद्रूपत्यागेन स्वरूपापत्तिर्नाश इत्येतदपि न पूर्वरूपे स्थिते नष्टे च परस्य पररूपापत्तेरनुपपत्तेर्न च प्राक्तनरूपं स्थितेन नष्टेन वा त्यक्तुं शक्यमित्यर्थः। आरम्भवादे परिणामवादे च उत्पत्त्यादिव्यवहारानुपपत्तौ परिशेषायातं दर्शयति पारिशेष्यादिति। एकस्यानेकविधविकल्पानुपपत्तिमाशङ्क्याह अविद्ययेति। अस्यापि मतस्य भगवन्मतानुरोधित्वाभावाद्विशिष्टा व्याख्यैतस्याशङ्क्याह इतीदमिति। उक्तमेव भगवन्मतं विशदयति सत्प्रत्ययस्येति। सदेकमेव वस्तु स्यादिति शेषः। इतरेषां विकारप्रत्ययानां रजतादिधीवदर्थव्यभिचाराद्विद्यया तदेव

श्चादेस्तिमिरापगमे शेषोऽवतिष्ठत एवञ्च सतीदं वचनमुपपन्नं सर्वकर्माणि मनसेत्यादि स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानव इति च॥ ४८॥

सहस्त्वनेकधा विकल्पात इत्याह व्यभिचाराच्चेति। इति मतं श्लोके दर्शितमिति सम्बन्धः। आत्मनश्चेदविक्रियत्वं भगवतेष्टं तर्हि सर्वकर्मपरित्यागोपपत्तेः सहजस्यापि कर्मणस्त्यागसिद्धिरिति शङ्कते कथमिति। किं कार्य्यकारणात्मनां गुणानामकल्पितानां कल्पितानां वा कर्म्म धर्मत्वेनेष्टं द्विधापि निःशेषकर्मत्यागो विदुषोऽविदुषो वा नाद्य इत्याह यदीत्यादिना। अविद्यारोपितमेव गुणशब्दितकार्य्यकारणारोपद्वारा कर्मेति शेषः। द्वितीयं प्रत्याह विद्वांस्त्विति। आरोपशेषवशाद्विदुषोऽपि नाशेषकर्मत्यागसिद्धिरित्याशङ्क्याह अविद्येति। तामेवानुपपत्तिं दृष्टान्तेन स्पष्टयति न हीति। विदुषोऽशेषकर्मत्यागे प्राञ्चमिकमपि वचोऽनुकूलमित्याह एवञ्चेति। अविदुषः सर्वकर्मत्यागायोगे च प्रकृताध्यायस्थमेव वाक्यमनुगुणमित्याह स्वे स्वे इति। वाक्यान्तरमपि तत्रैवार्थे युक्तार्थमित्याह स्वकर्मणेति॥ ४८॥

स्वा० टी०। यदि पुनः सांख्यदृष्ट्या स्वधर्मे हिंसालक्षणं दोषं मत्वा परधर्म्मं श्रेष्ठं मन्यसे तर्हि सदोषत्वं परधर्मेऽपि तुल्यमित्याशयेनाह सहजमिति। सहजं स्वभावविहितं कर्म सदोषमपि न त्यजेत् हि यस्मात् सर्वेऽप्यारम्भा दृष्टादृष्टानि सर्वाण्यपि कर्म्माणि दोषेण केनचिदावृता व्याप्ता एव यथा सहाजनधूमेनाग्निरावृतस्तद्वत्, अतो यथाग्नेर्धूमरूपं दोषमपाकृत्य प्रताप एव तमःशीतादिनिवृत्तये सेव्यते तथा कर्मणोऽपि दोषांशं विहाय गुणांश एव शुद्धये सेव्यत इत्यर्थः॥ ४८॥

असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः।
नैष्कर्म्यसिद्धिं परमां सन्न्यासेनाधिगच्छति॥४९

या च कर्मजा सिद्धिरुक्ता ज्ञाननिष्ठा योग्यतालक्षणा तस्याः फलभूता नैष्कर्म्यसिद्धिर्ज्ञाननिष्ठालक्षणा वक्तव्येति श्लोक आरभ्यते। असक्तबुद्धिरसक्ता सङ्गरहिता बुद्धिरन्तःकरणं यस्य सोऽसक्तबुद्धिः सर्वत्र पुत्रदारादिषु आसक्तिनिमित्तेषु जितात्मा जितो वशीकृत आत्मा अन्तःकरणं यस्य स जितात्मा विगता स्पृहा तृष्णा देहजीवितभोगेषु यस्मात् स विगतस्पृहो य एवम्भूत आत्मज्ञः स नैष्कर्म्यसिद्धिं गतानि कर्माणि यस्मान्निष्क्रियब्रह्मात्मसम्बोधात् स निःकर्मा तस्य भावो नैष्कर्म्यं नैष्कर्म्यञ्च तत् सिद्धिश्च सा नैष्कर्म्यसिद्धिः नैष्कर्म्यस्य वा सिद्धिः निष्क्रियात्मस्वरूपावस्थानलक्षणस्य सिद्धिर्निष्पत्तिस्तां नैष्कर्म्यसिद्धिं परमां प्रकृष्टां कर्मजा सिद्धिविलक्षणां सद्योमुक्त्यवस्थानरूपां सन्यासेन सम्यक्दर्शनेन तत्पूर्व्वकेन वा सर्व्वकर्मसन्यासेनाधिगच्छति प्राप्नोति ॥ ४९ ॥

आ॰ टी॰। विदुषः सर्व्वकर्मत्यागो नाविदुषस्तथेत्युक्तं इदानीमुक्तमनूद्यानन्तरश्लोकतात्पर्य्यमाह या च कर्मजेति। चोऽवधारणार्थो भिन्नक्रमो वक्तव्य इत्यत्र सम्बध्यते। साधनान्युपदिशन्नैष्कर्म्यसिद्धिं व्युत्पादयति असक्तेति। पुत्रादिविषये चेतसः सङ्गाभावेऽपि तस्यास्वाधीनत्वमाशङ्क्याह जितात्मेति। अत्यक्तिसुक्ता स्पृहाभावं वदन्पुनरुक्तिरिष्टेत्याशङ्क्याह देहेति। उक्तमनूद्य तत्फलं लम्भयति य एवमिति। कर्मणा निर्गतो हेतुमाह निष्क्रियेति। सम्यग्ज्ञानार्थत्वेन नैष्कर्म्यसिद्धिशब्दं व्याख्यायार्थान्तरमाह नैष्कर्म्यस्येति। प्रकर्षमेव प्रकटयति कर्मजेति। सन्यासस्य श्रुतिस्मृत्योः सम्यग्दर्शनसाधनत्वप्रसिद्धेरयुक्तत्वादात्मसन्यासशङ्क्य पक्षान्तरमाह तत्पूर्व्वकेणेति ॥ ४९ ॥

स्वा॰ टी॰। ननु कर्म्मणि क्रियमाणे कथं दोषांशप्रहाणेन गुणांश एव सम्पद्यत इत्यपेक्षायामाह असक्तबुद्धिरिति। असक्ता सङ्गशून्या बुद्धिर्यस्य जितात्मा निरहङ्कारः विगता स्पृहा फलविषया यस्मात् स एवम्भूतः, सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मत इत्येवं पूर्व्वोक्तेन कर्म्मासक्तिफलयोस्त्यागलक्षणेन संन्यासेन नैष्कर्म्म्यसिद्धिं सर्व्वकर्म्मनिवृत्तिलक्षणां सत्त्वशुद्धिमधिगच्छति। यद्यपि सङ्गफलयोस्त्यागेन कर्म्मानुष्ठानमपि नैष्कर्म्म्यमेव कर्त्तृत्वाभिनिवेशाभावात् तदुक्तं नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्वविदित्यादिश्लोकचतुष्टयेन, तथाप्यनेनोक्तलक्षणेन सन्न्यासेन परमां नैष्कर्म्म्यसिद्धिं सर्व्वकर्म्माणि मनसा संन्यस्यास्ते सुखं वशीत्येवं लक्षणां पारमहंस्यचर्य्यामाप्नोति ॥ ४६ ॥

**सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे।**
**समासेनैव कौन्तेय! निष्ठा ज्ञानस्य या परा॥५०॥**

तथा चोक्तं सर्व्वकर्म्माणि मनसा सन्न्यस्य नैव कुर्व्वन्न कारयन्नास्ते इति पूर्व्वोक्तेन स्वकर्म्मानुष्ठानेन ईश्वराभ्यर्च्चनस्वरूपेण जनितां प्रागुक्तलक्षणां सिद्धिं प्राप्तस्योत्पन्नात्मविवेकज्ञानस्य केवलात्मज्ञाननिष्ठारूपा नैष्कर्म्म्यलक्षणा सिद्धिर्येन क्रमेण भवति तद्वक्तव्यमित्याह सिद्धिमिति। सिद्धिं प्राप्तः स्वकर्म्मणेश्वरं समभ्यर्च्च तत्प्रसादजां कार्य्येन्द्रियाणां ज्ञाननिष्ठायोग्यतालक्षणां सिद्धिं प्राप्त इति तदनुवाद उत्तरार्थः, किन्तदुत्तरं यदर्थोऽनुवाद इत्युच्यते यथा येन प्रकारेण ज्ञाननिष्ठारूपेण ब्रह्म परमात्मानमाप्नोति तथा तं प्रकारं ज्ञाननिष्ठाप्राप्तिक्रमं मे मम वचनान्निबोध त्वं निश्चयेनावधारयेत्येतत् किं विस्तरेण नेत्याह समासेनैव संक्षेपेणैव हे कौन्तेय! यथा ब्रह्म प्राप्नोति तथा निबोधेति

अनेन प्रकारेण या प्रतिज्ञाता ब्रह्मप्राप्तिस्तामिदन्तया दर्शयितुमाह निष्ठा ज्ञानस्य या परेति निष्ठा पर्य्यवसानं परिसमाप्तिरित्येतत् कस्य ब्रह्मज्ञानस्य या परा परिसमाप्तिः कीदृशी सा यादृशमात्मज्ञानं कीदृक् तत् यादृश आत्मा कीदृशोऽसौ यादृशो भगवतोक्त उपनिषद्वाक्यैश्च न्यायतश्च ननु विषयाकारं ज्ञानं न विषयो नाप्याकारवानात्मेष्यते क्वचित् नन्वादित्यवर्णो भारूपः स्वयं ज्योतिरित्याकारवत्त्वमात्मनः श्रूयते न तमोरूपत्वप्रतिषेधार्थत्वा-

---

व्या० टी०। संन्यासाच्चैष्कर्म्यप्राप्तिरित्यत्र वाक्योपक्रमानुकूल्यमाह तथा चेति। ज्ञानस्य प्राप्तियोग्यतावता जातसम्यग्धियस्तत्फलप्राप्तौ मुक्तायुक्तायां वक्तव्यशेषो नास्तीत्याशङ्क्याह पूर्वोक्तेनेति। क्रमाख्यं वस्तु तदित्युच्यते। सिद्धिप्राप्त इत्युक्तेन कस्मादनूद्यते तत्राह तदनुवाद इति। उत्तरस्यैव प्रश्नपूर्वकं स्फोरयति किं तदित्यादिना। ज्ञाननिष्ठाप्राप्तिक्रमस्य विस्तरेणोक्तौ दुर्बोधत्वमाशङ्क्य परिहरति किमिति। चतुर्थपादस्य पूर्वेणासङ्गतिमाशङ्क्याह यथेति। निष्ठायाः सापेक्षत्वात् प्रतिसम्बन्धि निर्देष्टव्यमित्याह कस्येति। या ब्रह्मज्ञानस्य परा निष्ठा सा प्रकृतस्य ज्ञानस्य निष्ठेत्याह ब्रह्मेति। तस्य परा निष्ठा न प्रसिद्धेति कृत्वा साधनानुष्ठानाधीनतया साध्येति मत्वा पृच्छति कीदृशीति। प्रसिद्धमात्मज्ञानमनूद्य ब्रह्मज्ञाननिष्ठा तु ज्ञातेत्याह यादृशमिति। तत्रापि प्रसिद्ध्यसिद्धेति पृच्छति कीदृगिति। अर्थेनैव विशेषो हीति न्यायेनोत्तरमाह यादृश इति। तस्यापि विप्रतिपत्तेरप्रसिद्धिमभिसन्धाय पृच्छति कीदृश इति। आगमाद्युक्त्या चोपनिषद्वाक्यानि चाश्रित्य परिहरति यादृश इति। न जायते म्रियते वेत्यादीनि वाक्यानि कूटस्थत्वमसङ्गमित्यादिन्यायः। ज्ञानस्य विषयाकारत्वादात्मनश्चाविषयत्वादनाकारत्वाच्च तदाकारकज्ञानायोगादात्मप्रसिद्धावपि नात्मज्ञानप्रसिद्धिरिति शङ्कते

त्तेषां वाक्यानां द्रव्यगुणाद्याकारप्रतिषेधे आत्मनस्तमोरूपत्वे प्राप्ते तत्प्रतिषेधार्थान्यादित्यवर्णमित्यादिवाक्यानि अरूपमिति च विशेषतो रूपप्रतिषेधादविषयत्वाच्च न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्च नैनं अशब्दमस्पर्शमित्याद्यैस्तस्मादात्माकारं ज्ञानमित्यनुपपन्नं कथं तर्ह्यात्मनो ज्ञानं सर्वं हि यद्विषयं ज्ञानं तत्तदाकारं भवति निराकारश्च आत्मेत्युक्तं ज्ञानात्मनोश्चोभयोर्निराकारत्वे कथं तद्भावनानिष्ठेति नात्यन्तनिर्मलत्वस्वच्छत्वसूक्ष्मत्वोपपत्तेरात्मनो बुद्धेश्चात्मसमनैर्मल्याद्युपपत्तेरात्मचैतन्याकारभासत्वोपपत्तिः बुद्ध्याभासं मनस्तदाभासानीन्द्रियाणि

---

नन्विति। आकारवत्त्वमात्मनः श्रुतिसिद्धमिति सिद्धान्ती शङ्कते नन्वादित्येति। उक्तवाक्यानामन्यार्थत्वदर्शनेन पूर्ववादी परिहरति नेत्यादिना। संग्रहवाक्यं प्रपञ्चयति द्रव्येति। इतश्चाकारवत्त्वमात्मनो नास्तीत्याह अरूपमिति। यदात्मनो विषयत्वाभावात्तद्विषयं ज्ञानं न सम्भवतीत्युक्तं तदुपपादयति अविषयत्वाच्चेति। आत्मनो विषयत्वे श्रुतिमुदाहरति नेत्यादिना संदृशे सम्यग्दर्शनविषयत्वाय यस्यात्मनोरूपं न तिष्ठतीत्यर्थः। तदेव करणागोचरत्वेनोपपादयति नेति। शब्दादिशून्यत्वाच्चात्मा विषयो न भवतीत्याह अशब्द इति। आत्मनोविषयत्वाकारवत्त्वयोरभावे फलितमाह तस्मादिति। ज्ञानस्यात्माकारत्वाभावे सत्यात्मज्ञानमिति व्यपदेशासिद्धिरित्येकदेशी शङ्कते कथं तर्हि इति। तत्रानुपपत्तिरित्याशङ्क्याह सर्वं हीति। आत्मनोऽपि तर्हि विषयत्वेन ज्ञानस्य तदाकारत्वं स्यादित्याशङ्क्याह निराकारश्चेति। आत्मनोविषयराहित्यं चकारार्थः। आत्मवत्तज्ज्ञानस्यापि तर्हि निराकारत्वमभिव्यतीत्यवाह ज्ञानेति। तच्छब्देनात्मज्ञानं गृह्यते, तस्य

इन्द्रियाभासश्च देहाऽतो लौकिकैर्देहमात्र एवात्मदृष्टिः क्रियते देहचैतन्यवादिनश्च लोकायतिकाश्चैतन्यविशिष्टः कायः पुरुष इत्याहुः तथान्ये इन्द्रियचैतन्यवादिनोऽन्ये मनश्चैतन्यवादिनोऽन्ये बुद्धिचैतन्यवादिनस्ततोऽप्यन्तरमव्यक्तमव्याकृताख्यमविद्यावस्थमात्मत्वेन प्रतिपन्नाः केचित् प्रकृतिचैतन्यवादिनः, सर्वत्र हि बुद्ध्यादिदेहान्ते आत्मचैतन्याभासतात्मभ्रान्तिः कारणमित्यतश्चात्मविषयं ज्ञानं न विधातव्यं किं तर्हि नामरूपाद्यनात्माध्यारोपिता निवृत्तिरेव कार्या नात्मचैतन्यविज्ञानं सर्वैरभ्युपगम्यते अविद्याध्यारोपितसर्वपदार्थाकारैरेव विशिष्टतया गृह्यमाणत्वात् अतएव

---

भावनापौनःपुन्येनानुसन्धानं, तस्य निष्ठा समाप्तिरात्मनि साक्षात्कारदार्ढ्यं न वै तत् सर्वमात्मनो ज्ञानस्य वा निराकारत्वे सिध्यतीत्यर्थः। ज्ञानात्मनोः साम्योपन्यासेन सिद्धान्ती समाधत्ते नेत्यादिना। यथोक्तशास्त्रानुसारादात्मचैतन्याभासव्याप्ता ज्ञानपरिणामवती बुद्धिः साभासबुद्धिः व्याप्तं मनः साभासमनोव्याप्तानीन्द्रियाणि साभासेन्द्रियव्याप्तः स्थूलो देहस्तत्र लौकिकभ्रान्तिं प्रमाणयति अत इति। आत्मदृष्टेः देहमात्रे दृष्टत्वात्तत्र चैतन्याभासव्याप्तिरिन्द्रियद्वारा कल्प्यते इन्द्रियेषु च तद्दृष्टिदर्शनाच्चैतन्याभासवत्त्वं मनोद्वारा सिध्यति मनसि चात्मदृष्टेश्चैतन्याभासवत्त्वं बुद्धिद्वारा लभ्यते बुद्धौ वात्मदृष्टेरज्ञानद्वारा चैतन्याभाससिद्धिरित्यर्थः। देहे लौकिकमात्मत्वदर्शनं न्यायाभावादुपेक्षितमित्याशङ्क्याह देहेति। तथापि कथमिन्द्रियाणां न्यायहीनमात्मत्वमित्याशङ्क्याह तथेति। तथापि मनसोऽयदात्मत्वं तत्न्यायशून्यमित्याशङ्क्याह अन्य इति। बुद्धेरात्मत्वमिति न्यायोपेतमिति सूचयति अन्ये त्विति। देहादौ बुध्यन्ते परमात्मत्वबुद्धिर्नान्यत्रेति नियमं वारयति

विज्ञानवादिनो बौद्धाः विज्ञानव्यतिरेकेण वस्त्वेव नास्तीति प्रतिपन्नाः प्रमाणान्तरनिरपेक्षताञ्च स्वसंविदितत्वाभ्युपगमेन तस्मादविद्याध्यारोपणनिराकरणमात्रं ब्रह्मणि कर्त्तव्यं न तु ब्रह्मविज्ञाने यत्नोऽत्यन्तप्रसिद्धत्वादविद्याकल्पितनामरूपविशेषाकारप्रहृतबुद्धित्वादत्यन्तप्रसिद्धं सुविज्ञेयमासन्नतरमात्मतत्त्वमप्यप्रसिद्धं दुर्विज्ञेयमतिदूरं अन्यदिव च प्रतिभाति अविवेकिनां बाह्याकारनिवृत्तबुद्धीनान्तु लब्धगुर्वात्मप्रसादानां नातः परं सुखं सुप्रसिद्धं सुविज्ञेयमासन्नमस्ति

---

ततोऽपीति। तत्र हि साभासेऽन्तर्यामिणि करणोपासकानामात्मधीरस्तीत्यर्थः। बुद्ध्यादौ देहान्ते लौकिकपरीक्षकाणामात्मत्वभ्रान्तौ साधारणकारणमाह सर्वत्रेति। आत्मज्ञानस्य लौकिकपरीक्षकप्रसिद्धत्वादेव विधिविषयत्वमपि परेष्टं परास्तमित्याह इत्यत इति। ज्ञानस्य विधेयत्वाभावे किं कर्त्तव्यं द्रष्टव्यादिवाक्यैरित्याशङ्क्याह किं तर्हीति। आत्मज्ञानस्याविधेयत्वे प्रागुक्तमतः शब्दितं हेतुं विवृणोति अविद्येति। देहेन्द्रियमनोबुद्ध्यव्यक्तैरुपलभ्यमानैः सत्तोपलभ्यमाने चैतन्यं नान्यथा तेषामुपलम्भो जडत्वादित्यत्र विज्ञानवादी भ्रान्तिं प्रमाणयति अतएवेति। सर्वं ज्ञेयं ज्ञानव्याप्तमेव ज्ञायते तेन ज्ञानातिरिक्तं नास्त्येव वस्तु संमतं हि स्वप्नदृष्टं वस्तु ज्ञानातिरिक्तं नास्तीति ते भ्राम्यन्तीत्यर्थः। ज्ञानस्यापि ज्ञेयत्वात् ज्ञातृवज्ज्ञानान्तरमेष्टव्यमित्याशङ्क्याह प्रमाणान्तरेति। ज्ञानस्य स्वेनैव ज्ञेयत्वोपगमनेनातिरिक्तप्रमाणनिरपेक्षताञ्च प्रतिपन्ना इति सम्बन्धः। ब्रह्मात्मविज्ञानस्य सिद्धत्वेनाविधेयत्वे फलितमाह तस्मादिति। यत्र आत्मभावं नाब्रह्मणस्तत्ज्ञानस्य चात्यन्तप्रसिद्धत्वे कथं ब्रह्मण्यन्यथा प्रथा लौकिकानामित्यत्राह अविद्येति। यथा प्रतिमासु दुर्विज्ञेयत्वादिरूपमेव ब्रह्म किं न स्यात्तत्राह बाह्येति। गुरुप्रसादं शुश्रूषया तोषितबुद्धेराचार्य्यस्य करुणातिरेकात्तत्त्वं बुध्यतामिति

तथाचोक्तं प्रत्यक्षावगमं धर्म्यमित्यादि केचित्तु पण्डितम्मन्या निराकारत्वादात्मवस्तु नोपैति बुद्धिरतो दुःसाध्या सम्यक् ज्ञाननिष्ठेत्याहुः सत्यमेवं गुरुसम्प्रदायरहितानामश्रुतवेदान्तानामत्यन्तबहिर्विषयासक्तबुद्धीनां सम्यक्प्रमाणेष्वकृतश्रमाणां तद्विपरीतानान्तु लौकिकग्राह्यग्राहकद्वैतवस्तुनि सद्बुद्धिर्नितरान्दुःसम्पाद्या आत्मचैतन्यव्यतिरेकेण वस्त्वन्तरस्यानुपलब्धेः यथा चैतदेवमेव नान्यथेत्यवोचाम उक्तञ्च भगवता यस्यां जाग्रति भूतानि सा निशा पश्यतो मुने-

---

निरवद्यत्वोऽनुग्रहः आत्मप्रसादस्तत्वमिवगमनदर्शिततात्पर्य्यवाक्यस्य श्रौतयुक्त्यनुसन्धानादात्मनो मनसो निर्व्यवधानत्वात्तस्य प्रत्यगेकाग्रतया तत्प्राव-गम्यामिति विवेकः। आत्मज्ञानस्यात्मद्वारा प्रसिद्धत्वे वाक्योपक्रमं प्रमा-णयति तथा चेति। आत्मनो निराकारत्वात्तस्मिन् बुद्धेरप्रवृत्तेः सम्यक्ज्ञाननिष्ठा न सम्पाद्येति मतमुत्थापयति केचित्त्विति। बहिर्मुखानामन्तर्मुखानां वा प्रकृतिस्य सम्यग्ज्ञाननिष्ठा दुःसाध्येति विकल्पमाद्यं अङ्गीकरोति सत्यमिति। पूर्वविशेषणमुत्तरोत्तरविशेषणे हेतुत्वेन योजनीयम्। द्वितीयं दूषयति तद्विपरीतानामिति। अन्तर्निष्ठानां द्वैत-विषये सम्यग्बुद्धेरतिशयेन दुःसम्पाद्यत्वे हेतुमाह आत्मेति। तद्व्यति-रेकेण वस्त्वन्तरस्यासत्त्वं कथमित्याशङ्क्याह यथा चेति। अद्वैतमेव वस्तु द्वैतं त्वाविद्यकं नान्यथा तात्त्विकमित्येतदेव यथा स्यात्तथोक्तवन्तो वयं तत्र तत्राध्यायेष्विति योजना। अन्तर्निष्ठानामद्वैतदर्शिनां द्वैते नास्ति सद्बुद्धिरित्यत्र भगवतोऽपि सम्मतिमाह उक्तञ्चेति। परमतं निराकृत्य प्रकृतमुपसंहरन्नात्मनो निराकारत्वे ज्ञानस्य तदालम्बनत्वे किं कार-णमित्याशङ्क्याह तस्मादिति। नन्वात्मा कथञ्चित् ज्ञानक्रियासाध्यस्ते-नास्य हेयोपादेयान्यतरकोटिनिवेशात् प्राप्तं स्वर्गादिवत् क्रियासाध्यत्वे-नासिद्धत्वं नेत्याह न हीति। आत्मत्वादेव प्रसिद्धत्वेन प्राप्तत्वाद-

रिति तस्माद्बाह्याकारभेदबुद्धिनिवृत्तिरेवात्मस्वरूपालम्बने कारणं न ह्यात्मा नाम कस्यचित् कदाचिदप्रसिद्धः प्राप्यो हेय उपादेयो वा अप्रसिद्धे हि तस्मिन्नात्मनि स्वार्थाः सर्वाः प्रवृत्तयः व्यर्थाः प्रसज्जेरन्। न च देहाद्यचेतनार्थत्वं शक्यं कल्पयितुं न च सुखार्थं सुखं दुःखार्थं वा दुःखमात्मावगत्यवसानार्थत्वाच्च सर्वव्यवहारस्य तस्माद्यथा स्वदेहस्य परिच्छेदाय न प्रमाणान्तरापेक्षा ततोऽप्यात्मनोऽन्तरतमत्वात्तदवगतिं प्रति न प्रमाणान्तरापेक्षेत्यात्मज्ञाननिष्ठा विवेकिनां सुप्रसिद्धेति सिद्धं येषामपि निराकारं ज्ञानमप्रत्य-

---

नात्मवस्तुनो हेयोपादेयत्वयोरयोगान्न क्रिया साध्येत्यर्थः आत्मनश्चेत्ते क्रियासिद्धत्वात्तदा सर्वप्राणिनामभ्युदयनिःश्रेयसार्थानां आत्मार्थत्वायोगादर्थिनोऽभावादर्थत्वमप्रामाणिकं स्यादित्याह अप्रसिद्धे हीति। न प्रवृत्तीनां स्वार्थत्वं देहादीनां अन्यतरस्यार्थित्वं न तादर्थ्यादित्याशङ्क्य घटादिवदचेतनस्यार्थित्वायोगान्मैवमित्याह न चेति। ननु प्रवृत्तीनां फलावसायितया सुखदुःखयोरन्यतरार्थत्वान्न स्वार्थत्वमित्याशङ्क्याह न चेति। प्रवृत्तीनां सुखदुःखार्थत्वेऽपि तयोः स्वार्थत्वासिद्धेरर्थित्वेनात्मा सिध्यतीत्यर्थः। किञ्च सर्वापेक्षान्न्यायादात्मावगत्यवसानः सर्वो व्यवहारः न चात्मन्यप्रसिद्धे यज्ञादिव्यवहारस्य तत् ज्ञानार्थत्वेनात्मप्रसिद्धिरेष्टव्येत्याह आत्मेति। नन्वात्माप्रसिद्धोऽपि प्रमाणद्वारा प्रसिध्यति तत् प्रमाणादेवेति व्याख्यातत्वाह तस्मादिति। मानमेयादिसर्वव्यवहारस्यात्मावगत्यन्तत्वोपगमात् प्रागेव प्रमाणप्रवृत्तेरात्मप्रसिद्धेरेष्टव्यत्वादित्यर्थः। आत्मावगतेरेवं स्वाभाविकत्वे विवेकवतामारोपनिवृत्त्या ज्ञाननिष्ठा सुप्रसिद्धेत्युपसंहरति इतश्चात्मेति। ननु निराकारामेवानुमिमीमहे बुद्धिमिति वदतामन्तमनाकारमप्रत्यक्षमिच्छतां प्रागर्थावगतेरप्रसिद्धमेव

न्तेषामपि ज्ञानवशेनैव ज्ञेयावगतिरिति ज्ञानमत्यन्तं प्रसिद्धं सुखादिवदेवेत्यभ्युपगन्तव्यं, जिज्ञासानुपपत्तेश्चा-प्रसिद्धञ्चेत् ज्ञानं ज्ञेयवज्जिज्ञास्येत यथा ज्ञेयं घटादिलक्षणं ज्ञानेन ज्ञाता व्याप्तुमिच्छति तथा ज्ञानमपि ज्ञानान्तरेण ज्ञानाव्याप्तुमिच्छेन्न चैतदस्ति अतोऽत्यन्तप्रसिद्धं ज्ञानं ज्ञाताप्यत एव प्रसिद्ध इति तस्मात् ज्ञाने यत्नो न कर्त्तव्यः किन्त्वनात्मबुद्धिनिवृत्तावेव तस्मात् ज्ञाननिष्ठा सुस-म्पाद्या ॥ ५० ॥

ज्ञानं नेत्याह सेयमिति । सुखादिवन्नित्यानुभवगम्यं ज्ञानं नानुमेयं विषयावगत्या तदनुमितावितरेतराश्रयादिति भावः । इतश्च ज्ञानं प्रसिद्धमन्यथा तत्र जिज्ञासाप्रसङ्गाच्च च ज्ञाने जिज्ञासाप्रसिद्धा प्रसिद्धे च तद्योगादित्याह जिज्ञासेति । तदेव प्रपञ्चयति अप्रसिद्ध-श्चेदिति । दृष्टान्तमेव व्याचष्टे यथेति । दार्ष्टान्तिकं विवृणोति तथेति । इष्टापत्तिं निराचष्टे न चेति । ज्ञानस्य ज्ञानान्तरेण ज्ञेयत्वमेत-च्छब्दार्थः अनवस्थापत्तेरित्यर्थः । ज्ञाने जिज्ञासानुपपत्तौ फलितमाह अत इति । प्रसिद्धेऽपि ज्ञाने ज्ञातव्यात्मनि किमायातमित्याह ज्ञाता-प्येति । ज्ञानस्य विना ज्ञातारमपर्य्यवसानादित्यर्थः । ज्ञानस्य प्रसिद्धत्वे तत्र भावनापर्य्यायो विधिर्नास्तीत्याह तस्मादिति । कुत्र तर्हि प्रय-त्नाख्या भावनेत्याशङ्क्याह किन्त्विति । अविषये निराकारे चात्मनि ज्ञाननिष्ठायाः दुःसम्पाद्यस्वभावे फलितं निगमयति तस्मादिति ॥ ५० ॥

स्वा० टी० । एवंभूतस्य पारमहंस्यज्ञाननिष्ठया ब्रह्मभावप्रकार-माह सिद्धिं प्राप्त इति षड्भिः । नैष्कर्म्यसिद्धिं प्राप्तः सन् यथा येन प्रकारेण ब्रह्म प्राप्नोति तथा तं प्रकारं संक्षेपेणैव मे वचनान्निबोध, प्रतिष्ठिता या ब्रह्मप्राप्तिस्तामिमां, तथा दर्शयितुमाह निष्ठाज्ञानस्य या परेति । निष्ठा पर्य्यवसानं परिसमाप्तिरित्यर्थः ॥ ५० ॥

**बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च ।**
**शब्दादीन् विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ५१**

सेयं ज्ञानस्य परा निष्ठोच्यते कथं कार्य्येति बुद्ध्याध्यवसायात्मिकया विशुद्धया मायारहितया युक्तः सम्पन्नो धृत्या धैर्य्येण आत्मानं कार्य्यकरणसङ्घातं नियम्य च नियमनं कृत्वा वशीकृत्य शब्दादीन् शब्द आदिर्येषान्ते शब्दादयस्तान् विषयांस्त्यक्त्वा सामर्थ्यात् शरीरस्थितिमात्रात् केवलात् मुक्त्वा ततोऽधिकान् सुखार्थान् त्यक्त्वेत्यर्थः शरीरस्थित्यर्थत्वेन प्राप्तेषु च रागद्वेषौ व्युदस्य च परित्यज्य ॥ ५१ ॥

आ० टी० । ब्रह्मज्ञानस्य परां निष्ठां प्रतिष्ठापितामनूद्य श्लोकान्तरमवतारयितुं पृच्छति सेयमिति । सेयं ब्रह्मज्ञानस्य परा निष्ठा समारोपिता तद्धर्मनिवृत्तिद्वारा ब्रह्मणि परिसमाप्तिरात्मसन्तानरूपोच्यते सा कार्य्या सुसम्पाद्येति यदुक्तं तत् कथं केनोपायेनेति प्रश्नार्थः । पृष्टमुपायभेदमुदाहरति बुद्ध्येति अध्यवसायो ब्रह्मात्माभिनिश्चयः मायारहितत्वं संशयविपर्य्ययशून्यत्वम् । शब्दादिसमस्तविषयत्यागे देहस्थितिरपि दुःस्था स्यादित्याशङ्क्याह सामर्थ्यादिति । विषयमात्रत्यागे देहस्थित्यनुपपत्तेर्ज्ञाननिष्ठासिद्धिप्रसङ्गादित्यर्थः । देहस्थित्यर्थत्वेनानुज्ञातेष्वर्थेषु प्राप्तरागादिर्ज्ञाननिष्ठाप्रतिबन्धकं व्युदस्यति शरीरेति । परित्यज्य विविक्तसेवी स्यादिति सम्बन्धः ॥ ५१ ॥

स्वा० टी० । तदेवाह बुद्ध्येति । उक्तेन प्रकारेण विशुद्धया पूर्वोक्तया सात्त्विकया बुद्ध्या युक्तो धृत्या सात्त्विक्या आत्मानं तामेव बुद्धिं नियम्य निश्चलां कृत्वा शब्दादीन् विषयांस्त्यक्त्वा तद्विषयौ रागद्वेषौ व्युदस्य । बुद्ध्या विशुद्धया युक्त इत्यादीनां ब्रह्मभूयाय कल्पत इति तृतीयेनान्वयः ॥ ५१ ॥

**विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।**
**ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥ ५२**

ततः विविक्तसेवी अरण्यनदीपुलिनगिरिगुहादीन् देशान् सेवितुं शीलमस्येति विविक्तसेवी लघ्वाशी लघ्वशनशीलो विविक्तसेवालघ्वशनयोर्निद्रादिदोषनिवर्त्तकत्वेन चित्तप्रसादहेतुत्वात् ग्रहणं यतवाक्कायमानसो वाक् च कायश्च मानसञ्च यतानि नियतानि संयतानि यस्य ज्ञाननिष्ठस्य स ज्ञाननिष्ठो यतिर्यतवाक्कायमानसः स्यादेवमुपरतकरणः सन् ध्यानयोगपरो ध्यानमात्मस्वरूपं चिन्तनं योग आत्मस्वरूपविषय एवैकाग्रीकरणन्तौ ध्यानयोगौ परत्वेन कर्त्तव्यौ यस्य स ध्यानयोगपरो नित्यं नित्यग्रहणं मन्त्रजपाद्यन्यकर्त्तव्याभावदर्शनार्थं वैराग्यं विरागभावो दृष्टादृष्टेषु विषयेषु वैतृष्ण्यं समुपाश्रितो नित्यमेवेत्यर्थः ॥ ५२ ॥

आ॰ टी॰ । बहु वैशारद्यं यत्नेन कार्य्यं करणनियमनन्देहस्थितिहेत्वतिरिक्तविषयत्यागः देहस्थित्यर्थेष्वपि तेषु रागद्वेषवर्जनमित्युपायभेदे सिद्धे सत्युपायान्तराण्यपि यत्नसाध्यानीत्याह तत इति । चित्तैकाग्र्यप्रसादार्थं विविक्तसेवित्वं व्याकरोति अरण्येति । निद्रादिदोषनिवृत्त्यर्थं लघ्वाशित्वं विशदयति लघ्विति । लघु परिमितं हितं मेध्यं चाशितुं शीलमस्येति तथोच्यते । विशेषणयोस्तात्पर्य्यं विवृणोति विविक्तेति । निद्रादीत्यादिशब्दादालस्यप्रमादादयो बुद्धिविक्षेपका विवक्षिताः । वक्ष्यमाणध्यानयोगयोरुपायत्वेन विशेषणान्तरं विभजते वाक् चेति । वागादिसंयमस्यावश्यकत्वद्योतनार्थं स्यादित्युक्तम् । संयतवागादिकरणप्रामस्यानायासेन कर्त्तव्यमुपदिशति एवमिति । मन्त्रजपा-

दीत्यादिपदेन प्रकाशप्रणामादयो ध्यानयोगप्रतिबन्धका गृहीताः । उक्त-योरेव ध्यानयोगयोरुपायत्वेनोक्तं विरागभावं विभजते दृष्टेति । अस्य-क्तमेव व्यनक्ति नित्यमिति ॥ ५२ ॥

स्वा॰ टी॰ । किञ्च विविक्तेति । विविक्तसेवी शुचिदेशावस्थायी लघ्वाशी मितभोजी एतैरुपायैर्यतवाक्कायमानसः संयत वाग्देहचित्तो भूत्वा नित्यं सर्वदा ध्यानेन यो योगो ब्रह्मसंस्पर्शस्तत्परः सन् ध्याना-विच्छेदार्थं पुनःपुनर्दृढं वैराग्यं सम्यगाश्रितो भूत्वा ॥ ५२ ॥

**अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् ।**
**विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥५३**

किञ्च अहङ्करणमहङ्कारो देहेन्द्रियादिषु तत् बलं सामर्थ्यं कामरागादियुक्तं नेतरच्छरीरादिसामर्थ्यं स्वाभा-विकत्वेन त्यागस्याशक्यत्वात् दर्पो नाम हर्षानन्तरभावी धर्मातिक्रमहेतुः हृष्टः दृप्यति दृप्तो धर्ममतिक्रामतीति स्मर-णात् तञ्च काममिच्छां क्रोधं द्वेषञ्च परिग्रहमिन्द्रियमनोगत-दोषपरित्यागे शरीरधारणप्रसङ्गेन धर्मानुष्ठाननिमित्तेन वा बाह्यःपरिग्रहः प्राप्तस्तं च विमुच्य परित्यज्य परमहंसप-रिव्राजको भूत्वा देहजीवनमात्रेऽपि निर्गतममभावो निर्म-मोऽतएव शान्त उपरतः यः संहृतायासो यतिर्ज्ञाननिष्ठो ब्रह्मभूयाय ब्रह्मभवनाय कल्पते समर्थो भवति ॥ ५३ ॥

आ॰ टी॰ । ज्ञाननिष्ठस्य यतेर्विशेषणान्तरं समुच्चिनोति किञ्चेति । नित्यं ध्यानयोगपरत्वे समुच्चितं कारणान्तरं विवृणोति अहङ्करण-मिति । सामर्थ्यमात्रे बलशब्दादुपलभ्यमाने किमिति विशेषवचन-मित्याशङ्क्याह स्वाभाविकत्वेनेति । उक्ते दर्पं मानमाह हृष्ट इति । वैराग्यशब्देन लब्धस्यापि कामत्यागस्य पुनर्वचनं प्रकटत्वख्यापनार्थमह-

ङ्कारादित्यागे परिग्रहप्राप्त्यभावात्तत्त्यागोक्तिरयुक्तेत्याशङ्क्याह इन्द्रियेति । परिग्रहाभावे ममत्वविषयाभावान्निर्ममत्वं कथमित्याशङ्क्याह देहेति । अहङ्कारममकारयोरभावेन प्राप्तामन्तःकरणोपरतिमनुवदति अतएवेति । उक्तमनूद्य जीवन्नेवासौ ब्रह्मीभवतीति फलितमाह यः संहृतेति । ज्ञाननिष्ठदशायामूर्द्ध्वं स शब्दो द्रष्टव्यः, ब्रह्मणो भवनमनुसन्धानपरिपाकपर्यन्तं साक्षात्करणं तदर्थमिति यावत् ॥ ५३ ॥

स्वा॰ टी॰ । ततश्च अहङ्कारमिति । विरक्तोऽहमित्याद्यहङ्कारं बलं दुराग्रहं दर्पं योगबलादुन्मार्गप्रवृत्तिलक्षणं प्रारब्धवशात् प्राप्यमानेऽपि विषयेषु कामं क्रोधं परिग्रहञ्च विमुच्य विशेषेण त्यक्त्वा बलादापन्नेषु निर्ममः मम शान्तः परमामुपशान्तिं प्राप्तो ब्रह्मभूयाय ब्रह्माहमिति नैरन्तर्येणानुसन्धानाय कल्पते योग्यो भवति ॥ ५३ ॥

**ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।**
**समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥५४॥**

अनेन क्रमेण ब्रह्मभूतो ब्रह्मप्राप्तः प्रसन्नात्मा लब्धाध्यात्मप्रसादस्वभावो न शोचति किञ्चिदर्थवैकल्यमात्मनो वा वैगुण्यमुद्दिश्य न शोचति न सन्तप्यते न काङ्क्षति न ह्यप्राप्तविषयाकाङ्क्षा ब्रह्मविद उपपद्यते अतो ब्रह्मभूतस्यायं स्वभावोऽनूद्यते न शोचति न काङ्क्षतीति न हृष्यतीति वा पाठः समः सर्वेषु आत्मौपम्येन सर्वेषु भूतेषु सुखं दुःखं वा सममेव पश्यतीत्यर्थो नात्मसमदर्शनमिह तस्य वक्ष्यमाणत्वात् भक्त्या मामभिजानातीति च एवं भूतो ज्ञाननिष्ठो मद्भक्तिं मयि परमेश्वरे भक्तिं भजनं परमामुत्तमां ज्ञानलक्षणां चतुर्थीं लभते चतुर्विधा भजन्ते मामित्युक्तम् ॥ ५४ ॥

स्वा॰ टी॰ । अपेक्षितं पूरयन्नुत्तरश्लोकमवतारयति अनेनेति ।

बुद्ध्या विशुद्धयेत्यादिरत्र क्रमः, ब्रह्मप्राप्तो जीवन्नेव निवृत्ताशेषानर्थो निरतिशयानन्दब्रह्मात्मत्वेन भवन्नित्यर्थः। अध्यात्मं प्रत्यगात्मा तस्मिन् प्रसादः सर्वानर्थनिवृत्त्या परमानन्दाविर्भावः। स लब्धो येन जीवन्मुक्तेन स तथा। न शोचतीत्यादौ तात्पर्यमाह न हीति। प्राप्तव्यपरिहार्य्याभावनिश्चयादित्यर्थः। स्वभावानुवादमुपपादयति ब्रह्मभूतस्येति। तस्याप्राप्तविषयाभावान्नापि परिहार्य्यो परिहारप्रयुक्तः शोकपरिहार्य्यस्यैवाभावादित्यर्थः। पाठान्तरे तु रमणीयं प्राप्य प्रमोदते तदभावादित्यर्थः। विवक्षितं समदर्शनं विशदयति आत्मेति। ननु सर्वेषु भूतेष्वात्मनः समस्य निर्विशेषस्य दर्शनमत्राभिप्रेतं किं नेष्यते तत्राह नात्मेति। उक्तविशेषणवतो जीवन्मुक्तस्य ज्ञाननिष्ठा प्रागुक्तक्रमेण प्राप्ता सुप्रतिष्ठिता भवतीत्याह एवम्भूत इति। श्रवणमनननिदिध्यासनाभ्यासवतः शमादियुक्तस्याभ्यस्ते श्रवणादौ ब्रह्मात्मन्यपरोक्षं मोक्षफलं ज्ञानं सिध्यतीत्यर्थः। आर्त्तादिभक्तत्रयापेक्षया ज्ञानलक्षणां भक्तिं चतुर्थीं मत्युक्ताम्। तत्र सप्तमस्थवाक्यमनुकूलयति चतुर्विधा इति ॥५४॥

स्वा० टी०। ब्रह्माहमितिनैश्चल्येनावस्थानस्य फलमाह ब्रह्मेति। ब्रह्मभूतो ब्रह्मण्यवस्थितः प्रसन्नचित्तः नष्टं न शोचति नच प्राप्तं काङ्क्षति देहाद्यभिमानाभावात्। अतएव सर्वेष्वपि भूतेषु समः सन् रागद्वेषादिकृतविक्षेपाभावात् सर्वभूतेषु मद्भावनालक्षणां परां मद्भक्तिं लभते ॥ ५४ ॥

**भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः।**
**ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥५५॥**

ततो ज्ञानलक्षणया भक्त्या मामभिजानाति यावानहमुपाधिकृतविस्तरभेदः यश्चाहं विध्वस्तसर्वोपाधिभेदोऽभिमत उत्तमपुरुषः आकाशकल्पस्तं मामभितं चैतन्यमात्रैकरसमजमजरममरमभयमनिधनन्तत्त्वतोऽभिजानाति ततो

मामेवन्तत्त्वतो ज्ञात्वा विशते तदनन्तरं मामेव नात्र ज्ञाना-नन्तरप्रवेशक्रिये भिन्ने विवक्षिते ज्ञात्वा विशते तदनन्तर-मिति किं तर्हि फलान्तराभावात् ज्ञानमात्रमेव क्षेत्रज्ञञ्चापि मां विद्धीत्युक्तत्वात् ननु विरुद्धमिदमुक्तं ज्ञानस्य या परा निष्ठा तया मामभिजानातीति कथं विरुद्धमिति चेदुच्यते यदैव यस्मिन् विषये ज्ञानमुत्पद्यते ज्ञातुस्तदैव तं विषयम-भिजानाति ज्ञातेति न ज्ञाननिष्ठां ज्ञानावृत्तिलक्षणाम-पेक्षत इति ततश्च ज्ञानेन नाभिजानाति ज्ञानावृत्त्या तु ज्ञाननिष्ठयाभिजानातीति नैष दोषो ज्ञानस्य स्वात्मोत्पत्ति-परिपाकहेतुयुक्तस्य प्रतिपक्षविहीनस्य यदात्मानुभवनिश्च-

---

व्या॰ टी॰ । ननु समाधिसाध्येन परमभक्त्यात्मकेन ज्ञानेन किं मूर्त्तमवाप्यते तत्राह मत इति । भक्त्या समाधिजन्यया मां ब्रह्मा-भिमुख्येन मत्स्वरूपया जानाति व्याप्नोतीत्यर्थः । तदेव ज्ञानं भक्तिपराधीनं विवृणोति यावानिति । आकाशकल्पत्वमनवच्छिन्नत्वमसङ्गत्वञ्च । चैत-न्यस्य विषयसापेक्षत्वं प्रतिक्षिपति कश्चेतर्मिति । ये तु द्रव्यबोधात्मत्व-मात्मनो मन्यन्ते तान् प्रत्युक्तं चैतन्यमात्रेति । आत्मनि तन्मात्रेऽपि धर्मान्तरमुपेत्य धर्मधर्मित्वं प्रत्याह एकरसमिति । सर्वविक्रियाराहि-त्योक्त्या कौटस्थ्यमात्मनो व्यवस्थापयति अजरमिति । उक्तविक्रियाभावे तत्त्वज्ञानासम्बन्धे हेतुमाह अभयमिति । तत्त्वज्ञानमनूद्य तत्फलं विदेहकैवल्यं कथयति तत इति । तत्त्वज्ञानस्य तस्मादनन्तरप्रवेश-क्रियायाश्च भिन्नत्वं प्राप्तं प्रतयाह नात्रेति । भिन्नत्वाभावे का गति-र्भेदोक्तेरित्याशङ्क्यौपचारिकत्वमाह किं तर्हीति । प्रवेश इति शेषः । ब्रह्मप्राप्तिरेव फलान्तरमित्याशङ्क्य ब्रह्मात्मनोर्भेदाभावात् ज्ञानाति-रिक्ता तत्प्राप्तिरित्याह क्षेत्रज्ञञ्चेति । ज्ञाननिष्ठया परया भक्त्या मामभिजानातीत्युक्तमाक्षिपति नन्विति । विरुद्धत्वं स्फोरयति

यावसानत्वन्तस्य निष्ठाशब्दाभिलापात् शास्त्राचार्य्योपदेशेन ज्ञानोत्पत्तिपाकहेतु सहकारिकारणं बुद्धिविशुद्धत्वममानित्वादिगुणं चापेक्ष्य जनितस्य क्षेत्रज्ञपरमात्मैकत्वज्ञानस्य कर्त्रादिकारकभेदबुद्धिनिबन्धनसर्व्वकर्मसन्न्याससहितस्य स्वात्मानुभवनिश्चयरूपेण मदवस्थानं सा परा ज्ञाननिष्ठेत्युच्यते सेयं ज्ञाननिष्ठा आर्त्तादिभक्तित्रयापेक्षया परा चतुर्थी भक्तिरित्युक्ता तया परया भक्त्या भगवन्तं तत्त्वतोऽभिजानाति यदनन्तरमेवेश्वरक्षेत्रज्ञभेदबुद्धिरशेषतो निवर्त्तते अतो ज्ञाननिष्ठालक्षणया भक्त्या मामभिजानातीति वचनं न विरुध्यते अत्र च सर्व्वं निवृत्तिविधायि शास्त्रं

---

पृच्छति कथमिति। विरोधस्फुटीकरणं प्रतिजानीते उच्यत इति तत्र ज्ञानस्योत्पत्तिरेव विषयाभिव्यक्तिरित्याह यदेति। एवकारनिरस्यं दर्शयति न त्विति। इतराश्रयोः सिद्धमिति शेषः। ज्ञानस्योत्पत्तेरेव विषयाभिव्यक्तत्वेऽपि कथं प्रकृते विरोधीत्याशङ्क्याह तत्रेति। विरुद्धमिति शेषः। प्रसिद्धं विरोधं निरस्यति नैष दोष इति उक्तमेव हेतुं प्रपञ्चयति शास्त्रेति। यो हि शास्त्रानुसार्य्याचार्य्योपदेशस्तेन ज्ञानोत्पत्तिः आचार्य्यवान् पुरुषो वेदेति श्रुतेः तस्याश्च परिपाकः संशयादिप्रतिबन्धध्वंसस्तत्र हेतुभूतस्योपदेशस्यैव सहकारिकारणः यद्बुद्धिशुद्धत्वादि तदपेक्ष्य तस्मादेवोपदेशाज्जनितं यदैक्यज्ञानं तस्य कारकभेदबुद्धिनिबन्धनानि यानि सर्व्वाणि कर्म्माणि तेषां संन्यासेन सहितस्य फलरूपेण स्वात्मन्येव सर्व्वप्रकल्पनारहिते यदवस्थानं सा ज्ञानस्य परा निष्ठेति व्यवह्रियते प्रामाणिकैरित्यर्थः। यदि यथोक्ता परा ज्ञाननिष्ठा कथं तर्हि सा चतुर्थी भक्तिरित्युक्तेति तत्राह सेयमिति। यथोक्तया भक्त्या भगवत्तत्त्वज्ञानं सिध्यतीत्याह तयेति। तत्त्वज्ञानस्य फलमाह यदनन्तरमिति। ज्ञाननिष्ठारूपाया भगवद्भक्तेस्तत्त्वज्ञानानतिरेकात्तत्

वेदान्तेतिहासपुराणस्मृतिलक्षणं प्रसिद्धमर्थवद्भवति विदित्वा व्युत्थायाथ भिक्षाचर्य्यं चरन्ति तस्मात् न्यासमेषान्तपसामतिरिक्तमाहुर्न्यास एवात्यरेचयदिति सन्न्यासः कर्म्मणां न्यासो वेदानिमञ्च लोकममुञ्च परित्यज्य त्यज धर्म्ममधर्म्मं चेत्यादि इह च दर्शितानि वाक्यानि न च तेषां वाक्यानां आनर्थक्यं युक्तं न चार्थवादत्वं स्वप्रकरणस्थत्वात् प्रत्यगात्माविक्रियस्वरूपनिष्ठत्वाच्च मोक्षस्य नहि पूर्व्वसमुद्रं जिगमिषोः प्रातिलोम्येन प्रत्यक्समुद्रजिगमिषुणा समानमार्गत्वं सम्भवति प्रत्यगात्मविषयप्रत्ययसन्तानकरणाभिनिवेशश्च ज्ञाननिष्ठा सा च प्रत्यक्समुद्रगमनवत् कर्म्मणा सहभावित्वेन विरुध्यते पर्वतसर्षपयोरिवान्तरवान्विरोधः प्रमाणविदां निश्चितस्तस्मात् सर्व्वकर्म्मसन्न्यासेनैव ज्ञाननिष्ठा कार्य्येति सिद्धम ॥ ५५ ॥

---

फलस्य चाज्ञाननिवृत्तिमात्रत्वात् वेदोक्तेश्चौपचारिकत्वात् प्रकृतं वाक्यमविरुद्धमुपसंहरति अत इति । औपदेशिकैक्यज्ञानस्य सर्व्वकर्म्मसन्न्याससहितस्य स्वरूपावस्थानात्मकस्य परमपुरुषार्थौपयिकत्वमित्यत्र किन्नाम मानमाह अत्र चेति । तदेव शास्त्रमुदाहरति विदित्वेत्यादिना । दर्शितानि वाक्यानि सर्व्वकर्म्माणि मनसेत्यादीनि । नन्वेषां वाक्यानामविवक्षितार्थत्वान्नास्ति स्वार्थे प्रामाण्यमित्याशङ्क्याध्ययनविध्युपात्तत्वात् वेदवाक्यानान्तदनुरोधित्वाच्चेतरेषां नैवमित्याह न चेति ।

तथापि सोऽरोदीदित्यादिवच्च स्वार्थे मानतेत्याशङ्क्याह न चार्थवादत्वमिति । इतश्च मुमुक्षोरपेक्षितमोक्षौपयिकज्ञाननिष्ठस्य सन्न्यासेऽधिकारो न कर्म्मनिष्ठायामित्याह प्रत्यगिति । ज्ञाननिष्ठस्य कर्म्मनिष्ठाविरुद्धेत्यत्र दृष्टान्तमाह न हीति । ज्ञाननिष्ठास्वरूपानुवादपूर्व्वकं कर्म्मनिष्ठया तस्याः

बहुभावित्वं विरुद्धमिति दार्ष्टान्तिकमाह यत इत्यात्मेति । कथं ज्ञानकर्मणोर्विरोधयोरित्याशङ्क्य कर्मणां ज्ञाननिवर्त्त्यत्वस्य श्रुतिस्मृतिसिद्धत्वादित्याह यतेति । अन्तरत्वानुभयोरेकधर्मिनिष्ठत्वेन शङ्क्याभावसम्पादकभेदवानित्यर्थः । ज्ञानकर्मणोरसमुच्चये फलितमुपसंहरति तस्मादिति ॥ ५५ ॥

स्वा० टी० । ततश्च भक्त्येति । तया च परया भक्त्या तत्त्वतो मामभिजानाति, कथम्भूतं, यावान् सर्वव्यापी यश्चास्मि सच्चिदानन्दघनस्वभावभूतं, ततश्च मामेवं तत्त्वतो ज्ञात्वा तदनन्तरं तस्य ज्ञानस्योपरमे सति मां विशते परमानन्दरूपो भवतीत्यर्थः ॥ ५५ ॥

**सर्वकर्म्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।**
**मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥५६॥**

स्वकर्मणा भगवतोऽर्च्चनभक्तियोगस्य सिद्धिप्राप्तिः फलं ज्ञाननिष्ठायोग्यता यन्निमित्ता ज्ञाननिष्ठा मोक्षफलावसाना स भगवद्भक्तियोगोऽधुना स्तूयते शास्त्रार्थोपसंहारप्रकरणे शास्त्रार्थनिश्चयदार्ढ्याय सर्वकर्माणि प्रतिषिद्धान्यपि सदा कुर्वाणोऽनुतिष्ठन् मद्व्यपाश्रयोऽहं वासुदेव ईश्वरो व्यपाश्रयो यस्य स मद्व्यपाश्रयो मय्यर्पितसर्वात्मस्वभाव इत्यर्थः सोऽपि मत्प्रसादान्ममेश्वरस्य प्रसादादवाप्नोति शाश्वतं नित्यं वैष्णव्यं पदमव्ययम् ॥ ५६ ॥

स्वा० टी० । तर्हि ज्ञाननिष्ठयैव मोक्षसम्भवात् कर्म्मानुष्ठानसिद्धिरित्याशङ्क्याह स्वकर्मणेति । तामेव सिद्धिप्राप्तिं विशिनष्टि ज्ञानेति । ज्ञाननिष्ठायोग्यतायै स्वकर्म्मानुष्ठानं भगवदर्चनरूपे कर्त्तव्यमित्यर्थः । ज्ञाननिष्ठायोग्यतापि किमर्थेत्याशङ्क्य ज्ञाननिष्ठासिद्ध्यर्थेत्याह यन्निमित्तेति । ज्ञाननिष्ठापि कुत्रोपयुक्तेत्यत आह मोक्षेति । स्वकर्म्मणा भगवदर्चनात्मनो भक्तियोगस्य परम्परया मोक्षफलस्य कार्य्यत्वेन विधे-

यत्वे विश्वपेक्षितां स्तुतिमवतारयति स भगवदिति । ज्ञाननिष्ठा कर्म-निष्ठेत्युभयं प्रतिज्ञाय तत्र तत्र विभागेन प्रतिपादितं किमितीदानीं कर्मनिष्ठा पुनःस्तुतत्रा कर्त्तव्यतयोच्यते तत्राह शास्त्रार्थेति । तत्र तत्रोक्तस्यैव कर्मानुष्ठानस्य प्रकरणवशादिह्योपसंहारः सर्वशास्त्रार्थ-निश्चयस्य दृढतां द्योतयतीतत्रर्थः । यद्यपि कस्यचित् कर्मानुष्ठायिनो बुद्धिशुद्धिद्वारा कैवल्यं सिध्यति तथापि पापबाहुल्यादकर्मानुष्ठायिनोऽपि कस्यचिद्बुद्धिशुद्ध्यभावे कैवल्यासिद्धिरितत्रत्राह सर्वकर्माणीति । सर्व-शब्दानरोधादीश्वराराधनस्तुतिपरत्वेन श्लोकं व्याचष्टे प्रतिषिद्धान्यपीति । नितत्रनैमित्तिकवदितत्रपेरर्थः । निषिद्धाचरणस्य प्रामाणिकत्वं व्याव-र्त्तयति सदेति । अनुतिष्ठन्नेवाव्ययं पदमाप्नोतीति सम्बन्धः । पापकर्म-कारिणो यथोक्तपदप्राप्तौ पापस्यापि मोक्षफलत्वमुपगतं स्यादितत्रत्राह मद्व्यपाश्रय इति । तस्यैव तात्पर्यमाह मयीति तर्हि ज्ञानस्य मोक्ष-हेतुत्वमुपेक्षितं स्यादितत्रत्राह सोऽपीति ॥ ५६ ॥

स्वा० टी० । स्वकर्मभिः परमेश्वराराधनादुक्तं मोक्षप्रकारमुप-संहरति सर्वकर्माणीति । सर्वाणि नित्यानि नैमित्तिकानि च कर्माणि पूर्वोक्तक्रमेण सर्वदा कुर्वाणः मद्व्यपाश्रयः अहमेव व्यपाश्रय आश्रय-णीयो न तु स्वर्गादिफलं यस्य स मत्प्रसादात् शाश्वतमनादि अव्ययं नित्यं सर्वोत्कृष्टं पद प्राप्नोति ॥ ५६ ॥

**चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः ।**
**बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥ ५७॥**

यस्मादेवन्तस्मात् चेतसा विवेकबुद्ध्या सर्वकर्माणि दृष्टादृष्टार्थानि मयीश्वरे सन्न्यस्य यत् करोषि यदश्नासीत्यु-क्तन्यायेन मत्परोऽहं वासुदेवः परो यस्य तव स त्वं मत्परः सन् मय्यर्पितसर्वात्मभावः बुद्धियोगमपि समाहितबुद्धित्वं बुद्धियोगस्तं बुद्धियोगमुपाश्रित्य आश्रयोऽनन्यशरणत्वं

मच्चित्तः मय्येव चित्तं यस्य स मच्चित्तः सततं सर्वदा भव ॥ ५७ ॥

श्रा॰ टी॰। प्रसादोऽनुग्रहः सम्यक् ज्ञानोदयः पदं पदनीयं उपनिषत्तात्पर्य्यगम्यमव्ययमपचयरहितं परमेश्वरप्रसादस्यैवं माहात्म्यं यतः सिद्धन्तस्मात्तत्प्रसादार्थं भवता मयि तव्यमित्याह चेतसेति। भगवत्प्रसादासादितसम्यक्ज्ञानादेव मुक्तिर्न कर्म्ममात्रादिति ज्ञानं विवेकबुद्धिः। आश्रयशब्दार्थमाह मत्पर इति। किमतो भवति तदाह मच्चित्त इति ॥ ५७ ॥

स्वा॰ टी॰। यस्मादेवं तस्मात् चेतसेति। सर्व्वाणि कर्म्माणि चेतसा मयि संन्यस्य समर्प्य मत्परः अहमेव परः प्राप्यः पुरुषार्थो यस्य स व्यवसायात्मिकया बुद्ध्या योगमुपाश्रित्य सततं कर्म्मानुष्ठानकालेऽपि ब्रह्मार्पणं ब्रह्महविरिति न्यायेन मय्येव चित्तं यस्य तथाभूतो भव ॥ ५७ ॥

**मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि।**
**अथ चेत्त्वमहङ्कारान्न श्रोष्यसि विनङ्क्ष्यसि ॥५८**

मच्चित्तः सर्वदुर्गाणि सर्वाणि दुस्तराणि संसारहेतुजातानि मत्प्रसादात्तरिष्यसि अतिक्रमिष्यसि अथ चेत् यदि त्वं मदुक्तमहङ्कारात् पण्डितोऽहमिति न श्रोष्यसि न ग्रहीष्यसि ततस्त्वं विनङ्क्ष्यसि विनाशमुपैष्यसि ॥ ५८ ॥

श्रा॰ टी॰। भीत्यापि प्रवर्त्तेत इति मन्वानो विपर्य्यये दोषमाह अथ चेदिति ॥ ५८ ॥

स्वा॰ टी॰। ततो यद्भविष्यति तच्छृणु मच्चित्त इति। मच्चित्तः सन् मत्प्रसादात् सर्वाण्यपि दुर्गाणि दुस्तराणि सांसारिकदुःखानि तरिष्यसि, विपक्षे दोषमाह अथ चेत् यदि पुनस्त्वमहङ्कारात् ज्ञातृत्वा-

भिमानात् मदुक्तमेवं न श्रोष्यसि तर्हि विनङ्क्ष्यसि पुरुषार्थाद्भ्रष्टो भविष्यसि ॥ ५८ ॥

**यदहङ्कारमाश्रित्य न योत्स्य इति मन्यसे ।**
**मिथ्यैव व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ५९**

इदञ्च त्वया न मन्तव्यं स्वतन्त्रोऽहं किमर्थं परोक्तं करिष्यामीति यदि चैतत् त्वमहङ्कारमाश्रित्य न योत्स्य इति न युद्धं करिष्यामीति मन्यसे चिन्तयसि निश्चयं करोषि मिथ्यैव व्यवसायो निश्चयस्ते तव यस्मात् प्रकृतिः क्षत्रस्वभावस्त्वां नियोक्ष्यति ॥ ५९ ॥

व्या० टी० । स्वातन्त्र्ये सति भीतेरवकाशो नास्तीत्याशङ्क्याह इदञ्चेति । इतश्च त्वया युद्धाद्वैमुख्यं कर्तुमुचितमित्याह मिथ्येति ॥ ५९ ॥

स्वा० टी० । कामं विनङ्क्ष्यामि न तु बन्धुभिर्युद्धं करिष्यामीति चेत्तत्राह यदहङ्कारमिति । मदुक्तमनादृत्य केवलमहङ्कारमवलम्ब्य युद्धं न करिष्यामीति यन्मन्यसे त्वमध्यवस्यसि एष तव व्यवसायो मिथ्यैवास्वतन्त्रत्वात्तव, तदेवाह प्रकृतिस्त्वां रजोगुणरूपेण परिणता सती नियोक्ष्यति युद्धे प्रवर्त्तयिष्यत्येव ॥ ५९ ॥

**स्वभावजेन कौन्तेय ! निबद्धः स्वेन कर्मणा ।**
**कर्तुं नेच्छसि यन्मोहात् करिष्यस्यवशोऽपि तत् ६०**

यस्माच्च स्वभावजेन शौर्यादिना कौन्तेय ! यथोक्तेन निबद्धो निश्चयेन बद्धः स्वेनात्मीयेन कर्मणा कर्त्तुं नेच्छसि यत् कर्म मोहादविवेकतः करिष्यस्यवशोऽपि परवश एव तत् कर्म यस्मात् ॥ ६० ॥

व्या॰ टी॰। यस्मादिति। स्वभावजेन कर्मणा निबद्धस्त्वमिति सम्बन्धः। इतोऽपि त्वया युद्धं कर्त्तव्यमेवेत्याह यस्मादिति ॥ ६० ॥

स्वा॰ टी॰। किञ्च स्वभावजेनेति। स्वभावः चात्त्रियत्वहेतुः पूर्वकर्मसंस्कारस्तस्माज्जातेन स्वीयेन कर्मणा शौर्य्यादिना पूर्वोक्तेन निबद्धो यन्त्रितस्त्वं मोहात् यत्कर्म युद्धलक्षणं कर्त्तुं नेच्छसि अवशः सन्तत् कर्म करिष्यस्येव ॥ ६० ॥

**ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन ! तिष्ठति।**
**भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥६१**

ईश्वरः ईशनशीलो नारायणः सर्वभूतानां सर्वप्राणिनां हृद्देशे हृदयदेशेऽर्जुन ! शुक्लान्तरात्मस्वभावो विशुद्धान्तःकरण इति अहश्च कृष्णमहरर्जुनञ्चेति दर्शनात् तिष्ठति स्थितिं लभते, स कथन्तिष्ठतीत्याह भ्रामयन् भ्रमणङ्कारयन् सर्वभूतानि यन्त्रारूढानीव यन्त्राण्यारूढान्यधिष्ठितानीवेति इवशब्दोऽत्र द्रष्टव्यो यथा दारुकृतपुरुषादीनि यन्त्रारूढानि मायया छद्मना भ्रामयन् तिष्ठतीति सम्बन्धः ॥६१॥

व्या॰ टी॰। अर्जुनशब्दस्योक्तार्थत्वे श्रुतिमुदाहरति अहश्चेति। अहश्च कृष्णमहरर्जुनञ्च विवर्त्तेते रजसी वेद्याभिः इत्यत्र किञ्चिदहश्छादत् कृष्णमच्छद्गलुषितमिव लक्ष्यते किञ्चित् पुनरहरर्जुनमति स्वच्छं शुद्धभावमुपलभ्यते एवमर्जुनशब्दस्य शुक्लशब्दपर्य्यायतया प्रयोगदर्शनादुक्तार्थत्वमुचितमित्यर्थः। यन्त्रारूढानीवेति कथमुच्यते तत्राह इवशब्द इति। तदेव प्रपञ्चयति यथेति। दारुमयानि यन्त्राणि यथा लौकिको मायावी मायया भ्रामयन्वर्त्तते तथेश्वरोऽपि सर्वाणि भूतानि भ्रामयन्नेव हृदये तिष्ठतीत्यर्थः ॥ ६१ ॥

स्वा॰ टी॰। तदेवं श्लोकद्वयेन सांख्यादिमतेन प्रकृतिपारतन्त्र्यं स्वभावपारतन्त्र्यं चोक्तं इदानीं स्वमतमाह ईश्वर इति द्वाभ्याम्।

सर्वभूतानां हृद्देशे ईश्वरोऽन्तर्यामी तिष्ठति, किं कुर्वन्, सर्वाणि भूतानि मायया निजशक्त्या भ्रामयंस्तत्तत्कर्मसु प्रवर्त्तयन् यथा दारुयन्त्रमारूढानि कृत्रिमाणि भूतानि सूत्रधारो लोके भ्रामयति तद्वदित्यर्थः, यद्वा, यन्त्राणि शरीराणि आरूढानि भूतानि देहाभिमानिनो जीवान् भ्रामयन्नित्यर्थः, तथा च श्वेताश्वतराणां मन्त्रः, एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा। कर्म्माध्यक्षः सर्वभूताधिवासः साक्षी चेताः केवलो निर्गुणश्चेति। अन्तर्य्यामिब्राह्मणञ्च, य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति यं आत्मा न वेद यस्यात्मा शरीरं एष ते अन्तर्य्याम्यमृत इत्यादि ॥ ६१ ॥

**तमेव शरणं गच्छ सर्वभावेन भारत!।**
**तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतं ६२**

तमेवेश्वरं शरणमाश्रयं संसारार्त्तिहरणार्थं गच्छ आश्रय सर्वभावेन सर्वात्मना हे भारत! ततस्तत्प्रसादादीश्वरानुग्रहात् परां प्रकृष्टां शान्तिं परामुपरतिं स्थानञ्च मम विष्णोः परमं पदमवाप्स्यसि शाश्वतं नित्यम् ॥ ६२ ॥

श्रा० टी०। ईश्वरः सर्वाणि भूतानि प्रेरयति चेत् प्राप्तं केवलस्यार्थस्यापि पुरुषकारस्यानर्थक्यमित्याशङ्क्याह तमेवेति। सर्वात्मना मनोवृत्त्या वाचा कर्मणा चेत्यर्थः, ईश्वरस्यानुग्रहात्तत्त्वज्ञानोत्पत्तिपर्य्यन्तादिति शेषः, सुक्तास्तिष्ठन्त्यस्मिन्निति स्थानम् ॥ ६२ ॥

स्वा० टी०। तमिति। यस्मादेवं सर्वे जीवाः परमेश्वरपरतन्त्रास्तस्मादहङ्कारं परित्यज्य सर्वभावेन सर्वात्मना तमीश्वरमेव शरणं गच्छ, ततश्च तस्यैव प्रसादात् परामुत्तमामुपशान्तिं स्थानञ्च पारमेश्वरं शाश्वतं नित्यं प्राप्स्यसि ॥ ६२ ॥

**इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया।**
**विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥ ६३ ॥**

इत्येतत्ते तुभ्यं ज्ञानमाख्यातं कथितं गुह्यात् गोप्यात् गुह्यतरं अतिशयेन गुह्यं रहस्यमित्यर्थः मया सर्वज्ञेनेश्वरेण विमृश्य विमर्शनमालोचनं कृत्वैतद्यथोक्तं शास्त्रमशेषेण समस्तं यथोक्तं चार्थजातं यथेच्छसि तथा कुरु ॥ ६३ ॥

आ० टी० । शास्त्रमुपसंहर्त्तुमिच्छन्नाह इतीति । ज्ञानं करणव्युत्पत्त्या गीताशास्त्रं, यथेच्छसि तथा कुरु, ज्ञानं कर्माण्युपदिष्टं तदनुतिष्ठेत्यर्थः ॥ ६३ ॥

स्वा० टी० । सर्वगीतार्थमुपसंहरन्नाह इतीति । इत्यनेन प्रकारेण ते तुभ्यं सर्वज्ञेन परमकारुणिकेन मया ज्ञानमाख्यातमुपदिष्टं, कथम्भूतं, गुह्यात् गोप्यात् रहस्यमन्त्रयोगादिज्ञानादपि गुह्यतरं एतन्मयोपदिष्टं गीताशास्त्रमशेषतो विमृश्य पर्यालोच्य पश्चाद्यथेच्छसि तथा कुरु, एतस्मिन् पर्यालोचिते सति तव मोहो निवर्त्तिष्यत इति भावः ॥ ६३ ॥

**सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।**
**इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ६४**

तथा भूयोऽपि मयोच्यमानं शृणु सर्वगुह्यतमं सर्वगुह्येभ्योऽत्यन्तगुह्यतमं रहस्यं उक्तमप्यसकृद्भूयः पुनः शृणु मे मम परमं प्रकृष्टं वचो वाक्यं न भयात् नाप्यर्थकारणाद्वा वक्ष्यामि तर्हि इष्टः प्रियोऽसि मे मम दृढमव्यभिचारेणेति कृत्वा ततस्तेन कारणेन वक्ष्यामि कथयिष्यामि ते तव हितं परं ज्ञानप्राप्तिसाधनम् ॥ ६४ ॥

आ० टी० । गीताशास्त्रस्य पौर्वापर्येण विमर्शनद्वारा तात्पर्यार्थं प्रतिपत्तुमसमर्थं मत्वाह भूयोऽपीति । किमर्थमिच्छन् पुनः पुनरभिद्रवीत्याशङ्क्याह न भयादिति ॥ ६४ ॥

स्वा० टी० । अतिगम्भीरं गीताशास्त्रमशेषतः पर्यालोचयितु-

भगवत्तः कृपया स्वयमेव तत्त्व सारं संक्षिप्य कथयति सर्वगुह्यतममिति त्रिभिः। सर्वेभ्योऽपि गुह्येभ्यो गुह्यतमं मे वचस्तव तत्त्रोक्तमपि भूयः पुनरपि वक्ष्यमाणं शृणु पुनः पुनः कथने हेतुमाह दृढमत्यन्तमिष्टः प्रियोऽसीति मत्वा तत एव हेतोस्ते हितं वक्ष्यामि, यद्वा, मम त्वमिष्टोऽसि मया वक्ष्यमाणं इदं सर्वप्रमाणोपेतमिति निश्चित्य ततस्ते वक्ष्यामीत्यर्थः, इदमतिरिति क्वचित् पाठः ॥ ६४ ॥

**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।**
**मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥६५**

तदेव सर्वहितानां हिततमभक्तिस्तदित्याह मन्मना भव मच्चित्तो भव। मद्भक्तो भव मद्भजनो भव मद्याजी मयि यजनशीलो भव मां नमस्कुरु नमस्कारं मयि ममैव कुरु तत्रैव वर्त्तमानो वासुदेवे एव सर्वसमर्पितसाध्यसाधनप्रयोजनो मामेवैष्यसि आगमिष्यसि सत्यन्ते तव प्रतिजाने, तथा प्रतिज्ञां करोम्येतास्मिन्वस्तुनीत्यर्थो यतः प्रियोऽसि मे एवं भगवतः सत्यप्रतिज्ञत्वं बुद्ध्वा भगवद्भक्तेरवश्यम्भाविमोचकत्वमवधार्य भगवच्छरणैकपरायणो भवेदिति वाक्यार्थः ॥ ६५ ॥

आ० टी०। हितमिति साधारणनिर्देशे कथं परमित्यादिविशेषणमित्याशङ्क्याह तद्धीति। तदेव प्रश्नद्वारा विवृणोति किं तदित्यादिना। उत्तरार्द्धं व्याचष्टे तत्रेति। एवमनया रीत्या वर्त्तमानस्त्वं मय्येव वासुदेवे भगवति अर्पितसर्वभावो मामेवागमिष्यसीति सम्बन्धः। सत्यप्रतिज्ञाकरणे हेतुमाह यत इति। इदानीं वाक्यार्थं श्रेयोऽर्थिनां प्रवृत्त्युपयोगित्वेन संगृह्णाति एवमिति ॥ ६५ ॥

स्वा० टी०। तदेवाह मन्मना इति। मन्मना मच्चित्तो भव मद्भक्तो मद्भजनशीलो भव मद्याजी मद्यजनशीलो भव मामेव नमस्कुरु

एवं वर्त्तमानस्त्वं मत्प्रसादलब्धज्ञानेन मामेवैष्यसि प्राप्स्यसि अत्र च संशयं माकार्षीः त्वं हि मे प्रियोऽसि अतः सत्यं यथा भवत्येवं तुभ्यमहं प्रतिजाने प्रतिज्ञां करोमि ॥ ६५ ॥

**सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।**
**अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ६६ ॥**

कर्मयोगनिष्ठायाः परमरहस्यमीश्वरशरणतामुपसंहृत्याथेदानीं कर्मयोगत्यागनिष्ठाफलं सम्यग्दर्शनं सर्ववेदान्तविहितं वक्तव्यमित्याह सर्वधर्मान् सर्वे च ते धर्माश्च सर्वधर्माः तान् धर्मशब्देनात्राधर्मोऽपि गृह्यते नैष्कर्म्यस्य विवक्षितत्वात् नाविरतो दुश्चरितादित्युच्यत इति त्यज धर्ममधर्मञ्चेत्यादिश्रुतिस्मृतिभ्यः सर्वधर्मान् परित्यज्य सन्न्यस्य सर्वकर्माणीत्येतन्मामेकं स्वात्मानं सर्वभूतस्थमीश्वरं अच्युतं गुरुं जन्ममरणादिवर्जितमहमेवेत्येवमेकं शरणं व्रज न मत्तोऽन्यदस्तीत्यवधारयेत्यर्थः अहं तु त्वामेवं निश्चितबुद्धिं सर्वपापेभ्यः सर्वधर्माधर्मबन्धनरूपेभ्यो मोक्षयिष्यामि स्वात्मभावप्रकाशीकरणेन उक्तञ्च नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता इत्यतो मा शुचः शोकं मा कार्षीरित्यर्थः ॥ ६६ ॥

व्या० टी० । उक्तमनुद्यानन्तरश्लोकतात्पर्यमाह कर्मयोगेति । धर्मविशेषणादधर्मानुज्ञां वारयति धर्मेति । ज्ञाननिष्ठेन मुमुक्षुणा धर्माधर्मयोस्त्याज्यत्वे श्रुतिस्मृती उदाहरति नाविरत इति । मामेकमित्यादेस्तात्पर्यमाह न मत्तोऽन्यदिति । अर्जुनस्य क्षत्रियत्वादुक्तसन्न्यासद्वारा ज्ञाननिष्ठायां मुख्यानधिकारेऽपि तं पुरस्कृत्याधिकारिभ्यस्तोपदिदिक्षुत्वादविरोधमभिप्रेत्याह अहं त्विति । उक्तेऽर्थे

दासमिक्षं वाक्यमङ्कुरयति उक्तस्येति ईश्वरस्य त्वदीयबन्धननिरसनद्वारा तत्पालयितृत्व च ते शोकावकाशोऽस्तीत्याह अत इति ॥ ६६ ॥

स्वा० टी० । ततोऽपि गुह्यतममाह सर्वेति । मद्भक्त्यैव सर्वं भविष्यतीति दृढविश्वासेन विधिकैङ्कर्यं त्यक्त्वा मदेकशरणो भव एवं वर्त्तमानः कर्मत्यागनिमित्तं पापं स्यादिति मा शुचः शोकं माकार्षीः यतस्त्वां सर्वपापेभ्योऽहं मोक्षयिष्यामि ॥ ६६ ॥

**इदन्ते नातपस्काय नाभक्ताय कदाचन ।**
**न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥ ६७ ॥**

अस्मिन् हि गीताशास्त्रे परं निःश्रेयससाधनं निश्चितं किं ज्ञानं किं कर्म वा आहोस्विदुभयमिति कुतः सन्देहः यत् ज्ञात्वामृतमश्नुते ततो मान्तत्त्वतो ज्ञात्वा विशते तदनन्तरमित्यादीनि वाक्यानि केवलात् ज्ञानात् निःश्रेयसप्राप्तिं दर्शयन्ति कर्मण्येवाधिकारस्ते कुरु कर्मैवेत्येवमादीनि कर्मणां अवश्यकर्त्तव्यतां दर्शयन्ति एवं ज्ञानकर्मणोः कर्त्तव्यतोपदेशात् समुच्चितयोरपि निःश्रेयसहेतुत्वं स्यादिति भवेत संशयः किं पुनरत्र मीमांसाफलं नन्वेतदेव एषामन्यतमस्य परमनिःश्रेयससाधनत्वावधारणं, अतो विस्तीर्णतरं मीमांस्यमेतत् आत्मज्ञानस्य तु केवलस्य निःश्रेयसहेतुत्वं भेदप्रत्ययनिवर्त्तकत्वेन कैवल्यफलावसानत्वात् क्रियाकारकफलभेदबुद्धिरविद्ययात्मनि नित्यप्रवृत्ता, मम कर्माहं कर्त्ताऽमुष्मै फलायेदं कर्म करिष्यामीतीयमविद्या अनादिकालप्रवृत्ता, अस्या अविद्याया निवर्त्तकमयमहमस्मि केवलोऽकर्त्ताक्रियोऽफलो न मत्तोऽन्योऽस्ति कश्चि-

दित्येवं रूपमात्मविषयं ज्ञानमुत्पद्यमानं कर्मप्रवृत्तिहेतुभूताया भेदबुद्धेर्निवर्त्तकत्वात् तुशब्दः पक्षद्वयव्यावृत्त्यर्थः न केवलेभ्यः कर्मभ्यः न च ज्ञानकर्मभ्यां समुच्चिताभ्यां निःश्रेयसप्राप्तिरिति पक्षद्वयं निवर्त्तयति अकार्य्यत्वाच्च निःश्रेयसस्य कर्मसाधनत्वानुपपत्तिः न हि नित्यं वस्तु कर्मणा ज्ञानेन वा क्रियते, केवलज्ञानमपि अनर्थकं तर्हि न अविद्यानिवर्त्तकत्वे सति दृष्टकैवल्यफलावसानत्वादविद्यातमोनिवर्त्तकस्य ज्ञानस्य दृष्टं कैवल्यफलावसानत्वं रज्ज्वादि-

व्या० टी० । पूर्वापरालोचनातो गीताशास्त्रं व्याख्यायोपसंहृत्य तत्तात्पर्यार्थं निर्द्धारितमपि विचारद्वारा निर्द्धारयितुं विचारमवतारयति अस्मिन्निति । किंशब्दार्थमेव त्रेधा विभजते ज्ञानमिति । निमित्ताभाव संशयस्याभावत्वाच्च निरस्यतामिति मत्वा पृच्छति कुत इति । तत्तदर्था-वद्योतकानेकवाक्यदर्शनं तन्निमित्तमित्याह यत् ज्ञात्वेति । कर्मणामव-श्यकर्त्तव्यत्वोपलम्भात्तेभ्योऽपि निःश्रेयसप्राप्तिर्भातीत्याह कर्मण्येवेति । तथापि समुच्चयप्रापकं नास्तीत्याशङ्क्याह एवमिति । सत्यां सामग्र्यां कार्य्यमवश्यम्भावीत्युपसंहरति इति भवेदिति । सन्दिग्धं सफलञ्च विचार्य्यमिति स्थिते सति फलं सन्दिग्धमपि न विचार्य्यमिति बुद्ध्या पृच्छति किं पुनरिति । प्रत्येकं ज्ञानकर्मणोः समुच्चितयोर्वा मुक्तिं प्रति परमसाधनत्वावधारणमेव विचारफलमिति परिहरति नन्विति । सन्देहप्रयोजनयोर्विचारप्रयोजकयोर्भावात् विचारद्वारा परममुक्तिसाधनं निर्द्धारणीयमिति निगमयति अत इति । एवं विचारमवतार्य्य सिद्धान्तं संगृह्णाति आत्मेति । संग्रहवाक्यं विवृण्वन् आदावात्मज्ञानापोह्यामविद्यां दर्शयति क्रियेति । आश्रयोक्त्या तदनादित्वमाह आत्मनीति । तामेवविद्यामनाद्यविद्योत्थामनर्थात्मिकां प्रपञ्चयति ममेति । अनाद्यविद्याकार्य्यत्वात् प्रवाहरूपेणानादित्वमस्या विवक्षित्वा विशिनष्टि

विषये सर्पाद्यज्ञानतमसो निवर्त्तकप्रदीपप्रकाशफलवत् विनिवृत्तसर्पादिविकल्परज्जुकैवल्यावसानं हि प्रकाशफलं ज्ञानं तथा दृष्टार्थायाश्च छिदिक्रियामन्थनादीनां व्यापृतकर्त्रादिकारकाणां द्वैधीभावाग्निदर्शनादिफलादन्यफले कर्मान्तरे वा व्यापारानुपपत्तिर्यथा तथा ज्ञाननिष्ठा क्रियायां सुदृष्टार्थायां व्यापृतस्य ज्ञात्रादिकारकस्यात्मकैवल्यफलादन्यफले कर्मान्तरे वा प्रवृत्तिरनुपपन्नेति न ज्ञाननिष्ठा कर्मसहितोपपद्यते ज्ञाननिष्ठा भुजिक्रियाग्निहो-

---

थनादीति। तत्र कारणाविद्यानिवर्त्तकत्वमात्मज्ञानस्योपन्यस्यति अस्येति। ननु नेदमुत्पन्नं ज्ञानं निवर्त्तयत्यविरोधेनोत्पन्नत्वात् चानुत्पन्नमलब्धात्मकस्यार्थक्रियाकारित्वाभावात्तत्राह उत्पद्यमानमिति। कथं तस्य कारणाविद्यानिवर्त्तकत्वमित्याशङ्क्य कार्य्याविद्यानिवर्त्तकत्वदृष्टेरित्याह कर्मेति। आत्मज्ञानस्येत्यादिसंग्रहवाक्ये तुशब्दयोग्यविशेषाभावादानर्थक्यमाशङ्क्याह तुशब्द इति। पक्षद्वयव्यावर्त्तकत्वमेवास्य स्फुटयति नेत्यादिना। इतश्च कर्मासाध्यता मुक्तेरित्याह अकार्य्यत्वाच्चेति। एष नित्यो महिमेति श्रुतेः नित्यत्वेन मोक्षस्याकार्य्यत्वात् न तत्र हेत्वपेक्षेत्युपपादयति न हीति। ज्ञानेनापि मोक्षो न क्रियते चेत्तर्हि केवलमपि ज्ञानं मुक्तावनुपयुक्तमिति कुतस्तस्य तत्र हेतुत्वधीरित्याशङ्कते केवलेति। ज्ञानानर्थक्यं दूषयति नेति। तदेव प्रपञ्चयति अविद्येति। यदुक्तमविद्यानिवर्त्तकज्ञानस्य कैवल्यफलावसायित्वं दृष्टमिति तत्र दृष्टान्तमाह रज्ज्वादीति। उक्ते विषये तमोनिवर्त्तकप्रकाशस्य कस्मिन् फले पर्य्यवसानं तत्राह विच्छिन्नेति। प्रदीपप्रकाशस्य सर्पभ्रमनिवृत्तिद्वारा रज्जुमात्रे पर्य्यवसानवदात्मज्ञानस्यापि तदविद्यानिवृत्त्यात्मकैवल्यावसानमिति दार्ष्टान्तिकमाह तथेति। ज्ञात्रादीनां ज्ञाननिष्ठाहेतूनां कर्मान्तरे प्रवृत्तिसम्भवात् कर्मसहितैव सा कैवल्यावसायिनीति चेत्तत्राह दृष्टा-

आदिक्रियावत् स्यादिति चेत् न कैवल्यफले ज्ञाने क्रियाफलार्थित्वानुपपत्तेः कैवल्यफले हि ज्ञाने प्राप्ते सर्वतःसंप्लुतोदके फले कूपतडागादिक्रियाफलार्थित्वाभाववत् फलान्तरे तत्साधनभूतायां वा क्रियायामर्थित्वानुपपत्तेः नहि राज्यप्राप्तिफले कर्मणि व्यापृतस्य क्षेत्रमात्रप्राप्तिफले व्यापारोपपत्तिस्तद्विषयमर्थित्वं तस्मान्न कर्मणोऽस्ति निःश्रेयससाधनत्वं न च ज्ञानकर्मणोः समुच्चितयोर्नापि ज्ञानस्य कैवल्यफलस्य कर्मसाहाय्यापेक्षा अविद्यानिवर्तक

---

र्थायामिति। कर्मसाहित्यं ज्ञाननिष्ठाया दृष्टान्तेन साधयन्नाशङ्कते भुजीति। भुजिक्रियाया लौकिक्या वैदिक्याश्चाग्निहोत्रादिक्रियायाः सहानुष्ठानवदग्निहोत्रादिक्रियाया ज्ञाननिष्ठायाश्च साहित्यमित्यर्थः। भुजिफले तृप्त्याख्ये प्राप्तेऽपि स्वर्गादौ तद्धेतौ चाग्निहोत्रादावर्थित्व-दृष्टेर्युक्तं तत्र साहित्यं न तथा मुक्तिफलज्ञाननिष्ठालाभे स्वर्गादौ तद्धेतौ वा कर्मण्यर्थित्वेन ज्ञाननिष्ठाकर्मणोर्न साहित्यमिति परिहरति नेत्यादिना। संग्रहवाक्यं विवृणोति कैवल्येति। ज्ञाने फलवति लब्धे फलान्तरे तद्धेतौ च नार्थितेत्यत्र दृष्टान्तमाह सर्वत इति। सर्वत्र संप्लुतं व्याप्तमुदकमिति यस्मिंस्तत्फलं स्नानादि तस्मिन् प्राप्ते तडागादिनिर्माणक्रियायां तदधीने च स्नानादौ कस्यचिदर्थित्वं तथा प्रकृतेऽपीत्यर्थः। निरतिशयफले ज्ञाने लब्धे सातिशयफले कर्मणि नार्थित्वमित्येतद्दृष्टान्तेन स्फुटयति न हीति। कर्मणः सातिशयफलत्व-मुक्तमुपजीव्य फलितमाह तस्मादिति। ज्ञानकर्मणोः साहित्यासम्भव-मपि पूर्वोक्तं निगमयति न चेति। न हि प्रकाशतमसोरिव मिथो विरुद्धयोस्तयोः साक्षादेकस्मिन् फले साहित्यमित्यर्थः। ननु ज्ञानमेव मोक्षं साधयदात्मसहायत्वेन कर्मापेक्षते कारणस्योपकरणापेक्षत्वात्तत्राह नापीति। ज्ञानस्योत्पत्तौ यज्ञाद्यपेक्षत्वमपि नोत्पन्नं फले तदपेक्षं मोक्ष

त्वेन च विरोधात्, नहि तमस्तमसो निवर्त्तकमतः केवल-मेव ज्ञानं निःश्रेयससाधनमिति न नित्याकरणे प्रत्यवाया-प्राप्तेः कैवल्यस्य च नित्यत्वात् यत्तावत् केवलज्ञानात् कैवल्यप्राप्तिरित्येतत्तदसत् यतो नित्यानां कर्मणां श्रुत्यु-क्तानामकरणे प्रत्यवायो नरकादिप्राप्तिलक्षणः स्यात, नन्वेवं तर्हि कर्मभ्यो मोक्षो नास्ति इत्यनिर्मोक्षप्रसङ्ग एव नैष दोषो नित्यत्वान्मोक्षस्य नित्यानां कर्मणामनुष्ठानात् प्रत्य-वायस्याप्राप्तिः प्रतिषिद्धस्य चाकरणादनिष्टशरीरानुपपत्तिः काम्यानाञ्च प्रवर्जनादिष्टशरीरानुपपत्तिः वर्त्तमानशरी-

---

पत्तिनान्तरीयकत्वेन मुक्तेस्तन्मात्रायत्तत्वादित्यर्थः। यदुक्तमिति कर्त्तव्य-त्वेन ज्ञानं कर्म्मापेक्षमिति तत्राह अविद्येति। ज्ञानस्याज्ञाननिवर्त्तक-त्वात्तत्र कर्मणो विरुद्धतया सहकारित्वायोगान्न फले तदपेक्षेत्यर्थः। कर्मणोऽपि ज्ञानवदज्ञाननिवर्त्तकत्वे कथं विरुद्धतेत्याशङ्क्याह न हीति। केवलस्य समुच्चितस्य वा कर्मणो मोक्षे साक्षादनन्वये फलितमाह अत इति। केवलज्ञानं मुक्तिसाधनमित्युक्तं तन्निषेधयन्नाशङ्कते नेत्या-दिना। निषेध्यमनूद्य नञर्थमाह यत्तावदिति। नित्याकरणे प्रत्यवाय-प्राप्तेरिति हेतुं प्रपञ्चयति यत इति। ज्ञानवतोऽपि नित्यानुष्ठान-स्यावश्यकत्वाच्च केवलज्ञानस्य कैवल्यहेतुतेत्यर्थः। कैवल्यस्य च नित्यत्वा-दित्यस्य व्यावर्त्तं दर्शयति नन्विति। यदि नित्यनैमित्तिककर्म्माणि श्रौता न्यकरणे प्रत्यवायकारीण्यवश्यानुष्ठेयान्येवं तर्हि तेभ्यः समुच्चितेभ्योऽस-मुच्चितेभ्यश्च मोक्षो नेत्युक्तत्वात् केवलज्ञानस्य वा तद्धेतुत्वादनिबन्धना-मुक्तिर्न सिध्येदित्यर्थः। कैवल्यस्य चेत्यादि व्याकुर्वन्न निर्मोक्षप्रसङ्गं प्रत्यादिशति नैष दोष इति। मुक्तेर्नित्यत्वेनायत्नसिद्धेर्न तदभावशङ्के-त्युक्तं प्रपञ्चयति नित्यानामिति। काम्यकर्मवशादिष्टशरीरापत्तिं शङ्कित्वोक्तं काम्यानाञ्चेति। आरब्धकर्मवशात्तर्हि देहान्तरं नेत्याह

पत्तिः ये त्वाहुर्नित्यानि कर्माणि दुःखरूपत्वात् पूर्वकृतदुरितकर्मणां फलमेव न तु तेषां स्वरूपव्यतिरेकेणान्यत् फलमस्त्यश्रुतत्वात् जीवनादिनिमित्ते च विधानादिति नाप्रवृत्तानाञ्च फलदानासम्भवात् दुःखफलविशेषानुपपत्तिः कर्मणां स्यात् यदुक्तं पूर्वजन्मकृतदुरितानां कर्मणां फलं नित्यकर्मानुष्ठानायासदुःखं भुज्यत इति तदसन्न हि मरणकाले फलदानायानङ्कुरीभूतस्य कर्मणः फलमन्यमारब्धे जन्मन्युपभुज्यत इत्युपपत्तिः अन्यथा स्वर्गफलोपभोगायाग्निहोत्रादिकर्मारब्धे जन्मनि नरकफलोपभोगानुपपत्तिर्न स्यात्तस्य दुरितदुःखविशेषफलत्वानुपपत्तेश्च अनेकेषु हि दुरितेषु सम्भवत्स्वभिन्नदुःखसाधनफलेषु नित्यकर्मानुष्ठानाया-

जात्यादिभाजो जन्म प्रतिपद्यत इत्येतदादिपदार्थः । यत्तु नित्यानुष्ठानायासदुःखभोगस्य तत्फलभोगत्वमिति तदिदानीमनुवदति ये त्विति । नित्यान्यनुष्ठीयमानान्यायासपर्यन्तानीति शेषः । तथापि नित्यानां काम्यानामिव स्वरूपातिरिक्तं फलमाशङ्क्य विध्युद्देशे तदश्रवणान्मैवमित्याह न त्विति । विध्युद्देशे फलाश्रुतौ तत्कामनाया निमित्तस्याभावाच्च नित्यानि विधीयेरन्नित्याशङ्क्याह जीवनेति । न नित्यानां विध्यसिद्धिरिति शेषः । अनुभाषितं दूषयति नेत्यादिना । तदेव विवृण्वन्विपक्ष्यमनूद्य नञर्थमाह यदुक्तमिति । अप्रवृत्तानामित्यादिहेतुं प्रपञ्चयति न हीति । कर्मान्तरारब्धेऽपि देहे दुरितफलं नित्यानुष्ठानायासदुःखं भुज्यतामित्यनुपपत्तिरित्याशङ्क्याह अन्यथेति । यदुक्तं दुःखफलविशेषानुपपत्तिश्च स्यादिति तदुपपादयति तस्येति । सम्भावितानि तावदनन्तानि सञ्चितानि दुरितानि च नानादुःखफलानि यदि तानि नित्यानुष्ठानायासरूपं दुःखं तन्मात्रफलानि कल्प्येरन् तदा तेष्वेवं कल्प्यमानेषु सत्सु नित्यस्यानुष्ठितस्यायासमासादयतो यो दुरितकृतो दुःखविशेषो न तत्फलं

सदुःखमात्रफलेषु कल्प्यमानेषु हस्तरोगादिबाधानिमित्तं दुःखं न हि शक्यते कल्पयितुं नित्यकर्मानुष्ठानायासदुःखमेव पूर्वोपात्तदुरितफलं न शिरसा पाषाणवहनादिदुःखमिति अप्रकृतञ्चेदमुच्यते नित्यकर्मानुष्ठानायासदुःखं पूर्वकृतदुरितकर्मफलमिति कथमप्रसूतफलस्य पूर्वकृतदुरितस्य क्षयो नोपपद्यत इति प्रकृतं त्वया प्रसूतफलस्य कर्मणः फलं नित्यकर्मानुष्ठानायासदुःखमाह भवान् न प्रसूतफलस्येत्यर्थः सर्वमेव पूर्वकृतं दुरितं तत्प्रसूतफलमेवेति मन्यते भवांस्ततो नित्यकर्मानुष्ठानायासदुःखमेव फलमिति विशेषणमयुक्तं नित्यकर्मविध्यानर्थक्यप्रसङ्गश्च उपभोगेनैव प्रसूतफलस्य

---

दुरितफलानां दुःखानां बहुत्वात्ततो नित्यं कर्म यथा विशेषं तं दुरितकृतदुःखविशेषफलकमित्ययुक्तमित्यर्थः। किञ्च नित्यानुष्ठानायासदुःखमात्रफलानि चेद्दुरितानि कल्प्यन्ते तदा हस्तशल्यदारणादिबाधस्य रोगादिबाधायाश्च दुरितनिमित्तत्वानुपपत्तेः कृतनाशस्य चाकस्मिकत्वादनुपपत्तिरेवोदीरितबाधायाः स्यादित्याह हस्तेति। इतश्च नित्यानुष्ठानायासदुःखमेव दुरितफलमित्ययुक्तमित्याह नित्येति। दुःखमिति न शक्यते कल्पयितुमिति पूर्वेण सम्बन्धः। यदि तदेव तत्फलं न तर्हि शिरसा पाषाणवहनादिदुःखं दुरितकृतं न च तत्कारणं दृष्टं दुःखस्याकार्यत्वादतस्तदाकस्मिकं स्यादित्यर्थः। नित्यानुष्ठानायासदुःखरूपात्तदुरितफलमित्येतदप्रकृतत्वाच्चायुक्तं चेत्याह अप्रकृतश्चेति। तदेव प्रपञ्चयितुं पृच्छति कथमिति। तत्रादौ प्रकृतमाह अप्रसूतेति। तथापि कथमस्याकस्मप्रकृततयादित्वं तत्राह तत्रेति। प्रसूतफलत्वमप्रसूतफलत्वमिति प्राचीनदुरितगतविशेषानुपगमादविशेषेण सर्वस्यैव तस्य प्रसूतफलत्वान्नित्यानुष्ठानायासदुःखफलत्वसम्भावनाप्रकृततयादितेति शङ्कते सर्वेति। पूर्वोपात्तदुरितस्यापि शेषेणारब्धफलत्वे विशेषणानर्थक्यमिति

दुरितकर्मणः क्षयोपपत्तेः। किञ्च श्रुतस्य नित्यस्य दुःखञ्चेत् फलं नित्यकर्मानुष्ठानायासादेव तत् दृश्यते व्यायामादिवत्तदन्यस्येति कल्पनानुपपत्तिः जीवनादिनिमित्ते च विधानान्नित्यानां कर्मणां प्रायश्चित्तवत् पूर्वकृतदुरितफलत्वानुपपत्तिः यस्मिन् पापकर्मनिमित्ते यद्विहितं प्रायश्चित्तं न तु तस्य पापस्य तत्फलमथ तस्यैव पापस्य निमित्तस्य प्रायश्चित्तदुःखं फलं जीवनादिनिमित्तमपि नित्यकर्मानुष्ठानायासदुःखं जीवनादिनिमित्तस्यैव तत्फलं प्रसज्येत नित्यप्रायश्चित्तयोर्नैमित्तिकत्वाविशेषात् किञ्चान्यन्नित्यस्य

---

परिहरति तत इति। दुरितमात्रस्यारब्धफलत्वेनानारब्धफलस्य तस्योक्तफलविशेषवत्त्वानुपपत्तेरित्यर्थः। पूर्वोपात्तदुरितमारब्धफलञ्चेद्भोगेनैव तत्क्षयसम्भवात्तच्छित्त्यर्थं नित्यं कर्म न विधातव्यमिति दोषान्तरमाह नित्येति। इतश्च नित्यानुष्ठानायासदुःखं नोपात्तदुरितफलमित्याह किञ्चेति। तदेव स्फोरयति श्रुतस्येति। यथा व्यायामगमनादिकृतं दुःखं नान्यस्य दुरितस्येष्यते तत्फलत्वसम्भवात्तथा नित्यस्यापि श्रुत्युक्तस्यानुष्ठितस्यायासपर्यन्तस्य फलान्तरानुपगमादनुष्ठानायासदुःखमेव चेत् फलं तर्हि तस्मादेव तद्दर्शनात्तस्य न दुरितफलत्वं कल्प्यं नित्यफलत्वसम्भवादित्यर्थः। दुःखफलत्वे नित्यानामननुष्ठानमेव श्रेयः स्यादित्याशङ्क्याह जीवनादिति। नित्यानां दुरितफलत्वानुपपत्तौ हेत्वन्तरमाह प्रायश्चित्तवदिति। दृष्टान्तं प्रपञ्चयति यस्मिन्निति। तथा जीवनादिनिमित्ते विहितानां नित्यानां दुरितफलत्वासिद्धिरिति शेषः। सत्यं प्रायश्चित्तं न निमित्तस्य पापस्य फलं किन्तु तदनुष्ठानायासदुःखं तस्य पापस्य फलमिति शङ्कते अथेति। प्रायश्चित्तानुष्ठानायासदुःखस्य निमित्तभूतपापफलत्वे जीवनादिनिमित्तनित्याद्यनुष्ठानायासदुःखमपि जीवनादेरेव फलं स्यान्नोपात्तदुरितस्येति परिहरति जीवनादीति। प्रायश्चित्त-

काम्यस्य चाग्निहोत्रादेरनुष्ठानायासदुःखस्य तुल्यत्वान्नित्यानुष्ठानायासदुःखमेव पूर्वकृतदुरितस्य फलं न तु काम्यानुष्ठानायासदुःखमिति विशेषो नास्तीति तदपि पूर्वकृतदुरितफलं प्रसज्येत तथा च सति नित्यानां फलाश्रवणात्तद्विधानान्यथानुपपत्तेश्च नित्यानुष्ठानायासदुःखं पूर्वकृतदुरितफलमित्यर्थापत्तिकल्पना चानुपपन्ना एवंविधानान्यथानुपपत्तेरनुष्ठानायासदुःखव्यतिरिक्तफलत्वानुमानाच्च नित्यानां विरोधाच्च निरुद्धश्चेदमुच्यते नित्यकर्मणानुष्ठीयमानेऽन्यस्य कर्मणः फलं भुज्यत इत्यभ्युपगम्यमाने स एवोपभोगो नित्यस्य कर्मणः फलमिति नित्यस्य कर्मणः फलाभाव इति विरुद्धमुच्यते किञ्च काम्याग्निहोत्रादावनुष्ठीय-

---

दुःखस्य तन्निमित्तपापफलत्ववज्जीवनादिनिमित्तमित्यादि कर्म कृतमपि दुःखं जीवनादिफलमित्यत्र हेतुमाह नित्येति । इतश्च नित्यानुष्ठानायासदुःखमेवोपात्तदुरितफलमित्ययुक्तमित्याह किञ्चेति । काम्यानुष्ठानायासदुःखमपि दुरितफलमित्युपगमात् प्रसङ्गस्येष्टत्वमाशङ्क्याह तथा चेति । विहितानि तावन्नित्यानि न च तेषु फलं श्रुतं न च विना फलं विधिः तेन दुरितनिबर्हणार्थानि नित्यानीत्यर्थापत्त्या तेषु च सा युक्ता काम्यानुष्ठानादपि दुरितनिवृत्तिसम्भवादित्यर्थः । किञ्च नित्यान्यनुष्ठानायासदुःखातिरिक्तफलानि विहितत्वात् काम्यवदित्यनुमानात्तेषां दुरितनिवृत्त्यर्थतेत्याह एवमिति । काम्यादिकर्म दृष्टान्तयितुमेवमित्युक्तम् । स्वोक्तिव्याघाताच्च नित्यानुष्ठानात् दुरितफलभोगोक्तिरयुक्तेत्याह विरोधाच्चेति । तदेव प्रपञ्चयति विरुद्धश्चेति । इदंशब्दार्थमेव विशदयति नित्येति । अन्यस्य कर्मणो दुरितस्येति यावत् । स एवेति । यदनन्तरं यद्भवति तत्तस्य कार्यमिति नियमादित्यर्थः । इतश्च नित्यानुष्ठाने दुरितफलभोगो न सिध्यतीत्याह किञ्चेति । काम्यानुष्ठानस्य नित्यानु-

माने नित्यमप्यग्निहोत्रादि तन्त्रेणैवानुष्ठितम्भवतीति तदा-यासदुःखेनैव काम्याग्निहोत्रादिफलमुपक्षीणं स्यात्तन्त्रत्वा-दथ काम्याग्निहोत्रादिफलमन्यदेव स्वर्गादि तदनुष्ठानाया-सदुःखमपि भिन्नं प्रसज्येत न च तदस्ति दृष्टविरोधात् न हि काम्यानुष्ठानायासदुःखात् केवलनित्यानुष्ठानायासदुःखं भिद्यते किञ्चान्यदविहितमप्रतिषिद्धञ्च कर्म्म तत्कालफलं न तु शास्त्रचोदितं प्रतिषिद्धं वा तत्कालफलं भवेद्यदि भवेत् तदा स्वर्गादिष्वप्यदृष्टफलशास्त्रमने चोद्यमो न स्यात् अग्निहोत्रादीनामेव कर्म्मस्वरूपाविशेषेऽनुष्ठानायासदुःख-

---

ष्ठानस्य च यौगपद्यान्नित्यानुष्ठानायासदुःखेन दुरितफलभोगवत् काम्य-फलस्यापि भुक्तत्वसम्भवादिति हेतुमाह तन्त्रत्वादिति। नित्यकाम्यानु-ष्ठानयोर्यौगपद्येऽपि नित्यानुष्ठानायासदुःखादन्यदेव काम्यानुष्ठानफलं स्तुतत्वादिति शङ्कते अथेति। काम्यानुष्ठानफलं नित्यानुष्ठानायास-दुःखाद्भिन्नञ्चेत्तर्हि काम्यानुष्ठानायासदुःखं नित्यानुष्ठानायासदुःखञ्च मिथो भिन्नं स्यादित्याह तदनुष्ठानेति। प्रसङ्गस्येष्टत्वमाशङ्क्य निराचष्टे न चेति। दृष्टविरोधमेव स्फुटयति न हीति। आत्मज्ञानवदग्निहो-त्रादीनां मोक्षसाधनत्वे नेयत्कान्यदपि कारणमस्तीत्याह किञ्चान्य-दिति। तदेव कारणं विवृणोति अविहितमिति। यत्कर्म्म मर्दनभोज-नादि तस्य शास्त्रे विहितं निषिद्धं वा तदनन्तरफलं तथानुभवादित्यर्थः। शास्त्रीयं कर्म्म तु नानन्तरफलमानन्त्यश्रुतेश्चोदितत्वादतो मोक्षे दृष्टफले-नादृष्टफलकर्म्मसहकारि भवति, नापि स्वयमेव दृष्टफले मोक्षे कर्म्मप्रवृत्तिः स्यादिति विवक्षित्वाह नत्विति। शास्त्रीयस्याग्निहोत्रादेरपि फलानन्तर्य्यं स्वर्गादीनामनन्तरमनुपलब्धिविरुद्धेन ततश्चेदपि तथाविधफलाभिप्रेप्सया प्रवृत्तिरग्निहोत्रादिषु न स्यादित्याह तदेति। किञ्च नित्यानामग्निहो-त्रादीनां नादृष्टफलं तेषामेव काम्यानां तादृक्फलं न च हेतुं विना यत्

मात्रेणोपचयः काम्यानाञ्च स्वर्गादिमहाफलत्वमङ्गेतिकर्त्तव्यताद्याधिक्ये त्वसति तत्फलकामित्वमात्रेणेति न शक्यं कल्पयितुं तस्मान्न नित्यानां कर्मणामदृष्टफलाभावः कदाचिदप्युपपद्यते।

अतश्चाविद्यापूर्वकस्य कर्मणोविद्यैव शुभस्याशुभस्य वा क्षयकारणं अशेषतो न नित्यकर्मानुष्ठानमविद्याकामवीजं हि सर्वमेव कर्म तथाचोपपादितं अविद्वद्विषया सर्वकर्मसन्न्यासपूर्विका ज्ञाननिष्ठा उभौ तौ न विजानीतो वेदाविनाशिनं नित्यं ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनामज्ञानां

विभागो भागीत्याह अग्निहोत्रादीनामिति। फलकामित्वमात्रेणेति न स्यादिति पूर्वेण सम्बन्धः। यानि नित्यान्यग्निहोत्रादीनि यानि च काम्यानि तेषामुभयेषामेव कर्मस्वरूपविशेषाभावेऽपि नित्यानां तेषां अनुष्ठानायासदुःखमात्रेण क्षयो न फलान्तरमस्ति तेषामेव काम्यानामङ्गाद्याधिक्याभावेऽपि फलकामित्वमधिकारिण्यस्तीत्येतावन्मात्रेण स्वर्गादिमहाफलत्वमित्ययं विभागो न प्रमाणवानित्यर्थः। उक्तविभागायोगे फलितमाह तस्मान्नेति।

काम्यवन्नित्यानामपि पितृलोकाद्यदृष्टफलवत्त्वे दुरितनिवृत्त्यर्थत्वायोगादर्थेनात्मविद्यैवाभ्युपगन्तव्येत्याह अतश्चेति। शुभाशुभात्मकं कर्म सर्वमविद्यापूर्वकञ्चेद्भवेत्तर्हि तस्य क्षयकारणं विद्येत्युपपद्यते न तत् सर्वं कर्माविद्यापूर्वकमिति सिद्धमित्याशङ्क्याह अविद्येति। तत्र हिशब्दद्योतितां युक्तिं दर्शयति तथेति। इतश्चाविद्वद्विषयं कर्मेत्याह अविद्वदिति। अधिकारिभेदेन निष्ठाद्वयमित्यत्र वाक्योपक्रममनुकूलयता आत्मनि कर्तृत्वं कर्मत्वं वारोपयन् न जानात्यात्मानमिति वदता कर्मज्ञानमूलमिति दर्शितमित्याह उभाविति। आत्मानं याथातथ्येन जानन् कर्तृत्वादिरहितो भवतीति ब्रुवता कर्मसन्न्यासे ज्ञानवतोऽधिकारित्वं सूचितमि-

कर्मसङ्गिनां तत्त्ववित्तु गुणा गुणेषु वर्त्तन्त इति मत्वा न सज्जते सर्वकर्माणि मनसा सन्न्यस्यास्ते नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्वविदर्थादज्ञः करोमीत्याकर्त्ता: कर्मकारणमारुरुक्षोर्योगस्थस्य शम एव कारणमुदाराम्त्वयोऽप्यज्ञा ज्ञानी त्वात्मैव मे मतमज्ञा: कर्मिणो गतागतं कामकामा लभन्ते अनन्याश्चिन्तयन्तो मां नित्ययुक्ता यथाज्ञानात्मानमाज्ञाय कल्पमकल्मषमुपासते ददामि बुद्धियोगन्तं येन मामुपयान्ति ते अर्थान्न कर्मिणोऽज्ञा उपयान्ति इति भगवत्कर्मकारिणो ये युक्ततमा अपि कर्मिणोऽज्ञास्ते

---

त्याह वेदेति। निष्ठाद्वयमधिकारिभेदेन बोद्धव्यमित्यत्रैव वाक्यान्तरमाह ज्ञानेति। न बुद्धिभेद जनयेदित्यत्र चाविद्यामूलत्वं कर्मणः सूचयता कर्मनिष्ठाविद्वद्विषयानुमोदितेत्याह अज्ञानामिति। यदुक्तं विद्वद्विषया सन्न्यासपूर्विका ज्ञाननिष्ठेति तत्र तत्त्ववित्तु महाबाहो गुणकर्मविभागयोरित्यादि वाक्यमुदाहरति तत्त्ववित् त्विति। तत्रैव वाक्यान्तरं पठति सर्वेति। विदुषो ज्ञाननिष्ठेत्यत्रैव पाञ्चमिकं वाक्यान्तरमाह नैवेति। तत्रैवार्थसिद्धमर्थं कथयति अज्ञ इति। मन्येत इति सम्बन्धः। अज्ञस्य चित्तशुद्ध्यर्थं कर्म शुद्धचित्तस्य कर्मसन्न्यासो ज्ञानप्राप्तौ हेतुरित्यत्र वाक्यान्तरमाह आरुरुक्षोरिति। यथोक्ते विभागे साप्तमिक वाक्यमनुगुणमित्याह उदार इति। तत्र त्रयीधर्ममित्यादि नावमिक्यं वाक्यमविद्वद्विषयं कर्मेत्यत्र प्रमाणयति अज्ञा इति। विदुषः सन्न्यासपूर्विका ज्ञाननिष्ठेत्यत्रैव नावमिकं वाक्यान्तरमाह अनन्या इति। मामित्येतद्व्याचष्टे यथोक्तमिति। तेषां सततयुक्तानामित्यादि दाशमिकं वाक्यं तत्रैव प्रमाणयति ददामीति। विद्यावतामेव भगवत्प्राप्तिनिर्देशादितरेषान्तदप्राप्तिं सूचितेत्यर्थसिद्धमर्थमाह अर्थादिति। ननु भगवत्कर्मकारिणां युक्ततमत्वात् कर्मिणोऽपि भगवन्तं यान्तीत्याशङ्क्याह भगवदिति। ये मत्कर्मकृ-

उत्तरोत्तरहीनफलत्यागावसानसाधना अनिर्देश्याक्षरोपासकास्त्वद्वेष्टा सर्वभूतानामित्यध्यायपरिसमाप्त्युक्तसाधनाः क्षेत्राध्यायाद्यध्यायत्रयोक्तज्ञानसाधनाश्चाधिष्ठानादिपञ्चहेतुकसर्वकर्मसन्न्यासिनामात्मैकत्वाकर्तृत्वज्ञानवतां परस्यां ज्ञाननिष्ठायां वर्त्तमानानां भगवत्तत्त्वविदामनिष्टादिकर्मफल एवं परमहंसपरिव्राजकानामेव लब्धभगवत्स्वरूपात्मैकत्वशरणानां न भवति भवत्येवमन्येषामज्ञानां कर्मिणामसन्न्यासिनामित्येष गीताशास्त्रोक्तस्य कर्त्तव्याकर्त्तव्यार्थस्य विभागः। अविद्यापूर्वकत्वं सर्वस्य कर्मणोऽसिद्धमिति चेन्न

---

दित्यादिन्यायेन भगवत्कर्मकारिणस्ते यद्यपि युक्ततमाः तथापि कर्मिणोऽज्ञाः सन्तो न भगवन्तं स्वरूपेण गन्तुमर्हन्तीत्यर्थः। तेषामज्ञत्वे गमकं दर्शयति उत्तरोत्तरेति। चित्तसमाधानमारभ्य फलत्यागपर्य्यन्तं पाठक्रमेणोत्तरोत्तरं हीनसाधनोपादानादभ्यासासमर्थस्य भगवत्कर्मकारित्वाभिधानाद्भगवत्कर्मकारिणामज्ञत्वं विज्ञातमित्यर्थः। ये त्वक्षरमनिर्देश्यमित्यादिवाक्यसन्दर्भेण विद्वद्विषयत्वं सन्न्यासपूर्वकज्ञाननिष्ठाया निर्द्धारयति अनिर्देश्येति। उक्तसाधनास्ते सन्न्यासपूर्वकज्ञाननिष्ठायामधिक्रियेरन्निति शेषः। किञ्च त्रयोदशे यान्यमानित्वादीनि चतुर्दशे च प्रकाशञ्च प्रवृत्तिञ्च इत्यादीनि पञ्चदशे च यान्यसङ्गत्वादीनि उक्तानि तैः सर्वैः साधनैः सहिता भवन्त्यनिर्देश्याक्षरोपासकास्ततोऽपि ते ज्ञाननिष्ठायामेवाधिक्रियेरन्नित्याह क्षेत्रेति। निष्ठाद्वयमधिकारिभेदेन प्रतिष्ठाप्य ज्ञाननिष्ठानामनिष्टमिष्टं मिश्रमिति त्रिविधं कर्मफलं न भवति किन्तु मुक्तिरेव कर्मनिष्ठानान्तु त्रिविधं कर्मफलं न मुक्तिरिति शास्त्रार्थविभागमभिप्रेतमुपसंहरति अधिष्ठानादीति। यदुक्तमविद्याकामबीजं सर्वं कर्मेति तत्र शास्त्रावगतस्य कर्मणोऽविद्यापूर्वकत्वानुपपत्तेरित्याक्षिपति अविद्येति। दृष्टान्तेन समाधत्ते नेति। तत्राभिमतां प्रतिज्ञां विभजते यद्यपीति।

ब्रह्महत्यादिलक्षणावत् यद्यपि शास्त्रागतं नित्यं कर्म तथा· प्यविद्यावत एव भवति यथा प्रतिषेधशास्त्रावगतमपि ब्रह्म- हत्यादिलक्षणं कर्मानर्थकारणं अविद्याकामादिदोषतो भवति अन्यथा प्रवृत्त्यनुपपत्तेस्तथा नित्यनैमित्तिककाम्या- न्यपीति व्यतिरिक्तात्मज्ञाने प्रवृत्तिर्नित्यादिकर्मस्वनुपप- न्नेति चेन्न चलनात्मकस्य कर्मणोऽनात्मकर्तृकस्याहङ्करो- मीति प्रवृत्तिदर्शनात्। देहादिसङ्घाते अहंप्रत्ययो गौणो न मिथ्या इति चेत् न तत्कार्य्येष्वपि गौणत्वोपपत्तेरा- त्मीये देहादिसङ्घाते अहंप्रत्ययो गौणो यथात्मीयपुत्रे

---

उक्तं दृष्टान्तं व्याचष्टे यथेति। अविद्यादिमतो ब्रह्महत्यादि कर्मेत्यत्र हेतुमाह अन्यथेति। दार्ष्टान्तिकं स्पष्टयति तथेति। तान्यप्यविद्यादिमतो भवन्तीत्यविद्यादिपूर्वकत्वं तेषामेषितव्यमित्यर्थः। पारलौकिकमसदेहा- द्यतिरिक्तात्मज्ञानं विना प्रवृत्त्ययोगान्न तेषामविद्यापूर्वकतेति शङ्कते व्य- तिरिक्त इति। सत्यपि व्यतिरिक्तात्मज्ञाने पारमार्थिकात्मज्ञानाभावा- न्मिथ्याज्ञानादेव नित्यादिकर्मसु प्रवृत्तेरविद्यापूर्वकत्वं तेषामप्रतिहतमिति परिहरति नेत्यादिना। कर्मणश्चलनात्मकत्वाद्वा अकर्तृकत्वं तस्य नि- ष्क्रियत्वात् देहादिसङ्घातस्य तु सक्रियत्वात्तत्कर्तृकं कर्म युक्तं तथापि सङ्घातेऽहं ममाभिमानद्वाराहं करोमीत्यात्मनो मिथ्याधीपूर्विका कर्मणि प्रवृत्तिर्दृष्टा तेनाविद्यापूर्वकत्वं तस्य युक्तमित्यर्थः। यदुक्तं देहादिसङ्घाते- ऽहमभिमानस्य मिथ्याज्ञानत्वं तदाक्षिपति देहादीति। अहं धियो गौणत्वे तत्पूर्वककर्मस्वपि गौणत्वापत्तेरात्मनोऽनर्थाभावात्तन्निवृत्त्यर्थं हेत्वन्वेषणं न स्यादिति दूषयति नेति। एतदेव प्रपञ्चयन्नादौ चोद्यं प्रपञ्चयति आत्मीयेति। तत्र श्रुत्यवष्टम्भेन दृष्टान्तमाह यथेति। दर्शितश्रुतेरा- त्मीये पुत्रेऽहंप्रत्ययो गौणस्तथा सङ्घातेऽप्यात्मीयेऽहं प्रत्ययस्तथा युक्त इत्यर्थः। भेदधीपूर्वकत्वं गौणधियो लोके प्रसिद्धमित्याह लोके चेति।

आत्मा वै पुत्रनामासीति लोके चापि मम प्राण एवायङ्गौरिति तद्वन्नैवं मिथ्याप्रत्ययो मिथ्याप्रत्ययस्तु स्थाणुपुरुषयोरगृह्यमाणविशेषयोर्न गौणप्रत्ययस्य मुख्यकार्य्यार्थत्वं अधिकरणस्तुत्यर्थत्वात्सोपमाशब्देन यथा सिंहो देवदत्तोऽग्निर्माणवक इति सिंह इवाग्निरिव क्रौर्य्यपैङ्गल्यादिसामान्यवत्त्वात् देवदत्तमाणवकाधिकरणकस्तुत्यर्थमेव न तु सिंहकार्य्यमग्निकार्य्यं वा गौणशब्दप्रत्ययनिमित्तं किञ्चित् साध्यते मिथ्याप्रत्ययकार्य्यत्वं त्वनर्थमनुभवति गौणप्रत्ययस्य विषयञ्च जानाति नैवं सिंहो देवदत्तः स्यान्नायमग्निर्माणवक इति तथा गौणेन देहादिसङ्घातेनात्मना कृतं

---

लोकवेदानुरोधेनात्मीये सङ्घातेऽहं धीरपि गौणी स्यादिति दार्ष्टान्तिकमाह तद्वदिति। मिथ्याधियोऽपि भेदधीपूर्वकत्वसम्भवादात्मीयसङ्घातेऽहंधियो मिथ्यात्वमेव किं न स्यादित्याशङ्क्याह नैवमिति। भेदधीपूर्वकत्वाभावे कथं मिथ्याधीरद्वैतीत्याशङ्क्याह मिथ्येति। अधिष्ठानारोप्ययोर्विवेकाग्रहात्तदुत्पत्तिरित्यर्थः। देहादावहंधियो गौणतेति चोद्ये विवृते तत्कार्य्यं व्यपोत्यादिपरिहारं विवृणोति नेत्यादि। हेतुभागं विभजते यथेति। सिंहो देवदत्त इति वाक्यं देवदत्तः सिंह इवेत्युपमया देवदत्तं क्रौर्य्याद्यधिकरणं स्तोतुं प्रवृत्तं अग्निर्माणवक इत्यपि वाक्यं माणवकोऽग्निरिवेत्युपमया माणवकस्य पैङ्गल्याधिकरणस्य स्तुत्यर्थमेव न तथा मनुष्योऽहमिति वाक्यस्य अधिकरणस्तुत्यर्थता भातीत्यर्थः। देवदत्तमाणवकयोरधिकरणत्वं कथमित्याशङ्क्याह क्रौर्य्येति। किञ्च गौणशब्दं तत्प्रत्ययञ्च निमित्तं कृत्वा सिंहकार्य्यं न किञ्चिद्देवदत्ते साध्यते नापि माणवके किञ्चिदकार्य्यं मिथ्याधीकार्य्यं त्वनर्थमात्मानुभवत्यतो न देहादावहंधीर्गौणीत्याह न त्विति। इतोऽपि देहादौ नाहंधीः गौणीत्याह गौणेति। यो देवदत्तो माणवको वा गौण्या धियो विषय-

कर्म न मुख्येनाहं प्रत्ययविषयेणात्मना कृतं स्यान्न हि गौणसिंहाग्निभ्यां कृतं कर्म मुख्यसिंहाग्निभ्यां कृतं स्यान्न च क्रौर्य्येण पैङ्गल्येन वा मुख्यसिंहाग्न्योः कार्य्यं किञ्चित् क्रियते श्रुतार्थेनोपचीणत्वात् स्तूयमानौ च जानीतो नाहं सिंहो नाहमग्निरिति न सिंहस्य कर्म ममाग्नेश्चेति तथा न सङ्घातजं कर्म मम मुख्यस्यात्मन इति प्रत्ययो युक्ततरः स्यान्न पुनरहं कर्त्ता मम कर्मेति यच्चाहुरात्मीयैः स्मृतीच्छा प्रयत्नैः कर्महेतुभिरात्मा करोतीति न तेषां मिथ्याप्रत्ययपूर्वकत्वात् मिथ्याप्रत्ययनिमित्तेष्टानिष्टानुभूतक्रियाफलज

---

स्तत्परो नैष सिंहो नायमग्निरिति जानाति नैवमविद्यानात्मनः सङ्घातस्य च सत्यपि भेदे सङ्घातस्यानात्मत्वं प्रथेत्यतो न सङ्घातेऽहंमकारप्रत्ययौ गौणावित्यर्थः। सङ्घाते तयोर्गौणत्वे दोषान्तरं समुच्चिनोति तथेति। तथा सत्यात्मनि कर्तृत्वादिप्रतिभासासिद्धिरिति शेषः। गौणेन कृतं न मुख्येन कृतमित्युदाहरणेन स्फुटयति न हीति। यद्यपि देवदत्तमाणवकाभ्यां कृतं कार्य्यं मुख्याभ्यां सिंहाग्निभ्यां न क्रियते तथापि देवदत्तगतक्रौर्य्येण मुख्यसिंहस्य माणवकनिष्ठपैङ्गल्येन मुख्याग्नेरिव च सङ्घातगतेनापि जड़त्वेनात्मनो मुख्यस्य किञ्चित् कार्य्यं कृतं भविष्यतीत्याशङ्क्याह न चेति। देहादावहंधियो गौणत्वायोगे हेत्वन्तरमाह स्तूयमानाविति। देवदत्तमाणवकयोः सिंहाग्निभ्यामभेदधीपूर्वकं तद्व्यापारवत्त्वाभावधीवदात्मनोऽपि मुख्यस्य सङ्घाताभेदधीद्वारा तदीयव्यापारराहित्यमात्मनि दृष्टं स्यादित्यर्थः। व्यावर्त्त्यं दर्शयति न पुनरिति। सङ्घातेऽहंधियो मिथ्याधीत्वमपि न तत्कृतमात्मनि कर्तृत्वं किन्त्वात्मा यज्ज्ञानेच्छाप्रयत्नैरस्य कर्तृत्वं वास्तवमिति मतमनुवदति यच्चेति। ज्ञानादिकृतमपि कर्तृत्वं मिथ्याधीकृतमेव ज्ञानं मिथ्याधीकार्य्यत्वादिति दूषयति न तेषामिति। तदेव प्रपञ्चयति मिथ्येति।

नितसंस्कारपूर्वकाहि स्मृतीच्छाप्रयत्नादयो यथास्मिन् जन्मनि देहादिसङ्घाताभिमानरागद्वेषादिकृतौ धर्माधर्मौ तत्फलानुभवश्च तथाऽतीतेऽतीततरेऽपि जन्मनीत्यनादिरविद्याकृतः संसारोऽतीतोऽनागतश्चानुमेयः ततश्च सर्वकर्मसन्न्यासात् ज्ञाननिष्ठायां आत्यन्तिकः संसारोपरम इति सिद्धं, अविद्यात्मकत्वाच्च देहाभिमानस्य तन्निवृत्तौ देहाद्यनुपपत्तेः संसारानुपपत्तिः देहादिसङ्घाते आत्माभिमानोऽविद्यात्मकः न हि लोके गवादिभ्योऽन्योऽहं मत्तश्चान्ये गवादय इति जानन् तेष्वहमिति प्रत्ययं मन्यते कश्चिदजानंस्तु मन्यते स्थाणौ पुरुषविज्ञानवत् अविवेकतो देहादिसङ्घाते कुर्यादहमिति

---

मिथ्याज्ञानं निमित्तं कृत्वा किञ्चिदिष्टं किञ्चिदनिष्टमित्यारोप्य तद्द्वारा लभते तस्मिन् प्रेमसाजिहासाभ्यां क्रियां निर्वर्त्त्य चेष्टमनिष्टञ्च फलं भुक्त्वा तेन संस्कारेण तत्पूर्विकाः स्मृत्यादयः स्वात्मनि क्रियां कुर्वन्तीति युक्तं कर्तृत्वस्य च मिथ्यात्वमित्यर्थः। अतीतानागतजन्मनोरिव वर्त्तमानेऽपि जन्मनि कर्तृत्वादिसंसारस्य वस्तुत्वमाशङ्क्याह यथेति। विमतौ कालावविद्याकृतसंसारवन्तौ कालत्वाद्वर्त्तमानकालवदित्यर्थः। संसारस्याविद्याकृतत्वे फलितमाह ततश्चेति।

तस्याविद्यकत्वेन विद्यापोह्यत्वे हेत्वन्तरमाह अविद्येति। कुतोऽस्याविद्याकृतत्वं धर्माधर्मकृतत्वसम्भवादित्याशङ्क्याह देहादीति। आत्मनो धर्मादिकर्तृत्वस्याविद्यकत्वान्नाविद्यात् विना कर्मिणां देहाभिमानः सम्भवत्यतश्च आत्मनः सङ्घातेऽहमभिमानस्याविद्यया विद्यमानतेत्यर्थः। आत्मनो देहाद्यभिमानस्याविद्यकत्वमन्वयव्यतिरेकाभ्यां साधयन् व्यतिरेकं दर्शयति न हीति। अन्वयं दर्शयन्व्यतिरेकमनुवदति अजानन्निति। पुत्रे पितुरहंधीवदात्मीये देहावहंधीर्गौणीत्युक्तमनुवदति यस्त्विति। तत्र दृष्टान्तश्रुतेर्गौण्यात्मविषयत्वमुक्तमङ्गीकरोति स त्विति। तर्हि देहादावपि

प्रत्ययं नहि विवेकतो जानन् यस्त्वात्मा वै पुत्रनामासीति पुत्रेऽहंप्रत्ययः स तु जन्यजनकसम्बन्धनिमित्तो गौणो गौणेन चात्मना भोजनादिवत् परमार्थकार्य्यं न शक्यते कर्तुं गौणसिंहाग्निभ्यां मुख्यसिंहाग्निकार्य्यवत् अदृष्टविषयचोदनाप्रामाण्यादात्मकर्तव्यं गौणैर्देहेन्द्रियात्मभिः क्रियत इति चेन्न अविद्याकृतात्मकत्वात् तेषां गौणा आत्मानो देहेन्द्रियादयः किं तर्हि मिथ्याप्रत्ययेनैवासङ्गस्यात्मनः सङ्गात्मत्वमापाद्यन्ते तद्भावे भावात्तदभावे चाभावादविवेकिनां ह्यज्ञानकाले बालानां दृश्यते दीर्घोऽहङ्गौरोऽहमिति देहादिसङ्घातेऽहंप्रत्ययो भवति न तु विवेकिनां अन्योऽहं

---

तथैव स्वकीये स्यादहंधीर्गौणीत्याशङ्क्याह गौणेनेति। न हि स्वकीयेन पुत्रादिना गौणात्मना पितुर्भोजनादिकार्य्यं क्रियते तथा देहादेरपि गौणात्मत्वे तेन कर्तृत्वादिकार्य्यमात्मनो न वास्तवं सिद्धमित्यर्थः। गौणात्मना मुख्यात्मनो नास्ति वास्तवं कार्य्यमित्यत्र दृष्टान्तमाह गौणेति। न हि गौणेनसिंहेन देवदत्तेन मुख्यसिंहकार्य्यं क्रियते नापि गौणाग्निना माणवकेन मुख्याग्निकार्य्यं दाहपाकादि तथा देहादिना गौणात्मना मुख्यात्मनो न वास्तवं कार्य्यं कर्तृत्वादि कर्तुं शक्यमित्यर्थः। स्वर्गकामादिवाक्यप्रामाण्यात् आत्मनो देहाद्यतिरेकज्ञानस्य च केवलस्याकर्तृत्वात्तत्कर्त्तव्यं कर्म्म गौणैरेव देहादात्मभिः सम्पाद्यं तेन हि सत्येव श्रौतातिरेकज्ञाने देहादावात्मत्वमात्मनो मुख्यं युक्तमिति चोदयति अदृष्टेति। न देहादीनामात्मत्वं गौणं तदीयात्मत्वस्याविद्यात्वेन सिद्धत्वादतो न गौणात्मभिरात्मकर्त्तव्यं कर्म्म क्रियते किन्तु मिथ्यात्मभिरिति परिहरति नाविद्येति। तदेव विवृणुवन्नर्थं स्फुटयति गौणा इति। कथं तर्हि देहादिविषयात्मत्वप्रथेत्याशङ्क्याविद्याकृतेत्यादि हेतुं विभजते किं तर्हीति। देहादीनामनात्मनामेव सतामात्मत्वं मिथ्याप्रत्ययकृतमित्य-

देहादिसङ्घातादिति ज्ञानवतां तत्काले देहादिसङ्घातेऽहंप्रत्ययो भवति तस्मात् मिथ्याप्रत्ययाभावेऽभावात् तत्कृत एव न गौणः पृथग्गृह्यमाणविशेषसामान्ययोर्हि सिंहदेवदत्तयोरग्निमाणवकयोर्वा गौणः प्रत्ययः शब्दप्रयोगो वा स्यान्नागृह्यमाणसामान्यविशेषयोः यथा शुक्तिरजतयोर्यत्तूक्तं श्रुतिप्रामाण्यादिति न तत्प्रामाण्यदृष्टविषयत्वात् प्रत्यक्षादिप्रमाणानुपलब्धे हि विषयेऽग्निहोत्रादिसाध्यसाधनसम्बन्धः श्रुतेः प्रामाण्यं न प्रत्यक्षादिविषये अदृष्टदर्शनार्थविषयत्वात् प्रामाण्यस्य तस्मान्न दृष्टमिथ्याज्ञाननिमित्त-

त्वान्वयव्यतिरेकावुदाहरति तद्भाव इति । उक्ते न्याये शास्त्रीयसंस्कारशून्यानामनुभवं प्रमाणयति अविवेकिनामिति । व्यतिरेकेऽपि दर्शिते शास्त्राभिज्ञानामनुभवमनुकूलयति नन्विति । अन्वयव्यतिरेकाभ्यामनुभवानुसारिभ्यां सिद्धमर्थमुपसंहरति तस्मादिति । तत्कृत एव देहावहंप्रत्यय इति शेषः । किञ्च व्यवहारभूमौ भेदग्रहस्य गौणत्वव्यापकत्वात्तस्य प्रकृतेऽभावाच्च देहादावहंशब्दप्रत्ययौ गौणाविति आह पृथगिति । अदृष्टविषयचोदनाप्रामाण्यात् कर्त्तुरात्मनो व्यतिरेकावधारणात्तस्य देहादावहं ममाभिमानस्य गौणतेत्युक्तमनुवदति यत्त्विति । श्रुतिप्रामाण्यस्याज्ञातार्थविषयत्वात् मानान्तरसिद्धे व्यतिरिक्तात्मनि चोदनाप्रामाण्याभावाच्च तदवष्टम्भेन देहादावात्माभिमानस्य गौणतेत्युत्तरमाह न तदिति । श्रुतिप्रामाण्यस्यादृष्टविषयत्वं स्पष्टयति प्रत्यक्षादीति । अज्ञातार्थज्ञापकं प्रमाणमिति स्थिते न ज्ञाते श्रुतिप्रामाण्यमित्याह अदृष्टेति । अज्ञातसाध्यसाधनसम्बन्धबोधिनः शास्त्रस्यातिरिक्तात्मन्यौदासीन्ये फलितमाह तस्मादिति । अन्वयव्यतिरेकाभ्यां दृष्टो मिथ्याज्ञाननिमित्तो देहादिसङ्घातोऽहंप्रत्ययस्तस्येति यावत् । अन्यविषयत्वाच्चोदनायातिरिक्तात्मविषयतेत्युक्तमिदानीन्तद्विषयत्वाङ्गीकारेऽपि न तन्निरोद्धुं शक्यमध्य-

स्याहंप्रत्ययस्य देहादिसङ्घाते गौणत्वं कल्पयितुं शक्यं न हि श्रुतिशतमपि शीतोऽग्निरप्रकाशो वेति ब्रुवत् प्रामाण्यमुपैति यदि ब्रूयात् शीतोऽग्निरप्रकाशो वेति तथाप्यर्थान्तरं श्रुतेर्विवक्षितं कल्प्यं प्रामाण्यान्यथानुपपत्तेः न तु प्रमाणान्तरविरुद्धं स्ववचनविरुद्धं वा कर्मणो मिथ्याप्रत्ययवत् कर्तृकत्वात् कर्तुरभावे श्रुतेरप्रामाण्यमिति चेत् न ब्रह्मविद्यायामर्थवत्त्वोपपत्तेः कर्मविधिश्रुतिवत् ब्रह्मविद्याविधिश्रुतेरप्रामाण्यप्रसङ्ग इति चेन्न बाधकप्रत्ययानुपपत्तेर्यथा ब्रह्मविद्याविधिश्रुत्यात्मन्यवगते देहादिसङ्घातेऽहंप्रत्ययो बाध्यते तथात्मन्येवात्मावगतिर्न कदाचित् केनचित्

---

ऽविरोधादित्याह न हीति । अपौरुषेय्याः श्रुतेरसम्भावितदोषायाः मानान्तरविरोधेऽपि प्रामाण्यमप्रत्याख्येयमित्यभिप्रेत्याह यदीति । स्वार्थं बोधयन्त्याः श्रुतेर्विरोधापेक्षाभावाद्विरुद्धार्थवादित्वे तत्परिहाराय विवक्षितमर्थान्तरमविरुद्धं तस्याः स्वीकर्त्तव्यं विरोधे तत्प्रामाण्यानुपपत्तेरित्याह तथापीति । अविरोधमवधार्य श्रुत्यर्थकल्पना न युक्तेति व्यावर्त्त्यमाह न त्विति । अविद्यावत्कर्त्तृत्वं कर्मेति त्वयोपगमादुत्पन्नायां विद्यायामविद्याभावे तदधीनकर्त्तुरभावादन्तरेण कर्त्तारमनुष्ठानासिद्धौ कर्मकाण्डाप्रामाण्यमित्यध्ययनविधिविरोधः स्यादिति शङ्कते कर्मण इति । कर्मकाण्डश्रुतेर्विद्योदयात् पूर्वं व्यवहारिकप्रामाण्यस्य तात्त्विकप्रामाण्याभावेऽपि सम्भवाद्ब्रह्मकाण्डश्रुतेश्च तात्त्विकप्रामाण्यस्य ब्रह्मविद्याजनकत्वेनोपपन्नत्वान्नाध्ययनविधिविरोध इति परिहरति न ब्रह्मेति । कर्मकाण्डश्रुतेस्तात्त्विकप्रामाण्याभावे ब्रह्मकाण्डश्रुतेरपि तदसिद्धिरविशेषादिति शङ्कते कर्मेति । उत्पन्नाया ब्रह्मविद्याया बाधकाभावेन प्रमाणत्वात्तद्धेतुश्रुतेस्तात्त्विकं प्रामाण्यमिति दूषयति न बाध्यकेति । ब्रह्मविद्याया बाधकानुपपत्तिं दृष्टान्तेन साधयति

कथञ्चिदपि बाधितुं शक्या फलाव्यतिरेकावगतेर्यथाग्निरुष्णः प्रकाशश्चेति न च कर्मविधिश्रुतेरप्रामाण्यं पूर्वपूर्वप्रवृत्तिनिरोधेनोत्तरोत्तरापूर्वापूर्वप्रवृत्तिजननस्य प्रत्यगात्माभिमुख्यप्रवृत्त्युत्पादनार्थत्वात् मिथ्यात्वेऽप्युपायस्योपेयसत्यतया सत्यत्वमेव यथान्यथानुवादानां विधिशेषाणां लोकेऽपि बालोन्मत्तादीनां पय आदि पाययितव्ये चूडावर्धनादिवचनं प्रकारान्तरस्यालाभमात्रादेव प्रामाण्यसिद्धिः प्रागात्मज्ञानात् देहाभिमानप्रत्यक्षादिप्रामाण्यवत्। ननु कुरुते स्वयमव्याप्रियमाणोऽप्यात्मा संनिधिमात्रेण करोति तदेव च मुख्यं कर्तृत्वमात्मनो यथा राजा युध्यमानेषु योधेषु युध्यत इति प्रसिद्धं स्वयमयुध्यमानोऽपि सन्निधानादेव जितः पराजितश्चेति तथा सेनापतिर्वाग्भेव करोति क्रियाफलसम्बन्धश्च राजसेनापतेश्च दृष्टः यथा च ऋत्विक्कर्म यजमानस्य तथा देहादीनां कर्म

---

यथेति। देहादिसङ्घातवदित्यपेरर्थः। लौकिकावगतेरिवात्मावगतेरपि फलाव्यतिरेकमुदाहरणेन स्फोरयति यथेति। फलमज्ञाननिवृत्तिः कर्मविधिश्रुतिर्यदित्युक्तं दृष्टान्तं विघटयति न चेति। अनादिकालप्रवृत्तस्वाभाविकप्रवृत्तव्यक्तीनां प्रतिबन्धेन योगाद्यलौकिकप्रवृत्तिव्यक्तीर्जनयति कर्मकाण्डश्रुतिस्तज्जननञ्च चित्तशुद्धिद्वारा प्रत्यगात्माभिमुख्यप्रवृत्तिमुत्पादयति, तथा च कर्मविधिश्रुतीनां पारम्पर्येण प्रत्यगात्मज्ञानार्थत्वात् तात्त्विकप्रामाण्यसिद्धिरित्यर्थः। नन्वेवमपि श्रुतेर्मिथ्यात्वादाभासवदप्रामाण्यमिति चेन्नेत्याह मिथ्यात्वेऽपीति। स्वरूपेणासत्यत्वेऽपि सत्योपेयद्वारा प्रामाण्यमित्यत्र दृष्टान्तमाह यथेति। मन्त्रार्थवादेतिहासपुराणानां स्वतोऽर्थे प्रामाण्याभावेऽपि शेषिविध्यनुरोधेन प्रामाण्यवत् प्रकृतेऽपि श्रुतेः स्वरूपेणासत्याया विषयसत्यतया सत्यत्वङ्गतायाः प्रामाण्यमवि-

आत्मकृतं स्यात् तत्फलस्यात्मगामित्वात् यथा वा स्वामकस्य लोहभ्रामयितृत्वादव्यापृतस्यैव मुख्यमेव कर्तृत्वं तथा आत्मन इति तदसदकुर्वतः कारकत्वप्रसङ्गात् कारकमनेकप्रकारमिति चेन्न राजप्रभृतीनां मुख्यस्यापि कर्तृत्वस्य दर्शनात् राजा तावत् स्वव्यापारेणापि युध्यते योधानां योधयितृत्वेन धनदानेन च मुख्यमेव कर्तृत्वं तथा जयपराजयफलोपभोगेन तथा यजमानस्यापि धनत्यागेन दक्षिणादानेन च मुख्यमेव कर्तृत्वं तस्मादव्यापृतस्य कर्तृत्वोपचारः यः स गौण इत्यवगम्यते यदि मुख्यमन्यत् कर्तृत्वं स्वव्यापारलक्षणं नोपलभ्यते राजयजमानप्रभृतीनां तदा सन्निधिमात्रेणापि कर्तृत्वं मुख्यं परिकल्प्येत यथा स्वामकेन न तथा राजयजमानादीनां स्वव्यापारो नोपलभ्यते

---

रस्त्वमित्यर्थः । वाक्यस्य शेषविध्यनुरोधेन प्रामाण्यं नालौकिकमित्याह लोकेऽपीति । कर्मकाण्डश्रुतीनामुक्तरीत्या परम्परया प्रामाण्येऽपि साक्षात्प्रामाण्यमुपेक्षितमित्याशङ्क्याह प्रकारान्तरेति । आत्मज्ञानोदयात् प्रागवस्था प्रकारान्तरं, तत्र स्थितानां कर्मकाण्डश्रुतीनामज्ञातसम्बन्धबोधकत्वेन साक्षादेव प्रामाण्यमिष्टमित्यर्थः । ज्ञानात् पूर्वं कर्मश्रुतीनां व्यावहारिकप्रामाण्ये दृष्टान्तमाह प्रागिति । प्रतीचि कर्तृत्वस्याविद्यकत्वेऽपि श्रुतिप्रामाण्यमप्रत्युहमित्युक्तं संप्रति कर्तृत्वस्य प्रकारान्तरेण पारमार्थिकत्वमुत्थापयति यत्त्विति । स्वव्यापाराभावे सन्निधिमात्रेण कुतो मुख्यकर्तृत्वमित्याशङ्क्य दृष्टान्तमाह यथेति । स्वयमयुध्यमानत्वे कथं तत्फलवत्त्वमित्याशङ्क्य प्रसिद्धिवशादित्याह जित इति । कायिकव्यापाराभावेऽपि कर्तृत्वस्य मुख्यत्वे दृष्टान्तमाह सेनापतिरिति । तस्यापि फलवत्त्वं राजवदविशिष्टमित्याह क्रियेति ।

तस्मात् सन्निधिमात्रेणापि कर्तृत्वं गौणमेव तथा च सति तत्फलसम्बन्धोऽपि गौण एव स्यान्न गौणेन मुख्यं कार्यं निर्वर्त्यते तस्मादसद्वैतद्गीयते देहादीनां व्यापारेणा-व्यापृत आत्मा कर्ता भोक्ता च स्यादिति भ्रान्तिनिमित्तन्तु सर्वमुपपद्यते यथा स्वप्ने मायायाञ्चैवं न च देहाद्यात्म-प्रत्ययभ्रान्तिसन्तानविच्छेदेषु सुषुप्तिसमाध्यादिषु कर्तृत्व-भोक्तृत्वाद्यनर्थं उपलभ्यते तस्मात् भ्रान्तिप्रत्ययनिमित्त एवायं संसारभ्रमः न तु परमार्थ इति सम्यग्दर्शनादत्य-न्तमेवोपरम इति सिद्धम्।

---

अन्यकर्मणा संन्यस्य सन्निहितस्य मुख्ये कर्तृत्वे वैदिकमुदाहरणमाह यथा चेति। कथमृत्विजां कर्म यजमानस्येत्याशङ्क्याह तत्फलस्येति। स्वव्यापारादृते सन्निधेरेवान्यव्यापारहेतोर्मुख्यकर्तृत्वे दृष्टान्तमाह यथा चेति। क्रियां कुर्वत् कारकं कारकमितरङ्गीकारविरोधाद्वैतदिति दूषयति तदसदिति। कारकविशेषविषयत्वेनाङ्गीकारोपपत्तिरिति शङ्कते कारकमिति। स्वव्यापारमन्तरेण न किञ्चिदपि कारकमिति परिहरति न राजेति। दर्शनमेव विशदयति राजेति। यथा राजा युद्धे योध-यितृत्वेन धनदानेन च मुख्यं कर्तृत्वं तथा फलभोगेऽपि मुख्यमेव तस्य कर्तृत्वमित्याह तथेति। यदुक्तमृत्विककर्म यजमानस्येति तत्राह यज-मानस्यापीति। स्वव्यापारादेव मुख्यं कर्तृत्वमिति स्थिते फलितमाह यस्मादिति। तदेव प्रपञ्चयति यदीति। तर्हि सन्निधानादेव मुख्यं कर्तृत्वं राजादीनामुपगतमिति नेत्याह न तथेति। राजादीनां स्वव्या-पारवत्त्वं पूर्वोक्तं सिद्धमित्याह तस्मादिति। राजप्रभृतीनां सन्निधेरेव कर्तृत्वस्य गौणत्वे जयादिफलवत्त्वस्यापि सिद्धं गौणत्वमित्याह तथा चेति। तत्र पूर्वोक्तं हेतुत्वेन कारयति नेति। अस्वव्यापारेणान्यस्य मुख्यकर्तृत्वाभावे फलितमुपसंहरति तस्मादिति। कथं तर्हि स्वयमात्मनि कर्तृत्वादि स्वीकृतं न हि बुद्धेरादिदृष्टं कर्ता शास्त्रार्थवत्त्वादिति

सर्वं गीताशास्त्रार्थमुपसंहृत्यास्मिन्नध्याये विशेषतश्चान्त इह शास्त्रार्थसारं संक्षेपत उपसंहारं कृत्वाथेदानीं शास्त्रसम्प्रदायविधिमाह इदं शास्त्रं ते तव हिताय मयोक्तं संसारविच्छित्तये अतपस्काय तपोरहिताय न वाच्यमिति व्यवहितेन सम्बध्यते तपस्विनेऽप्यभक्ताय गुरुदेवभक्तिरहिताय कदाचन कस्याञ्चिदप्यवस्थायां न वाच्यं भक्तस्तपस्वी अपि सन्नशुश्रूषुर्यो भवति तस्मा अपि न वाच्यं न च यो मां वासुदेवं प्राकृतं मनुष्यं मत्वा अभ्यसूयति आत्मप्रशंसादिदोषाध्यारोपणेन ममेश्वरत्वमजानन्न सहतेऽसावप्ययोग्यस्तस्मा अपि न वाच्यं भगवत्यनसूयायुक्ताय तपस्विने भक्ताय शुश्रूषवे अनसूयवे च वाच्यं शास्त्रमिति सामर्थ्याद्गम्यते तत्र मेधाविने तपस्विने वेतयनयोर्विकल्पदर्शनात् शुश्रूषाभक्तियुक्ताय तपस्विने भक्ताय मेधाविने वा वाच्यं शुश्रूषाभक्तिवियुक्ताय न तपस्विने नापि मेधाविने वाच्यं भगवत्यसूयायुक्ताय समस्तगुणवतेऽपि न वाच्यं गुरुशुश्रूषाभक्तिमते च वाच्यमित्येष शास्त्रसम्प्रदायविधिः ॥ ६७ ॥

---

व्यायास्यमाह श्रीमीति । कर्तृत्वाद्यात्मनि भ्रान्तिमत्वे तदुदाहरणेन स्फोरयति । यथेत मिथ्याज्ञानकृतमात्मनि कर्तृत्वादीत्यत्र व्यतिरेकं दर्शयति न चेति । एतस्य तरेके फलं कथयति तस्मादिति । संसारकारणस्याविद्यायास्तत्त्वे सिद्धे परमप्रकृतमुपसंहरति इति सम्यगिति ।

शास्त्रतात्पर्यार्थं निर्धारद्वारा निर्णीयानन्तरश्लोकमवतारयति सर्वमिति । प्रकृते त्वष्टादशाध्याये गीताशास्त्रार्थं सर्वं प्रतिपादितोक्तार्थमुपसंहृत्यान्ते च सर्वधर्मान् परित्यज्येत्यादौ विशेषतश्च संक्षेपेणोपसंहारं कृत्वा संप्रदायविधिवचनव्याजवशादेतदाहेति योजना ।

किमिति विस्तरेणोपसंहृतः शास्त्रार्थः संक्षेपेणोपसंह्रियते तत्राह शास्त्रार्थेति । संक्षेपविस्ताराभ्यामुक्तोऽर्थः सर्वथा दृढतया बुद्धिमधिरोहतीत्यर्थः । हितायेत्येतदेव व्याचष्टे संसारेति । कदाचनेति सर्वैः सम्बध्यते । प्रतिषेधसामर्थ्यसिद्धमर्थं कथयति भगवतीति । अर्थसिद्धेऽर्थे स्वयमन्तरमनुसृत्य मेधाविस्वमन्तर्भावयति नवेति । विकल्पदर्शनात्तेषु मेधावित्वमपि प्रविशतीत्यर्थः । [illegible] कथमधिकारिप्रतिपत्तिरिति तत्राह शुश्रूषेति । ताभ्यां युक्ताय [illegible] स्यारहिताय तपस्विने वाच्यमिति सम्बन्धः । तद्युक्ताय शुश्रूषादियुक्ताय भगवति असूयारहितायेत्यर्थः । तपस्वित्वम[illegible] निरपेक्षमधिकारिविशेषणमिति शङ्कां शातयति शुश्रूषेति । [illegible] तात्पर्यं सूचयति भगवतीति । कस्तर्हि वाच्यमित्याशङ्क्य पूर्वोक्तसर्वगुणसम्पन्नायेत्याह गुरुशुश्रूषेति । [illegible] उभयपक्षे, मेधाविस्तपस्वित्वं नातीवापेक्षितं [illegible] बाधकाभावादपेक्षितमेवेति भावः ॥ ६७ ॥

श्रा० टी० । एवं गीतार्थं तत्त्वमुपदिश्य तत्सम्प्रदायप्रवर्त्तने नियममाह इदमिति । इदं गीतार्थतत्त्वं ते त्वया अतपस्काय धर्मानुष्ठानहीनाय न वाच्यं, न चाभक्ताय गुरावीश्वरे च भक्तिशून्याय कदाचिदपि वाच्यं, न चाशुश्रूषवे परिचर्य्यामकुर्वते वाच्यं, मां परमेश्वरं योऽभ्यसूयति मनुष्यदृष्ट्या दोषारोपेण निन्दति तस्मै च न वाच्यम् ॥ ६७ ॥

**य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।**
**भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥६८॥**

सम्प्रदायस्य कर्तुः फलमिदानीमाह य इमं यथोक्तं परमं निःश्रेयसार्थं केशवार्जुनयोः संवादरूपं ग्रन्थं गुह्यं गुप्तगोप्यतमं मद्भक्तेषु मयि भक्तिमत्स्वभिधास्यति वक्ष्यति ग्रन्थतोऽर्थतश्च स्थापयिष्यतीत्यर्थः यथा त्वयि मया भक्तेः

शुश्रूषणात्मकभक्तिमात्रेण केवलेन शास्त्रसम्प्रदाने पात्रं भवतीति गम्यते कथमभिधास्यतीत्युच्यते भक्तिं मयि परां कृत्वा भगवतः परमगुरोः मच्युतस्य शुश्रूषा मया क्रियत इत्येवं कृत्वेत्यर्थः तस्येदं फलं मामेवैष्यति मुच्यत एवात्र संशयो न कर्त्तव्यः॥ ६८॥

व्या० टी०। शास्त्रसम्प्रदायप्रवृत्त्यर्थमुत्तरश्लोकप्रवृत्तिं दर्शयति सम्प्रदानेति। य इत्यध्यायको निर्दिश्यते। परमत्वं ग्रन्थस्य निरतिशयपुरुषार्थसाधनत्वमित्याह परममिति। गोप्यत्वमस्य रहस्यार्थविषयत्वाद्यथोक्तसंवादस्य ग्रन्थतोऽर्थतश्च भक्तेषु स्थापने दृष्टान्तमाह यथेति। मयि वासुदेवे भगवति अनन्यभक्ते त्वयि यथा मया ग्रन्थोऽर्थतः स्थापितस्तथा मद्भक्तेष्वन्येष्वपि यो ग्रन्थमिमं स्थापयिष्यति तस्येदं फलमित्युत्तरत्र सम्बन्धः। मद्भक्तायेति भक्तेरधिकारिविशेषणत्वोक्तेर्मद्भक्तेष्विति पुनर्भक्तिग्रहणमनर्थकमित्याशङ्क्याह भक्तेरिति। शुश्रूषादयस्तु कारिराहित्यं केवलशब्दार्थो यद्यपि मात्रशब्देन सूचितमेतत्तथापीतरेषां स्फुटीकृतमिति विरोधः। प्रश्नपूर्वकमभिधानप्रकारमभिनयति कथमित्यादिना। भगवति भक्तिकरणप्रकारं प्रकटयति भगवत इति। यच्छब्दापेक्षितं पूरयति तस्येति। मामेवैष्यत्येवेत्यन्वयं गृहीत्वा व्याचष्टे मुच्यत एवेति ६८

स्वा० टी०। एतद्दोषैरहितेभ्यो गीताशास्त्रोपदेष्टुः फलमाह य इममिति। मद्भक्तेष्वभिधास्यति मद्भक्तेभ्यो यो वक्ष्यति स मयि परां भक्तिं करोति ततो निःसंशयः सन् मामेव प्राप्नोतीत्यर्थः॥ ६८॥

न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः।
भविता न च मे तस्मादन्यः प्रियतरो भुवि॥६९॥

किञ्च न च तस्माच्छास्त्रसम्प्रदायकृतो मनुष्येषु मनुष्याणां मध्ये कश्चिन्मे मम प्रियकृत्तमोऽतिशयेन प्रियकृत्तमोऽन्यः प्रियकृत्तमो नास्त्येवेत्यर्थः वर्त्तमानेषु न च भविता

भा० टी० । प्रवक्तुरध्येतुश्च फलमुक्त्वा श्रोतुरिदानीं फलं कथयति श्रद्धेति ॥ ७१ ॥

स्वा० टी० । अन्यस्य जपतो योऽन्यः शृणोति तस्यापि फलमाह श्रद्धावानिति । यो नरः श्रद्धायुक्तः केवलं शृणुयादपि, श्रद्धावानपि यः कश्चित् किमर्थमयमुच्चैर्जपति अबद्धं वा जपतीति दोषदृष्टिं करोति तद्व्यावृत्त्यर्थमाह अनसूयश्चासूयारहितो यः शृणुयात् सोऽपि सर्वैः पापैर्मुक्तः अश्वमेधादिपुण्यकृतां लोकान् प्राप्नुयात् ॥७१॥

**कच्चिदेतत् श्रुतं पार्थ ! त्वयैकाग्रेण चेतसा ।**
**कच्चिदज्ञानसम्मोहः प्रनष्टस्ते धनञ्जय ! ॥७२॥**

शिष्यस्य शास्त्रार्थग्रहणाग्रहणविवेकबुभुत्सया पृच्छति तद्-ग्रहणे जाते पुनर्ग्राहयिष्यामि उपायान्तरेणापि इति प्रष्टु-रभिप्रायो यत्नान्तरमास्थाय शिष्यं कृतार्थः कर्त्तव्य इत्या-चार्य्यधर्म्मः प्रदर्शितो भवति कच्चिदिति मयोक्तं श्रुतं श्रवणेनावधारितं पार्थ ! कि त्वया एकाग्रेण चेतसा एक-चित्तेन किं वा प्रमादितं कच्चिदज्ञानसम्मोह ऽज्ञाननिमित्तः सम्मोहो ऽविविक्तभावोऽविवेकता स्वाभाविकः किं प्रनष्टो यदर्थोऽयं शास्त्रश्रवणायासस्तव मम चोपदेष्टृत्वायासः प्रवृत्तस्ते तुभ्यं धनञ्जय ! ॥ ७२ ॥

भा० टी० । आचार्य्येण शिष्याय यावदज्ञानसंशयविपर्य्यासनाशं तदनेकधोपदेष्टव्यमिति दर्शयितुं भगवानर्जुनं प्रति पृष्टवानित्याह शिष्य-स्येति । प्रष्टुरभिप्रायं प्रकटयति तद्ग्रहणे इति । शिष्येणोक्तं स्वहीतं नेष्टे तर्हि तं प्रत्योदासीन्यमाचार्य्यस्योचितं तस्य मन्दबुद्धित्वा-दित्याशङ्क्याह यत्नान्तरमिति । कच्चिदिति कोमलप्रश्ने । तमेव व्याचष्टे किमेतदिति । द्वितीयं किंपदं पूर्वस्य व्याख्यानतया सम्बध्यते कच्चिदिति ।

यमस्य इति। स्वयं ज्योतिषि प्रतीचि ब्रह्मण्यविद्याभ्रमं विघातयति मार्थविद्या प्रकाशयतीति मत्वाह स्मृतिश्चेति। स्मृतिलाभे किं स्यादिति चेत्तदाह यस्या इति। मोहनाशे स्मृतिप्रतिलम्भे चाऽसाधारणकारणमाह त्वत्प्रसादादिति। पश्चात् प्रश्नप्रतिवचनेन लब्धमर्थं कथयति अनेनेति। यदुक्तं स्मृतिप्रतिलम्भाद्ग्रथितो हृदयग्रन्थीनां विप्रमोक्षः स्यादिति तत्र प्रमाणमाह तथा चेति। ज्ञानादज्ञानतत्कार्यनिवृत्तौ श्रुत्यन्तरमपि संवादयति भिद्यत इति। भगवदनुग्रहादज्ञानतन्मोहहानात्तदनन्तरमात्मज्ञाने प्रतिलब्धे त्वदाज्ञानिवृत्तोऽहमित्युत्तरार्द्धं व्याकरोति स्थितेति। तव वचनं करिष्येऽहमित्यत्र तात्पर्यमाह अहमिति ॥ ७३ ॥

स्वा° टी°। कृतार्थः सन्नर्जुन उवाच नष्टो मोह इति। आत्मविषयो मोहो नष्टः यतोऽहमस्मीति स्वरूपानुसन्धानरूपा स्मृतिस्त्वत्प्रसादान्मया लब्धा अतः स्थितोऽस्मि गतोऽधर्मविषयः सन्देहो यस्य सोऽहं तवाज्ञां करिष्यामीति ॥ ७३ ॥

## सञ्जय उवाच।

**इत्यहं वासुदेवस्य पार्थस्य च महात्मनः।**
**संवादमिममश्रौषमद्भुतं लोमहर्षणम् ॥७४॥**

परिसमाप्तः सकलाम्नायशास्त्रार्थोऽथेदानीं कथासम्बन्धप्रदर्शनार्थं सञ्जय उवाच इत्येवमहं वासुदेवस्य पार्थस्य च महात्मनः संवादमिमं यथोक्तमश्रौषं श्रुतवानस्मि अद्भुतमत्यन्तविस्मयकरं रोमहर्षणं रोमाञ्चकरम् ॥ ७४ ॥

आ° टी°। शास्त्रार्थं समाप्ते सत्यस्यामवस्थायां सञ्जयवचनं कुत्रोपयुक्तमिति तदाह परिसमाप्त इति। वासुदेवस्य सर्वज्ञस्य सर्वेश्वरस्य कृतार्थस्य पार्थस्य पृथासुतस्यार्जुनस्य महात्मनोऽक्षुद्रबुद्धेः सर्वाधिकारिगुणसम्पन्नस्य सम्यग्वादं संवादं गुरुशिष्यभावेन प्रश्नप्रतिवचनाभिधान-

चित्तमत्यन्तमद्भुतं विस्मयकरं रोमाणि हृष्यन्ति पुलका भवन्त्यनेनेति रोमहर्षणमाह्लादकरं यथोक्तं श्रुतवानस्मीत्याह इत्येवमिति ॥ ७४ ॥

श्रा० टी० । तदेवं धृतराष्ट्रं प्रति श्रीकृष्णार्जुनसंवादं कथयित्वा प्रस्तुतां कथामनुसन्दधानः सञ्जय उवाच इत्यहमिति । रोमहर्षणं रोमाञ्चकरं संवादमश्रौषं श्रुतवानहं स्पष्टमन्यत् ॥ ७४ ॥

**व्यासप्रसादाच्छ्रुतवानिमं गुह्यमहं परम् ।**
**योगं योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयं ७५**

तच्चेमं श्रीकृष्ण व्यासप्रसादात् ततो दिव्यचक्षुर्लाभात् श्रुतवान् ज्ञातवानिमं संवादं गुह्यमहं परं योगं योगार्थत्वात् ग्रन्थोऽपि योगस्तं संवादमिमं योगेश्वरात् कृष्णात् साक्षात् कथयतः स्वयं न परम्परातः ॥ ७५ ॥

व्या० टी० । प्रकृतं संवादं कथमश्रौषीरिति चेत्तत्राह तच्चेति । एतत्पदं संवादपरत्वात्तल्लिङ्गत्वेन नेतव्यमित्याह एतमिति । परमपुरुषार्थौपयिकत्वात् परस्य परं गुह्यमतिशयेन गुह्यं रहस्यमिति वा योगो ज्ञानं कर्म च तदर्थत्वादयं संवादो योग उक्तः अथवा चित्तवृत्तिनिरोधस्य योगस्याङ्गत्वादयं संवादो योग इत्याह संवादमिति । योगानामीश्वरो योगेश्वरस्तदनुग्रहहेतुत्वाद्योगतत्फलयोः ततः साक्षादव्यवधानेन श्रुतवान् न परम्परयेत्याह योगेश्वरादिति । स्वयं स्वेन परमेश्वरेणातिरक्तत्वानैश्वर्यरूपेण कथयतो व्याचक्षाणादित्यर्थः ॥ ७५ ॥

श्रा० टी० । आत्मनस्तत्र श्रवणे सम्भावनामाह व्यासप्रसादादिति । भगवता व्यासेन दिव्यं चक्षुः श्रोत्रादि मह्यं दत्तं ततो व्यासस्य प्रसादादेतत् श्रुतवानस्मि, किं तदित्यपेक्षायामाह परं योगं, परत्माविष्करोति योगेश्वरात् श्रीकृष्णात् स्वयमेव साक्षात् कथयतः श्रुतवानिति ॥ ७५ ॥

राजन्! संस्मृत्य संस्मृत्य संवादमिममद्भुतम्।
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः॥७६॥

हे राजन् धृतराष्ट्र! संस्मृत्य संस्मृत्य संवादमिममद्भुतं केशवार्जुनयोः पुण्यं श्रवणादपि पापहरं श्रुत्वा हृष्यामि च मुहुर्मुहुः प्रतिक्षणम्। ७६॥

श्री० टी०। तथाभूतं कथादं भगवतः श्रुत्वा किमुदेत्यसे नेत्याह राजन्निति। पुनरत्वं साश्चर्यं न श्रवणादपीति॥ ७६॥

म्वा० टी०। किञ्च राजन्निति। हृष्यामि रोमाञ्चितो भवामि हर्षं प्राप्नोमीति वा। स्पष्टमन्यत्॥ ७६॥

तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः।
विस्मयो मे महान् राजन्! हृष्यामि च पुनः पुनः॥७७॥

तच्च संस्मृत्य रूपमत्यद्भुतं हरेर्विश्वरूपं विस्मयो मे महान् हे राजन्! हृष्यामि च पुनः पुनः॥ ७७॥

श्री० टी०। यत्तु विश्वरूपं सगुणमर्जुनाय भगवान् दर्शितवान् ध्यानार्थं स्मरन् हृष्यामीति तच्चेति॥ ७७॥

म्वा० टी०। किञ्च तच्चेति। विश्वरूपं निर्दिशति। स्पष्टमन्यत्॥७७॥

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम॥७८॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां
वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासू-
पनिषत्सु ब्रह्मविद्यायां योगशास्त्रे

# श्रीकृष्णार्जुनसंवादे मोक्षयोगो नामाष्टादशोऽध्यायः ।

किं बहुना यत्र यस्मिन् पक्षे योगेश्वरः सर्वयोगानामीश्वरस्तत्प्रभवत्वात् सर्वयोगबीजस्य कृष्णो यत्र पार्थो यस्मिन् पक्षे धनुर्धरो गाण्डीवधन्वा तत्र श्रीस्तस्मिन् पाण्डवानां पक्षे विजयस्तत्रैव भूतिः श्रियो विशेषविस्तारो भूतिर्ध्रुवाऽव्यभिचारिणी नीतिर्नय इत्येवं मतिर्ममेति ॥७८॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यपरमहंसपरिव्राजकाचार्य्यस्य श्रीमच्छङ्करभगवतः कृतौ गीताभाष्येऽष्टादशोऽध्यायः ।

आ० टी० । द्वयोरपि कृष्णार्जुनयोः नरनारायणयोः संवादस्य प्रामाण्यद्वार्यं परमुत्कर्षं दर्शयति किं बहुनेति । कथं सर्वेषां योगानामीश्वरो भगवानिति तत्राह तत्प्रभवत्वादिति । सर्वयोगो ज्ञानं कर्म च तस्य बीजं शास्त्रीयं ज्ञानवैराग्यादि नहि भगवद्विना तदनुग्रहविहीनस्य तद्योगात्ततो योगतत्फलयोर्भगवदनुग्रहायत्तत्वाद्भगवतो योगेश्वरत्वमित्यर्थः । श्रीर्लक्ष्मीर्विजयः परस्य उत्कर्षः राज्ञो धृतराष्ट्रस्य स्वपुत्रेषु विजयाशां शिथिलीकृत्य पाण्डवेषु जयप्राप्तिमैकान्तिकीमुपसंहरति इत्येवमिति । उपायोपेयभावेन निष्ठाद्वयस्य प्रतिष्ठापितत्वात् कर्मनिष्ठापरंपरया ज्ञाननिष्ठाहेतुः ज्ञाननिष्ठा तु साक्षादेव मोक्षहेतुरिति शास्त्रार्थमुपसंहर्तुमितीत्युक्तम् । काण्डत्रयात्मकं शास्त्रं पदवाक्यार्थमाचरम् । आदिमध्यान्तषट्केषु व्याख्यया गोचरीकृतम् । संक्षेपविस्तराभ्यां यो लक्षणैरुपपादितः । सोऽर्थोऽन्तिमेन संक्षिप्य लक्षणेन विवक्षितः । गीताशास्त्रमहार्णवोत्थममृतं वैकुण्ठकण्ठोद्भवं श्रीकण्ठापरनाममम्ना निखिलं निष्ठाद्वयद्योतितम् । निष्ठा यत्र मतिः प्रसादजननी

साक्षात् सतं कुर्वती मोक्षे पयर्य्यवसाश्रुति प्रतिदिनं सेवध्वमेतद्बुधाः ।
प्राचामाचार्य्यपादानां पदवीमनुगच्छता । गीताभाष्ये कृता टीका
टीकृतां पुरुषोत्तमम् ॥ २८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य्यशुद्धानन्दपूज्यपाद-
शिष्यभगवदानन्दगिरिविरचिते श्रीगीताभाष्य-
विवेचनेऽष्टादशोऽध्यायः ।

स्वा॰ टी॰ । अतस्त्वं पुत्राणां राज्यादिशङ्कां परित्यजेत्याशयेनाह यत्रेति । यत्र येषां पक्षे योगानामीश्वरः श्रीकृष्णो वर्त्तते यत्र च पार्थो गाण्डीवधनुर्द्धरस्तत्रैव श्रीराज्यलक्ष्मीस्तत्रैव च विजयस्तत्रैव च भूतिरुत्तरोत्तराभिवृद्धिः नीतिर्न्यायोऽपि तत्रैव ध्रुवाणीति मम मतिर्निश्चयः अत इदानीमपि तावत् सपुत्रस्त्वं श्रीकृष्णं शरणमुपेत्य पाण्डवान् प्रसाद्य सर्वस्वं तेभ्यो निवेद्य पुत्रप्राणरक्षां कुर्विति भावः । भगवद्भक्तियुक्तस्य तत्प्रसादात्मबोधतः । सुखं बन्धविमुक्तिः स्यादिति गीतार्थसंग्रहः । तथाहि पुरुषः स परः पार्थ ! भक्त्या लभ्यस्त्वनन्यया । भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ! इत्यादौ भगवद्भक्तेर्मोक्षं प्रति साधकत्वश्रवणात्तदेकान्तभक्तिरेव मत्प्रसादोत्थज्ञानावान्तरव्यापारयुक्ता मोक्षहेतुरिति स्फुटं प्रतीयते ज्ञानस्य च भक्त्यवान्तरव्यापारत्वमेव, तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगं तं येन मामुपयान्ति ते । मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते, इत्यादिवचनात् । न च ज्ञानमेव भक्तिरिति युक्तं समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् । भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ॥ इत्यादौ भेददर्शनात् । न चैवं सति तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनायेति श्रुतिविरोधः शङ्कनीयः, भक्त्यवान्तरव्यापारत्वात् ज्ञानस्य न हि काष्ठैः पचतीत्युक्ते ज्वलनानामसाधनत्वमुक्तं भवति । किञ्च यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः । देहान्ते देवः परं ब्रह्म तारकं व्याचष्टे यमे वैष वृणुते तेन लभ्य इत्यादिश्रुतिस्मृतिपुराणवचनान्येवं सति समञ्जसानि भवन्ति, तस्माद्भगवद्भक्ति-



रेव मोक्षहेतुरिति स्थितम्। तेनैव दत्तया मत्या तद्गीताविवृतिः कृता। स एव परमानन्दस्तया प्रीयात्तु माधवः। परमानन्दश्रीपादरजःश्रीधारिणाधुना श्रीधरस्वामियतिना कृता गीता सुबोधिनी। स्वप्रागल्भ्यबलाद्विलोड्य भगवद्गीतां तदन्तर्गतं तत्त्वं प्रेप्सुरुपैति किं गुरुकृपापीयूषदृष्टिं विना। अम्बु स्वाञ्जलिना निरस्य जलधेरादित्सुरन्तर्मणीन्तावत्तेषु न किं निमज्जति जनः सत्कर्णधारं विना॥ ७८॥

इति श्रीधरस्वामियतिकृतायां श्रीभगवद्गीताटीकायां सुबोधिन्यां परमार्थनिर्णयो नामाष्टादशोऽध्यायः।